सम्पूर्णानन्द-ग्रन्थमाला
[ १४ ]

# नीतिविधिविमर्शः
## [ द्वितीयो भागः ]

कुलपतेः श्रीवेङ्कटाचलस्य 'शिवलङ्कल्य'-पुरोवाचा
पुरस्कृतः

प्रणेता
डॉ. हरिहरनाथत्रिपाठी



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

SAMPŪRṆĀNANDA-GRANTHAMĀLĀ
[ Vol. 14 ]

# NĪTIVIDHIVIMARSAḤ

[ Part-II ]

*BY*

**DR. HARIHARANĀTHA TRIPĀṬHĪ**
Ācārya, M.A., Ph.D.
Professor of Political Science
Banaras Hindu University

*FOREWORD BY*

**PROF. V. VENKATACHALAM**
VICE-CHANCELLOR
Sampurnanand Sanskrit University
Varanasi



VARANASI
1993

Research Publication Supervisor—
**Director, Reserch Institute,**
Sampurnanand Sanskrit University,
Varanasi.

■

*Published by—*
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi - 221 002.

■

*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi - 221002.

■

First Edition, 1000 Copies
Price-Rs. 250=00

■

*Printed by—*
**Ratna Printing Works**
B. 21/42 A, Kamachha,
Varanasi - 221010.

सम्पूर्णानन्द-ग्रन्थमाला
[१४]

# नीतिविधिविमर्शः

[द्वितीयो भागः]

प्रणेता
**डॉ. हरिहरनाथत्रिपाठी**
आचार्यः, एम. ए., पी-एच. डी.
आचार्यः,
राजनीतिशास्त्रस्य
काशी-हिन्दू-विश्वविद्यालये
वाराणसी

**कुलपतेः श्रीवेङ्कटाचलस्य 'शिवसङ्कल्प'-पुरोवाचा**
**पुरस्कृतः**



**वाराणस्याम्**

**२०५० तमे वैक्रमाब्दे** **१९१५ तमे शकाब्दे** **१९९३ तमे खैस्ताब्दे**

*अनुसन्धानप्रकाशनपर्यवेक्षकः* –
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



*प्रकाशकः* –
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी– २२१००२.



*प्राप्तिस्थानम्* –
**विक्रयविभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी– २२१००२.



प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्–२५० रूप्यकाणि



*मुद्रकः* –
**रत्ना प्रिंटिंग वर्क्स**
बी. २१/४२ ए, कमच्छा,
वाराणसी– २२१०१०.

# शिवसङ्कल्पः

एतद्ग्रन्थकर्ता डॉ. हरिहरनाथस्त्रिपाठी प्राच्यपाश्चात्त्य-राजनीतिशास्त्रज्ञानस्य कश्चिदपूर्वः सेतुः । इदंविश्वविद्यालयतः प्रथममधीतसंस्कृतविद्यः परस्ताच्च काशीस्थादेव हिन्दु-विश्वविद्यालयतः सम्प्राप्ताधुनिकराजनीतिशास्त्रप्रौढप्रवेशः, चिराय च तत्रैव विश्वविद्यालये समधिष्ठितराजनीतिशास्त्रविभागाध्यक्ष्यश्च सन्नसौ महाभागो वाराणस्यामस्याम् असिवरणयोः सीम्नोः प्रतिष्ठितमुभयं विश्वविद्यालयं प्राचीनामर्वाचीनाञ्चोभयीमध्ययनपद्धतिं सेतुवत् संयुनक्ति । किमु वक्तव्यमीदृग्ग्रन्थकारोपज्ञोऽयं ग्रन्थोऽप्यपूर्वं किमपि सेतुकृत्यमनुष्ठास्यत्युभयोश्चिन्तनपथयोरिति ? इदमेव च मन्ये महदुत्कर्षनिदानमस्य ग्रन्थस्य ।

ग्रन्थेऽस्मिन् विद्वद्वरेण त्रिपाठिना बहुधा पराक्रान्तं प्राचीनेषु भारतीयेषु धर्मशास्त्रेष्वर्थशास्त्रेषु च स्थितानां नीतिविषयाणां विधिविषयाणाञ्च तत्त्वानाम्, तत्सम्बन्धिचर्चावताराणाम्, तासु तासु च चर्चासु तत्तदाचार्यैः प्रदर्शितानां तर्काणाम्, तत्तत्तर्कोपबृंहितानां नैकविधसिद्धान्तानाञ्च तत्समानयोगक्षेमैः पाश्चात्त्य-चिन्तकावतारितैस्तैस्तैः तत्त्वैः, चर्चावतारैः, तर्कैः, सिद्धान्तैश्च सह तोलनाय । अत एव मन्ये गीर्वाणवाङ्निबद्धोऽयं ग्रन्थो नूनं बहूपकरिष्यति तादृक्षान् संस्कृतविदुषो ये देशान्तरेष्वपि परमं विकासमापन्नानां समानशास्त्राणां सिद्धान्तान् जिज्ञासन्ते, न च प्रगल्भन्ते तेषां सविस्तराध्ययने तन्मर्मपरिज्ञाने च भाषाप्रतिबन्धप्रत्यूहिताः ।

किञ्चान्यत् । ग्रन्थेऽस्मिन् भारतीयशास्त्रपक्षं याथातथ्येनोपस्थापयितुमास्थितः प्रयत्नो महान् विदुषा लेखकेन । अत एवैतद्ग्रन्थार्थपरिज्ञानमुखेन ते ते वैदेशिका विद्वांसोऽपि शक्ष्यन्ति याथातथ्यतो भारतीयमर्थशास्त्रसारगहनं सुखेन प्रवेष्टुम् । अत एवाहं मन्ये ग्रन्थस्यास्य आङ्ग्लभाषादिष्वनुवादो भृशमुपकरिष्यति जिज्ञासून् वैदेशिकानपि ।

ग्रन्थस्यास्य प्रथमो भागः पूर्वमेवास्मद्विश्वविद्यालयेन प्राकाश्यमुपनीतः १९८८-मिते ख्रिस्ताब्दे, यत्रानेन ग्रन्थकर्त्रा भारतीयाचार्याभिमतं विधेः स्वरूपं, निगमागम-स्मृतिरूपाणि विधिस्रोतांसि च भारतीयां विमर्शपद्धतिमालम्ब्य चर्चितानि । दर्शितश्च सर्वस्यास्य विषयपूगस्य सामाजिकः पक्षः । विषयप्रतिपादने चास्य ग्रन्थकर्तु-र्मुख्यमुद्देश्यं भवतीदं यदस्मिन् विषये वैदेशिकैर्विद्वद्भिर्भ्रान्त्या वा साम्राज्याभि-मानमोहेन वा अन्यथान्यथा ये ये भारतीयशास्त्रार्थाः प्रतिपादिताः, तत्र तत्र यथार्थतत्त्वस्वरूपप्रतिपादनमुखेन भ्रान्त्यपनयनं नाम । एतच्च कार्यं त्रिपाठिसदृशैरेव पण्डितैरवगतविशुद्धशास्त्रसम्प्रदायैः शक्यं सम्पादयितुम् । शास्त्रसम्प्रदायेन विना केवलेनाभिमानेन परमगंभीराणि शास्त्राणि सर्वथा भवन्ति दुरवगाहानि, भवन्तु वा

तानि प्राचीनानि आधुनिकानि वा । अत एवोक्तं मनीषिमूर्धन्यैः श्रीशङ्करभगवत्पादैस्तत्त्वार्थपरिज्ञाने गुणद्वयमेकान्तसाधनत्वेन – अभिमानपरित्यागः, सम्प्रदायविशुद्धिश्च । प्रथमविषये तेषामिदं वचनं प्रश्नोपनिषद्भाष्ये (४, ५) –

**"एवं तर्हि शृणु श्रुत्यर्थम्, हित्वा सर्वमभिमानम् । न त्वभिमानेन वर्षशतेनापि श्रुत्यर्थो ज्ञातुं शक्यते सर्वैः पण्डितम्मन्यैः"** ।

द्वितीयविषये च तैः स्पष्टमुद्घोषितं भगवद्गीताभाष्ये (१३.२) –

**"स्वयं मूढोऽन्यांश्च व्यामोहयति, शास्त्रार्थसम्प्रदायरहितत्वात्, श्रुतहानिमश्रुतकल्पनां च कुर्वन् । तस्माद् असम्प्रदायवित् सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः"**।

विशिष्टाद्वैतसम्प्रदायधुरन्धरैः श्रीमद्वेदान्तदेशिकाचार्यैरप्ययमर्थः साधूपबृंहित एव–

**"अभिनिवेशवशीकृतचेतसां बहुविदामपि सम्भवति भ्रमः ।"**

इति तत्त्वजिज्ञासायामभिनिवेशं प्रत्याचक्षाणैः ।

प्रथमभागस्य पद्धतिमनुरुन्धानेन विदुषा लेखकेनास्मिन् द्वितीये भागे व्यावहारिका विषयाश्चर्चापथमवतारिताः, अपराध-दण्ड-दायभाग-प्रभृतयो ये याज्ञवल्क्यादिभिः स्मृतिकारैः व्यवहाराध्याये सन्ति सम्मेलिताः । अत्र **"दण्डः समाजो राज्यञ्च"** इति शीर्षकशेखरिते दशमेऽध्याये, **"न्यायिकप्रक्रिया"** इति शीर्षककलिते द्वादशत्रयोदशात्मकेऽध्यायद्वितये चात्मनः प्राचीनार्वाचीनशास्त्रज्ञानस्य किमपि सर्वङ्कषं स्वरूपमुपक्षेप्तुमादृतः कोऽप्यपूर्वः समन्वयमार्गो नूतन इति स्वयमेव विदाङ्कुर्वन्तु पाठकाः पण्डिताः ।

तैत्तिरीयोपनिषदः प्रसिद्धोऽयं प्रसङ्गो यत्राचार्योऽन्तेवासिनं जीवनयात्रामवतितीर्षुमुपदिशति कर्त्तव्यमकर्त्तव्यञ्च । उपसंहरति चान्ते –

**"एष आदेशः । एष उपदेशः । एषा वेदोपनिषत्"** । इति ।

तमेनमार्षं पन्थानं गतानुगतिकविधयाऽनुकुर्वाणोऽहमुपसंजिहीर्षामीमां शिवसङ्कल्पमयीं वाचम्–

**"एषा राजनीतिशास्त्रोपनिषत्"**

इति शम् ॥

**वाराणसी**
विक्रम-संवत् २०५०
देवोत्थानैकादशी.
(२४. ११. १९९३)

**वि. वेङ्कटाचलः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# आत्मनिवेदनम्

प्रस्तुतग्रन्थेन सह संस्कृतभाषायां ग्रन्थप्रणयनस्य मम संकल्पस्य पूर्त्तिर्भवति । जन्मजन्मान्तरीयपुण्येन, पूर्वजानां कृपया, आचार्याणां पित्रोरेवं सुहृज्जनानाञ्चानुकम्पया, पारिवारिकजनानां स्नेहेन सम्मानेन चैव अद्याहं स्वमृषि-ऋणतः मोक्तुं पारयामि । प्राक्तनकर्मणा भगवतः शिवस्य काश्यामध्ययनाध्यापनाभ्याम्, ग्रन्थनिर्माणेन, विचारविनिमयेन च वेदविद्यया सह तादात्म्यस्यावसरः प्राप्तः । सर्वस्वं भवानीशङ्करयोश्चरणेषु समर्पयामि ।

बौद्धक्रान्तितो वेदविद्याया अध्ययनस्य समस्या सञ्जाता । गौतमबुद्धः 'एष धम्मः सनातनः' इत्यस्य मायाजाले वेदज्ञानस्यान्यथा प्रस्तुतिं वास्तविकसनातनधर्मरूपेण वर्णयामास । तेन स्वस्य 'स्वतः प्रामाण्यं' स्थापितम् । स ईश्वरस्थानीयश्च समजायत । प्रथमपक्षे "अल्पश्रुताद्" वेदः कम्पितोऽभूत् । अवैदिकचिन्तकेषु सम्प्रदायेषु चैषः सशक्तो विद्रोह आसीत्, येन भारतीयचिन्तनव्यवस्था प्रभाविताऽभूत्। यदीयः प्रभावो देशेषु विदेशेषु च व्यापकरूपेणाक्रमत ।

अवैदिकचिन्तनेन व्यवस्थया चोत्पन्नायां विशृङ्खलतायां सार्वभौमं सफलमाक्रमणं महर्षिकौटल्येनाकारि । अर्थशास्त्रेण मौर्यशासनेन च तैर्वैदिकव्यवस्था स्थापिता । यदा राज्ञा अशोकेनास्याः परम्परायाः विनाशाय चेष्टा कृता तदा सेनापतिः पुष्यमित्रस्तस्य सन्ततेः "प्रतिज्ञादुर्बलस्य" बृहद्रथस्य वधं कृत्वा वैदिकव्यवस्थाया विकासमकरोत् । यो गुप्तवंशीयनृपाणां स्वर्णयुगस्याधारोऽभूत् ।

उक्तचिन्तनस्य धरातलमाश्रित्य कालिदासादिकविपुङ्गवैर्या परम्परा प्रचालिता, तां सार्वभौमरूपेण समादृत्य श्रीभट्टपादकुमारिलेनाचार्यश्रीशङ्करेण चावैदिक-चिन्तनधारा सर्वतोभावेनोच्छेदिता ।

अस्यां विकासपरम्परायां वेदापौरुषेयत्वस्य अद्वैतदर्शनस्य च क्रिया प्रतिक्रिया मुख्या, कौटल्यप्रचालिता अर्थशास्त्रपरम्परा गौणतामभजत् । कामन्दकसोमदेव-सूरिप्रभृतिभिः प्रशस्तं कार्यं कृतम्; किन्तु तैः कौटल्यप्रतिपादितसिद्धान्ताना-मनुसरणमात्रमेव कृतम् । देशकालपात्रगतावश्यकताया यत्समाधानम्, तस्य स्पर्शो न कृतः । निबन्धेषु टीकासु च अक्षरार्थस्य मुख्यत्वमभूत् । रामायणमहाभारतादीनां प्रशस्ते भाष्ये राजधर्मसम्बन्धिवचनानि न व्याख्यातानि । यदि व्याख्यातानि तर्हि "स्पष्टार्थः" इत्यनेनैव रूपेण ।

एतदवश्यमस्ति यन्मनुयाज्ञवल्क्यनारदादिस्मृतीनां याष्टीका महत्त्वपूर्णा आसन् ताभिः स्वयुगस्य ध्यानं कृत्वा वैदिकमान्यतानां व्याख्या कृता तथा तासां सन्दर्भोऽभि-व्यक्तः, तथापि मध्ययुगीनसमाजे तेषामध्ययनं दानप्रतिग्रहार्थमधिकमभूत् ।

राजनीतिकार्थिकप्रश्नानामुपेक्षाऽभवत् । कथयितुं शक्यते यद् राजधर्मस्याध्ययनपरम्परा लुप्ताऽभूत् ।

विगतशताब्दिषु वैदुष्यप्रदर्शनाय राजनीतिकार्थिकसामाजिकसमस्यां विहाय न्यायव्याकरणसदृशः सम्प्रदायः पाण्डित्यजालमुत्थापयामास । अनेनोत्पन्नं पाण्डित्यं श्रद्धाविषयतां प्रापत् । अध्ययनाध्यापनयोश्चिन्तनपरम्परासु च राजशास्त्रसदृशो विषयो लुप्तोऽभूत् । ब्रिटिशशासनकाले संस्कृतमहाविद्यालयानां पाठ्यक्रमेणेदं तथ्यमत्यन्तं स्पष्टम् ।

मध्ययुगीयभारते राजशास्त्रार्थशास्त्रस्य च विषया निबन्धटीकादिमाध्यमेन विकसिता आसन् ; किन्तु ब्रिटिशशासने उक्ता स्थितिरागता । पुनर्जागरणेन धर्मसुधारान्दोलनेनागतायां बौद्धिकतायां राष्ट्रियताया राष्ट्रवादस्य च भावनाऽऽगता, तथापि आर्थिके राजनीतिके च पक्षे पाश्चात्त्यानुकरणं मुख्यमासीत् । धर्मे, समाजे, परम्परायाञ्च मुख्या विवादा अभवन् । अत्र पाश्चात्त्यानुकरणमधिकमासीत् । फलतः पुनर्जागरणत उत्पन्नायां बौद्धिकतायां पाश्चात्त्यराजनीतिकार्थिका विचारा न केवलं स्वीकृताः ; अपि च तत्र निश्चिता व्यवस्था भारतस्य पुनर्निर्माणाय अनिवार्यरूपेण मान्याऽभूत् ।

राजा राममोहनरायः वेदान्तदर्शनस्योपनिषदाञ्च ब्रह्मतत्त्वे समाजं स्थापयामास, तथाप्यत्र दर्शनं तु भारतीयम्, समाजः स्पष्टतः पाश्चात्त्याभिमुख आसीत् । मूर्त्तिपूजायाम्, बालविवाहे, विधवाविवाहे, सतीप्रथायाञ्च तेषां विचारा वेदापेक्षया पाश्चात्त्यैः प्रभाविता आसन् । यद्यपि तेन स्वविचारे औचित्यप्रदर्शनाय शास्त्रवचनानामपि व्याख्यानं स्वविवेकेन कृतम् । एतत्स्पष्टमस्ति यत् स हिन्दुधर्ममाधुनिकभारतस्य कृतेऽनुपयुक्तममन्यत । राजशास्त्रमर्थशास्त्रञ्च वेदविद्यया सह व्याख्यातुं शक्ये, एतत् तेन नैव विचारितम् । स 'जमींदारी' इत्यस्याः व्यवस्थायाः समर्थनेन सामन्तीयामर्थव्यवस्थां स्वीकरोति स्म, सामाजिकप्रश्ने च सामन्तीयसमाजव्यवस्थायां सुधारं वाञ्छति स्म, तदपि च साम्राज्यवादिशासनमाध्यमेन, यच्च भारतस्य कृते "दैवं दानमेव" ।

स्वामिदयानन्देन वेदानां नित्यत्वस्य अपौरुषेयत्वस्य सम्पूर्णसृष्टिनियामकत्वस्य च प्रतिष्ठापनायां व्यापकं चिन्तनमान्दोलनञ्चाकारि । तैः स्वमतस्य प्रतिपादने वेदानामैकान्तिकप्रामाण्यञ्च स्वीकृतम्, तथापि तेषामर्थः परम्परां सम्प्रदायञ्च परित्यज्याकारि । अत्र तेषां सम्बोध्याः सहयोगिनश्च नासन् वेदज्ञाः ; अपि तु ते पाश्चात्त्यशिक्षाप्राप्तमध्यवर्गीया आसन्, ये आधुनिकभारतनिर्माणाय पाश्चात्त्यचिन्तनसमानाधिकरणेन भारतीयचिन्तनं स्थापयामासुः, तथा च समाजसुधारे वैदिकाधारमन्विष्यन्ति स्म । अस्य वर्गस्य कृते दयानन्दो महर्षिर्बभूव ।

स्वामिदयानन्दा अनुवादातिरिक्तं राजधर्मोपरि टिप्पणीं भाष्यञ्च नाकुर्वन्, तथा कुत्रापि राजधर्मविषये न विचारितवन्त । तैरार्थिकप्रश्ना नैव स्पृष्टाः, स्वेन विचारणेन तैः सामन्तवादिव्यवस्था संपोषिता । स्पष्टतः तेषां राजनीतिपरा आर्थिकाश्च विचारा अवैदिका आसन् । फलतो दयानन्दमहाभागानामान्दोलनं निषेधात्मकेंऽशे प्रचलितम्, न तु विध्यात्मके पक्षे । तेषामनुयायिमध्यमवर्गोऽपि राष्ट्रवादिभावनायां पाश्चात्त्यविरोधी आसीत् । अत्र राजधर्मे दयानन्दो वैदिकज्ञानशून्य एवासीत् । तथा सः सामन्तवादिव्यवस्थया सह संयुक्तोऽभूत्, तत्र वैदिकव्यवस्थायाः आवश्यकताऽपि नासीत् ।

स्वामिना विवेकानन्देन पश्चिमेषु देशेषु वेदान्तस्य महत्त्वं स्थापितम् । सः पाश्चात्त्यपौरस्त्ययोः समन्वयं वाञ्छति स्म । अध्यात्मविज्ञानयोः समन्वयस्तस्य पक्ष आसीत् । तेन भारतस्यातीतकालश्चर्चितः । निर्धनधनाढ्ययोरन्तरे तेन स्वसमाजवादाय दृष्टिः प्रहिता; किन्त्वार्थिक्यां राजनीतिपरकव्यवस्थायाञ्च वैदिकज्ञानस्याभावात् ततो बहिर्भूत आसीत् । लोकमान्यतिलकोऽपि एतत् पक्षतः स्वं दूरं स्थापयामास । यद्यपि तैर्भारतीयनीतेः भारतीयत्वं सम्पादितम् । अरविन्दरवीन्द्रनाथठाकुरादीना- मियमेव स्थितिरासीत् । १८६७ ईस्वीये वर्षे भारतीयविद्वांसोऽर्थशास्त्रस्य मीमांसाम- कुर्वन् । दादाभाई नौरोजी, रानाडे, जोशी, गोखले, जी. एस. अय्यर, वाचा, दत्तप्रभृतयो राजनीतिज्ञा अर्थशास्त्रस्य व्याख्यामकुर्वन्; किन्तु वेदानां तथा तत्सम्बन्धिशास्त्राणां ज्ञानस्याभावादावश्यकताया अभावाच्च भारतीयराजनीतिंशास्त्रस्वरूपं तेषां समक्षं न समागतम् ।।

तात्कालिकाः जी. बी. जोशी, आर. एन. मुधोलकर, सी. वाई. चिन्तामणि, आर.सी. दत्तप्रभृतयो विद्वांसो ब्रिटिशशासनस्योपलब्धिं प्रस्तुवन्ति स्म। भोलानाथचन्द्र, बी. जी. तिलक, ए. एल. राय, जी. सुब्रह्मण्य अय्यर, एल. एम. घोषप्रभृतयो ब्रिटिशशासनस्यालोचनां कुर्वन्ति स्म, परञ्चालोचनदृष्ट्यैव । ब्रिटिशव्यवस्थास्थाने भारतीयव्यवस्थाया वैकल्पिकस्वरूपप्रदाने तेऽक्षमा आसन् । गांधिमहोदयेन स्वमत्या रामराज्यस्य स्वरूपनिर्वचनं कृतम्; किन्तु वेदादिशास्त्रेभ्यः प्राप्ताया व्यवस्थायाश्छायां गृहीत्वां कथञ्चिद्रामराज्यस्य परिकल्पनं कृतम्, तथापि गान्धिमहोदयस्तस्य राजनीतिकार्थिकसामाजिकप्रश्नेषु वैदिकपरम्परायाः प्रतिनिधिर्नासीत् । सः स्वतोऽपीत्थं न वाञ्छति स्म । फलतो रामराज्यस्य सर्वोदयस्य च व्यवस्था परिकल्पना वा अव्यवहार्या सञ्जाता ।

हिन्दुराष्ट्रवादिनां स्थितिर्विलक्षणा आसीत् । वैलक्षण्यं स्पष्टम्, तैर्हिन्दुराष्ट्रस्य संकल्पः स्थापितः ; किन्तु हिन्दुधर्मो न स्वीकृतः । तत्र केचन अतिवादिन आसन्, ये सत्ताप्राप्तिमेव लक्ष्यप्राप्तिममन्यन्त । सावरकरत आरभ्य गोलवलकरं यावत् तत्र केनाऽपि वैदिकपरम्परा न प्रस्तुता । सामाजिकार्थिकराजनीतिकधार्मिकपक्षेषु तस्याः

गौरवं यद्यपि कीर्तितम्; किन्तु वेदादिशास्त्रेषु प्रतिपादितसामाजिकार्थिकराजनीतिक-व्यवस्थां सिद्धान्तञ्चावामन्यन्त । एतादृशैर्विद्वद्भिर्वैदिकबौद्धिकताया छायाऽपि दुर्ग्रहा। वस्तुत एतैर्वैदिकमान्यता अप्रकृष्टतां नीता।

हिन्दुराष्ट्रवादिषु एकः पण्डितमदनमोहनमालवीय एव आसीत्, यो वैदिक-परम्परामाधुनिकसन्दर्भेण सह योजयितुं प्रयतितवान्। तस्य हृदये वेदादिशास्त्राणां मान्यता आसीत्। तेन 'सनातनधर्मोद्धारः' (चतुःखण्डात्मकः) इति ग्रन्थस्य प्रकाशन-व्यवस्था कृता। अत्र ग्रन्थस्य शीर्षके मर्म, स मध्यकालिकसामाजिकरूढिभिर्ग्रस्तां वैदिकपरम्परां सनातनपद्धत्त्योद्धर्तुमैच्छत्।

महामनामदनमोहनमालवीयो विवेकानन्दवत्पुनर्जागरणधर्मसुधारान्दोलनस्य निषेधात्मकबौद्धिकताया अनौचित्यं मन्यते स्म। परञ्च, 'पुराणमित्येव न साधु सर्वम्' इत्यपि तेषां महाभागानां पक्षः। मालवीयमहोदयोऽपि राजशास्त्रेषु अर्थशास्त्रेषु च कमपि स्पष्टं पक्षं प्रस्तोतुं नाशकत्; यद्यपि काशीहिन्दु-विश्वविद्यालयेऽर्थशास्त्रस्य, राजनीतिशास्त्रस्य, विधेः, समाजशास्त्रस्य च वैदिकपक्षस्य विवेचनं कारयितुमिच्छति स्म।

धर्मसुधारात् पुनर्जागरणत उत्पन्नस्य वैचारिकान्दोलने वेदज्ञानस्य व्याख्याया यत्स्वरूपं विकसितम्, तत् पाश्चात्त्यप्रभावाक्रान्तमासीत्। विवेचयितारः संस्कृतज्ञा असंस्कृतज्ञाश्च आसन्। केचन प्राच्यविद्याविशारदा युरोपीया विद्वान्सो वेदेषु कार्यमकुर्वन्। मूलतस्तेषां दृष्टिः साम्राज्यवादिनी आसीत्। अपि च तेषां वेदज्ञानेन सह सम्बद्धायाः सृष्टिविद्याया दर्शनादेश्च संस्कृतभाषायाश्च वास्तविकं ज्ञानं नासीत्; किन्तु तैर्यत्कार्यमकारि आङ्ग्लभाषया तदनुपदमेव भारतीयानां समाजसुधारकाणां वेदज्ञानं सञ्जातम्। पाश्चात्त्यंशिक्षाप्राप्तस्य मध्यमवर्गस्य आवश्यकतां ध्यात्वा समाजसुधारकैर्वेदव्याख्या कृता; परन्तु न सा निष्पक्षा; अपि तु आग्रहग्रस्ता आसीत्।

सुधारवादिनामुक्तबौद्धिकतया सम्पूर्णसंस्कृतवाङ्मयस्याध्ययनेऽराजकता सञ्जाता। विगते वर्षशतकद्वये अस्या वैचारिकप्रक्रियायाः परिणामोऽयं जातो यन्मूलज्ञाने वैदिकानां परिचयः परिसमाप्तः। पाश्चात्त्यप्रभावेण प्रस्तुताग्रहग्रस्तविषय-विवेचनमेव प्रमाणरूपेणाङ्गीकृतम्। अत्रैका दुर्घटना जाता, यदस्य युगस्य बौद्धिकानामात्महीनतया ग्रस्ता दृष्टिः पाश्चात्त्यविद्वदाश्रिता आसीत्। ते पाश्चात्त्य-विद्वान्स इदं कथयितुमिच्छन्ति स्म यत्पाश्चात्त्यविचाराणामौचित्यबीजं प्राचीन-भारतीयविचारेषु विद्यते। एतस्मिन् स्वीक्रियमाणे सति भारतीयानां भविष्य-मुज्ज्वलमिति। तेषु केचन विद्वान्सोऽतिवादिरीत्या प्राचीनभारतीयज्ञानराशिं व्यवस्थाञ्च श्रेष्ठतमामथ च विश्वस्मै अनिवार्यां साधयन्ति स्म। तैः अद्यतन-वैज्ञानिकान्वेषणादपि श्रेष्ठं विज्ञानं वेदेष्वन्वेषितम्; किन्तु एतादृशबौद्धिकाः

सामान्यविज्ञानज्ञानादपि शून्या एवासन् । अनया दृष्ट्या वैदिकज्ञानस्यैतादृशा व्यवस्था जाता यत् संस्कृतवाङ्मये उक्ताशयात् सम्पृक्तांशानां मिथ्या व्याख्या जाता।

एतद्विसङ्गतीनां प्रतिवादे पारम्परिकवैदिकविद्वत्समाजः सुरक्षात्मकरीत्या कार्ये संल्लग्नः । तस्य सम्पूर्णशक्तिरत्र संयुक्ता यदमुकमतस्याहो अमुकवाक्यस्यार्थं दूषयित्वा प्रतिपादितः सिद्धान्तः अवैदिकः । सुधारवाद्यार्यसमाजमौलविपादरि- सनातनिविदुषां मध्ये प्रचलितः 'शास्त्रार्थः' विषयेऽस्मिन् प्रमाणम् । सर्वेष्वेतेषु दयनीया स्थितिरासीत् सनातनीयविदुषाम्। ते आधुनिकतायाः प्रतिवादिन आसन् । अथ च तेषामेव समाजे प्रस्तुतमध्यमवर्गस्तेषां विरोधी आसीत् । फलतस्तेषां सङ्घर्षो बाह्याभ्यन्तरिकयोः पक्षयोरासीत् । परम्परायाः जाड्यात् तेषु वैचारिक- शून्यता उग्रता चासीत् । ध्वंस्यमानसामन्तीयसमाजस्य प्रतिनिधिरूपेण तेषां मध्ययुगीनं ज्ञानं भारवदासीत् । यत्र शाब्दबोधपरिष्कारस्य जटिलताया दम्भ आसीत्; किन्तु प्रस्तुतसामाजिकसमस्यायाः समाधाने शून्यतया आदरणीयं भवदपि अग्राह्यम् आसीत् ।

उक्तस्थितौ विकसितसनातनीयविदुषां स्थितौ स्वामिकरपात्रमहाभागैः शक्तिः प्रदत्ता । उक्तबहुधारणाभिर्यद्वैदिकज्ञानस्य पारम्परिकशास्त्रीयमान्यतासु आक्रमणं जायते, तस्य प्रत्युत्तरमेव न प्रदत्तमपि तु प्रत्याक्रमणमपि कृतम् । 'पण्डितेषु' केन्द्रितः "शास्त्रार्थः" जनसामान्येन सह योजितः । आसेतुहिमालयपर्यन्तं षट्पञ्चाशद्- वर्षाणि यावद् अनवरतजायमानसंघर्षेषु तैः "वास्तविकपक्षस्य" स्थापने प्रयासः कृतः । चत्वारिंशदुत्तरैकोनविंशतितमे दशके सनातनधर्मिणामान्दोलनं पुर आयातम् । करपात्रमहाभागैः आर्यसमाजबौद्धकाँग्रेससाम्यवादप्रभृतिविचाराणां खण्डनं कृतम्, अथ च वैदिकमार्गेण अहमेव सम्पृक्त इति ये मन्यन्ते स्म तेषां सनातनिनामपि खण्डनं कृतम् । समाचारपत्रेषु जनसमाजेषु पुस्तकेन लेखेन अन्येनापि प्रकारेण सनातनधर्मपक्षस्य स्थापना कृता। एतेषु धर्मदर्शनेतिहासराजनीतिषु वैदिकपक्षः प्रस्तुतोऽभूत् ।

करपात्रमहाभागानां प्रथमदर्शनं काश्यां सम्पन्नमहारुद्रनामकयज्ञे मया कृतम् । तदानीमस्माकीना शैशवावस्था आसीत्। तेषां व्यक्तित्वस्य विचारस्य च अतिगम्भीर- रूपेण प्रभावोऽस्मदुपरि जातः । एकपञ्चाशदुत्तरैकोनविंशतितमे वर्षे मया स्वामि- पादस्य सम्पर्को लब्धः । अथ च तैः सह कार्यमपि कृतम् । तेषां माध्यमेनाहं पण्डितगङ्गाशङ्करमिश्रमहोदयानां सान्निध्ये आयातः । तेषां ममोपरि कृपा अथ चास्माकं तेषामुपरि श्रद्धाऽऽसीत् । सन्मार्गसिद्धान्तादिषु पत्रिकासु लेखनम्, स्वामिपादानां लेखानां ग्रन्थानाञ्च सम्पादनम्, यदा कदा 'सिद्धान्ते' सम्पादकीयस्यापि दायित्वं मया अङ्गीकृतम् ।

विंशतिशताब्द्या अभिनवशङ्कराचार्यरूपेण स्वामिकरपात्रमहाभागाः समस्ते देशे विदुषां सनातनविचारस्यान्दोलनस्य च केन्द्रबिन्दुरूपेण आसन् । तथा च, तेन केन्द्रेण सह सम्पृक्तस्य मयि अवसरः प्राप्तो यदहर्निशवैचारिकमन्थनस्य विश्वस्तरूपेणाङ्गतामहमभजम् । अत्र अध्ययनश्रवणमननविचारलेखेष्वहर्निशं संल्लग्नतैव जीवनचर्या जाता । स्वामिपादाः पण्डितगङ्गाशङ्करमिश्रमहोदयाश्चावसरं महत्त्वमादरञ्च पूर्णरूपेण प्रदत्तवन्तः । एतत्सर्वं मदीयचिन्तनस्य आधारशिला अस्ति ।

शैशवावस्थायामेवाहं मार्क्सवादस्य विचारे संल्लग्नोऽभवम्, आसीदत्र संकल्पः मार्क्सवादस्य खण्डनस्य । १९५१ ईस्वीये वर्षे मया स्वामिपादानां ध्यानमार्थिकप्रश्नोपरि आकृष्टम् । अथ च, मार्क्सवादस्थाने वैदिकचिन्तनस्य प्रस्तुतिकरणाय निवेदितम्, अपेक्षितसमाग्री प्राचीनभारतीयशास्त्रतः संकलय्य मया प्रदत्ता । १९५६ ईस्वीये वर्षे मया स्वामिचरणा निवेदिता यद् द्वन्द्वात्मकभौतिकवादस्य खण्डनाय वेदान्तपक्षस्य प्रस्तुतीकरणं स्यात् । ममेदमुद्देश्यमासीद् यत् स्वामिपादानामप्रतिमदार्शनिकज्ञानं लिपिबद्धं भवेत् । मया मार्क्सवादस्य विचारानुद्दिश्य प्रतिविचारविनिमये तेषां समक्षे पूर्वपक्षः प्रस्तुतः ; अथ च, विमर्शस्य क्रमः प्रारब्धोऽभूत् । अन्ततः स्वामिचरणानां मनसस्तत्परता तत्र विशेषतोऽभूत् । फलतः "मार्क्सवाद और रामराज्य" इति ग्रन्थः प्रकाशितोऽभूत् । यत्र शताब्दीभ्यः पश्चाद् राजनीतिकानामार्थिकानाञ्च प्रश्नानां वैदिकपक्षेण समाधानं प्रस्तावितम्। तत्र मदीयोऽपि सहयोग आसीत् ।

ग्रन्थस्य प्रकाशनेन सह स्वामिपादैः सह अस्माकं सम्बन्धेषु परिवर्त्तनमागतम् । अहं ग्रन्थं पुञ्जीकृतधनवादस्य साम्यवादस्य च विकल्परूपं प्रदातुमिच्छामि स्म । अथ च, तदनुसारमेव स विकल्पः प्रस्तुतोऽभूत् । तस्य कांश्चनांशान् पुञ्जीकृतधनवादस्य सामन्तवादस्य च पोषकत्वेन मन्ये स्म । तानंशान् परिवर्तयितुं जिज्ञासा अभूत्; किन्तु स्वामिपादैर्न स्वीकृतम्। अस्मिन् विचारे वेदादिशास्त्रस्यैव प्रामाण्यं मन्यते स्म । स्वामिपादैः स्नेहेन अहम् "सनातनी कम्युनिष्ट" इत्युद्घोषितः, यदा अहं स्वमात्मानं 'वास्तविकसनातनधर्मावलम्बिनम्' मन्ये स्म । ग्रन्थप्रकाशनानन्तरमहं स्वामिपादं प्रत्युक्तवान् यत् ते 'मार्क्सवाद और रामराज्य' इत्यत्र प्रस्तुतविचारान् चरितार्थयितुं देशव्याप्यान्दोलनं कुर्युः । आन्दोलनमिदं पुञ्जीकृतधनवादसामन्तवादयोर्विपरीतं तदीयार्थिकप्रतिष्ठानेभ्यो विरुद्धञ्च भवेत्; किन्तु स्वामिमहाभागैर्विचारोऽयं न स्वीकृतः । एतेन सहैव तेषु सामाजिकविचाराः सन्ति मध्ययुगीयव्यवस्थायाः पोषका इत्यहं मन्ये स्म । तथा च, स्वामिपादास्तस्मिन् विषये व्यावहारिकरूपेण प्रतिबद्धा आसन् । अनयोर्मतभेदयोः सततसंघर्षेण अहं १९६० ईस्वीये वर्षे "धर्मसंघशिक्षामण्डलं" त्यक्तवान्; परन्तु स्वामिपादैः सह वैचारिको वैयक्तिकश्च सम्बन्धस्तेषां ब्रह्मलीनतापर्यन्तं तदनन्तरञ्च दृढतमो जातः ।

१९६१ ईस्वीये वर्षे काशिहिन्दुविश्वविद्यालये राजनीतिशास्त्रविभागेऽह-मध्यापकपदं प्राप्तवान् । तदनन्तरं १९६२ ईस्वीये वर्षे पी-एच. डी. इत्युपाधिं प्राप्य स्वतन्त्ररूपेण पूर्वसंकल्पे संल्लग्नोऽभवम् । अस्मिन्नेव काले वाराणसेयसंस्कृत-विश्वविद्यालयस्य तत्कालीनकुलपतिपदमलङ्कुर्वाणाः पण्डितश्रीसुरतिनारायणमणि-त्रिपाठिवर्याः प्राचीनविषयेष्वाधुनिकदृष्ट्या ग्रन्थं लेखितुं मामकथयन्, तथा मया सहर्षं स्वीकृतम् । तस्यौपचारिकतां पूरयितुं शोधसंस्थानस्य तत्कालीनशोधनिदेशकाः पण्डितप्रवरश्रीबलदेवोपाध्यायवर्या विशेषयोगदानमकुर्वन् । अनया प्रक्रियया ममाऽयं चतुर्थो ग्रन्थः प्रकाश्यते ।

वैदिकज्ञानमाधृत्य स्थितानामार्थिकराजनीतिकसामाजिकविचाराणां व्याख्या-सम्पत्त्यै चतुर्षु खण्डेषु प्रस्तुतं "भारतीयविचारदर्शनम्", "नीतिविधिविमर्शश्च" एतद्-ग्रन्थद्वयं विद्यमानं चकास्ति, यदीया मूलधारैकैवास्ति । उक्ताश्चत्वारः खण्डाः ग्रन्थ-चतुष्टयरूपेणापि द्रष्टुं युज्यन्ते । सर्वान् ग्रन्थान् अध्यायाँश्चानुश्रित्य विषयप्रवर्तनं कृतमस्ति । एतत्तु सम्भव एव नास्ति यद् ग्रन्थचतुष्क एव प्रतिपाद्यविषयाणां तुलनात्मिका व्याख्या दीयेत । मूलभूता धारणा चैषाऽऽसीद् यत्सम्बद्धविषयाणां प्राचीनसामग्री आधुनिकव्यवस्थापनेन सह प्रस्तुता क्रियेत; किन्तु मूलतत्त्वस्य प्रस्तुतौ त्रोटनं परिवर्तनञ्च माभूत् । निष्प्रमाणा मौलिकता च नागता भवेत्, एकमपि वाक्यं निर्मूलं माभूत् । फलतः सन्दर्भाणां प्राचुर्यमभवत् । तेषां संकलनं यथास्थानं प्रस्तुतीकरणं च आवश्यकतामलभत ।

सन्दर्भाणां प्रयोगे विषयवस्तूनां प्रामाणिकप्रस्ताव उद्देश्यमासीत् । आवश्यकतानुसारेण मूलवचनानि यादृशान्यासन् तादृशान्येव उपन्यस्तानि । सन्दर्भ-साहित्येन व्याख्यातानि मूलवचनानि विषयप्रतिपादने साफल्यमभजन्। ईदृशविभिन्न-स्थलेषु मूलभाष्यमपि यथावदुद्धृतमस्ति । अत्रैष हेतुरस्ति यन्मत्कृतव्याख्यायां परम्परागतविद्वद्भिः सन्देहो माऽकारि मूलवचनान्याधृत्य तैः स्वयं निर्णयः कर्तुं शक्येत ।

ग्रन्थानां प्रत्येकमध्यायाः स्वतन्त्रग्रन्थस्य प्रतिरूपतां भजन्ते । तेषामध्यायानां वैदिकपरम्परागतमूलेन सह योजनायै मया प्रयासो व्यधायि । यदि तेषां विस्तरः अद्यतनविषयेण सह तुलना च क्रियेत, तदा तेषां स्थाने स्वतन्त्रो ग्रन्थ आदिष्टो भविष्यति । इमेऽध्याया भाविकार्यार्थमाधारशिलारूपतां प्राप्नुयुः, एतदर्थं मदीयः प्रयास आसीत् । यदि भविष्यति कालेऽन्ये विद्वांस एतादृशं कार्यं करिष्यन्ति, तदा ममैते ग्रन्थास्तेषां कार्यसम्पादने साहाय्यं सम्पादयिष्यन्ति, इति मे दृढो विश्वासः ।

भारतीयविचारदर्शनस्य प्रथमे राजनीतिके खण्डे कतिपयविषयविशेषाः सङ्गृहीताः। राजधर्माभिधाने प्रथमेऽध्याये राजधर्मस्य परम्पराक्षेत्रप्रकृतिप्रभृतयो विषया वर्णिताः सन्ति; किन्तु आधुनिकराजनीतिशास्त्रेण सह तदीया तुलना नैव

कृता । राजनीतेः राजनीतिदर्शन-राजनीतिविज्ञान-राजनीतिकविचारपर्यन्तं विषय-विकासः प्रचलन् अद्यत्वे राजनीतिकसंस्कृतिसीमां स्पृशति । यदीयोऽग्रिमः पादः राजधर्माख्यो भवितुमर्हति, यश्च वैदिकपरम्परायां सुतरां विद्यमानोऽस्ति; किन्तु मया एतद् विश्लेषणमपि न कृतम् । एतेनैव रूपेण साम्यवादिनां पुञ्जीकृतधनवादिनां च सयुक्तिकं समूलं चांऽशं गृहीत्वा तत्संस्थाद्वयीतः पृथग्भूत्वा च दण्डनीतिरुद्देश्यभूतं कार्यम्—अप्राप्तप्रापणम्, प्राप्तस्य विवर्धनम्, विवृद्धस्य तीर्थेषु वितरणमिति अस्मद् ग्रन्थस्योद्देश्यभूतं मन्तव्यम् । एतत्प्रतिपादने वैदिकधर्मस्य तादृशं स्वरूपं समक्षमायाति, यदीयविशेषतायां "सर्वे धर्माः राजधर्मे प्रविष्टा" इति सूक्तिस्तु चरितार्था भवति । एतेन सहैव अद्यतनीयप्राविधिकसामाजिकविसङ्गतीनां समाधानमपि लभ्यते; किन्तु पुञ्जीकृतधनवादिसाम्यवादिनाञ्च राजनीतिकार्थ-शास्त्रविश्लेषणानन्तरमेतत् सूक्तिप्रतिपादितव्यवहारस्य राजनीतिकम् अर्थशास्त्रं तस्य विकासः कर्त्तव्यो भविष्यति । इदं सर्वं भविष्ये ये समालोचका विद्वांस आगमिष्यन्ति तेषां कृते मया इमे विषयास्त्यक्ताः, त एव एतान् विषयान् विचारयिष्यन्ति ।

आधुनिकविद्वद्भिरेष भ्रम आपादितो यद्धर्मशास्त्रमर्थशास्त्रञ्च स्वतन्त्रः सम्प्रदायोऽस्ति । एतयोर्मध्ये स्थानविशेषे भेदोऽप्यस्ति । धर्मशास्त्रं नैतिकताया धर्मस्य च प्रामुख्यं स्वीकरोति । अर्थशास्त्रं तु लौकिकतायां विश्वसिति । फलत एतद् विवेचनेऽध्यायं प्रस्तुतीकृत्य तन्निराकरणमावश्यकतां भजते । एवमेव पाश्चात्त्यविद्वांसः अशोकं लौकिकतायाः, उदारवादिराजनीतिकदर्शनस्य च प्रतीक-मामनन्ति । विषयेऽस्मिन् एकस्य स्वतन्त्राध्यायस्य लेखनमावश्यकमभूद् यत् कथम् अशोको निरंकुशस्यावैदिकस्य राजतन्त्रस्य संस्थापकः । एतेन सहैव एतदपि स्पष्टयितुमावश्यकं यज्जैनराजनीतिः कया रीत्या वैदिकराजनीतिं यथावत् स्वीकरोति, यद्यपि जैनराजनीतेः दार्शनिकधार्मिकाश्च विचारा वैदिकधर्मविरोधिनः । फलतो जैनराजनीतिमाधारीकृत्य स्वतन्त्राध्यायस्य लेखनमावश्यकम् ।

राजशास्त्रसम्बद्धविषयान् आधारीकृत्य विभिन्नासु भाषासु विशेषतया आङ्ग्ल-भाषायां पर्याप्तो लेखो वर्तते। एतासु भाषासु एष एव प्रयासो विहितो यद् भारतीयराजनीतिकव्यवस्था पाश्चात्त्यव्यवस्थातः पाश्चात्त्यविचारधारातश्च श्रेष्ठत-माऽस्ति । १९१२ ईस्वीयवर्षतः १९३० ईस्वीयवर्षं यावत् प्रकाशनव्यवस्था मूलतः राष्ट्रवादमधिकरोति; किन्तु कुत्रापि एष प्रयासो न कृतो यद्भारतीयदर्शनं तदीयस्थिरसृष्टिः, युगः, इतिहास एतानि सर्वाणि पाश्चात्त्यचिन्तनधारातः सर्वथा भिन्नतां भजेयुरिति । यद्यपि हॉब्सादिवर्णितप्राकृतिकी स्थितिर्महाभारतस्य मात्स्य-न्यायश्चैकस्मिन्नेव स्तरे समतया प्रतीयते; किन्तु तात्त्विकरूपेण सर्वथा भेद एव अग्रेसरति । फलतः राजा, राज्यम्, राज्यव्यवस्था च सर्वं परस्परं भिन्नतामनुभवति । एतदर्थं वैदिकसमाजे दण्डस्य उत्पत्तिः, आवश्यकता च, राजशक्तेरभ्युदयश्च

इत्येवमादिविभिन्नविषयेषु मया विवादः प्रस्तावितः, येन भारतीयपक्षः स्पष्टतया समक्षमागच्छेत्; किन्तु स्थितिः ईदृशी अस्ति यत् पुनः विशदरूपेण विचारः कर्त्तव्योऽस्ति, यतो भारतीयपक्षः सुस्थिररूपेण प्रस्तुतो भवेत् ।

आर्थिकप्रश्नानाधारीकृत्य मया ये केचन अध्यायाः लिखितास्तानाधारीकृत्य कस्यामपि भाषायां ग्रन्था नोल्लिखिताः सन्ति । आङ्ग्लभाषया प्राचीनभारतीय-व्यवस्थायामार्थिकजीवनं समृद्ध्यादिकञ्चाधारीकृत्य विचारो जातः, किन्तु आर्थिक-सिद्धान्तविश्लेषणं भारतीयविचारदर्शनमित्याख्यग्रन्थ एव कृतं वर्तते । ग्रन्थस्यास्य प्रत्येकमध्यायाः सर्वतोभावेन वेदादिशास्त्रमूलिकाया आधुनिकयुगीनसमस्यायाः समाधाने समर्थाः । ग्रन्थेऽस्मिन् व्यक्तिगता सम्पत्तिः उत्पादनमतिरेकवितरणं विनिमयो भूस्वामित्वं श्रमसिद्धान्तादिविषये सर्वथा प्रथमः प्रयासः । स्वीया सम्पत्तिः धर्म्या; किन्तु तस्या धर्मानुसार्येव प्रयोगः कर्त्तव्योऽन्यथा तां निगृह्य साधुपुरुषाय दानं राज्यस्य दायित्वम् । आर्थिको विषयो धर्मशास्त्रप्रतिपाद्यः, अर्थाद् धर्मविषयः । लाभांशवितरणमावश्यकम् । सम्पत्तेर्नैसर्गिकाधिकारस्य मान्यतायाः स्थाने समाज-सापेक्षसम्पत्त्युपभोगसिद्धान्ते विषमताया न्यूनातिन्यूनं समतायाश्चाऽधिकाधिको व्यवहारश्च दृष्टिपथमायातः, यश्च रामराज्यपदेन सङ्कीर्तितो भवति ।

सर्वाधिको भ्रमः सामाजिकधार्मिकविषयेषु कारितः । देशस्य निःशेष इतिहास एव भ्रान्तियुक्तरीत्या विरचितः । वैदिकसमाजं प्रति तद्घटकीभूतवर्णाश्रमव्यवस्थां प्रति च मया व्यवस्थितो विमर्शो व्यधायि । वर्णजात्योरपि भेदो मन्यते सोऽपि भ्रम एव । वर्णव्यवस्थां प्रति विस्तृतविवेचनेन सह जातिविषयेऽपि यो हि भ्रम इदानीं प्रचारं प्राप्तः सोऽपि मयाऽत्र निराकारि । समाजस्य स्वरूपसंस्कारादिविषयेऽप्यत्र प्रचुरा सामग्री समुपस्थापिता यथा भारतीयसमाजस्य वास्तविकं स्वरूपं प्रत्यक्षीकर्तुं शक्यते । सर्वेभ्यो महत्तमोऽयं प्रश्नो यत् सामाजिकपरिवर्त्तनस्य समाजशास्त्रीयं विश्लेषणं स्यात्, किञ्च संस्कृतज्ञैः समाजस्य वैदिक्याः पद्धतेर्न कदापि विश्लेषणं कृतम् । अत्रेदं सम्भाव्यते यदेषा खलु तेषां समस्यैव न स्यादिति । अद्यतने समये त्वयं महत्त्वाधायकः प्रश्नः । अस्य सामाजिकपरिवर्तने आर्थिकं कारणम्, कलियुगस्य नैतिकताख्यप्रभृतिषु अध्यायेषु व्यवस्थितया रीत्या विचारोऽत्र समुपस्थापितः । यद्ययमंशः व्यवस्थितया पद्धत्या स्वतन्त्ररूपेण उपस्थापितो भवेत् तर्हि पाश्चात्त्यानां समग्रविश्लेषणानां प्रतिवादो वैदिकसमाजविज्ञानरूपेण प्रस्तुतो भविष्यति यस्य विश्वव्यापी विमर्शो भविष्यतीति मन्ये ।

नीतिविधिविमर्शस्य प्रारम्भः खलु देशकालपात्रनिर्वचनेन कृतः । देशस्य निर्वचने भुवनकोशेन सहैव भारतवर्षस्य स्वरूपं प्रामुख्यमभजत् । भारतवर्षस्य स्वरूप-निर्वचनावसरे पवित्रनिषिद्धभूमेः शास्त्रीयः पक्षोऽपि निरूपितः । कालतत्त्वमद्य महत्त्वपूर्णो विषयः सञ्जातः । कालनिरूपणावसरे कैश्चित् विश्वस्तरीयैर्वैज्ञानिकैः

सार्धमपि वार्त्ता सञ्जाता । तस्यां वार्त्तायां द्वौ खलु संस्कृतज्ञौ वैज्ञानिकावास्ताम् । तयोरेकेन संस्कृतज्ञवैज्ञानिकेन मम वार्त्ता प्राप्तनोबेलपुरस्कारेण वैज्ञानिकेन साकमपि कारिता । सर्वेषामियमिच्छा आसीद् यद् वैदिकांशैः सह आधुनिकविज्ञानस्यापि समुपयोगो मया करणीयः । किञ्च विज्ञाने स्वचञ्चुग्राहिप्रवेशमात्रमवेक्ष्य तद्विषये आत्मानमसमर्थं मत्वा वैदिकज्ञानानि मूलरूपेण यथावदुपस्थापितानि मया । यदि संस्कृतज्ञैर्वैज्ञानिकैर्विषयेऽस्मिन् कार्यं कृतं स्यात् तदा श्रेयस्करं मन्ये ।

पात्रनिर्वचनेऽपि पक्षद्वयमस्ति, एकः शास्त्रीयः पक्षोऽपरो नृतत्त्ववैज्ञानिकोऽथवा ऐतिहासिकः । मया पात्रमित्याख्येऽध्याये उक्तयोरुभयोः पक्षयोर्विश्लेषणं कृतम् । नृतत्त्ववैज्ञानिकमैतिहासिकं वा विश्लेषणमधिकं महत्त्वमावहति । साम्राज्यवादि-प्रजातीये विश्लेषणे अस्य सारो यद् यथासमयं समागतानां प्रजातीनां सामाजिकं स्वरूपं वैदिकसमाजोऽस्ति । यस्मिन् प्रमुखो विभाग आर्यानार्ययोर्विद्यते । वादविवाद-निवर्त्तने मया साम्राज्यवादिसमाजवैज्ञानिकानां पक्षस्य तेषामेव पद्धत्त्या खण्डनं विधाय वैदिकः पक्षः समुपस्थापितः ।

पाश्चात्त्यानामस्तीदमहङ्कारमूलं यत् त एव विश्वं विधिशासनमुपदिष्टवन्तः । अथ च विधिव्यवस्थाया मूलं रोमनविधावेवास्ति । एतदर्थं मया नीतिविधिविमर्शः भागद्वये व्यरचि । एतदर्थं मया विधिसमाजराज्यस्य परस्परं सम्बन्धः, विधेः स्रोतांसि, विधिनिर्वचनाद्यध्यायेषु प्रस्तुतानि । अत्र समाजस्य सर्वोच्चता, मानवविवेकस्य महत्त्वम्, निगमागमधाराः, वेदापौरुषेयत्वसिद्धान्तः, मान्यानामवैदिकव्यवहाराणां वैदिकविधिना सह मान्यता, आत्मप्रियताया मान्यता, इतिहासदर्शनम्, विधि-व्यवस्थायां तस्य प्रयोगः, पुराणादीनां स्थितयः, श्रुतिस्मृतिसदाचारात्मप्रिय-सिद्धान्तादीनां स्वरूपादीनि वैदिकव्यवस्थया प्रस्तूय इदं स्फुटीकृतं यत् पाश्चात्त्यं विधिशास्त्रं निश्चप्रचमेव तस्यां स्थितौ न प्राविशद् यतो वैदिकव्यवस्था प्रारभते । भारतेऽवैदिकसम्प्रदायानां तेषां स्वायत्ततायाश्च विषये निःशेषस्य राष्ट्रस्य कृते यत् समानविधिसंहितास्वरूपं समक्षमागतम्, यस्य च सहस्राब्दीपर्यन्तं प्रयोगोऽपि सञ्जातः, तदद्यापि प्रयोगार्थम् अध्ययनविषयतां न जहातीति ।

नीतिविधिविमर्शस्य द्वितीयो भागो विधिशास्त्रस्य व्यावहारिकं पक्षं प्रस्तौति । न्यायिकप्रशासनाभिधोऽध्यायः ग्रामतः केन्द्रस्य विविधवर्गसमुदायानाञ्च न्याय-व्यवस्थार्थं व्यापकं सन्दर्भं प्रस्तौति । अत्राध्याये समेषां कृते नाधिकव्ययुतं निष्पक्षं त्वरितं प्राप्यं न्यायस्वरूपं सम्यक् प्रतिपादितं वर्त्तते । विधिव्याख्यया सह देशकाल-पात्रसमाजशक्तिप्रयोगेण विधिव्यवस्थाया गतिमत्ता सैद्धान्तिकता च प्रयोगेण साकमेवैधते । अपराधशास्त्रस्य वैदिकविद्याया दण्डविधानस्य समग्रतायै अपराध-दण्डसम्बन्धिविविधेष्वध्यायेषु विस्तृतं विश्लेषणं स्पष्टीकुरुते यत्, न मे स्तेनो जनपदे

इति लक्ष्यं कथं चरितार्थतामभजत इति । एतदर्थं न केवलं सङ्कल्पमात्रं पर्याप्तमपि तु समाजस्य तादृशी विधिव्यवस्थाप्यपेक्षिता वर्त्तते ।

दायभागः समाजव्यवहारस्य मूलाधारोऽस्ति । सम्पत्तितदुत्तराधिकारसन्तति-विवाहपरिवारादीनां विषये न्यायव्यवस्थायाः प्रयोगप्रभृतयः समस्याः समाजस्य विचारणीयाः समस्याः सन्ति, एताः समस्या भारतीयैः कथं समाहिता इत्यस्य सम्यक् परिज्ञानं नास्त्याधुनिकानां विदुषाम्; अपि तु धर्मशास्त्रिणाञ्च कृते महत्त्वपूर्णम् । व्यक्तिसमाजराज्यैः सम्पत्तिविवादो व्यवस्थितरूपेण वैदिकव्यवस्थायां सुष्ठु समाहितः । स्मृतीनां भाष्यकारास्तु मध्ययुगे अतिमहत्त्वपूर्णं कार्यं कृतवन्तः । अतस्तेषां वचनानि मया प्रयुक्तानि, यतो हि तेभ्यः स्पष्टतरलेखस्य नास्त्यपेक्षा । तेषां व्याख्या इदानीमपि यथावद् व्यवहार्याः सन्ति ।

सर्वासां विधिव्यवस्थानां निष्कृष्टं रूपं प्रक्रियैवास्ति । वैदिकानां न्यायिकप्रक्रिया स्पष्टीकुरुते यद् राजशक्तिः कार्यपालिका वा न्यायिकप्रक्रियायाः साधनमस्ति । राजा विधिनिर्माणविधिव्याख्याने चासमर्थस्तथा च विधिव्यवस्थाञ्चापहाय शासितुं नाधिकृतः । सर्वं खलु समाजे विधौ वा समाविष्टम् । समाजतो विधेर्वा अधिक ईश्वरोऽपि नास्ति । तेनापि विधिमर्यादायामेव लीला करणीया, नान्यथा । कृते विधिविपरीताचरणे ईश्वरः श्रद्धास्पदम्, परञ्च नानुकरणीयः । वैदिकानां कृते नेश्वरः प्रमाणमपि तु विधिरेव प्रमाणम् । विधिरपि निश्चितप्रक्रिययैवावधार्यते । सीतायाः पावित्र्यविषयो मानुषप्रमाणानपेक्षः दैवप्रमाणाधीन आसीत्, फलतोऽग्नि-परीक्षाया विचारः समायातः । सर्वज्ञो रामोऽपि व्यवस्थामेतां स्वीकृतवान् ।

इत्थञ्च राजनीतिकार्थिकसामाजिकविधिव्यवस्थयाऽभ्युदयं समवाप्तो जनः स्वतन्त्रः । ग्रन्थस्य समापनमपीदृक् स्वातन्त्र्यभावेन कारितोऽस्ति । ईदृशः स्वतन्त्रो जन एव निःश्रेयसावाप्तेरधिकारी वर्त्तते—**अथातो ब्रह्मजिज्ञासा** ।

ग्रन्थानां प्रकाशने महान् विलम्बः सञ्जातः । १९६८ ईस्वीयवत्सरे मया पाण्डुलिपयः प्रकाशनविभागाय प्रेषिताः; किन्तु विश्वविद्यालयीयमुद्रणव्यवस्थायां सञ्जातः कश्चनावरोधः । अन्ततः प्रकाशनाधिकारिणः श्रीहरिश्चन्द्रमणित्रिपाठिनः प्रयासेन ग्रन्था बहिर्मुद्रणार्थे प्रदत्तास्तदनन्तरं प्रकाशनं सञ्जातम् ।

एतदर्थं श्रीहरिश्चन्द्रमणित्रिपाठिनं प्रति अथ च रत्नामुद्रणालयं प्रति आभारं ज्ञापयामि । प्रकृतभागस्य प्रकाशने डॉ. विद्यानिवासमिश्रमहोदयानामभिरुचिरासीत् । इदानीं प्रोफे. वि. वेङ्कटाचलमहाभागानां कुलपतित्वे ग्रन्थोऽयं प्रकाशतामेति, एतान् प्रत्यपि आभारं कृतज्ञताञ्च ज्ञापयामि । येषां विदुषां साहाय्यमत्र सामग्र्यां कृतं तान् प्रत्यपि आभारं ज्ञापयामि ।

"भारतीयविचारदर्शनम्" ग्रन्थस्योभौ खण्डौ करपात्रस्वामिनः जीवनावधौ प्रकाशितौ । तान् ग्रन्थानवलोक्य श्रीमतां स्वामिपादानां प्रतिक्रिया आसीत्, यत्

कौटलीयार्थशास्त्रस्य प्रकाशनानन्तरं संस्कृतवाङ्मय एतादृशस्य प्रशस्तस्य मौलिक-ग्रन्थस्य प्रथमं प्रकाशनम् । एतादृशा एव भावाः काशीविद्वत्परिषदोऽध्यक्षाणां श्रीमतां पण्डितश्रीरामप्रसादत्रिपाठिनां सन्ति । विभिन्नानां संस्कृतविदुषां शङ्कराचार्य्याणां प्राच्यविद्याविशारदानां ग्रन्थप्रशस्तौ एतादृशा एव विचाराः । एतेषां विभिन्नानां शङ्कराचार्य्याणां विदुषां चाशीर्वदिनाऽहं सन्तुष्टः ।

वेदादिशास्त्रमहाकाव्यनीतिग्रन्थप्रभृतिषु प्रतिपादितविचाराणामुपादेयताऽऽधुनिके जगति विद्यते, एतावता अस्मदीयं तात्पर्यं तादृशं नास्ति येन तेषां विचाराणां याथातथ्येन प्रयोगो अत्यावश्यकः । शास्त्रेणापि स्वयमेष भावो नाभिमन्यते । देशकालपात्रानुसारेण तदीया संगतिः, व्यवस्था च मुख्या । एतत्कार्यमाचार्याणां कृते कर्त्तव्यं भवति । विज्ञानद्वारा भौगोलिकीनां प्रजातीनाञ्च सीमा ध्वंसिता । फलतः साम्प्रदायिकप्रजातीयक्षेत्रगताश्च सङ्कीर्णता विलोपिताः । ईसाईमुसलमानयहूदी-हिन्दुसदृशानि विभाजनानि विखण्डितमानवतायाः प्रतीकरूपतां भजन्ति । वैदिक-धर्मस्तु सर्वहिताय प्रवृत्तोऽस्ति, न हि केवलं मानवानां कृतेऽपि तु "सर्वभूतहिते रताः" इत्युक्तिं चरितार्थयति । गौतमबुद्धेन सर्वप्रथमतोऽवैदिकभाषया "बहुजनहिताय बहुजनसुखाय" इत्येष सिद्धान्तः स्थापितः, अन्यथा "सर्वे भवन्तु सुखिनः" इत्येष एव सङ्कल्पोऽस्ति । विश्वज्ञानस्य सन्दर्भे वैदिकपरम्पराया व्याख्यानकरणे ये विद्वान्सः कार्यं करिष्यन्ति, यदि तेषां कृते मदीयैर्ग्रन्थैः साहाय्यं प्राप्येत तर्हि अहं स्वपरिश्रमं सफलं मन्ये । विदुषां स्नेहस्य कृपायाश्च सम्बलमेव सर्वस्वम् । इति शम् ।

**हरिहरनाथत्रिपाठी**

श्रावणपूर्णिमा
२०५० वि. सं.

# विषयग्रामः

अध्यायः ६



अध्यायः ७



अध्यायः ८



अध्यायः ९



अध्यायः १०



अध्यायः ११

**समर्पणम्**

भारतस्य राष्ट्रपतिपदं मण्डयद्भ्यः
तत्रभवद्भ्यो विद्वद्वर-डॉक्टर-शङ्करदयालशर्म्ममहोदयेभ्यः
सबहुमानमुपच्छन्दये ग्रन्थमिमम्

# अध्यायः १

## विधिनिर्वचनम्

विधिरज्ञातज्ञापनात्मकः[1] । 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते॥' अपूर्व विधिः, नियमविधिः, परिसंख्याविधिः[2] । विधिरत्यन्तदुर्बलोऽपि तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति 'प्रतिषेधः प्रदेशेऽनारभ्य विधाने च' (१०।८।१); सत्यम्, यस्य शास्त्रमन्तरेण अप्राप्तिरस्ति तत्रैतदेवम् (१।२।१।२); विधिरनुक्तो हि सन् अर्थवादादेव कल्प्येत यदि अन्यथा नोपपद्येत (१।२।१।७, पृ. १२०)।

विधिः त्रिविधः । तत्र अत्यन्ताप्राप्तविषयप्रापको विधिरपूर्वविधिः । पक्षे प्राप्तस्य अप्राप्तांशपूरणफलको विधिः नियमविधिः । एकस्मिन् प्रधाने नियतप्राप्तस्य अङ्गद्वयस्य, एकस्मिन्नङ्गे नियतप्राप्तस्य प्रधानद्वयसम्बन्धस्य अन्यतरनियतफलको विधिः परिसंख्याविधिः । उद्देश्यविधेयफलान्यतराणामनिर्धारितस्वविरोधिप्राप्तिप्रयुक्त-स्वाप्राप्तांशप्रापको विधिर्नियमविधिः, इत्यपि मतम्।

परिसंख्यात्वञ्च वैदिकप्रमाणेन केनचित् सम्बन्धेन द्वयोरेकसम्बन्धत्वे लिङ्गादि-प्रमाणकृतविध्यनुपपत्त्यन्तरेण समुच्चित्य नित्यप्राप्तयोः अनुयोगितासम्बन्धेन इतरनिवृत्तिफलकनञाद्यसमभिव्याहृतविधित्वम्। वर्त्तते चेदम् 'अश्वाभिधानीमादत्ते' इति शेषिपरिसङ्ख्यायाम्। शेषित्वसम्बन्धेन अश्वाभिधानीगर्दभाभिधान्योः मन्त्र-सम्बन्धित्वेन प्राप्तयोः इतरनिवृत्तिफलकत्वात्।

उभयभिन्नो विधिरपूर्वविधिः । 'प्राप्तिफलको विधिः' इति लक्षणं तु नियम-परिसंख्ययोः फलत्वाभावेऽप्राप्तिरेव फलत्वेन पर्यवस्यति । केचित्तु अयोगान्योग-व्यावृत्तिभिन्नफलको विधिः अपूर्वविधिः । अयोगव्यावृत्तिमात्रफलको नियमः । अन्ययोगव्यावृत्तिमात्रफलको विधिः परिसंख्या इति लक्षणान्याहुः ।

परे तु तात्पर्यविषयतापर्याप्त्यवच्छेदकप्राप्तमद्विधित्वमपूर्वविधित्वम् । एवं तात्पर्यविषयतात्पर्याप्त्यवच्छेदकनिवृत्तिमद्विधित्वं परिसंख्यात्वम्। 'तात्पर्यविषय-तापर्याप्त्यवच्छेदकायोगव्यवच्छेदकत्ववद्विधित्वं नियमत्वम् । विषयताया अपि पर्याप्त्यङ्गीकारात् । यत्र तु एकस्यैव विधेरुभयत्र तात्पर्यं तत्र सङ्करोऽपि इष्ट एवेत्याहुः । वर्त्तते चैतत् प्रोक्षणविधौ प्रोक्षणप्राप्तिफलकत्वात् । तत्र अपूर्वविधिः

---

1. न्यायसुधा पृ. ८४५।
2. तन्त्रवार्त्तिकम् १।२।४।३४ पृ. १५२।

उत्पत्तिविधि-विनियोगविधि-अधिकारविधि-प्रयोगविधिभेदेन चतुर्धा । नियमपरि-संख्याविधिः प्रायेण विनियोगविषयावेवेति ।

सोऽपि विधिः विषयभेदादष्टविधः । (१) शुद्धधात्वर्थविधिः, (२) अन्योद्देशेन विशिष्टधात्वर्थविधिः, (३) विशिष्टधात्वर्थविधिः, (४) अन्योद्देश्येन विशिष्टधात्वर्थ-विधिः, (५) धात्वर्थोद्देशेन अन्यविधिः, (६) धात्वर्थोद्देशेन विशिष्टान्यविधिः, (७) धात्वर्थोद्देशेन अन्ययोः सम्बन्धविधिः, (८) मुक्त्वा धात्वर्थमनयोः सम्बधविधिश्च ।

धात्वर्थोद्देशेन अन्यसम्बन्धविधेः धात्वर्थोद्देशेनविशिष्टविधितो भेदाभावात् सप्तविधत्वं युक्तम् । अत्र च पूर्वापेक्षया उत्तरोत्तरदौर्बल्यं प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वव्युत्पत्तितद्भङ्गाभ्यां द्रष्टव्यम् ।

विधिर्द्विविधः—प्रत्यक्षः कल्प्यश्च । प्रत्यक्षोऽप्यनेकधा । कल्प्योऽपि—(१) नानास्मृतिकल्प्यः (२) आचारकल्प्यः (३) विधिकल्प्यः (४) अर्थवादकल्प्यः (५) मन्त्रकल्प्यश्च । तत्र विधिकल्प्यो यथा विशेषणविधिः । अर्थवादकल्प्यस्तु द्विविधः—स्वतन्त्रार्थवादकल्प्यः, विध्यन्तरशेषार्थवादकल्प्यश्च । आद्योऽपि त्रिविधः—फलार्थवादकल्प्यः, सिद्धवत्कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च । अन्त्योऽपि द्विविधः-एककर्तृकोपाख्यानरूपपरकृतिकल्प्यः, अनेककर्तृकोपाख्यानरूपपुराकल्प्यश्च । मन्त्रकल्प्योऽपि द्विविधः ।

विधिः पुनर्द्विविधः-अर्थकर्मविधिः, गुणकर्मविधिश्च । गुणकर्मविधिरपि त्रिविधः—अदृष्टार्थः, दृष्टार्थः, उभयार्थश्च । उत्तरौ द्विविधौ-प्रतिपत्तिरूपौ अप्रतिपत्तिरूपौ च।

विधिः पुनरपि चतुर्विधः—उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकार- विधिश्च । तत्र उत्पत्त्यादिविधः चतुर्विधोऽपि प्रत्येकं द्विविधः—क्रत्वर्थः, पुरुषार्थश्च । पुरुषार्थः प्रयोगविधिरपि द्विविधः—अवान्तरप्रयोगविधिः, महाप्रयोग-विधिश्च । गुणकर्मविधिरपि त्रिविधः—अदृष्टार्थः, दृष्टार्थः, उभयार्थश्च । उत्तरौ द्विविधौप्रतिपत्तिरूपौ अप्रतिपत्तिरूपौ च । क्रत्वर्थोऽधिकारविधिरपि द्विविधः—नैमित्तिकः सन् अदोषनिर्घातार्थः, अनैमित्तिकः सन् दोषनिर्घातार्थोऽपि च । द्वितीयो द्विविधः—विहितातिक्रमनिमित्तकः, निषिद्धाचरणनिमित्तकश्च । पुरुषार्थः अधिकार-विधिस्त्रिविधः—काम्यः, नैमित्तिकः, संवलितश्च । काम्योऽपि द्विविधः—कर्मफलसम्बन्धपरः गुणफलसम्बन्धपरश्च । नैमित्तिकोऽपि द्विविधः—नियतनिमित्तकः अनियतनिमित्तकश्च । तृतीयोऽपि द्विविधः—निमित्तजन्यदोषनाशफलसंवलितः, इतरफलसंवलितश्च ।

विधिरपि पुनरपि एकादशविधः—सामान्यविधिः, विशेषविधिः, प्रतिप्रसवविधिः, अभ्यनुज्ञाविधिः, उपसंहारविधिः, व्यवस्थाविधिः, पर्युदासविधिः, अभावविधिः, साधारण्यविधिः, उत्कर्षविधिः, अपकर्षविधिश्चेति ।

विधिः धर्मे प्रमाणम् । विधिः न्याय्यः । वादमात्रकमनर्थकम् । विधिः प्रवर्तनात्मकशब्दभावना । प्रवृत्तिहेतुर्व्यापारश्च प्रवर्त्तना । न च समीहितसाध्याद-न्यत्र चेतनः प्रवर्तयितुं शक्यते इति विधिः स्वस्य प्रवर्तनात्वसिद्ध्यर्थं स्वभाव्यायाः भावनायाः समीहितभाव्यत्वं गमयन् भावनाकरणस्य समीहितोद्देशप्रवृत्तव्यापार-गोचरत्वं गमयति । विधिः प्रवर्त्तनारूपः । विधिः फलांशस्य न प्रयोजकः । विधिः फलान्त एव विध्युद्देश इत्युच्यते । विधिः भृत्यादेर्निकृष्टस्य प्रवर्तनं प्रेरणं लिङर्थः । विधिः यदि अज्ञातः ततो विधिः, यदि ज्ञातः ततोऽनुवादः । यावत् किं केन कथं भावैः तद्भावना न पूर्यते तावत् विधिः न प्रवर्तते[1] ।

विधिः वेदभागः पञ्चसु अन्यतमः । स च धर्मे मुख्यं प्रमाणम् । नामधेयान्यपि 'अग्निहोत्रम्' इत्यादीनि विधावेव अन्तर्भवन्ति । विधिः साक्षात् प्रमाणम्, अर्थवादमन्त्रौ तु विध्यन्वयेन । पुरुषो येन प्रवर्त्यते स विधिः । प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । यन्न कदाचिदपि प्राप्नोति स विधिः । विध्यन्तरशेषार्थवादकल्प्यो विधिः । विशिष्टभावनाविधाने आर्थिको विशेषणविधिरावश्यकः । तत्र च यदंशे अप्राप्तिस्तदंश एव विधिकल्पनम् । फलस्य रागप्राप्तत्वान्न विधिः । निषेधेष्वपि कलञ्जभक्षणादौ अनिष्टसाधनत्वबोधात् अधर्मे प्रामाण्यमिति केचित् ।

मीमांसकास्तु विधेः प्रवर्तनायां शक्तिः शब्दजन्यप्रवृत्तौ प्रवर्तनाज्ञानस्य हेतुत्वात् । प्रवर्त्तनाज्ञानस्य प्रवृत्तिहेतुत्वमित्यनुभवात् । विधिनैव धर्मो गम्यते न प्रत्यक्षानुमाना-भ्याम् । विधेः अबोधकत्वान्न धर्मे प्रामाण्यमिति पूर्वपक्षः । अबोधकत्वसापेक्षत्वयोः अप्रामाण्यकारणयोः अभावात् विधेः स्वतः सिद्धं प्रामाण्यमिति सिद्धान्तः[2] ।

**विधेः प्रयोजनम्** । प्रयोजनं खलु इह विधेः वेदप्रामाण्यसिद्धिर्वा, पदार्थसंसर्ग-प्रतीतिर्वा, हिताहितसाधनताऽवगमो वा प्रवृत्तिनिवृत्तिनिमित्तम् । न तावत् प्रामाण्य-सिद्धिः, अन्तरेणापि विधिं तत्संभवात् ।

स्यादेतत्, विधिविरहे कार्यशून्यतया भूतार्थावगाहिनो भूतस्य च मानान्तर-विषयतया तदपेक्षत्वाद् वेदस्य प्राणाण्यं विहन्येत, पुरुषवाक्यवत् । तदनुपपन्नम् । अत्रेदं तु भवान् पृष्टो व्याचष्टाम्, यदेतत् पुरुषवचसां मानान्तरापेक्षत्वम्, तत् किं भूतार्थतया प्रत्यक्षादीनामप्रामाण्यापत्तेः । तान्यपि हि भूतार्थान्येव । चैत्यवन्दनादि-

---

1. तन्त्रवा. ३।६।७।१७ ।
2. जैमिनीयन्यायमालाविस्तरः १।१।५।

वाक्यस्य च कार्यार्थाभिधायिनो निरपेक्षतया प्रामाण्यप्रसङ्गात् । विनियोगमात्रपरमेतत्, न कार्यपरमिति च स्वतन्त्रसिद्धान्तश्रद्धामात्रविजृम्भितम्, न प्रामाणिकम् । तस्मात् वक्तृधीप्रभवत्वमेव सापेक्षत्वे हेतुः, तच्च भूतार्थेऽपि वैदिके नास्ति इति नास्ति सापेक्षता । सा च कार्यनिष्ठानामपि पुरुषवचसाम् । तन्न प्रामाण्यसिद्धिः अर्थो विधिः ।

नापि पदार्थसंसर्गप्रतीतिः, विनाऽपि विधिना 'स्थाल्यामोदनं पचति चैत्रः' इति पदार्थसंसर्गप्रतीतेरुपपत्तेः। यदि मन्येत ' विवक्षाऽधीनरचनानि पुंसो वचनानि, विवक्षा च मानान्तरावधारणाधीना, मानान्तरं च पदार्थसंसर्गगोचरम्, न पदार्थमात्रगोचरम्, इति तत्प्रभवतया पुंवाक्यानान्यापि पदार्थसंसर्गमेव गोचरयन्ति, न त्वेवं वेदवाक्यानि अपौरुषेयाणि, इति पदार्थसंसर्गसिद्ध्यर्थं विधिरेषितव्यः' इति, तदयुक्तम् । विधावपि तदनुपपत्तेः । 'तस्मिन् सति तदाकाङ्क्षानिबन्धः सम्बन्धः पदार्थानामिति चेत्, तदाकाङ्क्षैव कुतः । 'तदपर्यवसानात्' इति चेत्, न क्रियादिष्वपि साम्यात् । यथा हि शब्दाभिहितो विधिः विषयनियोज्यादिभिर्विना न पर्यवस्यति, यथा क्रियादयोऽपि पदार्थाः कारकादिभिर्विना इति ते एव पदैरुपात्ताः आकाङ्क्षायोग्यतासन्निधिसध्रीचीनाश्च संसर्गं गमयिष्यन्ति इति कृतं विधिना । विशिष्टार्थप्रतीतिप्रयुक्तत्वेन च पदानां समभिव्याहारस्य लोके विदितत्वात् तदुपायत्वाच्च वैदिकार्थप्रतीतेः ।

नापि हिताहितसाधनताऽवगमः तस्य प्रयोजनं संभवति, 'संतापमपनयति च तप्तस्य सलिलावसेकः' 'दहति च ज्वलनज्वालाकलापालिङ्गन' मिति वर्तमानापदेशादविहितहितसाधनताऽवगमात् । ततश्च ईप्साजिहासाभ्यां प्रमाणान्तरादिव प्रवृत्तिनिवृत्त्योरुपपत्तेः व्यर्थो विधिरिति ।

मा भूवन् अन्यानि प्रयोजनानि विधेः, पुरुषार्थसाधनाशवबोधस्तु विधिनिबन्धनः। नहि 'स्वर्गकामो यजेत' इति विधौ असति स्वर्गो भावनाया भाव्यः संभवति । सा हि भाव्यमात्रापेक्षिणी । भवति च भाव्यः, यागादयश्च भवितारः, इति समानपदोपादानतया प्रकृत्यर्थतया च तदनुरक्ताया एवं भावनायाः प्रतीतेः । स्वर्गस्य च पदान्तरोपादानतया पुरुषविशेषणतया च व्यवस्थानात् तमपहाय यागादीनेव भाव्यतया भावना गृह्णीयात् । कर्त्रपेक्षितोपायतारूपविध्युपहितमर्यादा पुनरियं भावना समानपदोपादनमपि प्रथमावगतमपि दुःखाकरतया कर्त्रनपेक्षितमपहाय धात्वर्थमसमानपदोपादानमपि पुरुषविशेषणमपि अपेक्षिततया स्वर्गमेव भाव्यमवलम्बते । समासादिततथाविधभाव्या च यागादीन् करणतया स्वीकरोति इति पुरुषार्थसाधनता तेषां सिद्धा भवति । कथं तर्हि वर्तमानापदेशेभ्यो लोके पुरुषार्थसाधनताऽवगतिः ? प्रमाणान्तरवशात्, न शब्दसामर्थ्यात् । यथा चैतत् तथा 'द्रव्यसंस्कारकर्मसु' इति च, 'असाधकं तु तादर्थ्यात्' इति च व्याचक्षाण उपपादयिष्यति स्वयमेवाचार्यः ।

विधेःसन्दिग्धत्वेऽर्थवादो निर्णयहेतुः । विधेः सामान्यमात्रे पर्यवसितस्य अर्थवाद-विरोधात् विषयसंकोचात्मको बाधोऽभ्युपगम्यते । विधेःस्तुत्या अविनाभावात् अन्यतरदर्शनेन अन्यतरदनुमाय वाक्यं पूरयितव्यम् । विधेः स्तुतेश्चैकवाक्यत्वं भवति पदानां साकाङ्क्षत्वात् । विधेः स्वतः प्रामाण्यम्, अबोधकत्वसापेक्षत्वयोरप्रामाण्य-कारणयोरभावात् । कारकान्यत्वे विधेः व्यापारभेदो भवति । एककारकनिबन्धनं तु अर्थसहस्रमपि एकप्रयत्नसाध्यम् ।

विधीनां प्रवृत्तिजनकप्रवर्तनाज्ञानं प्रयोजनम् । नियोगार्थनिर्वृत्तेः किमन्यत् प्रयोजनं सर्वविधीनाम् । सर्वविधीनामप्राप्तस्वविषयत्वम्[1] । सर्वविधीनां पुरुषार्थ-फ़लत्वात् प्रयोजनाकाङ्क्षा स्वर्गादिना निवर्त्यते[2] । विधौ अर्थवादावगतविषये ऋणादिशब्दानामनुवादकत्वात् लक्षणायामप्यदोषः[3] । विधौ अवाचकशब्दायोगः[4] । विधौ गौणत्वासम्भवः[5] । विधौ च लक्षणायोगः । विधौ लक्षणा अन्याय्या । विधौ शब्दार्थेन व्यवहारो भवति[6] । क्वचित् लक्षणयाऽपि विधानं भवति । विधौ हि न परः शब्दार्थः प्रतीयते[7] । अनुवादे हि लक्षणा न्याय्या न विधौ । अल्पार्थविधौ च सर्वपदार्थान्वयसंभवे बह्वर्थविधिर्न लभ्यते । कृत्वा शब्दश्च नैव विधौ स्मर्यते । 'विधिषु श्राद्धो अधिकारी' इति न्यायेन विवर्तवादावलम्बनेन प्रपञ्चमिथ्यात्वे निश्चिते, विहिते प्रवृत्त्यसंभवात् परिणामवादस्यैव विहितप्रवृत्त्युपयोगः ।

विध्यनुवादयोः विधिर्ज्यायान्; अपूर्वार्थप्रकल्पकत्वात् । यदि तु प्रमाणान्तर-प्राप्तिर्नावगम्यते[8] । विध्यनुवादयोः विशेषः । कदाचित्तु किञ्चित् विधित्सितं भवति । कथम् ? कदाचिदुपसर्जनीयभूतोऽर्थो विधित्सितः, प्रधानीभूतोऽनुवादः । तद्यथा-'दण्डी' इत्युपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते । कदाचित्तु निर्ज्ञाते पुरुषे दण्ड-गुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति, यथा (वा) 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति'[9] ।

अथ विधिः कः । यद् वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्त्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते ह्यनेनार्थः । विधिप्रकाराः षट्–(१) शुद्धधात्वर्थ-करणकभावनाविधानात् आद्यो विधिप्रकारः, (२) अन्योद्देश्येन तद्विधिरपरः,

1. वा. ३।६।१।२ ।
2. वा. ३।४।४।१३ ।
3. वा. ३।३।१।२।
4. सु. पृ. ७१।
5. वा. ३।५।२०।५२।
6. भा. ८।३।६।२३।
7. वा. १।२।३।२९।
8. वा. १०।६।२।३।
9. वा. ३।१।६।१२।

(३) धात्वर्थोद्देशेन अन्यकरणकभावनाविधिः तृतीयः, (४) धातोः साधुत्वार्थकत्वमङ्गीकृत्य अन्योद्देशेन अन्यकरणकभावनाविधिश्चतुर्थः, (५) गणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः, (६) अन्योद्देशेन पूर्वोक्तः षष्ठः।

प्रमाणं हि शब्दः प्रतिज्ञायते। बोधकं च प्रमाणम्। तत्र प्रवृत्तिहेतुं कञ्चनार्थातिशयमवगमयन् शब्दः चोदनात्वेन प्रमाणतमश्नुते। स्वयमेव तु प्रवृत्तेः कारकः तां प्रमाणतामपजह्यात्। न हि कारको हेतुः प्रमाणम्, अपि तु ज्ञापकः। विषयावबोधनान्न दोष इति चेन्न, तन्मात्रस्य अन्यत्रापि तुल्यत्वात्। 'चोदनालक्षणोऽर्थो धर्मः इत्यभ्युपगमानर्थक्यात्। विधानं विधिः। यथा **मनुः**[1]

**त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयंभुवः।**
**अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो॥ १।३॥**

हि शब्दो हेतौ। यस्मात्त्वमेकोऽद्वितीयः अस्य सर्वस्य प्रत्यक्षश्रुतस्य स्मृत्याद्यनुमेयस्य च विधानस्य विधीयन्तेऽनेन कर्माण्यग्निहोत्रादीनीति विधानं वेदस्तस्य स्वयम्भुवोऽपौरुषेयस्याचिन्त्यस्य बहुशाखाविभिन्नत्वादियत्तया परिच्छेत्तुमयोग्यस्य अप्रमेयस्य मीमांसादिन्यायनिरपेक्षतयानवगम्यमानप्रमेयस्य। कार्यमनुष्ठेयमग्निष्टोमादि, तत्त्वं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. २।१।१) इत्यादि वेदान्तवेद्यं तदेवार्थः प्रतिपाद्यभागस्तं वेत्तीति कार्यतत्त्वार्थवित्। मेधातिथिस्तु कर्ममीमांसावासनया वेदस्य कार्यमेव तत्त्वरूपोऽर्थस्तं वेत्तीति कार्यतत्त्वार्थविदिति व्याचष्टे। तन्न। वेदानां ब्रह्मण्यपि प्रामाण्याभ्युपगमान्न कार्यमेव तत्त्वरूपोऽर्थः। धर्माधर्मव्यवस्थापनसमर्थत्त्वात्प्रभो इति संबोधनम्।

विध्यादयश्च—'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र वा प्राप्तौ परिसंख्या निगद्यते' इति। अत्यन्ताप्राप्तप्रापणं विधिः, यथा 'अग्निहोत्रं जुहुयात्' 'अष्टकाः कर्त्तव्याः' इति। पक्षे प्राप्तस्याप्राप्तपक्षान्तरप्रापणं नियमः, यथा 'समे देशे यजेत' 'दर्शपूर्णमासाभ्यां यजेत' इति यागः कर्त्तव्यतया विहितः। स च देशमन्तरेण कर्तुमशक्य इत्यर्थाद्दिशः प्राप्त। स च समो विषमश्चेति द्विविधः। यदा यजमानः समे यियक्षते तदा समे यजेतेति वचनमुदास्ते, स्वार्थस्य प्राप्तत्वात्। यदा तु विषमे देशे यियक्षते तदा समे यजेतेति स्वार्थे विधत्ते, स्वार्थस्य तदानीमप्राप्तत्वात्। विषमदेशनिवृतस्त्वार्थिकी। चोदितदेशेनैव यागनिष्पत्तेरचोदितदेशोपादानेन यथाशास्त्रं यागो नानुष्ठितः स्यादिति। तथा 'प्राङमुखोऽन्नानि भुञ्जीत' इति।

एकस्यानेकत्र प्राप्तस्यान्यतो निवृत्यर्थमेकत्र पुनर्वचनं परिसंख्या तद्यथा—'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्ययं मन्त्रः स्वसामर्थ्यादश्वाभिधान्याः गर्दभाभिधान्याश्च रशनाया ग्रहणे विनियुक्तः, पुनरश्वाभिधानीमादत्त इत्यनेनाश्वाभि-

1. मनु. ७।१८१; रघु. ७।१४; गीता १६।२३।

धान्यां विनियुज्यमानो गर्दभाभिधान्या निवर्तते । यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र हि यदृच्छया शशादिषु श्रूयमाणं श्वादिभ्यो निवर्तत इति ।

अत्र विधिशब्दस्य प्रयोगो धर्मशब्दस्य स्थाने कृतोऽस्ति । विधिस्थानापन्नस्य धर्मस्य माहात्म्यं तैत्तिरीयारण्यके–

**धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठम्प्रजा उपसर्पन्ति ।**

**धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ॥१०।६३॥**

धर्मपदलक्ष्यार्थस्यापूर्वस्य प्रलयेऽपि बीजरूपेणाऽवस्थितिः अन्यथा पुनः सृष्ट्यनुपपत्तेः क्रियादिरूपस्य धर्मपदमुख्यार्थस्य तु कल्पादौ सृष्टिः कल्पान्ते च नाश इति सिद्धान्तः । तथा च बृहदारण्यकोपनिषदि–

**'स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांसमाशंसते धर्मेण तथा राज्ञैवं यो वै स धर्मः सत्यं वै तत् तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १।४।१४ ॥**

अत्र भगवत्पादीयं भाष्यम्–"स चतुरः सृष्ट्वापि वर्णान् नैव व्यभवद् उग्रत्वात्क्षत्रास्यानियताशङ्कया । तच्छ्रेयोरूपमत्यसृजत् । किं तत् धर्मं तदेतत् श्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रम् । क्षत्रस्याऽपि नियन्तृ । उग्रादप्युग्रम् । यद्धर्मः यो धर्मः । तस्मात् क्षत्रस्याऽपि नियन्तृत्वाद् धर्मात्परं नास्ति तेन हि नियम्यन्ते सर्वे । तत्कथमिति । उच्यते– अथो अपि अबलीयान् । दुर्बलतरः बलीयांसम् आत्मनो बलवत्तरमपि । आशंसते कामयते जेतुम् धर्मेण बलेन । यथा लोके राजा सर्वबलवत्तमेनापि कौटुम्बिकः । एवम् तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात् सर्वनियन्तृत्वम् । यो वै स धर्मः व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणाः सत्यं वै तत् । सत्यमिति यथाशास्त्रार्थता स एव वानुष्ठीयमानो धर्मनामा भवति । शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवन्तस्मात्सत्यं यथाशास्त्रं वदन्तं व्यवहारकाले आहुः समीपस्थाः उभयविवेकज्ञाः धर्मं वदतीति, प्रसिद्धं लौकिकं न्यायं वदतीति । एतद् यदुक्तमुभयम् ज्ञायमानमनुष्ठीयमानञ्चैतद्धर्म एव भवति । तस्मात् स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानिव नियमयति तस्मात् क्षत्रस्यापि क्षत्रम् इति ।

अथ विध्यर्थवादादीनां वेदावयवानां धर्मे स्वतः प्रामाण्यमुपयोगविशेषांश्च विशेषतो वर्णयितुं तस्यैव मानववाक्यस्य (वेदोऽखिलो धर्ममूलम् अत्र अखिलः) इति त्र्यक्षरोंऽशो व्याख्यायते । तस्य च संक्षेपतश्चत्वारि तात्पर्याणि यथा–

(१) वेदः पूर्वोक्तलक्षणलक्षितो 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बाद्युक्तो मन्त्रब्राह्मणसमुदाय एव न केवलं धर्ममूलं किन्तु (अखिल) श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याऽनुमितोऽतिदेशकल्पोऽपीति मित्रमिश्रेणोक्तमाद्यम् ।

(२) 'सः त्रिभिर्वेदैर्विधीयते' इत्यापस्तम्बादिवचनात्त्रय्या एव धर्ममूलत्वम् नाथर्वणस्येति शङ्का व्यावृत्यर्थं वाऽखिलग्रहणम् । आथर्वणस्य प्राधान्येन वैतानिकाग्निहोत्रादिधर्माप्रतिपादकत्वेऽपि तुलापुरुषशान्त्यादिसर्ववर्णसाधारणधर्मप्रतिपादकत्वाद्युक्तं धर्ममूलत्वमिति तदुक्तमिति द्वितीयम् ।

(३) कर्मोपासनज्ञानप्रतिपादकानां त्रयाणामपि वेदकाण्डानामविशिष्टं धर्ममूलत्वम् न तु कर्मकाण्डमात्रस्य, उपासनाकाण्डस्य हि "वायुर्वाव गौतम अग्निः" "योषा वाव गौतम अग्निः" 'आदित्यो वै देवमधु' इत्यादेराहार्योपासनाविधायकतया तत्प्रतिपाद्यानां तादृशोपासनानां स्वरूपतो न बाधः । विषयस्य च बाधेऽपि–

**"मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियाम्प्रति ।"**

इत्यभियुक्तसंवादिभ्रमोपपादनन्यायेन फलजनकत्वं तादृशोपासनानां नासंभवदुक्तिकम् । एवञ्चोपासनाकाण्डस्याऽपि स्वाध्यायाध्यनविधिपरिगृहीतत्त्वात्तत्तदुपासनाप्रकरणोपदिष्टश्रेयस्करीपासनाप्रतिपादकत्वाच्च धर्ममूलत्वमतीवप्रामाणिकम् । एवं तत्त्वमसीत्यादौ सिद्धार्थे ज्ञानकाण्डे "तरति शोकमात्मवित्" "न स पुनरावर्त्तते" इत्यादिभिः श्रुतिभिरनन्तश्रेयस्करत्वेन प्रतिपादितस्य धर्मशिरोमणेर्निवृत्तधर्मस्य प्रतिपादकतया स्पष्टं धर्ममूलत्वम्–नहि ज्ञानेन सदृशं पवित्रमिह विद्यते (गीता. ४।३८) ।

एवं लौकिकानामिव ब्राह्मणभागान्तर्गतानां वैदिकानाम् 'अग्निहोत्रं जुहुयात्' 'न कलञ्जं भक्षयेत्' इत्यादीनां विधिनिषेधभागानां प्रवृत्तिनिवृत्तिफलकत्वादौत्पत्तिकसूत्रीयतुर्याशयवर्णनावसरे पूर्वमुक्त्या 'विधावनाश्रिते साध्यः' इत्यादिवार्त्तिकोक्तरीत्या पदार्थसमन्वयोपपादनाच्च सार्वलौकिकं सूपपन्नं च धर्ममूलत्वं दुरपह्नवत्वादास्तां नाम । भवतु च 'तन्तु समन्वयात्' (वे. द. अ. १।१।४) इत्यत्र दृढतरया श्रीमद्भगवत्पादोक्तरीत्या सूपपादितत्वात्सिद्धार्थस्योपनिषद्भागस्याऽपि तत् । मन्त्रार्थवादनामधेयानां तु धर्ममूलत्वं न प्रमाणगोचरतामनुभवितुं प्रभवति । प्रवृत्तिनिवृत्त्योः साक्षादनुपयोगित्वात् । विधिनिषेधोपसर्जताया अपि सम्बन्धरूपद्वारविरहेणात्यन्तासंभवदुक्तिकत्वाच्चेत्याशङ्का निवारणाय (अखिळ) इति ।

अनेन च विध्यादिभागानामिव मन्त्रादिभागानामप्यनादिमीमांसापरिशोधितैरतिदूरनिरस्तसमस्ताशङ्कैः प्रमाणतर्ककलापैर्विध्याद्युपसर्जनतानिदानस्य सम्बन्धात्मकद्वारस्य विघटिताज्ञानकपाटत्वाद्विध्याद्युपसर्जनतया धर्ममूलत्वमतिप्रामाणिकमिति षोढाविभागपक्षेऽपि न कश्चिद् भागोऽनर्थकः । यदा चानर्थकानामपि स्तोभानां सामात्मकगीतिकालपरिच्छेदकतया स्पष्टेति कर्त्तव्यताकुक्षिनिःक्षेपत्वादुपपन्नं धर्म-

मूलत्वं न केंनचिदपनेतुं शक्यते तदा सार्थकानां मन्त्रादिभागानां धर्ममूलत्वे वक्तव्यमेव किमस्तीति बोध्यते। एतेषां चतुर्णामपि समन्वयो न तु विकल्पः।

तत्र विधिलक्षणमाह–इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादि अर्थवादः अर्थस्य प्रयोजनम् वदनम् विध्यर्थप्रशांसापरं वचनमित्यर्थः अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रम्, प्रवृत्तये प्रशंसति।

तत्र स्तुत्यादिभेदादर्थवादं विभजते स्तुतिः साक्षाद् विध्यर्थस्य प्रशंसार्थकं वाक्यं यथा सर्वजिता वै देवाः सर्वमजयन् सर्वस्य आप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयंतीत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं निन्दा 'एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमो च एतेनानिष्टा यजते स गर्ते पतत्ययमेवैतज्जीर्यते प्र वा मीयते' इत्यादि।

अनुवादलक्षणमाह–प्राप्तस्य अनु पश्चात् कथनम् सप्रयोजनम् अनुवादः इति सामान्यलक्षणम् तद्विशेषो विधिविहितस्येति। विध्यनुवादो विहितानुवादश्चेत्यर्थः अयञ्चार्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानाम् तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता।

विध्यनुवादवचनं च अनुवादो विहितानुवादवचनं च पूर्वः शब्दानुवादोऽपरोऽनुवादः इति च तद्भाष्ये भगवान् वात्स्यायनः।

भट्टपादास्तु अनुवादमर्थवादेऽन्तर्भाव्यं तं त्रेधा विभेजिरे। तथा च वार्त्तिके–

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"

मन्त्राणां तु धर्मे मूलत्वमुपयोगश्चार्थवादसाधारणेनाक्रियार्थत्वेन "आम्नायस्ये" त्यादि प्रथमसूत्र एवाक्षिप्ते। अथ मन्त्राणामर्थवादानां च विशेषतो धर्ममूलत्वेऽर्थवादानां धर्मोपयोगे च सिद्धान्तसूत्रम्–

"विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः"॥

अस्यार्थः। विधिना स्तुतिसाकाङ्क्षेण प्रयोजनसाकाङ्क्षाणामर्थवादानमेकवाक्यत्वात् विधीनां विधेयानां स्तुत्यर्थेन स्तुतियोजनकेन, स्तुतिरूपेण प्रयोजनसाकाङ्क्षेण लक्ष्येण वा अर्थेन आनर्थक्याभावात् अर्थवादा धर्मे प्रमाणं स्युरिति।

अत्र शङ्कराचार्यमतावतरणमत्यन्तमावश्यम्। कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते, यावता "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" (जै. सू. १।२।१) इति क्रियापरत्वं शास्त्रस्य प्रदर्शितम्। अतो वेदान्तानामानर्थक्यम्, अक्रियार्थत्वात्। कर्त्तृदेवतादिप्रकाशनार्थत्वेन वा क्रियाविधिशेषत्वम्, उपासनादिक्रियान्तर्विधानार्थत्वं वा। नहि परिनिष्ठितवस्तुप्रतिपादनं संभवति, प्रत्यक्षादिविषयत्वात्परिनिष्ठितवस्तुनः। तत्प्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावात्। अतएव 'सोऽरोदीत्'

इत्येवमादीनामनर्थक्यं मा भूदिति । "विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः" (जै. सू. १।२।७) इति स्तावकत्वेनार्थवत्वमुक्तम् । मन्त्राणां च 'इषेन्वा' इत्यादीनां क्रियातत्साधनाभिधायित्वेन कर्मसमवायित्वमुक्तम् । न क्वचिदपि वेदवाक्यानां विधि-संस्पर्शमन्तरेणार्थवत्ता दृष्टोपपन्ना वा । न च परिनिष्ठिते वस्तुस्वरूपे विधिः संभवति, क्रियाविषयत्वाद्विधेः । तस्मात्कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रियाविधिशेषत्वं वेदान्तानाम् । अथ प्रकरणान्तरभयान्नैतदभ्युपगम्यते तथाऽपि स्ववाक्यगतोपासनादि-कर्मपरत्वम् । तस्मान्न ब्रह्मणः शास्त्रयोनित्वमिति प्राप्ते उच्यते–

**तत्तु समन्वयात् ( १।४।४ )।**

तु शब्दःपूर्वपक्षव्यावृत्त्यर्थः । तद्ब्रह्म सर्वज्ञं सर्वशक्तिजगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादेवावगम्यते । कथम्, समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीत्' । 'एक-मेवाद्वितीयम्' (छां. ६।२।१), 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. २।१।१।१) । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' । 'अयमात्मा ब्रह्म सर्वानुभूः' (बृह. २।५।१९) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुण्ड. २।२।११) इत्यादीनि ।

नच तद्गतानां पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तर-कल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषां कर्त्तृस्वरूपप्रतिपादनपरताव-सीयते, 'तत्केन कं पश्येत्' (बृह. २४।१३) इत्यादि क्रियाकारकफलनिराकरणश्रुतेः । नच परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वं ब्रह्मणः, 'तत्त्वमसि' (छान्दो. ६।८।७) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वात् । यत्तु हेयोपादेय-रहितत्वादुपदेशानर्थक्यमिति, नैष दोषः, हेयोपादेयशून्यब्रह्मात्मतावगमादेवसर्वक्लेश-प्रहाणात्पुरुषार्थसिद्धेः । देवतादिप्रतिपादनस्य तु स्ववाक्यगतोपासनार्थत्वेऽपि न कश्चिद्विरोधः । नतु तथा ब्रह्मण उपासनाविधिशेषत्वं संभवति, एकत्वे हेयोपादेय-शून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । नह्येकत्वविज्ञानेनोन्मथितस्य द्वैत-विज्ञानस्य पुनः संभवोऽस्ति, येनोपसनाविधिशेषत्वं ब्रह्मणः प्रतिपद्येत । यद्यप्यन्यत्र वेदवाक्यानां विधिसंस्पर्शमन्तरेण प्रमाणत्वं न दृष्टम्, यथाप्यात्मविज्ञानस्य फल-पर्यन्तत्वान्न तद्विषयस्य शास्त्रस्य प्रामाण्यं शक्यं प्रत्याख्यातुम् ।

न चानुमानगम्यं शास्त्रप्रामाण्यम्, येनात्र दृष्टं निदर्शनमपेक्षेत । तस्मात्सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् । अत्रापरे प्रत्यवतिष्ठन्ते–यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते । यथा यूपाहवनीयादी-न्यलौकिकान्यपि विधिशेषतया शास्त्रेण समर्प्यन्ते तद्वत् । कुत एतत् । प्रवृत्ति-निवृत्तिप्रयोज़नत्वाच्छास्त्रस्य । तथाहि शास्त्रतात्पर्यविद आहुः–'दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति । 'चोदनेति क्रियायाः प्रवर्तकं वचनम्' । 'तस्य ज्ञानमुपदेशः'

(जै.सू.१।१।५)। 'तद्भूतानां क्रियार्थेन समाम्नायः' (जै. सू. १।१।२५)। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' (जै. सू. १।२।१) इति च।

अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्तयत्कुतश्चिद्विषयविशेषान्निवर्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद् वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादिसाधनं विधीयत एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इत्युक्तम्।

नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्–कर्मकाण्डे भव्यो धर्मो जिज्ञास्य इह तु भूतं नित्यनिवृत्तं ब्रह्मजिज्ञास्यमिति। तत्र धर्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम्। कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। 'आत्मा वा अरे द्रष्टव्यः' (बृह. २।४।५) इति। 'य आत्माऽपहतपाप्मा–सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छान्दो. ८।७।१)। 'आत्मेत्येवोपासीत' (बृ. १।४।७) 'आत्मानमेव लोकमुपासीत' (बृ. १।४।१५)। 'ब्रह्म वेद ब्रह्मैव भवति'। (मु. ३।२।९) इत्यादिविधानेषु सत्सु कोऽसावात्मा किं तद्ब्रह्म इत्याकांक्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः–'नित्यः सर्वज्ञः सर्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमानन्दं ब्रह्म' इत्येवमादयः। तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति।

कर्त्तव्यविध्यननुप्रवेशे वस्तुमात्रकथने हानोपादानासंभवात्, सप्तद्वीपा वसुमती, राजासौ गच्छतीत्यादिवाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात्'। ननु वस्तुमात्रकथनेऽपि रज्जुरियं नायं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्तनेनार्थवत्त्वं दृष्टं तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनैनार्थवत्त्वं स्यात्। स्यादेतदेवम्, यदि रज्जुस्वरूपश्रवण इव सर्पभ्रान्तिः, संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत। न तु निवर्तते, श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारिधर्मदर्शनात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृह. ४।४।५) इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधिदर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माभ्युपगन्तव्यमिति।

अत्राभिधीयते–न। कर्मब्रह्मविद्याफलयोर्वैलक्षण्यात्। शारीरं वाचिकं मानसं च कर्म श्रुतिस्मृतिसिद्धं धर्माख्यम्', यद्विषया जिज्ञासा 'अथातो धर्मजिज्ञासा' (जै. सू. १।१।१) इति सूत्रिता, अधर्मोऽपि हिंसादिः प्रतिषेधचोदनालक्षणत्वाज्जिज्ञास्यः परिहाराय। तयोश्चोदनालक्षणयोरर्थानर्थयोर्धर्माधर्मयोः फले प्रत्यक्षे सुखदुःखे शरीवाङ्मनोभिरेवोपभुज्यमाने विषयेन्द्रियसंयोगजन्ये ब्रह्मादिषु स्थावरान्तेषु प्रसिद्धे। मनुष्यत्वादारभ्य ब्रह्मान्तेषु देहवत्सु सुखतारतम्यमनुश्रूयते। ततश्च तद्धेतोर्धर्मस्य तारतम्यं गम्यते। धर्मतारतम्यादधिकारितारतम्यम्।

तथा च यागाद्यनुष्ठायिनामेव विद्यासमाधिविशेषादुत्तरेण पथा गमनम्, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्, तत्रापि सुखतारतम्यं तत्साधनतारतम्यं च शास्त्रात् 'यावत्संपातमुषित्वा' (छा. ५।१०।५) इत्यस्माद्-गम्यते । तथा मनुष्यादिषु नारकस्थावरान्तेषु सुखलवश्चोदनालक्षणधर्मसाध्य एवेति गम्यते तारतम्येन वर्तमानः । तथोर्ध्वगतेष्वधोगतेषु च देहवत्सु दुःखतारतम्य-दर्शनात्तद्धेतोरधर्मस्य प्रतिषेधचोदनालक्षणस्य तदनुष्ठायिनां च तारतम्यं गम्यते । एवमविद्यादिदोषवतां धर्माधर्मतारतम्यनिमित्तं शरीरोपादानपूर्वकम्, सुखदुःखतार-तम्यमनित्यं संसाररूपं श्रुतिस्मृतिन्यायप्रसिद्धम् । तथा च श्रुतिः—'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' इति यथावर्णितं संसाररूपमनुवदति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छान्दो. ८।१२।१) इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदना-लक्षणधर्मकार्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते ।

धर्मकार्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधों नोपपद्यते । अशरीरत्वमेव धर्मकार्यमिति चेन्न, तस्य स्वाभाविकत्वात् । 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (काठ. १।२।२१) 'अप्राणो ह्यमनाः शुभ्रः' (मुण्ड. २।१।२) असङ्गो ह्ययं पुरुषः'(बृह. ४।३।१५) इत्यादि श्रुतिभ्यः । अत एवानुष्ठेयकर्मफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम् । तत्र किञ्चि-त्परिणामि नित्यं यस्मिन्विक्रियमाणेऽपि तदेवेदमिति बुद्धिर्न विहन्यते । यथा पृथिव्यादिजगन्नित्यत्ववादिनाम् । यथा च साङ्ख्यानां गुणाः । इदं तु पारिमार्थिकम्, कूटस्थनित्यम्, व्योमवत्सर्वव्यापि, सर्वविक्रियारहितम्, नित्यतृप्तम्, निरवयम्, स्वयं ज्योतिःस्वभावम् । यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते । तदेतद-शरीरत्वं मोक्षाख्यम् । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च" (कठ. २।१४) इत्यादिश्रुतिभ्यः ।

अतस्तद्ब्रह्म यस्येयं जिज्ञासा प्रस्तुता, तद्यदि कर्त्तव्यशेषत्वेनोपदिश्येत, तेन च कर्त्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात् । तत्रैवं सति यथोक्त-कर्मफलेष्वेव तारतम्यावस्थितेष्वनित्येषु कश्चिदतिशयो मोक्ष इति प्रसज्येत, नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते, अतो न कर्त्तव्यशेषत्वेन ब्रह्मोपदेशो युक्तः । अपि च "ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड. ३।२।९) 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुण्ड. २।२।८) । 'आनन्दं ब्रह्मणो विद्वान् । न विभेति कुतश्चन" (तैत्ति. २।९) । 'अभयं वै जनक प्राप्तोऽसि' (बृ. ४।२।४)। 'तदात्मानमेवाहं ब्रह्मास्मि इति तस्मात्तत्सर्वमभवत्' (वाज. ब्रा. १।४।१०) । 'तत्र को मोहः कः शोक एकत्व-मनुपश्यतः' (ईशा. ७) इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । तथा "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च'

(बृ. १।४।१०) इति ब्रह्मदर्शनसर्वात्मभावयोर्मध्ये कर्त्तव्यान्तरवारणायोदाहार्यम् । यथा तिष्ठन्गायतीति तिष्ठतिगायत्योर्मध्ये तत्कर्तृकं कार्यान्तरं नास्तीति गम्यते। 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र. ६।८) 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु' (छान्दो. ७।१।३) 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' (छान्दो. ७।२६।२) इति चैवमाद्याः श्रुतयो मोक्षप्रतिबन्ध-निवृत्तिमात्रमेवात्मज्ञानस्य फलं दर्शयन्ति । तथा चार्यप्रणीतं न्यायोपबृंहितं सूत्रम्— "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" (न्यायसू. १।१।२) इति । मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्वविज्ञानाद् भवति ।

न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपम् । यथा 'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति' (बृह. ३।१।९) इति । न चाध्यासरूपम् । यथा 'मनो ब्रह्मेत्युपासीत' (छान्दो. ३।१८।१) 'आदित्यो ब्रह्मेत्यादेशः' (छान्दो. ३।१९।१) इति च मन आदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तं 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' (छान्दो. ४।३।१) इतिवत्। नाप्याज्यावेक्षणादिकर्म-वत्कर्माङ्गसंस्काररूपम्। संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञानेऽभ्युपगम्यमाने 'तत्त्वमसि' (छान्दो. ६।८।७) 'अहं ब्रह्मास्मि' (बृह. १४।१०) 'अयमात्मा ब्रह्म' (बृह. २।५।१९) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" (मुण्ड. २।२।८) इति चैवमादीन्यविद्यानिवृत्ति-फलश्रवणान्युपरुध्येरन् । 'ब्रह्म वेद ब्रह्मैव भवति'(मुण्ड. ३।२।९) इति चैवमादीनि तद्भावापत्तिवचनानि संपदादिपक्षे न सामञ्जस्येनोपपद्येरन् । तस्मान्न संपदादिरूपं ब्रह्मात्मैकत्वविज्ञानम् । अतो न पुरुषव्यापारतन्त्रा ब्रह्मविद्या । किं तर्हि प्रत्यक्षादिप्रमाणविषयवस्तुज्ञानवद्वस्तुतन्त्रा ।

एवंभूतस्य ब्रह्मणस्तज्ज्ञानस्य च न कयाचिद्युक्त्या शक्यः कार्यानुप्रवेशः कल्पयि-तुम् । नच विदिक्रियाकर्मत्वेन कार्यानुप्रवेशो ब्रह्मणः, 'अन्यदेव तद्विदितादथो अविदितादधि' (केन. १।३) इति विदिक्रियाकर्मत्वप्रतिषेधात्, 'येनेदं सर्वं विजानाति तं केन विजानीयात्' (बृह. २।४।१३) इति च । तथोपास्तिक्रियाकर्मत्वप्रतिषेधोऽपि भवति—'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वं ब्रह्मण उपन्यस्य', 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (केन. १।४) इति । अविषयत्वे ब्रह्मणः शास्त्रयो-नित्वानुपपत्तिरिति चेत् । न । अविद्या कल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । नहि शास्त्रमिदंतया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किं तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति ।

तथा शास्त्रम्–'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानताम् विज्ञातमविजानताम् (केन. २।३) 'न दृष्टेर्द्रष्टारं पश्येः' 'न विज्ञातोर्विज्ञातारं विजानीयाः' (बृह. ३।४।२) इति चैवमादि । अतोऽविद्याकल्पितसंसारित्वनिवर्तनेन नित्यमुक्तात्मस्वरूपसमर्पणान्न मोक्षस्यानित्यत्वदोषः ।

यस्य तूत्पाद्यो मोक्षस्तस्य मानसम् , वाचिकम् , कायिकं वा कार्यमपेक्षत इति युक्तम् । तथा विकार्यत्वे च तयोः पक्षयोर्मोक्षस्य ध्रुवमनित्यत्वम् । नहि दध्यादि विकार्यम्, उत्पाद्यं वा घटादि, नित्यं दृष्टं लोके । नचाप्यत्वेनाऽपि कार्यपेक्षा, स्वात्मस्वरूपत्वे सत्यंनाप्यत्वात् । स्वरूपव्यतिरिक्तत्वेऽपि ब्रह्मणो नाप्यत्वम्, सर्वगतत्वेन नित्याप्तस्वरूपत्वात्सर्वेण ब्रह्मणः, आकाशस्येव । नापि संस्कार्यो मोक्षः, येन व्यापारमपेक्षेत । संस्कारो हि नाम संस्कार्यस्य गुणाधानेन वा स्याद्दोषापनयनेन वा । न तावद्गुणाधानेन संभवति, अनाधेयातिशयब्रह्मस्वरूपत्वान्मोक्षस्य । नापि दोषापनयनेन, नित्यशुद्धब्रह्मस्वरूपत्वान्मोक्षस्य । स्वात्मधर्म एव संस्तिरोभूतो मोक्षः क्रिययात्मनि संस्क्रियमाणेऽभिव्यज्यते, यथाऽऽदर्शे निघर्षणक्रियया संस्क्रियमाणे भास्वरत्वं धर्म इति चेत् । न । क्रियाश्रयत्वानुपपत्तेरात्मनः । यदाश्रया क्रिया तमविकुर्वती नैवात्मानं लभते । यद्यात्मा क्रियया विक्रियेतानित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यते' इति चैवमादीनि वाक्यानि बाध्येरन् । तच्चानिष्टम् । तस्मान्न स्वाश्रया क्रियाऽऽत्मनः संभवति ।'अन्याश्रयायास्तु क्रियाया अविषयत्वान्न तयाऽऽत्मा संस्क्रियते ।

ननु देहाश्रयया स्नानाचमनयज्ञोपवीतादिकया क्रियया देही संस्क्रियमाणो दृष्टः । न । देहादिसंहतस्यैवाविद्यागृहीतस्यात्मनः संस्क्रियमाणत्वात् । प्रत्यक्षं हि स्नानाचमनादेर्देहसमवायित्वम् । तथा देहाश्रयया तत्संहत एव कश्चिदविद्ययात्मत्वेन परिगृहीतः संस्क्रियत इति युक्तम् । यथा देहाश्रयचिकित्सानिमित्तेन धातुसाम्येन तत्संहतस्य तदभिमानिन आरोग्यफलम्, अहमरोग इति यत्र बुद्धिरुत्पद्यते । एवं स्नानाचमनयज्ञोपवीतादिना अहं शुद्धः संस्कृत इति यत्र बुद्धिरुत्पद्यते स संस्क्रियते । स च देहेन संहत एव । तेनैव ह्यहं कर्त्राहंप्रत्ययविषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते । तत्फलं च स एवाश्नाति, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड. ३।१।१) इति मन्त्रवर्णात् । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (काठ. १।३।४) इति च । तथा च 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' (श्वेता. ६।११) इति । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् (ईशा. ८) इति च । एतौ मन्त्रावनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणे दर्शयतः । ब्रह्मभावश्च मोक्षः ।

तस्मान्न संस्कार्योऽपि मोक्षः। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारं न शक्यं केनचिद्दर्शयितुम्। तस्माज्ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते।

ननु ज्ञानं नाम मानसी क्रिया। न। वैलक्षण्यात्। क्रिया हि नाम सा यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुषचित्तव्यापाराधीना च। यथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्' इति। 'सन्ध्या मनसा ध्यायेत्' (ऐ. ब्रा. ३।८।१) इति चैवमादिषु। ध्यानं चिन्तनं यद्यपि मानसं तथाऽपि पुरुषेण कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यम्, पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयमतो ज्ञानं कर्त्तुमकर्त्तुमन्यथाकर्त्तुं वा कर्त्तुमशक्यं केवलं वस्तुतन्त्रमेव तत्। न चोदनातन्त्रम्। नाऽपि पुरुषतन्त्रम्। तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथाच 'पुरुषो वाव गौतमाग्निः 'योषा वाव गौतमाग्निः' (छान्दो. ५।७,८।१) इत्यत्र योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति। केवलचोदनाजन्यत्वात्क्रियैव सा पुरुषतन्त्रा च। या तु प्रसिद्धेऽग्नावग्निबुद्धिर्न सा चोदनातन्त्रा। नाऽपि पुरुषतन्त्रा। किं तर्हि प्रत्यक्षविषयवस्तुतन्त्रैवेति ज्ञानमेवैतन्न क्रिया। एवं सर्वप्रमाणविषयवस्तुषु वेदितव्यम्। तत्रैवं सति यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषिये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्कुण्ठीभवन्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत्, अहेयानुपादेयवस्तुविषयत्वात्।

किमर्थानि तर्हि 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः' इत्यादीनि विधिच्छायानि वचनानि। स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुषः इष्टं मे भूयादनिष्टं मा भूदिति, नच तत्रात्यन्तिकं पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविककार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि। तस्यात्मान्वेषणाय प्रवृत्तस्याहेयमनुपादेयं चात्मतत्त्वमुपदिश्यते। 'इदं सर्वं यदयमात्मा' (बृह. २।४।६) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात् विज्ञातारमरे केन विजानीयात्' (बृह. ४।५।१५) 'अयमात्मा ब्रह्म' (बृह. २।५।१९) इत्यादिभिः। यदप्यकर्तव्यप्रधानमात्मज्ञानं हानायोपादानाय वा न भवतीति, तत्तथैवेत्यभ्युपगम्यते। अलङ्कारो ह्यस्माकं यद्ब्रह्मात्मावगतौ सत्यां सर्वकर्त्तव्यताहानिः कृतकृत्यता चेति। तथा च श्रुतिः—'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्" (बृह. ४।४।१२) इति। 'एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत" (भगवद्गीता १५।२०) इति स्मृतिः। तस्मान्न प्रतिपत्तिविधिविषयतया ब्रह्मणः समर्पणम्।

यदपि केचिदाहुः—'प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण केवलवस्तुवादी वेदभागो नास्ति' इति तन्न, औपनिषदस्य पुरुषस्यानन्यशेषत्वात्। योऽसावुपनिषत्स्वेवाधिगतः

पुरुषोऽसंसारी ब्रह्म उत्पाद्यादिचतुर्विधद्रव्यविलक्षणः स्वप्रकरणस्थोऽनन्यशेषः, नासौ नास्ति नाधिगम्यत इति वा शक्यं वदितुम्, 'स एष नेति नायमात्मा' (बृह. ३।९।२६) इत्यात्मशब्दात्, आत्मनश्च प्रत्याख्यातुमशक्यत्वात्, य एव निराकर्ता तस्यैवात्मत्वात्।

नन्वात्माहंप्रत्ययविषयत्वादुपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । न । तत्साक्षित्वेन प्रयुक्तत्वात् । नह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगतः सर्वस्यात्मा, अतः स न केनचित्प्रत्याख्यातुं शक्यो विधिशेषत्वं वा नेतुम् । आत्मत्वादेव च सर्वेषां न हेयो नाप्युपादेयः । सर्वं हि विनश्यदविकारजातं पुरुषान्तं विनश्यति । पुरुषो विनाशहेत्वभावादविनाशी, विक्रियाहेत्वभावाच्च कूटस्थनित्यः, अत एव नित्यशुद्धबुद्धमुक्तस्वभावः । तस्मात् 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' (काठ. १।३।११) 'त्वं त्वौपनिषदं पुरुषं पृच्छामि' (बृह. ३।९ २६) इति चौपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाशमानत्व उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचनं साहसमात्रम् ।

यदपि शास्त्रतात्पर्यविदामनुक्रमणम्—दृष्टो हि तस्यार्थः कर्मावबोधनम्' इत्येवमादि, तद्धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम् । अपि च 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानर्थक्यप्रसङ्गः । प्रवृत्तिनिवृत्तिविधितच्छेषव्यतिरेकेण भूतं चेद्वस्तूपदिशति भव्यार्थत्वेन, कूटस्थनित्यं भूतं नोपदिशतीति को हेतुः । नहि भूतमुपदिश्यमानं क्रिया भवति । अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात्क्रियार्थ एव भूतोपदेश इति चेत् । नैष दोषः । क्रियार्थत्वेऽपि क्रियातिवर्तनशक्तिमद्वस्तूपदिष्टमेव । क्रियार्थत्वं तु प्रयोजनं तस्य । न चैतावता वस्त्वनुपदिष्टं भवति । यदि नामोपदिष्टं किं तव तेन स्यादिति ।

उच्यते—अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति । तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन । अपि च 'ब्राह्मणो न हन्तव्यः' इति चैवमाद्या निवृत्तिरुपदिश्यते । नच सा क्रिया । नापि क्रियासाधनम् । अक्रियार्थानामुपदेशोऽनर्थकश्चेत् 'ब्राह्मणो न हन्तव्यः' इत्यादि निवृत्त्युपदेशानामानर्थक्यं प्राप्तम् । तच्चानिष्टम् ।

नच स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तकिर्यार्थत्वं कल्पयितुम्, हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण । नञश्चैष स्वभावो यत्स्वसंबन्धिनोऽभावं बोधयतीति । अभावबुद्धिश्चौदासीन्यकारणम् । सा च दग्धेन्धनाग्निवत्स्वयमेवोपशाम्यति । तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव 'ब्राह्मणो न हन्तव्यः' इत्यादिषु प्रतिषेधार्थं मन्यामहे, अन्यत्र प्रजापतिव्रतादिभ्यः । तस्मात्पुरुषार्थानुपयोग्युपाख्यानादि-

भूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम् । यदप्युक्तम्—कर्त्तव्यविध्यनुप्रवेशमन्तरेण वस्तुमात्रमुच्यमानमनर्थकं स्यात् 'सप्तदीपा वसुमती' त्यादिवदिति, तत्परिहृतम् । रज्जुरियं नायं सर्प इति वस्तुमात्रकथनेऽपि प्रयोजनस्य दृष्टत्वात् ।

ननु श्रुतब्रह्मणोऽपि यथापूर्वं संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्व-मित्युक्तम् । अत्रोच्यते—नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं वेदप्रमाणजनितब्रह्मात्मभावविरोधात् । नहि शरीराद्यात्माभिमानिनो दुःखभयादिमत्त्वं दृष्टमिति तस्यैव वेदप्रमाणजनितब्रह्मात्मावगमे तदभिमाननिवृत्तौ तदेव मिथ्या-ज्ञाननिमित्तं दुःखभयादिमत्त्वं भवतीति शक्यं कल्पयितुम् । नहि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमान-रहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । नच कुण्डलिनः कुण्डलित्वाभिमान-निमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिनरहितस्य तदेव कुण्डलित्वाभिमाननिमित्तं सुखं भवति ।

तदुक्तं श्रुत्या—अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छान्दो. ८।१२।१) इति । शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञान-निमित्तत्वात् । न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वान्यतः सशरीरत्वं शक्यं कल्पयितुम् । नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम । तत्कृत-धर्माधर्मनिमित्तं सशरीत्वमिति चेन्न, शरीरसम्बन्धस्यासिद्धत्वाद्धर्माधर्मयोरात्म-कृतत्वासिद्धेः । शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गा-दन्धपरम्परैषाऽनादित्वकल्पना । क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः । सन्निधानमात्रेण राजप्रभृतीनां दृष्टं कर्त्तृत्वमितिचेन्न, धनदानाद्युपार्जितभृत्यसम्बन्धि-त्वात्तेषां कर्त्तृत्वोपपत्तेः । न त्वात्मनो धनदानादिवच्छरीरादिभिः स्वस्वामिसम्बन्ध-निमित्तं किञ्चिच्छक्यं कल्पयितुम् । मिथ्याभिमानस्तु प्रत्यक्षःसम्बन्धहेतुः । एतेन यजमानत्वमात्मनो व्याख्यातम् ।

अत्राहुः—देहादिव्यत्तिरिक्तस्यात्मन आत्मीये देहादावभिमानो गौणो न मिथ्येति चेन्न, प्रसिद्धवस्तुभेदस्य गौणत्वमुख्यत्वप्रसिद्धेः । यस्य हि प्रसिद्धो वस्तुभेदः, यथा केसरादिमानाकृतिविशेषोऽन्वयव्यतिरेकाभ्यां सिंहशब्दप्रत्ययभाङ्मुख्योऽन्यः प्रसिद्धः, ततश्चान्यः पुरुषः प्रायिकैः क्रौर्यशौर्यादिभिः सिंहगुणैः सम्पन्नः सिद्धः, तस्य पुरुषे सिंह-शब्दप्रत्ययौ गौणौ भवतो नाप्रसिद्धवस्तुभेदस्य । तस्य त्वन्यत्रान्यशब्दप्रत्ययौ भ्रान्ति-निमित्तावेव भवतो न गौणौ । यथा मन्दान्धकारे स्थाणुरयमित्यगृह्यमाणविशेषे पुरुष-शब्दप्रत्ययौ स्थाणुविषयौ, यथा वा शुक्तिकायामकस्माद्रजतमिति निश्चितौ शब्दप्रत्ययौ, तद्वद्देहादिसंघातेऽहमिति निरुपचारेण शब्दप्रत्ययावात्मानात्मा-विवेकेनोपपद्यमानौ कथं गौणौ शक्यौ वदितुम् । आत्मानमात्मविवेकिनामपि

पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद्देहादव्यतिरिक्तात्मास्तित्ववादिनां देहादावहंप्रत्ययो मिथ्यैव न गौणः । तस्मान्मिथ्याप्रत्ययनिमित्तत्वात्सशरीरत्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरत्वम् ।

तथा च ब्रह्मविद्विषया श्रुतिः–"तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते । अथाऽयमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" (बृह. ४।४।७) इति । 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति च । स्मृतिरपि च–'स्थितप्रज्ञस्य का भाषा' (गी. २।५४) इत्याद्या स्थितप्रज्ञलक्षणान्याचक्षाणा विदुषः सर्वप्रवृत्त्यसंबन्धं दर्शयति । तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव इत्यनवद्यम् । यत्पुनरुक्तं श्रवणात्पराचीनयोर्मननिदिध्यासनयोर्दर्शनाद्विधिशेषत्वं ब्रह्मणो न स्वरूपपर्यवसायित्वम् इति। न । अवगत्यर्थत्वान्मननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्मान्यत्र विनियुज्येत भवेत्तदा विधिशेषत्वम् ।

नतु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः संभवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम् । एवञ्च सति 'अथातो ब्रह्मजिज्ञासा' इति तद्विषयः पृथक् शास्त्रारम्भ उपपद्यते । प्रतिपत्तिविधिपरत्वे हि 'अथातो धर्माजिज्ञासे' त्येवारब्धत्वान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत–'अथातः परिशिष्टधर्मजिज्ञासेति', 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' (जै. ४।१।१) इतिवत् । ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः-अथातो ब्रह्मजिज्ञासा' इति ।

तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयद्वैतात्मावगतौ निर्विषयाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति । अपि चाहुः–

"गौणमिथ्यात्मनोऽसत्वे पुत्रदेहादिबाधनात् ।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत् ॥
अन्वेष्टव्यात्मविज्ञानात्प्रमातृत्वमात्मनः ।
अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्[1] ॥ इति ।

1. ब्रह्मसूत्रे (१।४।३-४) शाङ्करभाष्यम् ।

अनुमानमपि वेदान्तवाक्याविरोधिप्रमाणं भवन्न निवार्यते, श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्[1] । तथा हि–श्रोतव्यो मन्तव्यः (बृह. २।४।५) इति श्रुतिः, 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान् पुरुषो वेद' (छान्दो. –६।१४।२) इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किन्तु श्रुत्यादयोऽनुभवादयश्च यथा संभवमिह प्रमाणमनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्त्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात्पुरुषाधीनात्मलाभत्वाच्च कर्त्तव्यस्य[2] ।

विधिना तु एकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति जैमिनिः (१।२।७) । 'विधि'प्रयोगे शङ्करकुमारिलभट्टश्च–श्रावयेच्चतुरो वर्णान् इति च इतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् (ब्र. सू. १।३।३८) एवं भारतादिवाक्यानि व्याख्येयानि । तेषामपि हि "श्रावयेत् चतुरो वर्णान्" इत्येवमादिविध्यनुसारेण पुरुषार्थान्वेषणात् अक्षरादिव्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिः उपादानपरित्यागाङ्गभूताफलम् (तंत्र. १।२।७) । दानराजमोक्षधर्मादिषु केचित् साक्षात् विषयः केचित् पुनः परकृतिपुराकल्परूपेण अर्थवादा इति भट्टपादः ।

तथा च कुमारिलभट्टः–वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिः तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्यानाम् च विचित्रव्युद्धित्वात् युक्तम् एव एतत् । इह केचित् विधिमात्रेण प्रतिपाद्यन्ते । अपरे सार्थवादेन अपरे अल्पेन अर्थवादेन, अपरे महता । सर्वेषां च चित्तं ग्रहीतव्यम् इत्येवमारम्भः ।

तत्र तु केचिद् विधिप्रतिषेधाः श्रुतिमूलाः । केचिद् अर्थसुखादिषु लोकमूलतः । तथा अर्थवादाः, केचिद् वैदिका एव, केचित् लौकिका एव, केचित्तु स्वयमेव काव्यन्यायेन रचिताः । सर्वे स्तुत्यर्थेन प्रमाणम् ।

देशकालपरिमाणमपि लोकज्योतिः शास्त्रव्यवहारसिद्ध्यर्थम् दर्शनगणितसंप्रदायानुमानपूर्वकम् ।.... भाविकथनमपि तु अनादिकालप्रवृत्तयुगस्वभाव–धर्माधर्मानुष्ठानफलविपाकवैचित्र्यज्ञानद्वारेण वेदमूलम् (तन्त्र. १।३।१-२) ।

---

1. तदेव (१।१।२) ।
2. तदेव ।

# अध्यायः २

## न्यायिकप्रशासनम्

**राजा**

द्वयी पीडा, दृष्टाऽदृष्टा च। तत्र दुर्बलस्य बलीयसा धनहरणादिना बाध्यमाना दृष्टा पीडा । इतरस्य तु विध्यतिक्रमजनितेन प्रत्यवायेनामुत्रिकदुःखोत्पादनमदृष्टपीडा। प्रजा हि द्वेषमत्सरादिभिरितरेतरमयथावदाचरन्ति कुपथेन यान्त्यदृष्टदोषेण बाध्येरन्। अतश्च राज्यनाशः । **प्रजैश्वर्यं हि राज्यमुच्यते** । तासु विनश्यन्तीषु कस्य राज्यं स्यात् । व्यवहारादयोऽतः शास्त्रदण्डेन व्यवस्थाप्यमाना न भयात् पृथक् प्रचलन्ति तथा चोभयथाऽपि रक्षिता भवन्ति । धनदण्डश्च राज्ञः करशुल्कादि वा। एतदन्या धर्मिष्ठ-जीविका न भवन्ति, इति वृत्तिपरिक्षयादपि राज्यनाशः । अतो राज्यस्थित्यर्थं व्यवहारदर्शनं कर्त्तव्यम् ।

राजतन्त्रात्मकव्यवस्थायां प्रजापलनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न सम्भवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण सम्भवति । व्यवहारदर्शनं चेदं प्रजायामितरेतरपीडाया तत्त्वनिर्णयेन रक्षणार्थं वक्ष्यमाणदृष्टादृष्टार्थकरणफलेनैव फलवत्। नृपेण व्यवहारदर्शनमहरहः कर्त्तव्यम् । नृप इति न क्षत्रियमात्रस्यायं धर्मः किन्तु प्रजापालनाधिकृतस्यान्यस्यापीति[1] । द्वितीये पौरजानपदानां कार्याणि पश्येत (कौ. १।१९) **व्यवहारेऽनवज्ञा तु राज्ञां विनाशः**[2] ।

**अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ।**
**अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥**
**कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते ।**
(रामा. उ. ५३ । १८, १९, २५)

**पौरकार्यं हि यो राजा न करोति सभास्थितः ।**
**व्यक्तं स नरके घोरे पच्यते नाऽत्र संशयः ॥**
(उत्तरका. ५३।१६)

राजा स्वाधीनवृत्तिरात्मप्रत्ययकोशःस्वयं कृत्यानुदर्शी विप्रस्वनिवृत्तश्चिरं भद्राणि पश्यति[3] । उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत् । दुर्दर्शो हि राजा कार्याकार्य-विपर्यासमासन्नैः कार्यते। तेन प्रकृतिकोपमरिवशं वा गच्छेत् (अर्थशास्त्रम् १।१९)।

---

1. मनु. ८।१-३; याज्ञ. १।३२७; २।१; वि. ध. सू. ३।७२ ; वसिष्ठ. १६-२; शुक्र. ५-५।
2. महा. अनु. ६।३८,७० अध्याय.; दण्डविवेकः पृ. १३ ।
3. राज. प्र. पृ. १३४ ।

व्यवहारदर्शनस्थानं धर्मस्थानमिति प्रसिद्धः। धर्मः प्रधानः यस्मिन्नासने भवति तद् धर्मासनम्। व्यवहारनिर्णये तु धर्ममेव प्रधानमाश्रयेत्। धर्मदर्शनार्थमासनम्। धर्मस्थानं प्राच्यां दिशि तच्चाग्न्युदकैः समवेतं स्यात्। यत्र स्थाने आवेदितव्य-निष्कर्षः धर्मशास्त्रविचारेण निर्णेतृभिः क्रियते इति धर्मस्थानम्। अस्यैव धर्माधि-करणमिति नामान्तरम्[1]। तद्यथा–

धर्मशास्त्रविचारेण मूलसारविवेचनम्।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत्॥
(स्मृ. चं. २ पृ. १९ कात्या.)

पुरा कृद्युगे धर्मप्रधानाः पुरुषा आसन्। तस्मिन् युगे व्यवहारस्यावश्यकता नासीत्–

धर्मैकतानाः पुरुषा यदासन्सत्यवादिनः।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः॥
नष्टे धर्मे मनुष्याणां व्यवहारः प्रवर्त्तते।
द्रष्टा च व्यवहाराणां राजा दण्डधरः स्मृतः॥
(नार. १।१-२१)

धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः।
लोभद्वेषाभिभूतानां व्यवहारः प्रकीर्तितः॥
स्मृ. चं. २ पृ. १ पृ.; व्यवहारप्रकाशः पृ. ४)

राजा स्वयं नोत्पादयेत्कार्यम्। न चार्थिना प्रत्यर्थिना वावेदितं विवादं धनादिलो-भेनोपेक्षेत। राजा राजनियुक्तो वा धनलोभादिना ऋणादिविवादं नोत्पादयेत्[2]। धर्मशास्त्रसमाचारविरुद्धेन मार्गेण परैराधर्षितो यद्राज्ञ प्राड्विवाकाय वा आवेदयति चेद्यदि, तदावेद्यमानं व्यवहारपदं विषय[3]ः। अभियोगश्च द्विविधः शङ्कातत्त्वाभि-योगतः। शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनात्[4]। तत्त्वाभियोगोऽपि द्विविधः, प्रतिषेधात्मको विध्यात्मकश्चेति। एतत्सर्वं राजा स्वयं तस्य पुरुषो वा नोत्पादयेत्[5]। परञ्च, "जाङ्गलं सस्यसम्पन्नम्" (मनु. ७।६९) सम्यगाश्रितदेशस्तत्र कृतदुर्गश्चौर-साहसिकादिकण्टकनिराकरणे प्रकृष्टं यत्नं राजा सदा कुर्यात्। यस्मात्साध्वाचाराणां

---

1. स्मृ. चं. २ पृ. १९; परा. मा. ३१९ पृ. २२; स. वि. पृ. ६३; मनु. ८।२३; शुक्र. ४।५-६; नारद. १।३४; कालिदासः, शकु. ५; भवभूतिः, उत्तरराम. १।
2. मनु. ८।४३ अत्र कुल्लूकभट्टः।
3. याज्ञ. २।५।
4. नारद. १।२७।
5. शुक्र. ४।५।४९; मानसोल्लासः २।२।१२७४।

रक्षणाच्चोरादीनां च शासनात्प्रजापालनोद्युक्ता राजानः स्वर्गं गच्छन्ति । तस्मात् कण्टकोद्धरणं यत्नं कुर्यात्[1] ।

व्यवहारप्रकरणमध्ये स्त्रीपुंसयोगाख्यं विवादपदं मनुनारदाभ्यां विवृतम्[2] । यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धः, तथापि प्रत्यक्षेण कर्णपरम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ । प्रकीर्णकि विवादपदे ये विवादा राजाज्ञोल्लंघनतदाज्ञाकरणादिविषयास्ते नृपसमवायिनः । नृप एव तत्र स्मृत्याचारव्यपेतमार्गे वर्तमानानां प्रतिकूलतामास्थाय व्यवहारनिर्णयं कुर्यात् । एतत्तु नृपाश्रयं विवादम्[3] । प्रकीर्णकि पुनर्ज्ञेया व्यवहारा नृपाश्रयाः–

**प्रकीर्णके पुनर्ज्ञेयो व्यवहारा नृपाश्रयाः ।**
**राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥**
**पुरप्रधानसंभेदः प्रकृतीनां तथैव च ।**
**पाषण्डनैगमश्रेणिगणधर्मविपर्ययाः ॥**
**पितृपुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।**
**प्रतिग्रहविलोपश्च कोपं आश्रमिणामपि ॥**
**वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।**
**न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकि ॥**

(नारद. २०।१-४; ना. म. सं. १८।१-४)

षड्भागकरणं शुल्कम्, गर्ते देयम्, सङ्गामचौरभेदी, परदाराभिमर्शनम्, गोब्राह्मणजिघांसा, सस्यव्याघातकृत्तथा, एतान् दशापराधांस्तु नृपतिः स्वयमन्विषेत् । निष्कृतीनामकरणम्, आज्ञासेधव्यतिक्रमः, वर्णाश्रमविलोपः, वर्णसङ्करलोपनम्, निधिर्निष्फलवित्तम्, दरिद्रस्य धनागमश्च, एतांश्चारैः सुविदितान् स्वयं राजा निवारयेत् । वर्णाश्रमव्यवस्थापने राज्ञां दायित्वमेकान्तिकम्[4] । तथाच–

**अनाम्नातानि कार्याणि क्रियावादाश्च वादिनाम् ।**
**प्रकृतीनां प्रकोपश्च संकेतः परस्परम् ॥**
**अशास्त्रविहितं यच्च प्रजायां सम्प्रवर्तते ।**
**उपायैः सामभेदाद्यैरेतानि शमयेन्नृपः ॥**

(बृ. व्य. २९।१२-१५)

---

1. मनु. ८।१; ९।२५२-२५३ ।
2. मनु. ९।२; नारद. १२।१ ।
3. बृहस्पतिः व्य. २९।१ ।
4. याज्ञ. १।३६१; नारद. २०।५-६; ना. म. सं. १८।५-६; मनु. ८।४१०, ४१८; ९।२७३; गौ. ८।१-३ ।

व्यवहारान् द्रष्टुमिच्छन् राजा ब्राह्मणैरमात्यैश्च सह पञ्चाङ्गमन्त्रैः विनीतो वाक्पाणिपादचापलविरहादनुद्धतः। अविनीते हि नृपे वादिप्रतिवादिनां प्रतिभाक्षयादसम्यगभिधाने तत्त्वनिर्णयो न स्यात्[1]। याज्ञवल्क्यस्मृतौ राज्ञा सह ब्राह्मणानामेवोल्लेखो न त्वमात्यानाम्—

**व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः॥**

**(याज्ञ. २।१)**

"ब्राह्मणैः सह" इति तृतीयानिर्देशादेषामप्राधान्यम्। 'सह युक्तेऽप्रधाने च' (पा. २।३।१९) इति स्मरणात्। अतश्चादर्शनेऽन्यथादर्शने वा राज्ञो दोषो न ब्राह्मणानाम्। मनुस्मृतौ "व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः। मन्त्रज्ञैर्मन्त्रिभिश्च..." (८।१) अत्र मन्त्रज्ञैरिति कस्य विशेषणम्? न तावन्मन्त्रिणो मन्त्रित्वादेव सिद्धेः। न हि मन्त्रमजानानो मन्त्रीति शक्यते वक्तुम्। नाऽपि ब्राह्मणानां व्यवहारदर्शनेऽधिकृतानां तत्परिज्ञानमदृष्टं न स्यात्।

अत्रोच्यते। ब्राह्मणविशेषणमेवैतत्। ते ह्यमन्त्रज्ञा भूत्वा निरपेक्षमवधारयन्तः स्युरन्यथा राज्ञोऽनर्थमावहेयुः। तथा हि महामात्याश्रितः कश्चिज्जनपदेन व्यवहरन्सहसा जितो यदि न दण्ड्यते धनं वाऽवष्टभ्य न दाप्यते तदा समत्वेन व्यवहारदर्शनं न कृतं स्यात्, पक्षपातमशक्तिं वाऽस्य जनपदा मन्येरन्। अथ दण्ड्यते महामात्यक्षोभादपि प्रकृतिविकृतिं स्यात्। मन्त्रज्ञास्तु सन्तः संशयितारो यदि निर्णेतव्यस्य केनचिदपदेशेन प्रसङ्गविरोधं कृत्वा रहसि राजानं परिबोधयन्ति 'अनयोर्विवादिनोरयं जीयतेऽयं जयतीति व्यवहारस्त्वस्माभिर्न तदानीमेव निर्णीत इति स्वामी प्रमाणं' तत्र राजैवं विदित्वा महामात्यमादेशयति "त्वदीयो मनुष्यो जीयते मम हानिर्मा भूरिति संप्रति निर्णयोऽवधीरितः। त्वमेव तथा कुरु यथैष मनुष्यः संधीयते बाधाऽस्य व्यपनीयते।" ते मन्त्रिणो वाऽऽदेयवाक्या मनुष्याणां सर्वेषामनर्थ्यां च प्रवृत्तिं प्रतिबध्नन्ति।

अन्ये तु काकाक्षिवदुभयविशेषणमर्थभेदेन मन्त्रज्ञपदं मन्यन्ते। यदा मन्त्रिणो विशेष्यन्ते तत्तद्धातुतत्परिज्ञानमन्त्रज्ञानम्। ब्राह्मणपक्षे तु कार्यार्थसमभावश्च। मन्त्रिब्राह्मणानां न प्रवेशमात्रमेव किन्तर्हि 'निर्णयं पश्येत्' इत्युत्तरत्र वाक्यानि यथायोग्य इतरथाऽदृष्टाय प्रवेशःस्यात्। अतो नैकाकी निर्णयं कुर्यात् किन्तर्हि तैः सह निरूप्यते।

स्पष्टतः राजा नैकः पश्येत्कार्याणि। सः प्राड्विवाकमते स्थितः। अत एव राजा 'धर्मस्थसख': इत्येवं प्रसिद्धः। व्यवहारदर्शने राज्ञां कृते धर्मशास्त्रानुसरणमा—

---

1. मनु. ८।१।

वश्यकम्। धर्मशास्त्रानुसारेण इत्यस्य व्याख्यायां "नार्थशास्त्रानुसारेण" इति विश्वरूपः। देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम्। ऋणादिषु व्यवहारस्थानेषु बाहुल्येन विवादं कुर्वतां मनुष्याणामनादिपारम्पर्यागतत्वेन नित्यं धर्ममवलम्ब्य कार्यनिर्णयं कुर्यात्। अर्थकामावशाश्वतौ। अथवा शाश्वतो धर्म अनिदंप्रथमतो या व्यवस्था तामनुपालयेत्। या तु इदानीन्तनैः प्रवर्तिता साऽशाश्वतत्वादनादरणीया–धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यनिर्णयम् (मनु. ८।८)। "धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थित" इति नारदः। धर्मशास्त्रं पुरस्कृत्य यत्किमपि सभ्यैः प्राड्विवाकसहितैरवधारितं तदेव प्राड्विवाकमते स्थितः प्रमाणीकृत्य समाहितमतिरेकचित्तः, तत्र स्थितः परिहृतगीतनृत्यासक्तो राजा व्यवहारान् पश्येदनुक्रमादिति भाषोत्तरक्रियानिर्णयचतुः पादानुक्रमात्[1]।

विवादानां शास्त्रदृष्टेन मार्गेण राजा स्वयमेव प्रदर्शनम्। तस्मान्न्यायेन राष्ट्रपालने न चार्थश्च धर्मश्च राज्यञ्च विपुलं भवेत्। न्यायाधिगमे तर्कोऽभ्युपायः। तेनाभ्यूह्य यथा स्थानं गमयेत्। विप्रतिपत्तौ त्रैविद्येभ्यः प्रत्यवहृत्य निष्ठां गमयेत्। तथा ह्यस्य निःश्रेयसं भवति[2] –

**धर्मशास्त्रार्थशास्त्राभ्याममविरोधेन मार्गतः।**
**समीक्ष्यमाणो निपुणं व्यवहारगतिं नयेत्॥**

**(नारद. १।३७)**

**यत्र विप्रतिपत्तिः स्याद् धर्मशास्त्रार्थशास्त्रयोः।**
**अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत्॥**
**धर्मशास्त्रविरोधे तु युक्तियुक्तोऽपि धर्मतः।**
**व्यवहारो हि बलवान् धर्मस्तेनापचीयते॥**

**(ना. म. सं. १।३३-३४)**

किञ्चिद्धर्मशास्त्रोक्तमर्थशास्त्रविरुद्धं भवति। किञ्चित्पुनरर्थशास्त्रोक्तं धर्मशास्त्रविरुद्धं भवति। तयोरितरेतरतारतम्यालोचनेन यथा लोकाचारविरुद्धं न भवति तथा ससभ्योऽपि राजा व्यवहारगतिं नयेत्।

व्यवहारदर्शनप्रवृत्तो राजा छलमपहाय सत्यं पश्येत्तथार्थं च। अर्थवन्तं व्यवहारं पश्येत् न त्वहमनेनाक्षिनिकोचनेनोपहसित इत्यादि स्वल्पापराधम्, आत्मानं च तत्त्वनिर्णये स्वर्गादिफलभागिनम्, साक्षिणः सत्यवादिनः, देशं कालं च देशकालोचितं स्वरूपम्, व्यवहारस्वरूपं गुरुलघुतादिकं पश्येत्। विद्वद्भिर्यद्दृश्यमानशास्त्रमनुष्ठितं

1. नारद. १।३५।
2. गौतमः ११।२५-२८।

तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्[1] एवं शास्त्रोदितं निर्णयपालनं राजा कुर्यात्[2] ।

व्यवहारो हि नाम अनृतप्रभवो व्याजैकनिबन्धनः । अधर्मप्राधान्यं व्यवहारेष्वित्यर्थः । यतश्चैतदेवमतश्च व्यवहारमार्गेणान्यथा क्रियते । अतश्च प्रयत्नतो निराकृतच्छलादिः सत्यैकप्रवणो राजा व्यवहारेषु कृती स्यात्[3] । ब्राह्मणादिजातिनियतान्याजनादीन् धर्मान् जानपदांश्च नियतदेशव्यवस्थितानाम्नायाविरुद्धान्, श्रेणीधर्मांश्च वणिगादिधर्मान् प्रतिनियतकुलव्यवस्थितान् ज्ञात्वा तदविरुद्धान् राजा व्यवहारेषु तत्तद्धर्मान् व्यवस्थापयेत् । जातिदेशकुलधर्मादीन्यात्मीयकर्माण्यनुतिष्ठन्तः, स्वे स्वे च नित्यनैमित्तिकादौ कर्मणि वर्तमानाः, दूरेऽपि सन्तः सानिध्यनिबन्धनस्नेहाभावेऽपि लोकस्य प्रिया भवन्ति[4] ।

जातिमात्रविषया देशधर्मा राज्ञा परिपालनीयाः । किमाम्नायैर्विरुद्धा अथ न–तथा पीडाकराः कस्यचिदुत न–एवं विचार्य येऽविरुद्धास्तान् प्रतिपादयेत् । जातिशब्देन नित्यत्वं लक्ष्यते । प्रशंसामात्रं चैतद्देशधर्माणाम् । यथा जातिर्नित्या एवं देशधर्मा अपि शास्त्राविरुद्धा नित्याः । ते नित्यवदनुष्ठेया दृष्टार्था गोप्रचारोदकक्षरणादयः ।

मनुस्मृतेः 'जातिजानपदान्' इत्यस्य मेधातिथेर्व्याख्या–"अथवा जनपदे भवा 'जानपदा' देशवासिन उच्यन्ते । जात्या जनपदा 'जातिजानपदाः' । जातिर्जन्मोत्पत्तिरिति यावत् । एतेन देशसम्बन्धस्य पुरुषाणां नित्यता लक्ष्यते । ये तद्देशजास्तद्देशाभिजनास्तन्निवासिनश्च गृह्यन्ते तेषां सर्वेषां सर्ववर्णविशेषणविशिष्टानामनिदंप्रथमतो जाता ये धर्मास्ते जातिजानपदशब्देनोच्यन्ते" ।

अथवाऽभेदोपचारात् पुरुषशब्दस्तत्सम्बन्धिषु धर्मेषु प्रयुक्तः । तेनायं देशनियमो धर्माणां स एवंविधात्पुरुषात्प्रतिद्रष्टव्यः । एते हि देशधर्मा म्लेच्छानां न पुनरार्याणाम्। ते हि तिर्यक् समानधर्माणोऽन्यत्रानधिकृताः स्वसमाचारप्रसिद्धं धर्ममनुतिष्ठन्ति मातृविवाहादि । सोऽयं सार्वभौमेन न निवारणीयः । स्वदेशाचारवतां तेषां जातिधर्मोऽयं जनपदनिवाससम्बन्धेनाभ्यनुज्ञानात् । आम्नायविरोधोऽप्यत्र नास्ति । अधिकृतानां विरोधात् विरोधो न तिरश्चाम् ।

ननु "अहिंसा सत्यमक्रोधः शौचमिन्द्रियसंयमः" इति प्रतिलोमाधिकारेणैवोक्तम् । म्लेच्छाश्च प्रतिलोमा एव । तत्र यदि मातृविवाहे मूत्रोत्सर्गे चोदकशुद्धयभावे न दुष्यति क इन्द्रियसंयमः कीदृशं वा शौचमिति । उक्तमेतत् । आर्यावर्त्तमध्यवर्ति-

1. मनु. ८।४५-४६।
2. बृह. ९।३२ ।
3. याज्ञ. २।१९।
4. मनु. ८।४१-४२ ।

नामेते धर्माः शौचादयः। चातुर्वर्ण्ये तु तद्देशनियमो धर्माणां नास्ति। यस्य देशस्य यो धर्मः सार्वकालिकः प्रसिद्धः श्रुतिस्मृत्यविरोधेन तदेव धर्म उच्यते। तथा च : बृहस्पतिः

**प्रतिलोमप्रसूतानां तथा दुर्गनिवासिनाम्।**
**देशजातिकुलानां च ये धर्माः प्राक् प्रवर्तिताः।**
**तथैव ते पालनीयाः प्रजाः प्रक्षुभ्यतेऽन्यथा।**

(१।१२६-१२७)

"नैते प्रायश्चित्तदमार्हका" इति। नैते प्रायश्चित्तं कर्त्तव्यम्, प्रायश्चित्तानपेयपापत्वात्। न च दण्डनीयाः। प्रजाक्षोभप्रसङ्गात्। 'विहिताकरणान्नित्यमि' त्यादि। विहितस्य वर्णाश्रमकर्मणोऽसकृत्प्रमादात् आपद्व्यतिरेकेणाननुष्ठानात्। तथा प्रतिषिद्धस्य अभक्ष्यभक्षणादेर्नित्यमनुष्ठानात्। यावता भक्ताच्छादनं सम्पद्यते तावत्परित्यज्य शेषं धनं राजा गृह्णीयात्। एतच्च देशाचारव्यतिरिक्तनिषिद्धाचरणादवगन्तव्यम्। न देशाचारकरणे। तत्र अनेन कर्मणा नैते प्रायश्चित्तदमार्हका इत्युक्तत्वात्। तथा च देशाचारव्यतिरेकेण सामान्यतो गौतमवचनः (१२।२४)। शिष्टाकरणे प्रतिषिद्ध-सेवायां नित्यं चैलपिण्डादूर्ध्वं स्वहरणमिति। श्रुतिस्मृत्यनुमोदितं देशस्यानुमतेनैव व्यवस्था निरूपिता[1]। तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत्। वाक्याभावे तु सर्वेषां देशदृष्टेन तन्नयेत्[2]।

नृपः प्रमाणाभावेऽन्तिमःप्रमाणो व्यवहारे। यत्र चैते हेतवो न विद्यन्ते तत्र पार्थिववचनान्निर्णय इत्याह–

**लेख्यं यत्र न विद्येत न भुक्तिर्न साक्षिणः।**
**न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः॥**
**निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः।**
**तेषां नृपः प्रमाणं स्यात् स सर्वस्य प्रभुर्यतः॥**

(स्मृ. चं. २ पृ. २६)

**परिषद्**

वेदेषु परिषदः स्वरूपनिर्वचनेन अस्याः संस्थायाः प्राचीनता स्पष्टा। धर्मसूत्रेषु एषा वैधानिककार्याणि वर्णितानि। आसीत्परिषद् देवानामसुराणाञ्च। असुराणां परिषदो ध्वंसने इन्द्रस्य प्राशस्त्यं वर्णितम्–

**प्रवाच्यं शश्वधा वीर्यं तदिन्द्रस्य कर्म यदर्हि विवृश्चत्।**
**वि वज्रेण परिषदो जघानाऽऽयन्नापोऽयनमिच्छमानाः॥**

(ऋ. ३।३३।६)

---

1. कात्या. ५१; बृह. १।१३२-१३३।
2. कात्या. ४४-४५।

वसोः परिषदः परिषद्वानो नृषदस्य पुत्रवधं प्रयतितम्–

**वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु।**

**तदिन्न्वस्य परिषद्वानो अग्मन् पुरू सदन्तो नार्षदं बिभित्सन्॥**

(ऋ. १०।६१।१३)

एषा समष्टिकार्याणि वर्णितानि[1] –गव्यम् परिषदन्तोऽगमत् । परिषदःस्पष्टता उपनिषत्सु प्राप्यते–

श्वेतकेतुर्हारुणेयःपञ्चालानां समितिमेयाय तं ह प्रवाहणो जैवलिरुवाच[2] । अत्र शङ्कराचार्यः–श्वेतकेतुर्नामतो... ... आरुणेयः । ... ... पित्रानुशिष्टः सन्नात्मनो यशः प्रथनाय पञ्चालानां परिषदमाजगाम । पञ्चालाः प्रसिद्धास्तेषां परिषदमागत्य जित्वा राज्ञोऽपि परिषदं जेष्यामीति गर्वेण स आजगाम । जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणमात्मनः परिचरणं कारयन्तमित्येतत् । स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा विनेतव्योऽयमिति मत्वा तमुदीक्ष्योत्प्रेक्ष्य आगतमात्रमेव अभ्युवादाभ्युक्तवान्कुमारा इति संबोध्य। भर्त्सनार्था प्लुतिः ।

आपस्तम्बीयधर्मसूत्रे–"सार्वकालिकमाम्नातम् (१।३।११।३७) यथोक्तमन्यदतः परिषत्सु (२।३।११।३८) आम्नातमधीतं तत्सार्वकालिकम् । अत एतस्मादनध्यायप्रकरणादन्यत्रादनध्यायनिमित्तं परिषत्सु मानवादिषु धर्मशास्त्रेषु यथोक्तं तथा द्रष्टव्यम्[3] । परिषत्स्थितिनिर्वचनं शङ्कराचार्येणेत्थं कृतम्–"अथानियम एव, व्यतिरिक्तमव्यतिरिक्तं वा ज्योतिः पुरुषस्य व्यवहारहेतुः, ततोऽनवध्यवसाय एव ज्योतिर्विषये, इत्येवं मन्वानः पृच्छति जनको याज्ञवल्क्यम्–किं ज्योतिरयं पुरुष इति । ननु एवमनुमानकौशले जनकस्य किं प्रश्नेन स्वयमेव कस्मान्न प्रतिपद्येत इति । सत्यमेतत् । तथापि लिङ्गलिङ्गिसम्बन्धविशेषाणामत्यन्तसौक्ष्म्यात् दुखबोध्यतां मन्यते बहूनामपि पण्डितानाम्, किमुतैकस्य । अत एव हि धर्मसूक्ष्मनिर्णये परिषद्व्यापार इष्यते । पुरुषविशेषश्चापेक्ष्यते । दशावरा परिषत्त्रयो वैको वेति । विज्ञानकौशलतारतम्योपपत्तेः पुरुषाणाम् । अथवा श्रुतिः स्वयमेव आरव्यायिकाव्याजेन अमुमानमार्गमुपन्यस्य अस्मान् बोधयति पुरुषमतिमनुसरन्ती[4] । उत्तरोत्तरं परिषत्स्वरूपःपरिवर्तितः[5] ।

---

1. ऋ. ४।२१।७ ।
2. छा. उप. ५।३।१; ६।२।१ ।
3. आप. ध. सू. १।३।११।३४; १।१।१।२ ।
   बौधा. ध. सू. २।१४४-४५; १।१।१३; १।१।१७; १।१।१, ७, १६ ।
   गौ. ११।२३-२४; २८।४६-४७; १८।४८, ४९, ५१ ।
4. बृह. उप. ४।३।२ ।
5. V.R.R. Dixitar, Puranic Index, II.32.

सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्त्तव्यं स्यादिति यदि भवेत्तदा शिष्टाः; परिषद्व्यवस्था च । यदि बहवः शिष्टाः सन्तोऽवहिता न भवन्ति तदा दशावरास्त्र्यवराश्चेति वक्ष्यमाणलक्षणा यस्याः सा परिषत् तदभावे त्रयोऽवरा यस्याः सा वा सदाचारा यं धर्मं निश्चिनुयात्तं धर्मत्वेन स्वीकुर्यान्न विसंवदेत्–

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ॥
(मनु. १२।११०)

वेदत्रयसंबन्धशाखात्रयाध्येतारः श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञः, मीमांसात्मकतर्कवित्, निरुक्तज्ञः, मानवादिधर्मशास्त्रवेदी, गृहस्थवानप्रस्थौ इत्येषा दशावरा परिषत्स्यात्। ऋग्यजुःसामवेदशाखानां येऽध्येतारस्तदर्थज्ञाश्च त्रयः सा धर्मसन्देहनिरासार्थं त्र्यवरा परिषद्बोधव्या–

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥
(मनु. १२।१११-११२)

तदभावे एकोऽपि वेदार्थधर्मज्ञो यं धर्मं निश्चिनुयात् प्रकृष्टो धर्मः स बोधव्यो न वेदानभिज्ञानां दशभिः सहस्रैरप्युक्तः । वेदविच्छब्दोऽयं वेदार्थधर्मज्ञपरः । एतच्च श्रेष्ठोपलक्षणम् । स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोऽपि गुरुपरम्परोपदेशविच्च ज्ञेयः । तथा "केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः । युक्तिहीने विचारे तु धर्महानिः प्रजायते" । तेन बहुस्मृतिज्ञोऽपि यदि सम्यक् प्रायश्चित्तादिधर्मं जानाति तदा तेनाप्येकेन धर्म उक्तः प्रकृष्टो धर्मो ज्ञेयः । अत एव **यमः**-

"एको द्वौ वा त्रयो वाऽपि यद्ब्रूयुर्धर्मपाठकाः ।
स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥
एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥
(मनु. १२।११३)

---

V.S. Agrawal, India as Known to Pañini, p. 399.
F. Hopkins, Social and Military Position of the Ruling Caste, JAOS., 13, 148.
U.N. Ghoshal, The Status of Brahmaṇas in the Dharmashastras, Indian Historical Quarterly, f23, pp. 83-92.
H.C. Ray, Position of the Brahmaṇas in the Arthshastra, proceedings of the All India Oriental Conference, 1942.
R.L. Mehta, Pre-Buddhist India, p.135.

सावित्र्यादिब्रह्मचारिव्रतरहितानाम्, मन्त्रवेदाध्ययनरहितानाम्, ब्राह्मणजातिमात्रधारिणाम्, बहूनामपि मिलितानां परिषत्त्वं नास्ति। धर्मनिर्णयसामर्थ्याभावात्–

**अव्रतानाममन्त्राणां जातिमन्त्रोपजीविनाम्।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते॥**

**(मनु. १२।११४)**

तमोगुणबहुला मूर्खाः धर्मप्रमाणवेदार्थानभिज्ञा अत एव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मं यं पुरुषं प्रत्युपदिशन्ति तदीयं पापं शतगुणं भूत्वा वाचकान् बहून् भजेत्–

**यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः।**
**तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति॥**

**(मनु. १२।११५।)**

तथा च **याज्ञवल्क्यः**

**चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा।**
**सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः।**

**(१।९)**

चत्वारो ब्राह्मणाः वेदधर्मशास्त्रज्ञाः पर्षत्। तिस्रो विद्या अधीयन्त इति त्रैविद्याः, तेषां समूहस्त्रैविद्यम्। धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते, तद्वा पर्षत्। सा पूर्वोक्ता पर्षत् यं ब्रूते स धर्मः। अध्यात्मज्ञानेषु निपुणतमो धर्मशास्त्रज्ञः एकोऽपि वा यं ब्रूते सोऽपि धर्मः। अस्तु धर्मशास्त्रमध्येतव्यम्–

**मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।**
**यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती॥**
**पराशरव्यासशङ्खलिखिता दक्षगौतमौ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥**

**(याज्ञ. १।४-५)**

अनज्ञाते दशावरैःशिष्टैरूहविद्भिरलुब्धैः प्रशस्तं कार्यम्[1] । **यथोक्तमन्यदतः परिषत्सु**[2]। अथास्य ज्ञातयः परिषद्युदपात्रं निनयेयुरसावहमित्थंभूत इति। चरित्वापः पयो घृतं मधुलवणमित्यारब्धवन्तं ब्राह्मणं ब्रूयुश्चरितं त्वयेत्योमितीतरः प्रत्याह चरितनिर्वेशं सवनीयं कुर्युः[3]।

1. गौ. ३।१०।४६।
2. आप. ध. सू. १।३।११।३४।
3. बौधा. ध. सू. २।१।४४-४५; व.ध.सू. १।१६; १।४-५।

महापातकादिपञ्चविधेऽपि दोषगणे प्रातिस्विकव्रतसंदोहममिधायाधुना सकलव्रत-साधारणमाह–विख्यातदोषःकुर्वीत पर्षदोऽनुमतं व्रतम् (याज्ञ. ३।३००)। यो दोषो यावत्कर्तृसंपाद्यस्तस्तोऽन्यैर्विख्यातो विज्ञातो दोषो यस्यासौ पर्षदुपदिष्टं व्रतं कुर्यात्। यद्यपि स्वयं सकलशास्त्रार्थविचारचतुरस्तथाऽपि पर्षत्समीपमुपगम्य तया सह विचार्य तदनुमतमेव कुर्यात्। तदुपगमने चाङ्गिरसा विशेष उक्तः–

**"कृते निःसंशये पापे न भुञ्जीतानुपस्थितः।**
**भुञ्जानो वर्धयेत्पापं यावन्नाख्याति पर्षदि॥**
**सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः।**
**पर्षदानुमतस्तत्त्वं सर्वं विख्यापयेन्नरः।**
**व्रतमादाय भूयोऽपि तथा स्नात्वा व्रतं चरेत्"॥**

विख्यापनञ्च पर्षद्दक्षिणादानान्तरं कार्यम्। यथाऽऽह पराशरः–"पापं विख्या-पयेत्पापी दत्त्वा धेनुं तथा वृषम्"। एतच्चोपपातकविषयम्। महापातकादिष्वधिकं कल्प्यम्। यत्तूक्तम्–

**"तस्माद्द्विजः प्राप्तपापः सकृदाप्लुत्य वारिणी।**
**विख्याप्य पापं पर्षद्भ्यः किञ्चिद्दत्त्वा व्रतं चरेत्"॥**

आसां च पर्षदां संभवापेक्षया व्यवस्था महापातकाद्यपेक्षया वा। यत्तु स्मृत्यन्तरेऽभिहितम्–

**"पातकेषु शतं पर्षत्सहस्रं महदादिषु।**
**उपपापेषु पञ्चाशत्स्वल्पं स्वल्पे तथा भवेत्"॥**

तदपि महापातकादिदोषानुसारेण पर्षदो गुरलघुभावप्रतिपादनपरं न पुनः सङ्ख्यानियमार्थम्; मन्वादिमहास्मृतिविरोधप्रसङ्गात्। तथा देवलेन चात्र विशेषो दर्शितः–

**"स्वयं तु ब्राह्मणा ब्रूयुरल्पदोषेषु निष्कृतिम्।**
**राजा च ब्राह्मणाश्चैव महत्सु च परीक्षितम्"॥**

तथा च पर्षदा अवश्यं व्रतमुपदेष्टव्यम्–

**आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः।**
**जानन्तो न प्रयच्छन्ति ते यान्ति समतां तु तैः॥**

इत्यङ्गिरः स्मरणात्। तया पर्षदा ज्ञात्वैव व्रतमुपदेष्टव्यम्–

**अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः।**
**प्रायश्चित्ती भवेत्पूतः किल्बिषं पर्षदं व्रजेत्॥**

इति वसिष्ठस्मरणात्। क्षत्रियादीनां तु कृतैनसां धर्मोपदेशे विशेषोऽङ्गिरसा दर्शितः–

"न्यायतो ब्राह्मणः क्षिप्रं क्षत्रियादेः कृतैनसः ।
अन्तरा ब्राह्मणं कृत्वा व्रतं सर्वं समादिशेत् ॥
तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्" ॥

तत्र च यागाद्यनुष्ठानशीलानां जपादिकं वाच्यम्, इतरेषां तु तपः–
"कर्मनिष्ठास्तपोनिष्ठाः कदाचित्पापमागताः ।
जपहोमादिकं तेभ्यो विशेषेण प्रदीयते' ॥
ये नामधारका विप्राः मूर्खा धनविवर्जिताः ।
कृच्छ्रचान्द्रायणादीनि तेभ्यो दद्याद्विशेषतः ॥

परिषदि[1] निर्णायका व्यवस्थापकाश्च शिष्टाः । शिष्टाःखलु विगतमत्सरा निरंहङ्कारा: कुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधवर्जिताः[2] । धर्मेणाधिगतो येषां वेदः सपरिबृंहणः । शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्षेहतवः । शिष्टः पुनरकामात्मा[3] । महाभाष्ये–"एतस्मिन्नार्यनिवासे ये ब्राह्मणाः कुम्भीधान्याः अलोलुपाः अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारगास्तत्रभवन्तः शिष्टाः"[4] । अथ यदि ते विचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः[5] । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः ... ... तेषु वर्तेथाः[6] । बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः। तस्मान्न वाच्यो ह्येकेन बहुज्ञेनाऽपि संशय[7] ।

---

1. चातुर्विद्यं विकल्पी च अङ्गविद्धर्मपाठकः ।
आश्रमस्थास्त्रयो मुख्याः पर्षदेषां दशावरा ॥
(वसिष्ठ. ३।२०)
लोकवेदाङ्गधर्मज्ञाः सप्तपञ्चत्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥
(परा. मा. २।१ पृ. २१८)
2. मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम् ।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत्' ॥
(पराशर. ८।१३।)
यतीनां सत्यतपसां ज्ञानविज्ञानचेतसाम् ।
शिरोव्रतेन स्नातानामेकोऽपि परिषद्भवेत् ॥
(अङ्गिरा–अपरार्कः पृ. २३)
परा. मा. २।१ पृ. २१७; बौधा. ध. सू. १।१।८; परा0 ८।२७; अङ्गिरा–अपरार्कः पृ. २२।
3. बौ. ध. सू. १।१।५।६; मनु. १२।१०९; वसिष्ठ. ६।४३ ।
4. वसिष्ठ. १।६।
5. महाभाष्यम् ३ पृ. १७४ ।
6. तै. उप. १।११।३।
7. बौ. ध. सू. १। १। १३।

**शिषेर्धातोश्च निष्ठान्तात् शिष्टशब्दं प्रचक्षते ।**
**मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥**
**मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः ।**
**तिष्ठन्तीह च धमार्थं तान् शिष्टान् संप्रचक्षते ॥**
**तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगे-युगे ।**

**( मत्स्य. १४५।३४-३६ )**

**प्राड्विवाकः**

कुतश्चिदतिपातिकार्यान्तरव्यासङ्गादपाटवाद्वा यदि राजा न स्वयं व्यवहारं पश्येत्तदा विद्वान् ब्राह्मणो नियोज्यः । विद्वत्ता च व्यवहारविषया सा तदधिकारत एवार्थगृहीता । न हि यो यन्न जानाति स तत्राधिकारमर्हति । धर्मशास्त्रपरिज्ञानं तु रागद्वेषदोषेण विपरीतार्थावधारणनिवृत्त्यर्थमुपयुज्यते । धर्मज्ञस्तु सतोंरपि रागद्वेषयोः शास्त्रभयेन्न न विपर्येति इत्युपयोगवद्धर्मशास्त्रपरिज्ञानम् । व्यवहारदर्शनं तु तदर्थ-गृहीतम् । येन विना न शक्यते व्यवहारनिर्णयः कर्त्तुम् तद्विज्ञानं तदधिकाराक्षिप्तम् । यत्तु ज्ञात्वाऽन्यथा क्रियते तन्निवृत्तिरूपदेशान्तरविषया । शास्त्रान्तरपरिज्ञानं तु व्यवहारेऽधिक्रियमाणस्यादृष्टाय स्यात्[1] । अथाह मनुः

**यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।**
**तदा नियुञ्ज्याद् विद्वांसं ब्राह्मणं कार्यदर्शने ॥ ( ८।९ )**

कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः–"स प्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः" । तत्र ब्राह्मणा अनियुक्ताः, सभासदस्तु नियुक्ता इति भेदः । अत एवोक्तम्–"नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति" । तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि यदि राजाऽन्यथा करोति तदाऽसौ निवारणीयः, अन्यथा दोषः । उक्तञ्च कात्यायनेन–" अन्यायेनाऽपि तं यान्तं येऽनुयान्ति सभासदः । तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः" । अनियुक्तानां पुनरन्यथाभिधाने वा दोषो न तु राज्ञोऽनिवारणे ।

मर्यादायै प्रश्नविवाकः (वाज. सं. ३०।१०) । अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट् तया वचनं विरुद्धमविरुद्धं च सभ्यैः सह विविनक्ति विवेचयति वेति विवाकः । प्राट् चासौ विवाकश्च प्राड्विवाकः । पूर्वोत्तरपक्षौ पृच्छतीति प्राट्, निर्णयं विशेषेण प्रवक्तीति विवाक इति यौगिकी तस्य संज्ञा । प्राड्विवाक इति वृषोदरत्वात् साधुः । अत एवाह–

1. कात्या., व्य. मा. पृ. २७९; स्मृ. चं. २ पृ. १६; राज. र. पृ. १८ ।

विवादसंश्रितं धर्मं पृच्छति प्रकृतं महत् ।
विवेचयति यस्तस्मात् प्राड्विवाकस्ततः स्मृतः ॥

(नारद., स्मृ. चं. २ पृ. १४)

कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
प्रवीणः पेशलो दक्षो धर्माध्यक्षो विधीयते ॥

(वि. र. पृ. १८)

**सभ्याः**

प्राड्विवाकः सामान्यतया ब्राह्मण एव नियोक्तव्यः । सर्वान् धर्मशास्त्रोक्तान् सामयिकांश्च धर्मान् वेत्ति सर्वधर्मविद्ब्राह्मणो नियोक्तव्यो व्यवहारदर्शने । एवंभूत-ब्राह्मणासम्भवे क्षत्रियं वैश्यं वा नियुञ्जीत, न शूद्रम्, यथाह **कात्यायनः**

**ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।**
**वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥**

नारदेन त्वयमेव मुख्यो दर्शितः–"धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितगतिः पश्येद्व्यवहाराननुक्रमात्" । प्राड्विवाकमते स्थितो न स्वमते स्थितः, राजा चारचक्षुषा परसैन्यं पश्यति इतिवत् । ब्राह्मणजातिमात्रं यस्य विद्यते न तु ब्राह्मणकर्मानुष्ठानं वणिगादिवत्साक्ष्यादिद्वारेणस्फुटन्यायनिरूपणक्षमः, ब्राह्मणजातिरपि वा यस्य सन्दिग्धात्मानं ब्राह्मणं ब्रवीति स वरम् । उक्तयोग्यब्राह्मणाभावे च क्वचित् कार्यदर्शने नृपतेर्धर्मप्रवक्ता भवेत्, न तु धार्मिकोऽपि व्यवहारज्ञोऽपि शूद्रः । ब्राह्मणो धर्मप्रवक्तेति विधानादेव शूद्रनिवृत्तिः सिद्धा पुनर्न तु शूद्र इति शूद्रनिषेधो योग्य-ब्राह्मणाभावे क्षत्रियवैश्ययोरभ्यनुज्ञानार्थः । एषा व्यवस्था धर्मविवेचन एव । यस्य राज्ञो धर्मविवेचनं शूद्रः कुरुते तस्य पश्यतः एव पङ्के गौरिव तद्राष्ट्रमवसन्नं भवति[1] । यो ब्राह्मणः क्रियारहित आत्मानं ब्राह्मणं ब्रवीति स ब्राह्मणब्रुवः, तस्याऽपि न धर्मविवेचनेऽधिकारः ।

धर्मप्रवचने व्यवहारदर्शनेऽस्ति भेदः। व्यवहारदर्शने शूद्राणामधिकारो न निषिद्धः। उक्तं ब्राह्मणैः सह धर्मनिर्णयं कुर्यान्मन्त्रिभिश्च मन्त्रज्ञैः । तत्र मन्त्रिणां जातेरविशेषितत्वाच्छूद्रा अपि सभां प्रविष्टा मन्त्रित्वादनुज्ञातव्यवहारनिर्णयास्तद्रता धर्मव्यवस्थां कथञ्चित् संस्कृतबुद्धयो ब्रूयुः । न च सर्वत्र व्यवहारे स्मृतिशास्त्र-परिज्ञानमुपयुज्यते येन तदभावादर्थलुप्तत्वादनर्थकः शूद्रप्रतिषेध आशङ्क्येत । तथाहि जयपराजयकारणानि लौकिकप्रमाणवेद्यान्येव साक्ष्यादीनि–अयं साक्षी धार्मिको न चैतस्य केनचित्सम्बन्धेन सम्बन्धी अयं त्वसाक्ष्यसकृद्दृष्टव्यभिचारत्वादित्येवमादि

1. मनु. ८।२०-२१ ।

शक्यते व्युत्पन्नबुद्धिना स्वयमुत्प्रेक्षितुं न स्मृतिशास्त्रैकगोचरम् । अतः प्राप्तस्य प्रतिषेधोऽयम् ।

श्रुताध्ययनसम्पन्नाः, धर्मज्ञाः, सत्यवादिनः, रिपौ मित्रे च ये समाः, एवंभूताः सभासदः, सभायां संसदि यथा सीदन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः (याज्ञ. २।२) । यथाह कात्यायनः–"स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः" । ते च त्रयस्ततोऽधिका वा कर्त्तव्याः[1], बहुवचनस्यार्थवत्त्वात् 'यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः' इति (८।११) मनुस्मरणाच्च । यस्मिन्देशे त्रयोऽपि ब्राह्मणा अवतिष्ठन्ते, राज्ञाधिकृतश्च विद्वान् ब्राह्मणः एव प्रकृत्वादवतिष्ठते, तां सभां चतुर्मुखसभामिव मन्यन्ते । बृहस्पतिस्तु सप्त, पञ्च, त्रयो वा सभासदो भवन्तीत्याह–

**लोकवेदधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।**
**यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥**

(१।११)

कात्यायनो ब्राह्मणातिरिक्तानामपि नियुक्तिर्मन्यते–

**स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।**
**धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥**
**अलुब्धा धनवन्तश्च धर्मज्ञाः सत्यवादिनः ।**
**सर्वशास्त्रप्रवीणाश्च सभ्याःकार्या द्विजातयः ॥**

**(व्य. या. पृ. २५; राज. र. पृ. २३)**

नच 'ब्राह्मणैःसह' इति पूर्वोक्तश्लोकोक्तानां ब्राह्मणानां 'श्रुताध्यनसम्पन्नाः' इत्यादि विशेषणमिति मन्तव्यम्, तृतीयाप्रथमान्तर्निर्दिष्टानां विशेषणविशेष्यभावासम्भवात्, 'विद्वद्भिः' इत्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः–"सप्राड्विवाकःसामात्यः सब्राह्मणपुरोहितः । ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति" । तत्र ब्राह्मणा अनियुक्ताः । सभासदस्तु नियुक्ता इति भेदः । "नियुक्तोऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति" । एषा व्यवस्था कौटलीयार्थशास्त्रे धर्मस्थीये स्पष्टा[2] –धर्मस्थास्त्रयस्त्रयोऽमात्या वा । अमात्यानां मध्येऽब्राह्मणानामपि ग्रहणं विशिष्यते ।

नियुक्तेन तु सभ्येन धर्मासनस्थेन केवलं धर्ममूर्त्तिमेवावस्थापयता किमपि धर्मशास्त्रोक्तव्यवहारनिर्णयवचनं तदेव वक्तव्यम् । न पुनर्वादिनोरेकतरस्यापि पक्षपाताश्रितं वक्तव्यम् । यदि कथमपि सर्वेऽपि सभासदो बुद्धिक्षूणाच्छास्त्रार्थं

---

1. मनु. ८।१०-११; याज्ञ. २।३; नारद. ३।४-५; शुक्र. ४।५।१७; वि.ध.सू. ३।७४; कात्या. ५७ ।
2. कौ. ३।२ ।

विस्मृत्य अथवा लोभादिना कारणेन शास्त्रोक्तं न्यायमार्गमुत्सृज्य व्यवहारस्यान्याय-युक्तं निर्णयं दातुं प्रवृत्ता भवन्ति । तत्र प्रसङ्गागतः कश्चित् स्मृतितन्त्रव्यवहारमार्गज्ञो ब्राह्मणः प्रत्यक्षस्तिष्ठति तेन शास्त्रोक्तवचनपाठपूर्वकं प्रतिषेधनीयाः सभासदः । एवं प्रबोधयतस्तस्य छलं नास्ति । अनियुक्तोऽपि शास्त्रज्ञो वक्तुमर्हति । यतः शास्त्रं नाम देवभाषा[1] ।

सभ्यानां योग्यतादायित्वविषये च महाभारते शान्तिपर्वणि—

ह्रीनिषेवास्तथा दान्ताः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥
(८३।२)

सभायां सभासदः विशिष्टदायित्वम् । प्रतिपन्नाधिकारेण मिथ्यादर्शनं न कर्त्तव्य-मनेन च क्रियमाणं नोपक्षणीयम् । विपरीतेऽनुष्ठीयमाने तूष्णीमासीनो हस्तक्षेपेण वा न्यायशास्त्रविरुद्धं ब्रुवन् पापभाग्भवति । तेन नैषा प्रत्याशा कर्त्तव्या—द्वितीयः प्राड्विवाको मिथ्या पश्यति, स एव योज्यते, अहं तूष्णींभूत उदासीनः किमित्येनसा योक्ष्यः । सभाप्रवेशनिषेधेन चात्र व्यवहारदर्शनाधिकारप्रतिपत्तिः प्रतिषिध्यते । सभा वा न प्रवेष्टव्या, व्यवहारदर्शनाधिकारो न प्रतिपादनीयः । प्रतिपन्नश्चेत् समञ्जसं वक्तव्यम् । अनेन त्वनधिकृतस्यापि यदृच्छया सन्निहितस्य मिथ्यापश्यत्सु सभ्येषु विदुषस्तूष्णींभावं नेच्छन्ति[2] । अथ राजपुरुषपर्यनुयोग आशङ्क्यते किमित्यनधिकृतो ब्रवीति ततश्च तत्प्रदेशादपसर्त्तव्यम् । तदिदमुक्तं दुर्बलहिंसाया च विमोचने शक्तश्चेदिति (गौ. सू. २१।१९) ।

धर्मः शास्त्रन्यायदेशनियता व्यवस्था । सा चेदधर्मेण विनाश्यतेऽर्थिना प्रत्यर्थिना वा । तथा सत्यमनृतेन हन्यते । प्राड्विवाकादयश्च प्रेक्षन्ते न तत्त्वमुद्धरन्ति ततस्ते हताः शवतुल्या भवन्तीति निन्द्यन्ते । तस्मान्नार्थिप्रत्यर्थिनौ विपरीतमाचरन्तौ सभा-सद्भिरुपेक्ष्यौ, साक्षिणश्च ।

न भयादन्यथादर्शनं कर्त्तव्यं यतो धर्मो व्यतिक्रान्तः सन् हन्ति, प्रत्यर्थी तत्सहायो राजा वा । तथा धर्म एव पालितःसर्वतो भयमपनुदति नापकर्त्तुमर्थ्यादयःक्रुद्धाः शक्नु-वन्ति । तस्मादेवंजानानः सुखदुःखे धर्माधीने इति धर्मो न हन्तव्यः । यदि वयं धर्मं हन्मस्तदा सोऽस्मान् सर्प इव रोषितः प्रतिहन्तीति अतो धर्मो हतः सन्मास्मान्वधीदि-त्यात्मपरित्राणार्थं धर्मो रक्षितव्यः[3] । धर्मादन्यो न मृतं परित्रातुं कश्चित्समर्थ इत्यतः सुहृद्बान्धवानुरोधादपि धर्मो न हातव्यः[4] ।

---

1. नारद. ३।१-२; बृह. १।१०; नारदहारीतौ ३।१४; बृ. १।५४, ९८; नारद. ३।७ ।
2. मनु. ८।१२-१३ ।
3. मनु. ८।१५ ।
4. मनु. ८।१७ ।

मनुराह–

वृषो हि भगवान् धर्मस्तस्य यः कुरुते त्वलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥
(८।१६)

वृषलशब्दनिर्वचनेन मिथ्यादर्शी निन्द्यते । न जातिवृषलो वृषलः, किं तर्हि, यो वृषस्य कामवर्षिणो धर्मस्यालं कुरुते । निवृत्तिवचनोऽलं शब्दः । स वृषल इत्येतमर्थं देवाः प्रतिपन्नाः । मनुष्यास्तु यदि जातिशब्दं मन्यन्ते कामं मन्यन्तां प्रमाणतरास्तु देवाः । ते चानेन प्रवृत्तिनिमित्तेन वृषलशब्दप्रयोगो मन्यन्ते । देवग्रहण- मर्थवादः । तस्याच्छ्राद्धकाले वृषलैर्न प्राप्तव्यम् । "हन्तव्यो वृषलश्चौर" इत्याद्यासु क्रियासु मिथ्यादर्शी ब्राह्मण वृषलशब्देन ग्रहीतव्य इति । अतो वृषलत्वं मा प्रापमिति धर्मं न लोपयेदिति वृषलत्वाध्यारोपो निन्दा ।

शास्त्रोदितेन विधिना लोभद्वेषादिकं त्यक्त्वा निर्णयं कुर्यात् । शुद्धेषु व्यवहारेषु धर्ममेव वदेत् । सभ्येन धर्मार्थसहितं वचोऽवश्यं वक्तव्यम् । राज्ञो मनोनुकूलमेव न वाच्यम् । किन्तु न्याय्यम् । एवं सति सभ्यो न किल्बिषी भवेत् । ये सभासदः यियासन्तमन्यायतोऽनुयान्ति, तेऽपि तद्भागिनस्तस्माद् बोधनीयः स तैर्नृपः[1] ।

**निःशल्यव्यवहार** एव प्रशस्तः । व्यवहारदर्शनगतो लोकः सभ्यजनो जनशब्दादवगम्यते । अत्र व्यवहारनिष्पन्ने सर्वे सभ्याः । तथा सर्वोऽपि सभ्यजनः साधु तदस्य लोकोऽपि साध्वेतदिति मन्यते जानाति । स एव व्यवहारो निःशल्यव्यवहारः । अतोऽन्यथा विपरीतस्वरूपःसशल्य एवावमन्तव्यः–

यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते ।
स निःशल्यो विवादः स्यात् सशल्यःस्यादतोऽन्यथा ॥
(नारद. ३।१७)

विचारकाणामन्योन्यविप्रतिपत्तौ त्रैविद्यवृद्धेभ्यःसमधिगतचतुर्दशविद्यास्थानेभ्यो न्यायं प्रत्यवहृत्यावगम्य व्यवहारं निष्ठां समाप्तिं निर्णयं गमयेत् । विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स धर्मत्वम् । विप्रतिपत्तौ त्रैविद्यवृद्धेभ्य प्रत्यवहृत्य निष्ठां गमयेत्[2] । संख्या वैषम्ये तु भूयोऽल्पविरोधे भूयसां स्यात्सर्वधर्मत्वमिति न्यायेन विप्रतिपत्तावधिकसंख्यावचनमादरणीयं गुणसाम्ये ।

**सभ्याः दण्ड्याः**

ये सभ्या अन्यायवादिनः, उत्कोचजीविनः, विश्वस्तवञ्चकाश्च ते सर्वे निर्वास्याः[3]।

1. कात्या. ७४-७८ ।
2. गौ. ११।२५; जै. सू. १२।२२ ।
3. बृह. १।१०८ ।

कार्यस्य निर्णयं कृत्वा ततः सभ्यो वदेत्। अन्यथा नैवं कर्त्तव्यं वक्ता द्विगुणदण्डभाक्। स्नेहात्, अज्ञानतः, मोहात्, लोभतोऽपि वा, अन्यथावादी सभ्यो दण्ड्यः स्मृतः। तत् सभ्येन देयम्, यत्तु सभादोषान्नष्टम्[1]। अन्ये च–

अनिवृत्ते तु यद्यर्थे संभाषेत रहोऽर्थिनम्।
प्राड्विवाकोऽथ दण्ड्यः स्यात् सभ्यश्चैव न संशयः॥
(कात्या. ७०)

प्राड्विवाकःसदस्यानामुपजीव्य मतानि तु।
न युक्तियोगाद्योऽर्थेषु निर्णयेत्तु स दण्डभाक्॥
(बृह. १।७६०)

न च 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' (११।१) इति गौतमवचनान्न ब्राह्मणा दण्ड्या इति मन्तव्यम्, तस्य प्रशंसार्थत्वात्। यत्तु "षड्भिःपरिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च" (गौ. ८।१२-१३) इति, तदपि 'स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतःषट्सु वा सामयाचारिकेष्वभिविनीत" (गौ. ८।४-११) इति, प्रतिपादितबहुश्रुतविषयम्, न ब्राह्मणमात्रविषयम्।

यत्र देशे विद्वत्संहतिरूपो धर्मः सत्याभिधानजन्योऽनृताभिधानजन्येनाधर्मेण पीडित आगच्छति अर्थिप्रत्यर्थिनोर्मध्ये एकस्य सत्याभिधानादपरस्य मृषावादात्ते च सभासदोऽस्य धर्मस्य पीडाकरत्वाच्छल्यमिवाधर्मं नोद्धरन्ति तदा ते एव तेनाधर्मशल्येन विद्धा भवन्ति।

**सभा**

भाः प्रकाशस्तया सह वर्तत इति विद्वत्संहतिरेवं सभाशब्देनाभिमता। ऋग्वेदे सभा शब्दस्योल्लेखः सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा शूशुजानः (ऋ. १०।३४।६)। "चतुर्विधा सभा प्रोक्ता–

प्रतिष्ठिताप्रतिष्ठिता मुद्रिता साक्षिता तथा।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः॥
प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता।
मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च शासिता॥
नृपाधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश॥

1. कात्या. ७९, ८०, ८१।

एषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतःकृतः।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणलेखकौ॥
हेमाग्न्यम्बु दृशौ हृच्च पादौ स्वपुरुषस्तथा।
दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्॥
वक्ताध्यक्षो नृपः शास्ता सभ्याःकार्यपरीक्षकाः।
स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा॥
शपथार्थौ हिरण्याग्नी अम्बु तृषितक्षुब्धयोः।
गणको गणयेदर्थं लिखेन्न्यायं च लेखकः॥
प्रत्यर्थिसभ्यानयनं साक्षिणाञ्च स्वपूरुषः।
कुर्यादलग्नकौ रक्षेद्योऽर्थिप्रत्यर्थिनौ सदा॥
एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः।
न्यायान् पश्येत्कृतमतिःसा सभाध्वरसंमिता॥
लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राग्र्याः सा यज्ञसदृशी सभा[1]॥

आरण्यकादिस्थानत्रये या सभा सा प्रतिष्ठिता। प्रायेण देशान्तरगमनयोग्यत्वादुभयवासिप्रभृतिषु दशसु स्थानेषु तदभावात् प्रतिष्ठिता। नियुक्तस्थाने पुनः मुद्राहस्ताध्यक्षसाहित्या मुद्रिता। नृपस्थाने तु शास्त्रनियन्तृकत्वाच्छास्त्रिता। यस्मिंस्थाने ऋग्यजुःसामवेदिनस्त्रयोऽपि ब्राह्मणा अवतिष्ठन्ते, राज्ञाधिकृतश्च विद्वान् ब्राह्मण एव प्रकृतत्वादवतिष्ठते, तां सभां चतुर्मुखसममिव मन्यन्ते[2]। सत्याषाढश्रौतसूत्रे तिस्रःसभाः–धर्मसभा, कर्मसभा, राजसभा च। छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः (याज्ञ. २।१९)। भूतच्छलानुसारित्वाद् द्विगतिः समुदाहृतः (नार. १।२९)। न तु शिष्टं छलं राजा मर्षयेद्धनम् (नार. १।३१)।

अनिर्णीतव्यवहारे व्यवहर्तरि प्रेते व्यवहारो न निवर्तते। निर्णीतेऽपि व्यवहारे, स्थिते च व्यवहर्तरि, व्यवहारःक्वचित्प्रवर्तते क्वचिन्न प्रवर्तते–

नृपेणाधिकृताःपूगाःश्रेणयोऽथ कुलानि च।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम्॥
(याज्ञ. २।३०)

नृपेण व्यवहारदर्शने नियुक्ताः पूगाःसमूहाः, भिन्नजातीनां भिन्नवृत्तीनमेकस्थानिवासिनाम्–यथा ग्रामनगरादयः, श्रेणयो नानाजातीनामेकजातीनामप्येककर्मोपजीविनां संघाताः, कुलानि ज्ञातिसम्बन्धिबन्धूनां समूहाः, एतेषां नृपाधिकृतादीनां चतुर्णां

---

1. बृह. १।५७-५८; १।८७; १।८४-८५; १।८८, ९०; १।६०; १।५९; १।६२।
2. मनु. ८।११।

यद्यत्पूर्वं पठितं तत्तद्गुरुबलवज्ज्ञेयम् । नृपाधिकृतैर्निर्णीते व्यवहारे पराजितस्य यद्यप्यसन्तोषः कुदृष्टिबुद्ध्या भवन्ति, तथापि न पूगादिषु पुनर्व्यवहारो भवति । एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम् । तथा श्रेणिनिर्णीते व्यवहारे पराजितस्य यद्यप्यसन्तोषः कुदृष्टिबुद्ध्या भवति, तथापि न पूगादिषु पुनर्व्यवहारो भवति । एवं पूगनिर्णीतेऽपि न श्रेण्यादिगमनम् । तथा श्रेणिनिर्णीते पूगादिगमनम् । पूगनिर्णीते नृपाधिकृतगमनं भवति । नारदेन पुनर्नृपाधिकृतैर्निर्णीतेऽपि व्यवहारे नृपगमनं भवति–

कुलानि श्रेणयश्चैव गणाश्चाधिकृता नृपाः ।
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥
(नारद. १।७)

कुलादीनां ब्राह्मणादीनां ज्ञात्यादिरूपाणाम् जातयः मूर्धावसिक्तप्रभृतयः, दाक्षिण्यादिनान्यथादर्शनमपि संभाव्यते। श्रेणीनामुदासीनतया ततो बलवत्ता । गणाः हेडाबुका अश्वव्यवहारिणः । पूगानां त्वेकस्थानवासमात्रसम्बन्धोऽपि भिन्नजातितया भिन्नवृत्तितया च ततोऽपि मिथोनपेक्षत्वादौदास्याद् बलम् । नृपाधिकृतानां ततोऽपि निःसम्बन्धतया राज्ञा परीक्ष्याधिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्यसंभव इति पूगेभ्यो बलवत्तरम् । अत्र बृहस्पतिः

ये त्वरण्यचरास्तेषामरण्ये करणं भवेत् ।
सेनायां सैनिकानां तु सार्थेषु वणिजां तथा ॥
राज्ञा ये विदिताः सम्यक्कुलश्रेणिगणादयः ।
साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥
कुलश्रेणिगणाध्यक्षाः प्रोक्ता निर्णयकारकाः ।
एषामग्रे निश्चितस्य प्रतिष्ठा तूत्तरोत्तरा ॥
विचार्य श्रेणिभिः कार्यं कुलैर्यन्न विनिश्चितम् ।
गणैश्च श्रेण्यविज्ञातं गणाज्ञातं नियुक्तकैः ॥
कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षः स्मृतोऽधिकः ।
सर्वेषामधिको राजा धर्म्यं यत्नेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः ॥
(१।७३, ९२-९६)

कीनाशाः कारुकाः शिल्पिकुसीदिश्रेणिनर्त्तकाः ।
लिङ्गिनस्तस्कराः कुर्युः स्वेन धर्मेण निर्णयम् ॥
(१।८४)

अत्र कात्यायनः

कुलैश्च यत्कृतं कार्यं विचार्य यद्यथोत्तरम्।
असन्तुष्टस्य कर्त्तव्यं यावद्राज्ञा कृतं विदुः॥
अनिर्दिष्टाश्च ये कुर्युर्व्यवहारविनिश्चयम्।
राजवृत्तिप्रवृत्तास्ते तेषां दण्डं प्रकल्पयेत्॥
लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथाऽपरे।
स्वधर्मेणैव कार्याणां कुर्युस्ते निश्चयं सदा॥
बणिक्च्छिल्पिप्रयोगेषु कृषिरङ्गोपजीविषु।
अशक्यो निर्णयो ह्यत्र तज्ज्ञैरेव तु कारयेत्॥

(व्य. नि. पृ. २०)

त[1]पस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत्।
मायायोगविदाञ्चैव न स्वयं कोपकारणात्॥

(बृ. १।७६)

कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे। तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था[2] तथा च भृगुः

दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः।
निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः॥
आरण्यास्तु स्वकैः कुर्युः सार्थिकाः सार्थिकैस्तथा।
सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिनः॥
उभयानुमतं चैव गृह्णते स्थानमीप्सितम्।
कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः॥
ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च वर्णिनः।
कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा॥

(स्मृ. चं. २ पृ. १८)

कुलिकाः केचनार्थिगोत्रा वृद्धाः। कुलिकाः कुलश्रेष्ठा इति व्यवहारप्रकाशः (पृ. ९)। सार्थिनो ग्रामयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः (व्य. प्र. पृ. ९)। प्रामाण्यमेव ये कुदृष्टयः वेदे न वदन्ति, तेषां बौद्धार्हतादीनां पाषण्डाख्या प्रकीर्त्यते। अत्र कात्यायनः

गणाः पाषण्डपूगाश्च श्रेणयस्तथा।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः॥

---

1. कौ. १।१९।
2. गौ. ११।२१-२२।

देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैः सह ॥
(स्मृ. चं. २ पृ. १८; परा. मा. 3 पृ. ४१)

सम्यग्विज्ञानसम्पन्ने नोपदेशं प्रवर्तयेत् ।
उत्कृष्टजातिशीलानां शुद्धाचार्यतपस्विनाम् ॥
नियुक्तो व्यवहारेण लोको लोकानुसारतः ।
पार्थिवश्च गणांश्चैव धर्मेणैव नयेद्भृगुः ॥
(१८४)

कौटलीयार्थशास्त्रे धर्मस्थीयकण्टकशोधनयोर्व्यवस्था विद्यते । तत्र धर्मस्थीये धर्मस्थास्त्रयोऽमात्या जनपदसन्धिसंग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान्कुर्युः (३।१।१) । पुरुषापराधविशेषेण दण्डविशेषः कार्यः । तीर्थकरस्तपस्वी व्याधितः क्षुत्पिपासाध्वक्लान्तस्तिरोजानपदो दण्डखेदी निष्किञ्चनश्चानुग्राह्याः । देवब्राह्मण-तपस्विस्त्रीबालवृद्धव्याधितानामनाथानामनभिसरतां धर्मस्थाः कार्याणि कुर्युः । न च देशकालभोगच्छलेनातिहरेयुः । पूज्या विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः (३।२०।२६-३०) ।

एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः ।
समाः सर्वेषु भावेषु विश्वास्या लोकसंप्रियाः ॥
(३।२०।३१)

प्रदेष्टारस्त्रयस्त्रयो वामात्याः कण्टकशोधनं कुर्युः
(४।१।१)

तेन तत्पूयते पापं राज्ञो दण्डापचारजम् ।
शास्ता हि वरुणो राजा मिथ्या व्याचरतां नृषु ॥
(४।१३।५९)

शुक्रनीतौ नियोजितस्य('वाक्कील' इत्यस्य)व्यवस्था प्राप्यते–

नियोजितस्यापि भृतिं विवादात् षोडशांशिकीम् ।
विंशत्यंशां तदर्धां वा तदर्धां च तदर्धिकम् ॥
यथा द्रव्याधिकं कार्यं हीना हीना भृतिस्तथा ।
यदि बहुनियोगी स्यादन्यथा तस्य पोषणम् ॥
धर्मज्ञो व्यवहारज्ञो नियोक्तव्योऽन्यथा न हि ।
अन्यथा भृति गृह्णन्तं दण्डयेच्च नियोगिनम् ॥
कार्यो नित्यो नियोगी न नृपेण स्वमनीषया ।
लोभेन त्वन्यथा कुर्वन् नियोगी दण्डमर्हति ॥
(शु. ४।२।११४-१७)

**सभाभवनस्य** सौन्दर्यमप्यपेक्ष्यते बृहस्पतिना–माल्यधूपासनोपेतां बीजरत्नसमन्विताम् । प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा (स्मृ. चं. २ पृ. १९) । "अधिकरणमण्डपगतैश्चार्यवेषैरत्युच्चवेत्रासनोपविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैरधिष्ठितम् (कादम्बरी) । व्यवहारस्य शास्त्रदृष्टः कालः, आद्यादह्नोष्टभागाद्यदूर्ध्वं भागत्रयं भवेत् । "नाडिकाभिरहरष्टधा रात्रिं च विभजेत् । ... ... द्वितीये पौरजानपदानां कार्याणि पश्येदिति" (कौ. १।१९) ।

**न्यायालयशुल्कविषयोऽपि** विचार्यः । हिंसामूलविवादे न शुल्कः । धनमूलविवादेऽपि निर्णयानन्तरमेव शुल्को देयः । यदा पुनरुत्तमर्णो दुर्बलः प्रतिपन्नमर्थं धर्मादिभिरुपायैः साधयितुमशक्नुवन् राज्ञा साधितार्थो भवति तदाऽधमर्णस्य दण्डमुत्तमर्णस्य च भृत्तिदानमाह–

**राज्ञाऽधमर्णिको दाप्यः साधितादशकं शतम् ।**
**पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥**

**( याज्ञ. २।४२ )**

प्रतिपन्नस्य साधितार्थस्य दशममंशं राजाऽधमर्णिकाद्दण्डरूपेण गृह्णीयात् । साधितार्थस्य विंशतितमं भागमुत्तमर्णाद्राजा भृत्यर्थं गृह्णीयात् । अप्रतिपन्नार्थसाधने तु दण्डविभागो दर्शितः– 'निह्नवे भावितो दद्यात्' । सधनमधमर्णिकं प्रत्युक्तम्, निर्धनमधमर्णिकं प्रत्याह–

**हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।**
**ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥**

**( याज्ञ. २।४३ )**

उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसंमितं दण्डं दद्यात् प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम् (वि. ध. सू. ६।२०-२१) । परोक्तदण्डः पञ्चबन्धः । स्वयंवादिदण्डो दशबन्धः । पुरुषभृतिरष्टाङ्गः । पथि भक्तमर्थविशेषतः । तदुभयं नियम्यो दद्यात् (कौ. ३।१।३१) । ऋणिकः साधनो यत्र यस्तु दौरात्म्यान्न प्रयच्छति । राज्ञा दापयितव्यः स्याद् गृहीत्वा पञ्चकं शतम् (नारद. ४।१३२) । मयोत्तमर्णस्य धनं देयमिति सभायामधमर्णेनोक्ते सत्यधर्मणः पणशतात् पञ्च पणा इत्येवं दण्डमर्हति । यदा तु सभायामपि न किञ्चिदस्मै धारयामीत्येवमपलपति तदा पणशताद्दशपणा इत्येवं दण्डमर्हति (मनु. ८।१३९) ।

यः प्रत्यर्थी यत्परिमाणधनमपनयति, अर्थी वा यत्परिमाणधने मिथ्या वदति तावधर्मिकावपह्नुतमिथ्योक्तधनाद्द्विगुणं दण्डरूपं दापनीयौ । अधर्मज्ञाविति वचनाज्ज्ञानपूर्वापह्नवमिथ्योक्तिविषयमिदम् । प्रमदादिनापलापमिथ्यानियोगापह्नवे

द्विगुणमिति शतदशमभागम् (मनु. २।५९)। श्रोत्रियद्रव्यपर्यान्तानां चिरकालोपयोगबलेनापहर्ता तं विवादास्पदीभूतं धनं स्वामिने दापयेत् । दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः ।

यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न संभवति तथापि "मर्यादायाः प्रभेदे च सीमातिक्रमणे च तथा" इति दण्डव्यवस्था । अथ तत्समदण्डेनापहर्तुर्दमनं न भवति बहुधनत्वेन, तदा शक्त्यपेक्षं धनं दापयेत्[1] । यावता तस्य दर्पोपशमो भवति तावद्दापयेत् । "दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत्" (गौ. ११।२८) इति दण्डग्रहणस्य दमनार्थत्वात् । यस्य पुनः किमपि धनं नास्ति धिग्दण्डादिना दमनीयः (मनु. ८।१२९) । वधदण्डोऽपि शारीरो ब्राह्मणव्यतिरिक्तानां दशधा दर्शितः (मनु. ८।१२५) । एतेषां यन्निमित्तापराधस्तत्रैवोपस्थादौ निग्रहःकार्यः । कर्म वा कारयितव्यो बन्धनागारं वा प्रवेशयितव्यः । यथाह गौतमः—कर्मवियोगविख्यापननिर्वासनाङ्ककरणान्यवृतौ[2] (१२।४७) । प्रनष्टाधिगतं राज्ञे समर्पितं यत्तद्राज्ञा धनिने दातव्यम् । यदि धनी रूपसङ्ख्यादिभिर्लिङ्गैर्भावयति । यदि न भावयति तदा तत्समं दण्ड्यः, असत्यवादित्वात्। अधिगमस्य स्वत्वनिमित्तत्वात्स्वत्वे प्राप्ते तत्परावृत्तिः [3] ।

**विचारविधिः**

प्राड्विवाकादयः सभ्या यदि रागादिना स्मृत्यपेतं व्यवहारं विचारयन्ति तदा ते विवादाद्द्विगुणं दमं दण्ड्याः पृथक्[4] । व्यवहारविचारस्तु न ब्राह्मणमात्रविषयम्, अपि तु बहुश्रुतविषयम् । स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशतसंस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीत इति[5] । व्यवहारविषयमाह—

**स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः ।**
**आवेदयति चेद्राज्ञे व्यवहारपदं हि तत ॥**

**( याज्ञ. २।५ )**

धर्मशास्त्रसमयाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति चेद्यदि, तदावेद्यमानं व्यवहारपदं प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य विषयः । स च द्विविधः—शङ्काभियोगस्तत्त्वाभि-

1. याज्ञ. २।२६ ।
2. नारद. १४।८; ९।२३७ ।
3. याज्ञ. २।२६, १७१,१८८ ।
4. याज्ञ. २।४ ।
5. गौ. ८।४-११ ।

योगश्चेति[1] । शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् । तत्त्वाभियोगोऽपि द्विविधः–प्रतिषेधात्मको विध्यात्मकश्चेति । स च पुनश्चाष्टादशधा भिद्यते–

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।**
**सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥**
**वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।**
**क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥**
**सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।**
**स्तेयं च साहसञ्चैव स्त्री सङ्ग्रहणमेव च ॥**
**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।**
**पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥**

**( मनु. ८।४-७ )**

एष्वृणादानादिषु व्यवहारस्थानेषु बाहुल्येन विवादं कुर्वतां मनुष्याणामनादिपारम्पर्यागतत्वेन नित्यं धर्ममवलम्ब्य कार्यनिर्णयं कुर्यात् ।

नयानयकुशलेन दण्डो धर्मानुसारेण नेतुं शक्यः । सः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितमिदं सर्वं जगद्धर्षयेत् । अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्प्रकोपयेत् । न केवलमधर्मदण्डेन जगत्प्रकोपः, अपितु प्रयोक्तुर्दृष्टादृष्टहानिरिति । यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्त्तिं लोकांश्च विनाशयति । शास्त्रोक्तमार्गेण तु कृतो धर्महेतुत्वात् स्वर्गकीर्तिजयानां हेतुर्भवति । स्वधर्माच्चलितोऽदण्ड्यो नाम राज्ञः कोऽपि नास्ति । दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्त्तव्यम्[2] । प्रतिदिनं व्यवहारान् दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत् ।

यत्र स्थाने आवेदिततत्त्वनिष्कर्षः धर्मशास्त्रविचारेण निर्णेतृभिः क्रियते इति धर्मस्थानम् । अस्यैव धर्माधिकरणमिति नामान्तरम् । धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् । यत्र धर्मशास्त्रविचारेण मूलसारविवेचनमधिक्रियते तत् धर्माधिकरणम् । धर्माधिकरणमेव धर्मसभा इत्यपि । तच्च प्राच्यां दिशि अग्न्युदकैः समवेतं स्यात्[3] । तत्र बृहस्पतिः

**दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।**
**प्राग्दिशि प्राङ्मुखी तस्य लक्षण्यां कल्पयेत्सभाम् ॥**
**पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।**

---

1. नारद. १।२७ ।
2. याज्ञ. १।३५५-३६०; मनु. ८।१२८; बृद्धहारीत. ७।१९४०-४३।
3. स्मृ. चं. २पृ. १९; परा. मा. ३।१ पृ. २२; व्य,. पृ. ८; शुक्र. ४।५।४४; स. वि. पृ. ६३।

पश्येत्पुराणधर्मार्थशास्त्राणि श्रृणुयात्तथा ॥
राजा कार्याणि संपश्येत्प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥
(१४५,४७,११५,६५)

**राज्ञः स्थानं दायित्वञ्च**

धर्मशास्त्रानुसारेणैव व्यवहारान् नृपः पश्येदित्युक्तम् । किञ्च विद्वद्भिर्ब्राह्मणैः सह। प्रवक्तृत्वेऽपि ब्राह्मणानां नृपसहायोपगितैव । द्रष्टा तु निग्रहानुग्रहसामर्थ्याद्राजैव । समर्थेनाऽपि धर्मशास्त्रानुसारिणा भाव्यम् । न क्रोधादिवशेनाऽन्यथा व्यहर्त्तव्यम् । धर्ममूलो राजा, अतः सद्भिः सह राजा व्यवहारान् विशोधयेत्[1] । अत्र **बृहस्पतिः**

विप्रो धर्मद्रुमस्यादिः स्कन्धशाखे महीपतिः ।
सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम् ॥
यशो वित्तं फलरसौ भोगावहं ग्रहपूजनम् ।
अजेयत्वं लोकपंङ्क्तिः स्वर्गे स्थानं च शाश्वतम् ॥
विदित्वैतान्न्यायरसान् समो भूत्वा विवादिनाम् ।
त्यक्त्वा लोभादिकं राजा धर्म्यं कुर्याद् विनिर्णयम् ॥
(१४९-५१)

तथा च कात्यायनः

राजा वृत्तिर्विवादानां स्वयमेव प्रदर्शनम् ।
शास्त्रदृष्टेन मार्गेण विद्वद्भिः सैव सेव्यते ॥
तस्मान्न्यायेन राष्ट्रं तु सम्यग्यत्नेन पालयेत् ।
तस्मादर्थश्च धर्मश्च राज्यञ्च विपुलं भवेत् ॥

किञ्चिद्धर्मशास्त्रोक्तमर्थशास्त्रविरुद्धं भवति । किञ्चित्पुनरर्थशास्त्रोक्तं धर्मशास्त्रविरुद्धं भवति । तयोरितरेतरतारतम्यालोचनेन यथा लोकाचारविरुद्धं न भवति तथा सुसभ्योऽपि राजा व्यवहारगतिं नयेत् । तस्य व्यवहारो वेदो धर्मशास्त्रार्थशास्त्राण्यङ्गानि उपवेदाः पुराणम् (गौ. ११।२१) । न्यायाधिगमे तर्कोऽभ्युपायः । तेनाभ्यूह्य यथास्थानं गमयेत् । विप्रतिपत्तौ त्रैविद्येभ्यः प्रत्यवहृत्य निष्ठां गमयेत् । तथा ह्यस्य निःश्रेयसं भवति ।

यथा आकाशो भूतलवद्दृश्यते, परं दृश्यमानेऽपि तत्र भूतलं नास्ति । यथा च खद्योते बह्निस्फुलिङ्गसदृशेऽपि दृश्यमाने तत्र बह्निर्नास्ति । तथा क्वचित्पुरुषवचनेऽपि सत्याभासे दृश्यमानेऽपि सत्यं न भवति । तस्मात् प्रत्यक्षदृष्टोऽप्यर्थः

---

1. नारद. १।३५; ३।६ ।

तात्पर्यतः परीक्षेतुं युक्तः । अत एव दृश्यन्ते विविधाः भावास्तत एव परीक्ष्य ज्ञापयन्नर्थान्न परिहीयते । अत्र नारदः

किंतु राजा विशेषेण स्वधर्ममभिरक्षता ।
मनुष्यचित्रवैचित्र्यात् परीक्ष्या साध्वसाधुता ॥
असत्याः सत्यसङ्काशाः सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते विविधाकारास्तस्माद्युक्तं परीक्षणम् ॥
तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव ।
न तलं विद्यते व्योम्नि खद्योते न हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम ।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते ॥
न तु दृष्टं छलं राजा मर्षयेद्धर्मसाधनम् ।
भूतमेव प्रपद्येत भूतमूला यतः श्रियः ॥
अभूतमप्यहितं प्राप्तकालं परीक्षते ।
प्रमादान्नोच्यते यत्तु तद्भूतमपि हीयते ॥
(१।६८,७१-७३,३१,६४)

व्यवहारो हि नाम अनृतप्रभवो व्याजैकनिबन्धनः । अधर्मप्राधान्यं व्यवहारेषु । यतश्चैतदेवमतश्च व्यवहारमार्गेणान्यथा क्रियते । तथा चोक्तम्–"अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारतः" । अतश्च प्रत्यत्नतो निराकृच्छलादिः सत्यैकप्रवणो राजा व्यवहारेषु कृती स्यात् ।

## अध्याय: ३

# अपराध:

मानवजीवनमपूर्णमेव । पूर्णतामिच्छन्नप्येष मानवः अपूर्णं प्रत्येवानुधावन् लक्ष्यते । सामाजिकस्य विकाशस्य प्रारम्भिक्यां दशायां समस्येयं पापपुण्यात्मिकां सीमामधिष्ठायैव समाधीयते । परं समाजीयानां विभिन्नानां तत्त्वानां यत्रैकतो विकाशस्तत्रैवापरतः पापपुण्यविषयकस्सिद्धान्तः समाजशास्त्रीयतां धत्ते । यथा-यथा समाजो याति विकाशं तथा-तथैव समाजशास्त्रीयता आसाद्यते पापपुण्याभ्याम् । पापमपराधतया परिणमति प्रायश्चित्तञ्च दण्डतया । समाजे बुद्ध्या विवेकेन च यावदेव पदं लभ्यते तावदेव परलोकविषयिणी धारणा दूरं याति, आयाति चैतल्लोकधारणा विकाशम् । एतल्लोकसत्तायां समाजशक्त्या सह राज्यशक्तिः परिगण्यते । एवं प्रायश्चित्तव्यवस्थां दूरतः प्रक्षिप्य दण्डव्यवस्थायाः प्रतिष्ठापने परलोकशक्त्या यन्महत्त्वं स्थानं वा तदिदानीं व्यक्त्या राज्येन च आसाद्यते। व्यक्तिः लाभे हानौ वा ऐश्वरमेतदिति सन्तोषमपसार्य तत्कालं लौकिकं कारणमन्विष्यति । अस्यां स्थितौ तत्पूरकाणां लौकिकसंघटनानामधिकारक्षेत्रं विकाशमायाति ।

**अपराधानां विकाशः**

आरम्भिकेऽपि समाजे तथा आचरणं नाद्रियत येन परहितं व्याहन्येत । वधचौर्यादिकं नारोहति कस्मिन्नपि समाजे औचित्यपदवीम्, नहि कश्चिदपि प्राचीनोऽर्वाचीनो वा समाजः वधप्रभृतिपरप्रतिकूलमाचरणमनुमन्तुमुत्सहिष्यते । प्रारम्भिके समाजे ईश्वरविषयिणी धारणा सदाचारञ्च पुरस्कृत्य उचितानुचिताचरणानां फलानि उद्घोष्यन्त तदानीं हि विधीनां निषेधानाञ्च अदृष्टमेवासीत् मिथ्याफलभूमिः यत एतस्मिन् समाजे नासीदैहिकभावनायास्तथा साफल्यं यथा दैवभावनायाः । सदाचारस्यातिवर्तनमपराधोऽमन्यत । तदानींतनस्य हि समाजस्यैषा धारणा । ईश्वरो नैतिकतायाः संरक्षकः, सर्वेऽपि च देवा समीहन्ते मानवस्य कल्याणम् । अतो मानवीयकल्याणप्रतिकूलो व्यवहार ईश्वरेच्छाननुरोधी । ईदृशानामाचराणानां यथैव समाजेन सम्बन्धस्तथैव दैवेनापि, एवं विधैर्जनकल्याणप्रतिकूलैराचरणैर्यथा समाजहितं व्याहन्यते एवं दैवेच्छाप्युपेक्षत इति नैतानि अपराधा एव अपि तु पापान्यपि । अर्थाद् ईदृशानां कर्मणां जनहितविरोधित्वादपराधरूपता ईश्वरेच्छाप्रतिकूलत्वात् पापात्मकता च । अस्मिन् समाजे विधिधर्मसदाचाराणामीदृशं साङ्कर्यं यत् पापमिति अपराध इति वा उद्घोष्यमाणा-

नामाचरणानां पापाधर्मोभयरूपता यत इमानि नैसार्गिकविधिमीश्वरेच्छां सामाजिकं हितञ्चेति त्रयमपि विरुन्धन्ति । फलतः व्यक्तिः सदाचारस्य विधेश्च मर्यादां व्यवस्थापयितुं प्रयस्यति । अस्याश्च मर्यादाया अतिवर्तनमेवापराधः । वैदिककालत एवापराधस्य क्रमिको विकाश आरब्धः ।

**वैदिककालः**

पाश्चात्यमनीषिमतानुसारमृग्वेदीया ऋचो न व्याचक्षते पापस्य धार्मिकं स्वरूपम्; अर्थादासु पापस्य धार्मिक्या व्याख्याया सर्वथा अभावः परमेवंविधा आक्षेपा निर्मूलाः । नैतिकतायाः मूलानि तदानीमप्यासन्[1] । अनेका ऋच ईश्वरस्य पापेक्षिकामुपस्थापयन्ति । विभिन्नासु ऋचासु लभ्यते पापपुण्यव्यवस्था । अपराधोऽपि पापकुक्षावेव संगृहीतस्तत्र । पापापराधयोः सम्मिश्रणस्य तत्रेदं मूलं यत्तदानीं व्यवहारविधेः, नैतिकविधेः, विधीयापराधस्य च नासीत् पृथग्भावः । ऋतस्य दैवविधेरुपेक्षणं पापम् । एतदुपेक्षणमेव ईश्वरं प्रत्यभिद्रोहः कथ्यते स्म–

**यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।**
**अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥**
**( ऋ. ७।८९।५ )**

यद्यपि इदं पापमयमपराध इत्येवं पापापराधयोः पार्थक्यव्यवस्था नासीत् तथापि पापस्य के आधाराः, कानि कारणानि, का वा परिस्थितिः पापस्योद्भाविका इत्यादेरालोचनमभूदेव । जानताऽजानता च कृतानां पापानां तारतम्यं तदनुसारमेव च प्रायश्चित्तेषु दण्डेषु वा तारतम्यं व्यवस्थापितम् । वरुणं प्रार्थयमानो वसिष्ठ आह–

**प्र वीरया शुचयो दद्रिरे वा मध्वर्युभिर्मधुमन्तः सुतासः ।**
**वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥**
**ईशानाय प्रहुतिं यस्त आनट् शुचिं सोमं शुचिपास्तुभ्यं वायो ।**
**कृणोषि तं मर्त्येषु प्रशस्तं जातोजातो जायते वाज्यस्य ।**
**राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ॥**
**अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ।**
**उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः ॥**
**गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः ।**
**ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति ॥**
**इन्द्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचन्ते ।**
**ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ॥**

1. राधाविनोदपाल, दि हिस्ट्री ऑफ हिन्दू लॉ, पृ. १६७ ।

इन्द्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः ।
अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ॥
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ।

(ऋ. ७।९०।१-७)

ऋग्वेदे स्वीकृतमेतद् यत् पुरुषस्य पापे प्रवृत्तिर्न सहजा अपि तु वातावरणसापेक्षा। प्रथमं पापं द्वितीयस्य जनकम् । स्वप्नोपि पापे मूलम्[1] । वंशानुक्रमता अपि पापे कारणम्—

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणं हृणीते ॥
किमाग आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूलभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥
अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन् पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥
न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥
अरं दासो न मीलहुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥
अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥

(ऋ. ७।८६।३-८)

वैदिका दुष्परिणामकरं व्यवहारं पापमाहुः । ईदृशा व्यवहारा देवानामनिष्टकरा देवविध्यनुगुणाश्च । तदानीं यदा समाजः प्रकृत्या सह सम्बद्ध आसीत्, नैतिके विवेचने भाग्यस्य अदृष्टशक्तेरचितेश्च परम्परात् पार्थक्यं न व्यवस्थाप्यत । अतः विवेकमव्याख्यैव पापस्य वंशानुगतता प्रतिष्ठापिता । ज्ञानतोऽज्ञानतो वाऽपि नैसर्गिकानां सम्बन्धानामतिवर्तनञ्च पापमन्यत । कुटुम्बानि सङ्घटनानि चापि तेन सह सम्बन्धितानि । अतो यथा क्षतेः पूरणं स्यात्तथा विशेषतः प्रायत्यत, यत् सम्भाव्यते सुव्यवस्थित एव समाजे[2] ।

वसिष्ठसूत्रीयेण निऋतिविषयकेन व्याख्यानेन अपराधस्यैतिहासिकं स्वरूपं प्रकाशमायाति । निऋतिश्च ऋतस्य प्रतिवादिनी । या समेषामपि पापानां मूलं मता ।

---

1. तुलनीयम्—
Neibuhr Gifford Lectures, Vol. I. Ch. VII.
2. Prof. Emond N. Cohn, The Sense of Injustice, p. 158.

वसिष्ठो ह्यत्र निर्वैयक्तिकान् नैतिकान् विधीन् (impersonal moral law) निर्दिशति । अत एतन्मतानुसारम् यः प्राकृतिकान् नियमानतिवर्तिष्यते भोक्ष्यते स दुःखम् । वसिष्ठः स्वविवेकं पुरस्कृत्य भाग्यवादं पृष्ठतोऽपसारयति । नानपराध्यन्तं पुरुषं दण्डयितुं क्षमन्ते 'बाह्याः' शक्तयः । स्वेच्छाविषयकस्य विवादस्य नास्त्यत्रावसरः परमियत्तु स्वीकार्यमेव यद्व्यक्तेस्स्वीयानामसद्व्यवहाराणानामेव परिणामो दण्डः अर्थाद् व्यक्तैस्स्वगता व्यवहारा एव तां निगृह्णन्ति न तु बाह्यकोपा दण्डस्य मूलम् । किं बहुना दैव्यः शक्तयोऽपि ऋतस्यातिवर्तने दण्डसीमामायान्ति । ऋतशक्तेः परं न किञ्चित् । अस्यां स्थितौ नैतिका न्यायिकाश्च विधयो भवन्त्यविविक्ताः ।

रदत् पथो वरुणः सूर्याय प्राणांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अवतीर्ऋतायञ्चकार महीरवीनीरहभ्यः ॥
आत्मा ते वातो रज आ नवीनोत् पशुर्न भूर्णिर्यवसे ससवान् ।
अन्तर्मही बृहती रोदसीमें विश्वा ते धाम वरुण प्रियाणि ॥
परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥
उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान् पदस्य गुह्या न वोचद् युगाय विप्र उपराय शिक्षन् ॥
तिस्रो द्यावो निहिता अन्तरस्मिन् तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥
अव सिन्धुं वरुणो द्यौरिव स्थाद् द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो अस्य राजा ॥
यो मृलयाति चक्रुषे चिदागो वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूयं पात स्वस्तिभिः सदा नः ॥

(ऋ. ७।८७।१-७)

अथैषा विचारणोदैति ऋतस्याविरोधेन मानवीयेच्छानां कियत् स्वातन्त्र्यम्? अत्र हि सदस्यान्तराणां कल्याणमप्यवधेयम् । यदि मानवः अध्यवसायात्मिकया स्वबुद्ध्या वस्तुतोऽपराधमननुमन्यमानो बाह्यप्रभावविशेषवैवश्येन अपराध्यति तदा न तदपराधस्य मूलम् । दैवेच्छा नाद्रियते कमपि बाह्यप्रभावम् । अन्तर्निहितां प्रज्ञामाश्रित्य भावुको बौद्धिकश्च मानवो निर्णयति । तैराचारैः सम्बद्धः पुरुषः नैकाक्येव तस्यामवस्थायामनुष्ठीयमानानां कर्मणामुत्तरदायी ।

वैदिकेन समाजेन पापानामपराधानाञ्च क्रमबद्धा सूची नोपस्थापिता । ऋतप्रतिकूल आचारः अपराधः पापमिति चोद्घोषितः । ऋतस्य दैवेच्छायाः सदाचारस्य वा प्रतिकूलान्याचरणानि अपराधकोटौ शक्यन्ते समावेशयितुं यानि श्रुतिर्निर्दिशति ।

अत एव वेदविरोधिन आचारा अपराधा मताः। वैदिकेन समाजेन सहैव अन्येऽपि ईदृशाः समाजा आसन् ये ऋतीयविधौ यज्ञीयजीवने, वैदिकभाषायां सदाचारे च न श्रद्दधते स्म। एत एव समाजा अनृत, मृध्रवाच, अयज्ञ, अश्रद्ध, अपव्रत इत्यादिभिर्नामभिर्व्यपदिष्टा वैदिकैः।

कविं केतुं धासिं भानुमद्रेर्हिन्वन्ति शं राज्यं रोदस्योः।
पुरन्दरस्य गीर्भिरा विवासेऽग्निर्व्रतानि पूर्व्या महानि॥
न्यक्रतून ग्रथिनो मृध्रवाचः पणीरश्रद्धाँ अवृधाँ अयज्ञान्।
प्रप्र तान् दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून्॥
यो अपाचीने तमसि मदन्तीः प्राचीश्चकार नृतमः शचीभिः।
तमीशानं वस्वो अग्निं गृणीषेऽनानतं दमयन्तं पृतन्यून्॥
यो देह्यो अनमयद वधस्नैर्यो अर्यपत्नीरुषसश्चकार।
स निरुध्या नहुषो यह्वो अग्निर्विशश्चक्रे बलिहृतः सहोभिः॥
यस्य शर्मन्नुप विश्वे जनास एवैस्तस्थुः सुमतिं भिक्षमाणाः।
वैश्वानरो वरमा रोदस्योराग्निः ससाद पित्रोरुपस्थम्॥
आ देवो ददे बुध्न्या वसूनि वैश्वानर उदिता सूर्यस्य।
आ समुद्रादवरादा परस्मादाग्निर्ददे दिव आपृथिव्याः॥

(ऋ. ७।६।२-७)

त एव च दस्यवः किराताश्चापि कथिताः। एतेषामाचाराः व्यवहाराश्च पापमिति संकीर्तिता वैदिकैः[1]। अपराधतयापि एतदीया आचारा व्यवहाराश्च मता वैदिकानाम्। अतस्ते अपराधतया परिगणिताः। फलतः एवंविधमाचरतां वैदिकसमाजीयसदस्यानामप्याचाराः पापतामपराधताञ्च अयुः। ऋतदैवेच्छासदाचारप्रतिकूलैराचारणैस्सहैव असमाजिकान्याचरणान्यपि अपराधवर्गे समाविविशुः। अत्र चावैदिकैः समाजैः सह व्यवहारोऽपि अपराधतया आस्थितः।

वैदिकसमाजेऽपराधिनोऽपराधविषयिण्या मनोवृत्तेर्व्याख्या नोपलभ्यते, परमपराधानां सूची दृश्यते। अन्नजलादेर्विध्वंसनं मलिनीकरणञ्चेत्यादिकं द्रोहतया

---

1. ता हि देवानामसुरा तावर्या ता नः क्षितीः करतमूर्जयन्तीः।
अश्याम मित्रावरुणा वयं वां द्यावा च यत्र पीपयन्नहा च॥
ताभूरिपाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय।
ऋतस्य मित्रावरुणा पथा वामपो न नावा दुरिता तरेम॥
(ऋ. ७।६५।२-३)

ऋतावान ऋतजाता ऋतावृधो घोरासो अनृतद्विषः।
तेषां व सुम्ने सुच्छर्दिष्टमे नरः स्याम ये च सूरयः॥
(ऋ. ७।६६।१३.)

अपराधतया वा निर्दिष्टम्। चौर्यमप्येवंविध एवापराधः[1]। द्यूतं तदर्थमृणग्रहणञ्चैतद्-द्वयमप्यपराधो मतः। वैदिकसमाजेऽपि वैयक्तिकसम्पत्तिविषयकः सिद्धान्तः अवतिष्ठत, परं वैयक्तिक्या अपि सम्पदः न यथेच्छं विनियोगः अशक्यत, अपि तु एष आसीत् सामाजिकै राजकीयैश्च नियमैर्बद्धः। कार्पण्यमपि आसीदपराधः। द्यूतेन ऋणेन वा प्राप्तायाः स्त्रियः शीलहरणं महत्पापममन्यत[2]। पितुराज्ञाया अतिवर्तनमपि द्रोहवर्गे परिगणितम्। गवां वाससां वा चौराः दस्यवः तस्कराश्च कथिताः[3]। चौराणां राज्ञः पुर उपस्थापनमप्युलिखितम्। चौर्यापराधसूचकैश्चिन्हैश्चोराणामङ्कनमपि उदाहृतम्[4]।

**उत्तरवर्त्तिकालः**

वैदिकसमाजस्य विकाशेन अवैदिकसमाजानां प्रभावेण अन्यैश्च कारणैः ब्राह्मण-कालं यावद् ऋतं धर्मतया पर्यणमत्। अस्य च धर्मस्य भूयानंश आसीत् समाजेन सम्बद्धः। अस्मिन् काले पापस्य अपराधस्य च स्वरूपं विशेषतः प्रास्फुटत्। सहैव सामाजिका विधयः अपराधाश्च विस्तारमायुः। स्थितिरेषा धर्मसूत्राणि यावद् अन्ववर्तत। ततः पश्चाद् धर्मशास्त्रप्रणयनकाले स्थितिः परिवर्तिता। परिवर्तनस्यास्य अपराधानां संकलनेऽप्यभूत् प्रभावः। धर्मसूत्रैः कौटुम्बिकजीवनस्य, धार्मिक-संस्काराणाम्, विधीनाञ्च प्राधान्यमास्थितम्, परं धर्मशास्त्रीये परिगणने धर्मसूत्रीया अनेके विषयाः नापुः पदम्। धर्मशास्त्रकारैः सामाजिकानां लौकिकानां राजनीति-कानाञ्च विषयाणां स्थापने प्रायस्यत। एवं हि शक्यं वक्तुं यद् धर्मशास्त्राण्यस्मिन् विषये लौकिकानि।

धर्मशास्त्रकालं यावदपराधसंहितायां व्यवहारविधेः दण्डापराधविधेश्च पार्थक्य-मस्फुटत्। प्रोफेसरहाप्किंसमहोदयस्य मतमिदं यदीदृशो भेदः प्रथमं मनुना व्यवस्थापितः। पश्चात्तनैश्च स्मृतिकारैर्मनुरेवानुसृतः। मनुना हि विवादानामष्टा-दशवर्ग्य उक्ताः। एष्वेव व्यवहारविधिः दण्डापराधविधिश्च समावेशितौ। बृहस्पति-नापि अष्टादशविवादविधाः निर्दिष्टाः। बार्हस्पत्ये विवादविभाजने तात्कालिक्यः परिस्थितेः प्रभावः स्फुटं लक्ष्यते। अस्मिन्नेवावसरे 'अनादेयवादाः' पर्यगण्यन्त, ये न्यायालयाधिकारसीमात आसन् बहिर्भूताः। एतेनैतदायाति यत् केचनेदृशा अपि वैयक्तिकाः, कौटुम्बिकाः, सामाजिकाश्चापराधा येषु न शक्यते राज्येन हस्तक्षेपः

---

1. ऋग्वेद. ४।३८।५; ५।१५।५।
2. य आध्राय चकमानाय पित्वोऽन्नवान्त्सन् रफितायोपजग्मुषे।
   स्थिरं मनः कृणुते सेवते पुरोतो चित् स मर्डितारं न विन्दते॥
   (ऋ. १०।११७।२)
3. ऋ. ४।३८।१-५; ६।१२।५; १०।४।५-६।
4. ऋ. १।२४।१२-१४; ५।७९।९; ७।८६।५।

कर्त्तुम् । गुरुशिष्ययोः, पितापुत्रयोः, पतिपत्न्योः, स्वामिसेवकयोर्वा विवादा ईदृशा एव[1]।

स्मृतिकालं यावद् अपराधानामाधाराः स्वरूपाणि चापि परिवर्तनम् । वेदाः स्तेयं महान्तमपराधं पापं वोद्घोषयन्ति। सूत्रग्रन्था राज्ञः पुरः चौरस्योपस्थापनं निर्दिशन्ति। बृहस्पतिना हि वाक्पारुष्यदण्डपारुष्यादिभिः सहैव चौर्यमपि गणितम् । तदानीं चौर्यकोटिका अन्येऽप्यापराधा अमन्यन्त । फलतश्चौर्यस्य महापराधता मुख्यापराधता वा नावतिष्ठत् । सूत्रग्रन्थेषु धर्मशास्त्रेषु च दिव्यशक्तीनां महत्त्वं नावाशिष्यत् । धर्मसूत्राणि यावद् वेदाध्ययनस्योपेक्षा न केवलं पापमपित्वपराधोऽप्यासीत्, परं स्मृतिषु अस्यः पापात्मकता एवावशिष्टा अर्थात् स्मृतिकारैः वेदाध्ययनोपेक्षणं पापतयैव निर्दिष्टं नापराधतया । अत एतद् विषये प्रायश्चित्तान्येव व्यवस्थापितानि न दण्डाः । ब्राह्मणग्रन्थानि यावत् शारीरिकीक्षतिः ज्येष्ठभगिन्यामनूढायां विवाहाचरणञ्च ईदृशावपराधावास्तां यत्र यौ मृत्युदण्डमपि प्रयोजयतः स्म[2] । स्मृतिष्वेतद्द्वयं न तादृशो महानपराधः ।

स्मृतिकालं यावद् अपराधानां स्वरूपं क्षेत्रञ्च स्थैर्यमायात् । अपराधानां वर्गीकरणे वर्णव्यवस्थाया अपि प्रभावो लक्ष्यते । अन्त्यजयोनौ शूद्रयौनौ वा जननं शूकरप्रभृतिनिकृष्टयोनीयजन्मकल्पम् । एतच्च जन्मान्तरीयपापानामेव फलं मतम् । स्मृतिकारैः पापानि परिगणितानि । अपराधाश्च तत्रैव समाविशन् । विष्णुना अतिपातकम्, महापातकम्, अनुपातकम्, उपपातकञ्चेत्येवं पातकानि विभक्तानि (३३।४२) । मातुः कन्यादेर्वा सम्भोगः अतिपातकम् । ब्रह्महत्या, सुरापानम्, गुरुतल्पगमनम्, ब्राह्मणस्वर्णचौर्यञ्चेत्यादीनि महापातकानि । क्षत्रियस्य वैश्यस्य वा हननम्, अस्नातायाः ऋतुमत्यः, शरणागताया वा स्त्रियो भोगः, मित्रहत्या, असत्यसाक्ष्यम्, पितृव्यपत्न्या सम्भोगश्चानुपातकानि ।

याज्ञवल्क्यस्मृतौ महापातकानि—

ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः ।
एते महापातकिनो यश्च तैः सह संवसेत् ॥
(३।२२७)

---

1. परञ्च गुरुणा सीमातिक्रमणे राज्यहस्तक्षेपः, धर्माद्यतिक्रमणे भर्त्सनीयः । अननुविधीयमानमनुशासनमपि रज्ज्वादिना न भृशं ताडयेत्, मन्दं ताडयेत् त्रासजननार्थम् । मन्दमपि शिरसि वक्षसि च न ताडयेत् । ताडयित्वा च सान्त्वयेद्, अन्यथा गुरुर्दण्ड्यः स्याद् राज्ञा—

भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि ।
अनुशिष्य च विश्वास्यो दण्ड्यो राज्ञान्यथा गुरुः ।
(नारद ६।१३)

2. मै. सं. ३१।७; कपिष्ठलसं. १०।७।७; तै. ब्रा. ३।२।८।११ ।

ब्राह्मणं हतवानिति ब्रह्महा, मद्यपो निषिद्धसुरायाः पाता, स्तेनः ब्राह्मणसुवर्णस्य हर्ता, ब्राह्मणसुवर्णापहरणं महापातकमित्यापस्तम्बस्मरणात् । गुरुतल्पगो गुरुभार्यागामी । 'तल्प' शब्देन शयनवाचिना साहचर्याद्भार्या लक्ष्यते । एते ब्रह्महादयो महापातकिनः । पातयन्ति इति पातकानि ब्रह्महत्यादीनि । महच्छब्देन तेषां गुरुत्वं ख्याप्यते तद्योगिनो महापातकिन इति लाघवार्थं संज्ञाकरणम् । 'तथा' शब्दः प्रकारवचनोऽनुग्राहकप्रयोजकादिकर्तृसङ्ग्रहार्थः । अनुग्राहकश्च यः पलायमानममित्रमुपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन्हन्तुर्द्रढिमानमुपजनयन्नुपकरोति स उच्यते । अत एव मनुनानुग्राहकस्य हिंसाफलसम्बन्धो दर्शितः–

**"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् ।**
**यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः" ॥**

तथा प्रयोजकादीनामपि आपस्तम्बेन फलसम्बन्ध उक्तः–"प्रयोजितानुमन्ता कर्ता चेति स्वर्गनरकफलेषु कर्मसु भागिनो यो भूय आरभते तस्मिन्फलविशेषः" इति तत्राप्रवृत्तस्य प्रवर्त्तकः प्रयोजकः। स च त्रिप्रकारः–आज्ञापयिताभ्यर्थयमान उपदेष्टेति। तत्राज्ञापयिता नाम स्वयमुच्चः सन्नीचं भृत्यादिकं यः प्रेरयति मदीयममित्रं जहीति स उच्यते । अभ्यर्थयमानस्तु यः स्वयमसमर्थः सन् प्रार्थनादिना मच्छत्रुं व्यापादयेत्युच्चं प्रवर्त्तयति सोऽभिधीयते । अनयोश्च स्वार्थसिद्ध्यर्थमेव प्रयोक्तृत्वम् । उपदेष्टा पुनस्त्वं शत्रुमित्थं व्यापादयेदिति मर्मोद्घाटनाद्युपदेशपुरःसरं प्रेरयन्कथ्यते । तत्र च प्रयोज्यगतमेव फलमिति तेषां भेदः । अनुमन्ता तु प्रवृत्तस्य प्रवर्त्तकः । स द्विप्रकारः–कश्चित्स्वार्थसिद्ध्यर्थमनुजानाति कश्चित्परार्थमिति ।

नन्वनुमननस्य कथं हिंसा हेतुत्वम्, न तावत्प्राणवियोगोत्पादनेन; तस्य साक्षात्कर्तृव्यापारजन्यत्वात् । नापि प्रयोजकस्येव; साक्षात्कर्तृप्रवृत्त्युत्पादनद्वारेण प्रवृत्तस्य प्रवर्त्तकत्वात् । न च साधु त्वयाध्यवसितमिति प्रवृत्तमेवानुमन्यत इति शङ्कनीयम् । तादृशस्यानुमननस्य हिंसां प्रत्यहेतुत्वाद्व्यर्थत्वाच्च । उच्यते–यत्र हि राजादिपारतन्त्र्यात्स्वयं मनसा प्रवृत्तोऽपि प्रवृत्तिविच्छेदभयादागामिदण्डभयाद्वा शिथिलप्रयत्नो राजाद्यनुमतिमपेक्षते तत्रानुमतिर्हन्तुः प्रवृत्तिमुपोद्बलयन्ती हिंसाफलं प्रति हेतुतां प्रतिपद्यते । तथा योऽपि भर्त्सनताडनधनापहारादिना परान् कोपयति सोऽपि मरणहेतुभूतमन्यूत्पादनद्वारेण हिंसाहेतुर्भवत्येव । अतएव विष्णुनोक्तम्–

**"आक्रुष्टस्ताडितो वापि धनैर्वा विप्रयोजितः ।**
**यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्" ॥**

तथा च–

**"ज्ञातिरिक्तकलत्रार्थं सुहृत्क्षेत्रार्थमेव च ।**
**यमुद्दिश्य-------------------------- ॥"**

नच कृतेषु अपि आक्रोशनादिषु कस्यचिन्मन्यूत्पत्त्यदर्शनादकारणतेति शङ्कनीयम्; पुरुषस्वभाववैचित्र्यात् । येऽल्पतरेणापि निमित्तेन जातमन्यवो भवन्ति तेष्वव्यभिचार इति नाकारणता । एतेषां चानुग्राहकप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगतगुरुलाघवापेक्षया च फलं गुरुलाघवात् प्रायश्चित्तगुरुलाघवं बोद्धव्यम्; 'यो भूय आरभते तस्मिन् फलविशेषः' इति वचनात् । तथा ह्यनुग्राहकस्य तावत्स्वयमेव हिंसायां प्रवृत्तत्त्वेन स्वतन्त्रकर्त्तृत्वे सत्यपि साक्षात् प्राणवियोगफलकखड्गप्रहारादि-व्यापारयोगित्वाभावेन साक्षात्कर्त्तृवद्भूयो हिंसारम्भकत्वाभावादल्पफलत्वमल्प-प्रायश्चित्तत्वं च । प्रयोजकस्य तु स्वतन्त्रकर्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्ततोऽल्प-फलत्वम् । प्रयोजकानां मध्ये परार्थप्रवृत्तत्वेनोपदेष्टुरल्पफलत्वम् ।

ननु प्रयोजकहस्तस्थानीयत्वात्प्रयोज्यस्य न फलसम्बन्धो युक्तः । यदि परप्रयुक्त्या प्रवर्तमानस्यापि फलसम्बन्धस्तर्हि स्थपतिततडागे खनितृप्रभृतीनामपि मूल्येन प्रवर्तमानानां स्वर्गादिफलप्राप्तिप्रसङ्गः । उच्यते, शास्त्रोक्तं फलं प्रयोक्तरीति न्यायेनाधिकारिकर्तृगतफलजनका देवकूपतडागनिर्माणादयः । नच स्थपतितडागख-नित्रादयो देवकूपतडागकरणादिष्वधिकारिणः, स्वर्गकामित्वात् । अत्र पुनः परप्रयुक्त्या प्रवर्तमानानामप्यहिंसायामधिकारित्वाद् भवत्येव तद्व्यतिक्रमनिबन्धनो दोषः । अनुमन्तुस्तु प्रयोजकादप्यल्पफलत्वं प्रयोजकव्यापाराद्बहिरङ्गत्वाल्लघुत्वाच्चानु-मननस्य । निमित्तकर्तुः पुनराक्रोशकादेः प्रवृत्तिहेतुभूतमन्युजनकत्वेन व्यवहितत्वा-न्मरणानुसन्धानं विना प्रवृत्तत्वाच्चानुमन्तुः सकाशादप्यल्पफलत्वम् ।

ननु यदि व्यवहितस्यापि कारणत्वं तर्हि मातापित्रोरपि हन्तृपुरुषोत्पादनद्वारेण हननकर्तृत्वप्रसङ्गः । उच्यते,—नहि पूर्वभावित्वमात्रेण कारणत्वम्; कारणतयाऽपि तथा भावित्वोपपत्तेः । यत्खलु स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगि भवति तद्धि कारणम् । यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति रथन्तर-सामतैव क्रतोरैन्द्रवायवाग्रतायां कारणम् । नहि तत्र सोमयागः स्वरूपेण कारणम्; व्यभिचारात् । नच पित्रोस्तादृग्विधकारणलक्षणयोगित्वमिति नाति प्रसङ्गः । अनेनैव न्यायेन धर्माभिसन्धिना निर्मितकूपवाप्यादौ प्रमादपतितब्राह्मणादिमरणे खानयि-तुर्दोषाभावः । नहि कूपोऽनेन खानितः अतोऽहमात्मानं व्यापदयामीत्येवं कूपखनन-निमित्तं व्यापादनं यथाक्रोशादौ । अतः कूपकर्तुरपि कारणत्वमेव, न पुनर्हिंसा-हेतुत्वमिति मातापितृतुल्यतैव । तथा क्वचित्सत्यपि हिंसानिमित्तयोगित्वे परोप-कारार्थप्रवृत्तौ वचनाद्दोषाभावः । यथाह संवर्तः

"बन्धने गोश्चिकित्सार्थे मूढगर्भविमोचने ।
यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं न विद्यते" ॥

एतच्चादाननिदाननिपुणभिषग्विषयम् । इतरस्य तु "भिषङ्मिथ्याचरन्दाप्यः (व्य. १४२) इत्यत्र दोषो दर्शितः, यत्तु मन्युनिमित्ताक्रोशनादिकमकुर्वतोऽपि नाम गृहीत्वोन्मादादिनात्मानं व्यापादयति तत्रापि न दोषः; "अकारणं तु यः कश्चिद्द्विजः प्राणान्परित्यजेत् । तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्तयेत्" इति स्मरणात् । तथा यत्राप्याक्रोशकादिजनितमन्युरात्मानं खड्गादिना प्रहृत्य मरणादर्वागाक्रोशनादिकर्त्रा धनदानादिना सन्तोषितो यदि जनसमक्षमुच्चैः श्रावयति नात्राक्रोशकस्यापराध इति, तत्रापि वचनान्न दोषः । यथाह विष्णुः

"उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत्पुनः ।
तस्मिन्मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते" ॥

काशीप्रसादजायसवालो मन्यते पुरा महापातकीये परिगणने सप्तविधानि पातकान्यासन् समाविष्टानि[1] । यथोक्तं यास्केन[2] ।

अत्र सामान्यपरिवर्तनेन समाजसापेक्षचिन्तनेन मनोरनुशासनम्–

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ।
एते सर्वे पृथग्ज्ञेया महापातकिनो नराः ॥
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥
असंभोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः ।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥
ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥ ९।२३५-३९ ॥

ब्राह्मणप्राणवियोगफलको व्यापारो ब्रह्महत्या स च साक्षादन्यं वा नियुज्य तथा गोहिरण्यग्रहणादिनिमित्तकार्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या । जात्युत्कर्ष-निमित्तमुत्कर्षभाषणं यथा ब्राह्मणोऽहमिति अब्राह्मणो ब्रवीति, राजनि वा स्तेनादीनां परेषां मरणफलकं दोषाभिधानं गुरोश्चानृताभिशंसनम् । महापातकसमानीत्येतानि ब्रह्महत्यासमानि[3] ।

जायसवालमतानुसारेण ईसातः शताब्दिश्चतुष्टयात् प्राग्वर्तिनि काले चत्वार्येव महापातकानि अवातिष्ठन्त–स्तेयम्, मनुष्यवधः, स्त्रीसंग्रहणम्, सुरापानञ्च । आप-

---

1. याज्ञ. ३।२२७ ।
2. निरुक्त. ६।२७ ।
3. मनु. ११।५४-५५ ।

स्तम्बेन स्वर्णचौर्यस्य स्थाने चौर्यमात्रम्, ब्रह्महत्याश्च स्थाने वधमात्रं निर्दिष्टम् । एवमेव स्त्रीसंग्रहणमपि सामान्यत एव परिगणितमस्ति (आपस्तम्ब. २।२७।१।१६)। यद्यप्येतत् सत्यं यदपराधीयं परिगणनं देशकालपरिस्थित्यादिकमनुरुधत् तथापि नात्र विषये जायसवालमहोदयो मतः समीचीनः । ब्रह्महत्या स्वर्णचौर्यादीनामपराधानां गुरुतरत्वं वेदेष्वपि कीर्तितम्[1] ।

अपराधानां परिगणने वैयक्तिकाः सामाजिकाश्च प्रभावाः परिलक्ष्यन्ते । वेदानां विस्मरणम्, गुरोर्वञ्चनम्, मातापितापुत्रादीनामग्निहोत्रस्य वा परित्यागः, अपेयपानम्, अभक्ष्यभक्षणम्, अवैधसेवा, अवैधाया वृत्तेराश्रयणम्, परकीयसम्पदपहरणम्, अवैधोपाहारग्रहः, क्षत्रियविट्शूद्राणां गवां वा हननम् । निषिद्धवस्तु विक्रयः, ज्येष्ठेऽनूढे कनिष्ठस्य दारपरिग्रहः इत्यादिषु स्फुटं सामाजिकः प्रभावः परिलक्ष्यते । ब्राह्मणानां वेदाध्यापनम्, अकरणीयं कर्म, महतां यन्त्राणां निर्माणम्, वृक्षाणां क्षतिकारकमाचरणम्, यज्ञानामुपेक्षा, वेदाध्ययनस्य अन्येषाञ्च धार्मिककृत्याना-मुपेक्षणम्, अश्लीलपुस्तकपाठः, नास्तिक्यम्, नृत्यवृत्तिः, सुराप्याः स्त्रियः सम्भोगश्च व्यञ्जन्ति सामाजिकं प्रभावम् । जातिबहिष्कारोऽपि केषाञ्चिदपराधानां मूलम् । शूद्रसेवा एवंविधे एवावपराधः । अस्यामवस्थायां समाजो बहुधा विभागं ययौ ।

वेदोक्ताः अपराधाः नाद्रियन्ते स्म अवैदिकैः समाजैः । नाप्येषामपराधानामासन् ते विषयाः । अवैदिकेषु समाजेषु हि वैदिकसमाजीयपरम्परां प्रत्यनास्था विद्रोहश्च पदं निधातुमारभते । बौद्धानां जैनानाञ्चोदये पुनरेकदा वैदिकसमाजस्य पुरः अवैदिकसमाजीयसम्बन्धविषयकः प्रश्न उपातिष्ठत । तदानीं हि पश्चिमोत्तरसीमा-मुल्लङ्घ्य अभारतीयैः समाजैर्भारते पदं निदधातुमुपक्रान्तम् । अत एवापराधीये परिगणने वेदाध्ययनवैदिकविधिपालनादेः समर्थने अनधिकारिणां बहिष्करणे च महत् प्रायत्यत । नास्तिक्यमपि अपराधतयोद्घोषितम् । वेदनिन्दकः परलोकस्यावमन्ता वा नास्तिक उक्तः । एवं विविधाभिर्व्यवस्थाभिर्न्यायालये बौद्धानां जैनानां च महान् निग्रहः कृतः । परं निम्नजातीयान् जनान् प्राभावयत् बौद्धसंस्कृतिः । इमं बौद्धसंस्कृतीयं प्रभावं निरोद्धुमेतेषां कृते समानताद्वारं कठोरानुशासने निगडेन पिहितम् ।

बौद्धसंस्कृतिः जैनसंस्कृतिश्च केवलं सुधारविषयकमेव दृष्टिकोणं प्रास्तुताम् यतो नैताभ्यामपराधविषयिणी दण्डविषयिणी च काचित् संहिता उपस्थापिता । अतस्ताभ्यां वैदिकसमाजाद् बहिष्कृतानां संग्रहस्तु कृतः परं नाशक्यत सामाजिकं न्यायं कर्तुम् । प्रकृतिसप्तकसमेता राज्यशक्तिर्वैदिकी एव अवातिष्ठत । क्वचिद् राज्ञि

1. तै. सं. २।५।१।२; ५।३।१२।१; ६।५।१०।२; कठकसं. ३१।७; तै. ब्रा. ३।२।८; तै. आ. १०।३८; शत. ब्राह्म. १३।३।१।१ ।

स्यात् नाम भावानां परिवर्तनम् परं सामान्यतः राज्यशक्तिः उक्तपरम्पराश्रयैवासीत् । राज्यशक्तेरिमां स्थितिमात्मनोऽनुकूलामालोच्य स्मृतिकारैरवैदिकान् समाजाद् बहिष्कर्तुं सफलं प्रायस्त । अथ च एतत् समीक्ष्यैवापराधाः परिगणिताः ।

स्मृतिष्वीदृशाः समाजा उल्लिखिता ये अपेक्षन्त बाह्यसम्पर्केभ्य आत्मनः सुरक्षाम् । अपराधीयेन परिगणनेन उत्तरोत्तरं तद्विस्तरेण च तथ्यमिदं प्रकाशमायाति । दाक्षिणात्यानां वैदिकानां वर्णानां समुद्रयात्रा अनुमन्यते सूत्रकारैः । परं स्मृतिकारैः सर्वेषामेव कृते समुद्रयात्रा ईदृशोऽपराधः पापं वा उद्घोष्यत यस्य न निराकृतिः प्रायश्चित्तेनापि । वृत्तयोऽपि परिवर्तिताः । नृत्यगानादयो वृत्तयो निषिद्धवृत्तिषु अगण्यन्त । स्नातकधर्मत आरभ्य आश्राद्धकर्मनिमन्त्रयमाणानां विप्राणां योग्यत्वायोग्यत्वे विवेचिते । समावेशिते च तेऽपराधसंहितायाम् । सा चापराधसंहिता लेभे राजकीयमपि अनुमोदनम् । तदानीमेकं नूतनं वैशिष्ट्यं पुर आयाद् यदेकतोऽपराधानां सूची विस्तारमानीता अपरतः पुनस्तेषामपराधानां दण्डाः शिथिलीकृताः येषामासीत् सामाजिके संरक्षणे विशेषतो महत्त्वम् । सामाजिकसंरक्षणार्थं हि सामान्येष्वपराधेषु जातिबहिष्कारो दण्डतया निर्दिष्टः । सहैव स्त्रीशुद्धिविषयका नियमा विधयश्च सारल्यं याताः । एते च नियमा इयत् सारल्यमानीताः यत् कैश्चित् स्मृतिकारैस्तु रजोधर्मेणैव स्त्रीणां शुद्धिमाचक्षाणैः स्त्रियो न कदापि अपावित्र्यं यान्ति इति व्यलेखि । जातिबहिष्कृतानामपि प्रायश्चित्तैः प्रत्यावर्तनं समन्यत । इत्थमपराधसूच्यामेकतो भयमपरतश्च संग्रहवृत्तिः परिलक्ष्यते[1]। फलतोऽस्मिन् युगेऽपराधानां वैयक्तिकं सामाजिकं धार्मिकञ्च स्वरूपं प्रकाशमायाति । यस्य संकेतः वेदत एवारभ्यते । वैदिकयुगादारभ्य स्मृतिकालं यावद् अपराधस्वरूपं महत् परिवर्तनमाययौ । परिवर्तनेऽस्मिन्मूलभूतानि सामाजिकान्यार्थिकानि च तत्त्वान्यासन् सदा क्रियाशीलानि । एतानि सङ्ग्रह्यैव भारतीयः समाजोऽग्रे प्रसृतः ।

**अपराधविधिः क्षतिर्वा**

संहिता यावत् "वैरदेय" इति व्यवहारो लभ्यते । कस्यचिद्धनने तद् बान्धवेभ्यः क्षतिपूरणार्थं द्रव्यं दीयते स्म । आपस्तम्बेन बौधायनेन च क्षत्रियहत्यायां गवां सहस्रम्, वैश्यहनने शतम्, शूद्रहत्यायां पुनः दशकं दातव्यतया निर्दिष्टम् । इदञ्च तत्सम्बन्धिभ्यो दानं क्षतिपूर्त्तितया सम्मतमापस्तम्बादेः । एवमुक्तहत्यास्वेको बृषोऽपि

1. याज्ञ. ३।२९६, ३००; मनु. २।१९७; वसिष्ठ. १५।१८ ।

दीयते स्म, परं गावः तद्बान्धवेभ्यः, वृषश्च राज्ञे देयाः । ब्राह्मणवधे तु मृत्युदण्ड एव आसीत्, नायमपराधः प्रकारान्तरेणार्थाद् दानादिना शक्यः परिहर्तुम्[1] ।

क्षतिपूर्त्तिविषयकाण्येवंविधान्यन्यानि प्रमाणान्याश्रित्य मेनमहोदयेनैतदाक्षिप्तं यद् भारतेऽपराधसंहिता नैवासीत्, सा ह्यासीत् क्षतिपूर्त्तिरेव[2] । पापस्यापराधस्य अपराध-पृष्ठभूमेश्च यो विशेषो भेदस्तस्य अपर्यालोचनेनैव मेनमहोदय एवविधं भ्रममवाप । धर्मसूत्रतः पश्चादपराधसंहिता स्वतन्त्रतया विकाशमायाता[3] ।

क्षतिपूर्त्तिविषये द्वयमेतदवधेयम् । क्षतिपूर्त्तितया दीयमाने द्रव्ये न राज्यस्य भागः; अथ च पीडितौषधादिभिरुपकार्यः । अङ्गानां करचरणादीनां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिः समुत्थानसम्बन्धो भवति । यावत्कालेन पथ्यौषधादिना यावान्वयो भवति तमसौ दापनीयः । अथ तं व्ययं पीडोत्पादको न दातुमिच्छति, तदा यः समुत्थानव्ययो यश्च दण्डस्तमेनं दण्डत्वेन राज्ञा दाप्यः[4] । यो यस्य ताडनदुःखमुत्पादयेत् स तस्य व्रणरोपणादौ औषधार्थं पथ्यार्थं च यो व्ययः क्रियते तं दद्यात्–

**दुःखमुत्पादयद्यस्तु स समुत्थानं व्ययम् ।**
**दाप्यो दण्डञ्च यो यस्मिन्कलहे समुदाहृतः ॥**

(याज्ञ. २।२२२)

अत एवायं क्षतिपूर्तेः विकल्पतयोक्तः । दण्डस्य हि न क्षतिपूर्त्तिरर्थः, अपि तु अपराधिनो निग्रहः अपराधनियन्त्रणञ्च । अत्र च राज्यं न वादितया प्रतिवादितया वोपतिष्ठते अपि तु माध्यस्थ्यमाचरति । एतद्धि तादृशं वातावरणं प्रस्तौति प्रयस्यति च तथा यथा स्यादुचितो न्यायः । अज्ञातकारणकस्य मृत्योः एवंविधानामन्येषाञ्चा-पराधानां मूलान्वेषणे राज्यमेवोत्तरदायि । ईदृशे विषये न राज्यमेवापि तु समाजस्य कोऽपि सदस्यो विवादं प्रस्तोतुं क्षमते[5] । अतोऽन्यत्र क्वापि विषये न राज्यस्य न वा राज्यकर्मचारिणो विवादोपस्थापनेऽधिकारः । अपराधिनः क्षमया न सोऽपराधान्मुच्यते अर्थात् क्षमा नापराधिनमपराधान्मोचयितुमीष्टे यतः समाजेन राज्येन चास्ति अपराधस्य सम्बन्धः, न तु कस्यचिद् व्यक्तिविशेषस्य मनोवृत्त्या सह ।

सामान्यतः वधप्रभृतिष्वपराधेषु राज्यं भवत्येकः पक्षः । पीडितेन पक्षेण अपराधे सूच्यमाने एव राज्यं कामपि प्रतिक्रियां कर्तुमर्हति, यदि च पीडितेन पक्षेणा-

---

1. **क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् । शतं वैश्ये । दशशूद्रे । ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः । स्त्रीषु चैतेषामेवम् । पूर्वयोर्वर्णयोर्वेदाध्ययायं हत्वा सवनगतं वाभिशस्तः । ब्राह्मणमात्रञ्च । गौ. १।९।२४। १-७ ।**
2. Maine, Ancient Law, ch. 10 p. 307.
3. P.N. Sen, Hindu Jurisprudence, p. 335.
4. मनु. ८।२८७; बौधा. ३।१९।१९५; बृह. २१।१० ।
5. मृच्छकटिक. ९ अङ्क. ९ ।

पराधोऽपन्हूयते अर्थाद् राज्याय न सूच्यते तदैषोऽपलापः तस्य कृतेऽहित एव, अतोऽस्यां स्थितौ समाजस्य कस्यापि सदस्यस्यैतत्कर्त्तव्यं यत्स राज्यमवगमयेत् वस्तुस्थितिम्[1] । यदि पीडितपक्षः स्वकुलमर्यादां परिरक्षितुमपराधमन्यथा कृत्वा प्रस्तौति अपलपति वा तदापि स दण्डमर्हति[2] । अपराधस्यापन्हवे पीडितपक्षोऽपि दण्डं भजति का कथाऽपराधिनः । वधस्तेयस्त्रीसंग्रहणप्रभृतीनामपराधानां पर्यालोचने समाजः राज्यञ्च द्वयमेवैतद् भवत्युत्तरदायि । यत्र राज्ये एवंविधानां सर्वथा अभावास्तदेवोत्तमं गदितम्[3] (विष्णु. ५।१९६) । अपराधविषयकान् व्यक्तिराज्य-समाजानां सम्बन्धान् वीक्ष्य शक्यं कथयितुं भारते प्राचीनकालत एवापराधसंहिताया विकाश आरब्ध इति ।

**विधीयदायित्वम्**

अपराधिनो मनोवृत्तिः अवैधानिकव्यवहारश्च द्वयमेतदपराधस्य मूलम् । न केवलमज्ञानं (ignorence), वृत्तिः (motive) शरणं भवितुमर्हति नहि एतद्द्वय-मपराधान्मोचयितुमलम्[4] । चौर्यबलात्कारादयोऽपराधाः नाज्ञानतः शक्याः[5], परं वधादयः अजानतापि अनिच्छतापि वा शक्याः । कदाचिदेकं हन्तुं प्रयस्यता अपर एव हन्यते । विषयेऽत्र आङ्गलदेशीयो विधिर्न तारतम्यं वैषम्यं वा व्यवस्थापयति परं क्वचित्-क्वचिद्देशे एतदपि दृश्यते[6] । इमानाधारानाश्रित्य अपराधानां दायित्वस्य व्यवस्थापने भवति व्यावहारिकं सैद्धान्तिकञ्च काठिन्यम् । वस्तुतोऽपराधो न क्रियाया मानदण्डः । क्रियया सह प्रवृत्तिरपि अवश्यम्भाविनी, परं प्रमादोऽपि अपराध एव । ईदृशा अपराधाः क्षमामर्हन्ति ये नानवधानता मूलकाः न वा प्रवृत्तिमूलकाः[7] ।

एतदवधायैव भारतीयो दण्डविधिर्व्यवस्थापितोऽस्ति । वाक्पारुष्ये वेदश्रवणे च यच्छूद्रस्य दण्डो विहितस्तत्रेदमप्यालोचितं यद् एषोऽपराधस्तस्य ज्ञानतोऽज्ञानतो वा (गौ. १२।१,४) । परं सामाजिक्याः प्रतिष्ठाया विध्वंसकेषु महापातकेष्वपराधी कस्यामप्यवस्थायां दण्ड्य एव, तत्पातकं तेन जानताऽजानता वापि भवेदाचरितम्

1. याज्ञ. २।३०२ ।
2. तदेव ।
3. यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
   न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥
   एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके ।
   साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः ॥
   (मनु. ८।३८६-८७)
4. Journal of Criminal Law (1935). pp. 82, 236.
5. Turner, Cambridge Law Journal, 1936.
6. Kenny, Criminal Law (1936) p. 135. Washington University Law Quarterly, (1939), p. 305.
7. Salmond, Jurisprudence, Ch. 17, Sect. 12, 378.

(मनु. ८।२९०-२९१) । ईदृशेषु हि पातकेषु व्यक्तेर्हितस्य बलिदानमेव समाजस्य कृते श्रेयस्करम् । एतदवश्यं यदज्ञानतोऽकामतो वापराधे अल्पो दण्डः, ज्ञानतः कामतश्चापराधेऽधिक इति दण्डे भवति तारतम्यं परं सर्वथा दण्डविरहो न कस्यामप्यवस्थायाम् । यद्यनिपुणश्चालकः रथमसम्यक् चालयति तदा स दण्डं भजत्येव परं न तावन्तं यावन्तं कुशलश्चालक एवंविध अपराधे[1] । एवं ज्ञानपूर्वके स्पर्शे अज्ञानमूलके च तस्मिन्नैकविधः शूद्रस्य दण्डः, जानन् स्पृशन् ह्यसौ यावन्तं दण्डमर्हति न तावन्तमजानन् । पशुभिः क्षतौ ज्ञानाज्ञानपूर्वकत्वं समीक्ष्यैव पशुपालको दण्ड्यते स्म[2] । स्वयं साक्षात्, पशुद्वारा वा कृतेषु कारितेषु वापराधेषु ज्ञानाज्ञान-पूर्वकत्वमूलकं तारतम्यं बृहस्पतिरपीच्छति[3] ।

अयमपराधीति ज्ञात्वा यः तस्य साहाय्यमाचरति सोऽपि भजते दण्डम् । मनुना हि अपराधिनं ज्ञात्वैव साहाय्यकरणे दोष इति न स्फुटीकृतमपि तु सामान्यतः योऽपराधिनम् (ज्ञानन्नजानन् वा) उपकुर्यात् सोऽप्यपराधी इत्येव निर्दिष्टम् । परं चौरं ज्ञात्वा इत्यादि व्याचक्षाणेन कुल्लूकभट्टेन उक्त आशयः स्फुटीकृतः । चौरोऽयं इत्यजानन् चौरस्य साहाय्यमाचरन्न दुष्यति । कौटल्ययाज्ञवल्क्याभ्यामपि विषयेऽत्र विमृष्टम्—एतन्मतानुसारं हि अज्ञानतोऽपि सहायतामाचरन् न सर्वथा अपराधा-न्मुच्यते । अनवधानतैव तस्यापराध इति स भजते वाग्दण्डम् । अज्ञानतः कृतेषु अपराध विशेषेषु द्विशतपणो दण्डः, अनवधानता मूलकेषु तु शतपणः । धार्मिको राजा हृतद्रव्यसन्धिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावं न घातयेत् किन्तु हृतद्रव्येण चौर्योपकरणे च निश्चितचौरभावमविचारयन् घातयेत् ।

भुक्तराजदण्डात् पुरुषाद् वा वस्तु इदं क्रीतमस्ति? यदि तेनैवं कृतं तदा केनापि चौर इव दण्डमर्हति । चौरीयमिदं वस्तु इति जानन्नपि यस्तत् क्रीणाति सोऽपि चौर एव मतः । चौर्यमिति अजानं वस्तु यः उचितेन मूल्येन उचिते स्थाने काले च क्रीणाति न स दण्डभाक् । एतेन स्फुटं यद् व्यक्तेः मनस्स्थितिं क्षमतां स्वभावं सामाजिकं स्तरञ्चालोच्यैव अपराधो व्यवस्थाप्यते स्म । अत एवापराधसंहितायां विवेको बुद्धिश्च प्रत्यवतिष्ठताम् ।

**अपराधस्य कारणानि**

रुद्राहार्नमहोदयः अपराधस्य मूलानि त्रेधा वर्गीकरोति । एषु च (१) सामाजिक-क्षतिमूलिका घटनाः, (२) अपराधिनश्चरित्रं येन सामाजिकी क्षतिस्सम्भाव्यते, (३) अपराधिनो मूलप्रवृत्तेः सञ्चालिका तदीया मनःस्थितिश्च । अपराधास्तन्मूलानि

1. मनु. ९।२४२ ।
2. मनु. ८।२९३; याज्ञ. २।२९८; कौ. ४।१३।२३३ ।
3. विष्णु. ५।१०४ ।

च न कमपि शाश्वतमाधारमपि तु सामाजिकं दर्शनमाश्रितानि । साम्यवादिनि सोवियतसंघे अपराधे द्वेधा वर्गीकृतः । प्रथमवर्गे तेऽपराधा गण्यन्ते ये राज्यविरोधिनः, द्वितीये च ते ये शोषणप्रवृत्तिमूलकाः । द्वितीयवर्गीयाणामपराधानां तन्मूलभूतानां प्रवृत्तीनां वा दमनमेव लक्ष्यं मन्यते तत्र । एवंविधैर्विविचितैरपराधस्य मूलान्यपि प्रकाशमायान्ति । यथा-यथा अपराधानामुन्मूलनेऽपि प्रायत्यत । अपराधीये विवेचने साम्यवादिदर्शनस्य प्रभावः स्फुटं परिलक्ष्यते । जनतंत्रवादिन्यो विचारधारायाः प्रवर्तकैः अपराधानां कारणेषु अनेकधा विमृष्टम् । दार्शनिका अपि विषयेऽस्मिन् स्वीयान् मौलिकान् विचारान् उपास्थापयन् ।

लैम्ब्रासोमहोदयः कानिचिद् शारीरिकाणि वैशिष्ट्यान्यपराधस्य मन्यते । स हि अपराधिन्यः शारीरिक्या परीक्षया निष्कर्षमिममाससाद यद् अपराधिनः काश्चित् शरीरिभ्यो विशेषता अपराधान् परिवर्तयन्ति । डॉक्टर गोरिंग अनेन इंग्लैंडदेशीयानां स्काटलैंण्डदेशीयानाञ्चापराधीनां शारीरिक्या विषमतया जायमानानां विरूपाणामपराधानां तुलनाऽपि कृता । अत्र विषये हूटन इत्यस्य नवीनतममनुसंधानम् । तेन हि स्वीयैः सहायकैः सह अमेरिकीदेशीयाणाम् १७००० अपराधिनां सर्वेक्षणं कृतम् । एतदीयः सिद्धान्तः न संवदति लैम्ब्रासो मतम् । यद्यप्येतदसत्यं यत् शारीरिक्या दुर्बलताया आङ्गिक्यश्च संस्थापनायाः विरहोऽपराधेषु प्रवर्तयति तथापि न केवलं शारीरिकाण्येव अपराधस्य कारणानि अपि तु शारीरिकैर्वैशिष्ट्यैः सह सामाजिकान्यपि तत्त्वानि अपराधान् प्रयोजयन्ति । व्यक्तिगततया शारीरिकाणां वैषम्यानां भवत्यधिकः प्रभावो यतश्चरित्रनिर्माणे शारीरिकाणामेव कारणानां दृश्यते विशेषतो व्यापारः । अस्यामवस्थायां कारागृहापेक्षया औषधालय एवाधिकमुपयुक्तोऽपराधिनः कृते[1] ।

युद्धात् प्राक् मानसिकं दौर्बल्यमपराधस्य मूलं मन्यते स्म । एतन्मतानुसारं साधारणेषु जनेषु अपराधिषु च भवति मानसिकं वैषम्यम् । परमाधुनिकैरनुसंधानैस्तथ्यमेतत् प्रमाणितं यत् सामान्यजनताया अपराधिवर्गे च प्रतिशतमशीतिर्मानसिकी समानता[2] । उच्चतममानसिककक्षमताशालिनो नाचरन्त्यपराधमिति मतं न विचारसहम् । मानसिकोऽन्तर्विरोधः, निराशा चेत्यादिकं तानप्यपराधे प्रवर्तयत्येव ।

1. Jerome Hall, Theft, Law and Society, 1935.
   G.L. Ferio, Criminal Man, 1911.
   Dr. Goring, The English Convict, Landon, 1913.
   Hooton, The American Criminal.
   Crime and Man.
2. Gault, Criminology, 123.
   East and Hurbert, The Psychological Treatment of Crime.
   H.M. Stationary Office, 1939, p. 7.

इत्त्थमसाधारणमानसिकक्षमताशालिभिरन्यैश्च केचन् ईदृशा अपराधाः शक्या आचरितुं येषु वैधानिकदण्डापेक्षया मानसिकी चिकित्सैवाधिकमुपयुज्यते । समाजे ईदृशानामपराधिनामुचिता व्यवस्था आवश्यिकी । परमत्रप्रथमेदृशानामपराधाना-मुपचारपद्धतिरन्वेष्या । नूतनैरनुसंधानैरेतदपिसमर्थितम् यदिच्छा न परायत्ता । तस्या नियन्त्रणे निर्देशनस्य वातावरणस्य च महत्त्वपूर्णं स्थानम्, द्वयमेवैतत्तां नियन्तुं प्रभवति । विवेकिनं प्रमादिनञ्चान्तरा यामेकां सरलां रेखामालिखति न तामनुमन्यते मनोविज्ञानम् । ईदृशा बहवोऽवसराः यत्र सामान्यदण्डो न समाजसुरक्षायै, नाप्यपराधिन अपराधात् निवर्तयितुं प्रभवति ।

दण्डविधानात् प्रागेतदालोचनीयं यदपराधी यत्किमप्याचरति तत्ज्ञानतोऽज्ञानतो वा । ज्ञानतोऽपराधेऽपराधिनो भावनायास्तारतम्यमनुरुध्यैव दण्डो व्यवस्थापनीयः, यावत्येवास्य भावना स्यात् क्रियाशीला तावानेवास्य कार्यो निग्रहः । अद्यत्वे हि भावनाया अप्रतिहता गतिर्नापराधेन सम्बध्यते । अपराधिनां संख्याङ्कने दृश्यमाने प्रतीयते यत् वधापराधेन निगृहीतानां पञ्चाशतोऽपराधिनां दशभिरेव अज्ञानतोऽ-पराद्धम् आसीत् । अपराधं जानतामेवापराधिनां संख्या आसीदधिका । प्रमाद-सिद्धान्तस्य अत एवापूर्णता यदेतदनुसारं मानवीयं मष्तिष्कं ज्ञाताज्ञातभेदेन द्वेधा विभाज्यते ।

निर्धनताविषयका अपराधविषयकाश्चाङ्काः साङ्खिकीसूचना वा न साकल्येन लभ्यन्ते । निर्धनतामूलकः क्रोधोऽपराधे प्रवर्तयति । स्वस्थचेताः कोटिपतिर्न कदापि रूप्यकशतमपहर्तुमीहते, क्षुधितो निर्धनश्च पुनः शक्नोत्येवं कर्त्तुम् । परं नैतदस्य तात्पर्यं यत् सम्पच्छाली सर्वथैव नाचरत्यपराधम्, न वा प्रवर्तते चौर्य इति । सम्पदपहरणविषयिणी ईहा तस्याप्युदेति परमस्य चौर्यभावना नाल्पीयस्यपहार्ये रमते इत्येव विशेषः । आधुनिकेनानुसन्धानेन पुरुषस्य बौद्धिकी भौतिकी चोभेऽपि योग्यतेऽपराधेन सम्बध्येते । निर्धनतामपराधस्य मूलममन्यमानैरपि केचनाङ्काः साङ्खिकी सूचना वा इत्थं प्रस्तूयते यत्र निर्धनतायाः प्रभावोऽधिकः परिदृश्यते । यथा कथञ्चिदार्थिकानि कारणानि भवन्त्येव क्रियाशीलान्यपराधे ।

अपराधस्य नैकमेव किञ्चिन्नियतं कारणम्, अन्यच्चैष व्यक्तेश्चरित्रमाश्रयति । अत्र चेदमपि अवधेयं यच्चरित्रं किम्? किमानुवंशिकता वातावरणञ्चास्य समाने प्रयोजके । चरित्रविषये दृश्यते यत्पुत्रः पित्रपेक्षया भिन्नक्षमतासम्पन्नः विशेषक्षमता-सम्पन्नश्च भवति । पितुः यादृशी क्षमता ततो भिन्ना विशिष्टा च क्षमता पुत्रस्येति। शरीरं मनोविज्ञानञ्च, द्वयमयि एतच्चरित्रनिर्माणे हेतुः । वंशानुगता अपि क्षमता वातावरणेन संशोध्यन्ते परिवर्त्यन्ते वा । कौटुम्बिकवातावरणेऽपि तानि तत्त्वानि भवन्ति क्रियाशीलानि यान्यपराधं प्रयोजयन्ति । सामान्यतः सामाजिकानि

तत्त्वान्यपराधस्य प्रयोजकाणि । तानि हि स्वयं पैतृकीं क्षमतां मनोभावं व्यवहारञ्च प्रभावयन्ति यैर्वंशानुगतता सिद्धान्त आरभ्यते । धनाभावः पारिवारिकं समाजिकञ्च जीवनं दूषयति, तनोति च द्वेषेर्ष्याघृणादिका वृत्तीः । फलतः सामाजिकानां सदस्यानां पारस्परिका अपराधा विकाशमायान्ति, इत्थमपराधस्य विभिन्नानि कारणानि, यैश्चरित्रं निर्मीयते ।

एवमपराधस्य कारणेषु मीमांस्यमानेषु निष्कर्षोऽयमासादित अस्माभिर्यदपराध-प्रवृत्तिर्न मनुष्यस्य सर्वथा सहजा वृत्तिरपि तु बाह्यवातावरणमूलिकाऽपि । सहैव आनुवंशिकता अपि तत्र भवति क्रियाशीला । भारतीयपरम्परायामपराधविकाश-विषयेऽस्माभिर्यन्निर्णीतं तत् समर्थ्यते वसिष्ठवरुणसंवादेनापि । वसिष्ठो हि वरुण-मित्थमेवोपादिशत् । तेन समाजः **व्यक्तिश्च** द्वयमपीदमपराधस्य कारणमास्थितम् । वातावरणस्यानुवंशिकतायाश्च प्रभावेण व्यक्तिर्वशीक्रियते । एतत्तत्त्वद्वयानुसारेण वर्ण-व्यवस्थां पृष्ठभूमीकृत्यापराधविवेचना रूपान्तरं प्रतिपद्यते आयाति च वैयक्तिकतायाः स्थाने सामाजिकताम् । अत एव दण्डविवेचनायां सामाजिकानां तत्त्वानां विशेषतः स्पष्टीकरणम् । वातावरणे सामाजिकस्थितेर्द्वितीयमपि स्वरूपं स्वीकृतं यत्र शिक्षा-संगतिसंस्कारैः सहार्थिककारणानामपीयदधिकं महत्त्वं मतं यद् बुभुक्षितः किन्न करोति पापम् । आपद्धर्मतया कियन्तोऽप्यपराधा वैधा स्वीक्रियन्ते । अस्यैतन्मूलं कियत्यः ईदृश्यः परिस्थितयो यत्र मनुष्यो वस्तुतोऽनिच्छन्नपि अपराधमाचरितुं भवति विवशः । यदि चैवंविधाः परिस्थितय आपद्धर्मतया न परिगृह्येरन् तदा स्यात् सामाजिकी क्रान्तिः । अत एव भारतीयैरपराधस्य तत्कारणानाञ्च सर्वेष्वप्यंशेषु पक्षेषु वा सूक्ष्मेक्षिकया विमृष्टम् । अपराधविकाशालोचनेनैतस्य पृष्ठभूमिः प्रकाश-मायाति । विशेषतस्तु एतत्स्पष्टीकरणमपराधप्रकारेष्वालोच्यमानेषु भवति ।

**अपराधप्रकाराः**

प्रारम्भिके समाजे सदाचारस्य धर्मस्य चोल्लंधनमैहिक आमुष्मिकश्चापराधो मन्यते स्म । सहैव प्राकृतिकशोधोऽप्यासीद् विकाशोन्मुखः । आत्मरक्षार्थं क्रियमाणे वधेऽपि आसीद् दण्डः परन्यूनः[1] । विचारपूर्वककृतानामावेशितश्चाचरितानाम-पराधानां भेदो मतः । केषुचित् संघटनेष्वेष नियम आसीत् यत् स्वसंघटनीयसदस्यस्य वधे द्रव्याद्यपहरणं वापराधः परं संघटनान्तरीयसदस्यविषये क्रियमाणं द्वयमपि एतन्नापराधः । क्वचित्-क्वचित्त्वेष गुण एव मन्यते स्म । परं नैतिकताया विकाशेन धारणैषा विलोपं याता । तदानीमपि वयःकृतं लिङ्गकृतञ्चापराधानां वैषम्य आस्थीयते स्म । प्रधानैरपराधाचरणे साधारणो दण्डः, अन्यैश्च तस्मिन्नेवापराधे

1. Westermarck, Vol. I, 217.
Encyclopaedia of Religion and Ethics, Vol. II, 214.

क्रियमाणे कठोरदण्डः । व्यक्तेः नीचोच्चतानुसारेण अपराधे दण्डे चाप्यासीत् तारतम्यम् । नैकविधस्यापराधस्यैकविध एव दण्डः सर्वेषाम् । सभ्यसमाजेष्वपि धारणेयं विकाशं लेभे । प्रथमबारं कृतस्यापराधस्यापेक्षया पुनरावर्तमानः स एवापराधो गुरुर्मतः । फलतः प्राथमिकेऽपराधे साधारणो दण्डस्तस्मिन्नेव पुनराचार्यमाणे कठोरदण्डो व्यवस्थापितः । क्वचित्-क्वचिदस्यामावस्थायां देशनिष्कासनस्य मृत्युदण्डस्यापि दृश्यते व्यवस्था[1] ।

भारतीयन्यायपालिकायामेते सिद्धान्ताः कार्यान्वयनं यान्ति । वैदिककाल एवैतेषां बीजारोपणमभूत् । धर्मसूत्रकालं यावत् सिद्धान्ता इमे प्रकाशमायाताः । वेदेभ्यो धर्मसूत्राणि यावल्लब्धविकाशानि. महापातकानि धर्मसूत्रेषु वर्णितानि । तत्र च दण्डपारुष्यं वाक्पारुष्यं स्त्रीसंग्रहणञ्चेत्यादयः प्रकाराः परिगणिताः । अतोऽन्येषामपि महती सूची धर्मसूत्रैर्निर्दिष्टा । एवंविधानां प्रकाराणामुपस्थापनात् पूर्वमेतेषां विकाशक्रमे दृष्टिरवश्यं देया ।

**वैदिककालः**

वैदिके काले आसीद् वैरदेयस्य व्यवस्था, एषा च क्षतिपूर्त्तेः रूपान्तरमेव । ऋग्वेदे एकत्र स्थले द्वयोः पारस्परिकस्संघर्ष उल्लिखितः, यः धनप्रदानेन शमितः[2] । अत्र हि वेदे, नृम्नं-क्षत्रं-रधस्-ब्रह्म-वृत्रेत्यादिका शब्दा धनं प्रयुक्ताः[3] । तं धनं नृम्नमित्युच्यते येन शत्रुर्मैत्रीमानीयते । येन अवैधानिकेभ्यः कार्येभ्यो जनस्य मुक्तिःस्यात् तत्क्षत्रम् । वैधानिकानां कार्याणां सम्पादने विनियुज्यमानां द्रव्यं रधस् इति कीर्तितम् । धर्मसंबर्धनार्थं यस्य विनियोगस्तद ब्रह्म । राजदण्डान्मोचनं धनं वृत्रमिति उच्यते । एवंविधेन धनस्य विभाजनेन परिज्ञायते यत्तदानीमर्थदण्डो वैरदेयस्य राज्येन सम्बन्धश्च द्वयमप्येतत् विकसदासीत् । राज्ञः समक्षं चोरस्योपस्थापनमपि दृश्यते तस्मिन् काले । किन्त्वपराधस्वरूपस्य विशेषतः स्पष्टीकरणन्नोपलभ्यते । आङ्गिको दोषः, ज्येष्ठभगिन्यामनूढायां स्वस्य विवाहः उभावपीमावपराधावास्तां मृत्युदण्डार्हौ । भ्रूणहत्या, नरहत्या चैतौ समानस्तरीयावपराधौ मतौ । ब्रह्महत्या सवर्तोऽधिकं गर्हितोऽपराध आसीत् । धनविषयकाणामपराधानां विशेषतः स्पष्टीकरणं न लभ्यते[4] । ऋणादिविषयका अपराधा प्रत्यतिष्ठन् अथ च. तत्र ऋणादेरप्रत्यावर्तने दास्यव्यवस्थाया अपि उदाहरणानि समुपलभ्यन्ते[5] ।

---

1. Petroff, Tenth Census of U.S.A., Washington, 1882 p. 152.
   Decle, Three Years in Savages, Africa, 1898, p. 487.
2. ऋ. ६।२५।४-५ ।
3. ऋ. ५।७९।९ ।
4. Vedic Index, Vol. I, pp. 390-97.
5. तदेव Vol. I, p. 109.

**धर्मसूत्रकालः**

धर्मसूत्रेष्वपराधाः स्फुटं वर्गीकृताः येषां वर्गीकरणन्नाभूत्तेषामपि बीजारोपणं दृश्यत एव । वर्गीकरणेऽस्मिन् तात्कालिकः प्रभावः स्फुटं परिलक्ष्यते । गौतमसंहितायां पातित्यस्य कारणानि निर्दिष्टानि । तथाहि अयाज्ययाजनमभक्ष्यभक्षणं गर्हितशब्दप्रयोगः, सदाचारोल्लंघननिषिद्धसेवनञ्च पातित्यस्य प्रयोजकानि[1] । अग्रिमाध्यायीया सूची अतोऽप्यधिकं स्पष्टा । पितापि परित्याज्यः, यदि स राजघातकः, शूद्रयाजकः, शूद्रस्य कृते स्वयं यष्टा, वेदनिन्दकः, गर्भपाती, नीचजातीयः, नीचजातीयाया स्त्रियः परिग्रहीता वा स्यात्[2] । अस्यामपराधनामावल्यां राज्यस्य, वेदस्य वर्णव्यवस्थायाश्चानुरोधिता स्फुटं लक्ष्यते । अग्रे च ब्रह्मघातिना, सुरापेन, गुरुतल्पगेन, मातृकुलीयया पितृकुलीयया वा **स्त्रिया च सह कृतभोगेन** तत्समानतया नास्तिको गणितः[3] । अन्यत्र नीचवर्णसेवा भ्रूणहत्याकल्पोऽपराध उक्ता[4] । धर्मसूत्रकालं यावन्न्यायिकप्रक्रियायाः सूत्रपातः सञ्जातः । असत्यसाक्ष्यं राज्यद्रोहः पैशुन्यं गुरोरसत्यभाषणञ्च महापातककल्पानि मतानि[5] । एते अपराधा व्यक्तेर्नागरिकत्वानर्हतां साधयन्ति ।

धर्मसूत्रेषु सङ्केतिता अपराधा स्मृतिषु उत्तरवर्तिसाहित्ये च विस्तरेण प्रपञ्चिताः । अस्यामवस्थायामपराधस्य विशिष्टा व्याख्या व्यवस्थाप्यते । अपराधानां वर्गीकरणेऽस्मिन् देशकालानुरोधिता परिदृश्येते । तदानीन्तनं तदपराधवर्गीकरणमपराधानामीदृशीं महतीं नामावलीं प्रस्तौति यत्तेषां समेषामप्यपराधानामेकत्र विवेचने स्यान्महान् ग्रन्थविस्तरः, अतस्तेषु केषाञ्चित् प्रमुखानामेव चर्चा सुकरा ।

**धर्मसूत्रोत्तरकालः**

अस्मिन् काले दण्डापराधव्यवस्थायां बौद्धक्रान्तेः प्रभावं स्फुटं प्रतीयते । मनोर्याज्ञवल्क्यस्य कौटल्यस्य च विचारा अत्र संदर्भेऽवधेयाः । मनूक्तेषु विधानेषु धार्मिकप्रतिक्रियायाः प्रभावो इतरापेक्षया अधिकः । याज्ञवल्क्येनैष प्रभावोऽवश्यं स्वीकृतः किन्तु एतद्विषयकान् विवादानुपेक्ष्य समस्येयं प्राचीनोक्तविधानानुसारेण समाहिता[6] । फलतः मनूक्तेषु विधानेषु वर्गीयाणां जातीयानां वा तत्त्वानां यावती

---

1. अथ खल्वयं पुरुषो याप्येन कर्मणा लिप्यते यथैतद् अयज्ययाजनमभक्ष्यभक्षणमवद्यवदनं शिष्टस्याक्रिया प्रतिषिद्धसेवनम् । गौ. सं. ३।१।२ ।
2. त्यजेत्पितरं राजघातकं शूद्रार्थयाजकं वेदविप्लावकं भ्रूणहतं यश्चान्त्यावसायिभिः सह संवसेदन्त्यावसायिन्यां वा । गौ. सं. ३।२।१ ।
3. गौ. सं ३।३।१-३ ।
4. गौ. सं. ३।३।९ ।
5. कौटसाक्ष्यं राजगामिपैशुनं गुरोरनृताभिशंसनं महापातकसमानि । गौ. सं. ३।३।१0 ।
6. : ब्राह्मणमाक्रुष्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥ ( मनु. ८।२६७ )

क्रियाशीलता न तावती याज्ञवल्कीयेषु कौटलीयेषु च। बौद्धपरम्पराया अश्वघोषेन जातीयतानुसारिप्या न्यायव्यवस्थाया विरोधः कृतः परं तदपेक्षया याज्ञवल्क्ये एष विशेषो यत् नोपदेशको न च वैदिकपरम्पराविरोधी अपि तु विधायको वैदिकपरम्परायाः समर्थकश्च। अत एव तदीया विचारा वैदिकपरम्परानुसारिभिर्महदादृताः।

दण्डापराधविधिविषयकाः मनुकौटल्ययाज्ञवल्क्यीया विचारा धर्मसूत्रेभ्य उत्तरं जायमानया बौद्धक्रान्त्योद्भावितानि परिवर्त्तनानि स्फुटं व्यञ्जन्ति। मनुना जातिविशेषीयतामाश्रित्य वाक्पारुष्यदण्डो व्यवस्थापितः अर्थादितन्मतानुसारं नायं दण्डः सर्वेषामेकविधोऽपितु [ तत्तज्जातिविशेषानुसारेणात्र तारतम्यं कौटल्ययाज्ञवल्क्याभ्यां पुनः मानवतासामान्यमाश्रित्य वाक्पारुष्यं व्यवस्थापितम्। मनुना एष आधारः स्वीकृतः परं श्रुतक्रमदेशशरीरैः सह जातिरपि निवेशिता[1]। कुत्साविधायकव्यवस्थायामपि ईदृश एव भेदो दृश्यते[2]। हीनानुलोमप्रतिलोमविषयकेषु विचारेषु त्रयाणामप्येतेषां विचारकाणान्नैकट्यं दृश्यते[3]। इयांस्तु विशेषो यन्मनुर्धर्मोपदेशकस्य शूद्रस्योग्रतमं दण्डं निर्दिशति। ब्राह्मणवदाचरतां बौद्धधर्मावलम्बिनां शूद्राणामत्युग्रं दण्डं मनुरिच्छति[4]। कौटल्ययाज्ञवल्क्यौ मनोरिमं विचारन्नातीव समन्येते। एतौ हि कुत्साविषयकव्यवस्थायां जातेराश्रयणं तदैवेच्छतः यदीयं कुत्सा राज्यस्य स्यात्। अपशब्दप्रयोगकृतस्यापराधस्य यो दण्डो मनुना व्यवस्थापितस्तत्र विप्रस्य देवताया नृपस्य च प्राथमिकता स्वीकृता, कौटल्ययाज्ञवल्क्याभ्यां तु राष्ट्रस्य राष्ट्रीयसंघटनस्य। ब्राह्मणानां श्रेष्ठतां राज्ञो दैवीं शक्तिं समर्थ्य बौद्धानां पराभवः

---

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्।
क्षेपं करोति चेद्दण्ड्या पणानर्धत्रयोदश॥
(याज्ञ. २।२०४)

शारीरप्रकृतिश्रुतिवृत्तिजनपदानां शरीरोऽपवादेन काणखञ्जादिभिः सत्ये त्रिपणो दण्डः। मिथ्यापवादे षट्पणो दण्डः। शोभनाक्षिदन्त इति काणखञ्जादीनां स्तुतिनिन्दायां द्वादशपणो दण्डः। कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां वा। अर्थ. ७५ पृ. १९३।

1. श्रुतं देशञ्च जातिञ्च कर्म शारीरमेव च। मनु. ८।२७३-७४।
2. मनु. ८।२७५; याज्ञ. २।२०५-२०६; पृ. १९३।
3. मनु. ८।२६७-२७७; याज्ञ. २।२०७; अर्थ. पृ. १०४।
4. त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसः।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः॥
(याज्ञ. २।२११)

स्वदेशग्रामयोः पूर्वमध्यमं जातिसंघयोः।
आक्रोशाद्देशचैत्यानामुत्तमं दण्डमर्हति॥
(अर्थ. पृ. १९४)

समाजादुच्छेदश्च मनोरास्तामभिमतौ । वकौटल्योऽर्थशास्त्रपरम्परामनुरणद्धि फलतो राष्ट्रस्यैकीकरणं तस्याभिलषितमासीत् ।

परमेतस्य नैषोऽर्थो यत्कौटल्यो दण्डापराधव्यवस्थायां जातीयानि तत्त्वानि सर्वथैव परिजहाति । दण्डपारुष्यविषये हि असावपि शूद्रो येनाङ्गेन ब्राह्मणं प्रहरेत् तदीयस्य तस्याङ्गस्य छेदं विधत्ते[1] । शामशास्त्रिणा एषोंऽशोऽर्थशास्त्रे प्रक्षिप्तो मन्यते । तस्य हि मतं यद् याज्ञवल्क्येनायमंशो न स्वीकृतः । तेन हि जातिशब्दस्य स्थाने अब्राह्मणशब्दः प्रयुक्तः[2] । जायसवालमहोदयेन शामशास्त्रीयो विचारः साकल्येन तु नानुमोदितः परं कौटल्यः स्वपूर्ववर्त्तिपरम्परायाः संशोधकः इति त्वश्यमभ्युपगतम्[3]। वैदिकधर्मविरोधिशूद्रविषये आजीवकविषये कौटल्ययाज्ञवल्क्यावपि मनूक्तां प्राचीन-परम्परागतां वा व्यवस्थामेव समर्थयेते[4] । अवैदिकसमाजीयेऽपराधे समेऽपि विचारका एका पृष्ठभूमिमधिष्ठाय निर्णयन्तीति तु निष्कर्षः[5] ।

वैदिककालतः स्मृतिकालं यावत् क्रियमाणेन अपराधविषयकेण विवेचनेन एतदायातं यदपराधस्य कारणानां सार्वाङ्गिकं परिशीलनं कृतं तदानींतनैर्विचारकैः । तदानीं यावती सामग्र्युपलब्धा सोचितं प्रायुज्यत । कारणानां मूलान्वेषणेनापराध-शास्त्रिभिर्वैयक्तिकसामाजिकयोरुभयोरपि अपराधपक्षयोर्दृष्टिर्दत्ता । परं तदानीं व्यक्तेर्व्यक्तित्वं सामाजिकीनां शक्तीनामङ्गमासीत् । व्यक्तित्वस्य सीमा समाजे सामाजिकविधौ चैवान्तर्निविष्टा आसीत् । समाजे दृश्यमानस्तत्प्रभावोऽपराधानां स्वरूपं कारणानि च व्यनक्ति स्म । विभिन्नेषु कालेषु प्रभावाणामेषां विभिन्नविधः प्रयोगोऽभूत् । व्यक्तेर्व्यक्तित्वस्य य आन्तरः पक्षो यश्च बाह्य उभयोरपि तयोर्दार्शिनिकी मीमांसा लभ्यते परं वातावरणस्यैव विशेषतो महत्त्वं स्वीकृतम् । वातावरणनिर्माणे समाज एव विशेषत उत्तरदायी समाजे परिवर्तनकारिणां तत्त्वानां कथमप्युपेक्षा नाभूत् । वैदिककालतो भारतीयसमाजस्य विभिन्नेषु वर्गेषु विभाजन-मारब्धम् । वर्गीया व्यवस्था समाजविकारो न बाह्याक्रमणेन जातीयमिश्रणेनान्तः-क्रान्त्या च विकाशं लेभे । ततश्चास्य गभीरः प्रभावोऽभूदपराधव्यवस्थायाम् । एष विषयः अनुपदमेवास्माभिरैतिहासिकी पृष्ठभूमिमाश्रित्य परिदर्शितः । एतेन अपराध-कारणेषु सामाजिकीनां शक्तीनां प्रभावो स्पष्टमभ्युपगतो भारतीयैर्विचारकैरिति

1. शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात्तदस्य छेदयेत । अर्थ. ७५ पृ. १९४ । ४ ।
2. विषपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु । याज्ञ. २।२२१ ।
3. K.P. Jayswal, Manu and Yagnyavalkya, p. 15.
4. जिह्वाछेदनं शूद्रस्यार्यधार्मिकमाक्रोशतः । आप. २।१०।२७।१४; शूद्रस्य ब्राह्मणवादितो देवद्रव्यवस्तृणतोराजदिष्टमादिशतो द्विनेत्रभेदिनश्च योगाञ्जनेनान्धत्वष्टशते वा दण्डः, अर्थ. ८७ पृ. २२५ ।
5. आजीवकादीन् वृषलप्रजितान् देवपितृकार्येषु भोजयतः शत्यो दण्डः । अर्थ. ७७ पृ. १९१; याज्ञ. २।२३५ ।

स्फुटम् । एता एव च शक्तयः अपराधानां स्तरभेदे तारतम्येऽभूवन् प्रयोजिकाः । एकमेव कर्म अनेकविधापराधतामयात् । ब्राह्मणेन क्रियमाणं कर्म न तादृशोऽपराधः शूद्रेणाचार्यमाणं तदेव कर्म यादृशोऽपराधः । इत्थञ्चापराधविषयकस्य अस्य वैषम्य आधारो न व्यक्तेरान्तरं व्यक्तित्वम् अपि तु बाह्यं वातावरणं यत्समाजेन निर्धार्यते । अतोऽपराधविकासक्रमेऽपराधानां निर्धारणं सामाजिकशक्तीनामासीत् कार्यम् ।

●

# अध्यायः ४

# अपराधानां वर्गीकरणम्

**वाक्पारुष्यम्**

यो यस्मिन् देशे जातस्तद्देशसम्बन्धम्, जातिर्ब्राह्मणादिः तज्जातिसम्बद्धञ्च, तत्कुलसम्बद्धञ्च, विद्याशिल्पस्वजनादिसर्वसम्बद्धञ्चाक्रोशनं न्यङ्गरूपम् । तेषां तत्राक्रोशः प्रसिद्ध एव । न्यङ्गं मर्म गोप्यम् । तदुभयसंयुक्तं देशादिविषयं प्रतिकूलाभिधेयं वचः वाक्पारुष्यमुच्यते । वाक्पारुष्यं त्रिविधं निष्ठुरत्वादश्लीलत्वात् तीव्रत्वाच्च । गौरवानुक्रमादस्य त्रिविधस्य गौरवं क्रमेण । निष्ठुरादश्लीलं गुरु, ततोऽपि तीव्रम् । तेनैव क्रमेण दण्डोऽपि त्रिविध एव लघुर्लघौ गुरौ गुरुः । साधिक्षेपं मातैवंरूपा तव पिता च त्वमपि न किञ्चिज्जानासि इत्यादि निष्ठुरम् । न्यङ्ग-संयुक्तमश्लीलम् । पतनीयैश्चोरस्त्वं गुरुतल्पग इत्यादिभिरपवादैर्युतं वचस्तीव्रमुच्यते । उत्तरोत्तरो गुरुः । तत्र नारदः

देशजातिकुलादीनामाक्रोशन्यङ्गसंहितम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥ १८।१ ।
निष्ठुराश्लीलतीव्रत्वात् तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमादस्य दण्डोऽपि त्रिविधः स्मृतः ॥ १८।२ ।
सापेक्षं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥ १८।३ ।

कात्यायनः

हुङ्कारं कासनञ्चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयात् वाक्पारुष्यं तदुच्यते ॥ ७६८ ॥
यत्त्वसत्संज्ञितैरङ्गैः परमाक्षिपति क्वचित् ।
अभूतैर्वाऽथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥
न्यङ्गावगूरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानाञ्च अश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च राजद्वेषकरी च या ।
जातिभ्रंशकरी वाऽथ तीव्रा सा प्रथिता तु वाक् ॥ ७७०-७७२ ॥

"न्यङ्गावगूरणम्" निकृष्टाङ्गप्रकाशेन तिरस्करणम् । 'न्यग्भावकरणम्' इति व्यवहार-प्राकाशमाधवधृत पाठः । कल्पतरौ न्यङ्गावगूरणमिति पठित्वा निकृष्टाङ्गप्रकाशेन

तिरस्करणमिति व्याख्यातम् । न्यग्भावकरणं तु माधवादिसंमतः पाठः[1] । अत्र बृहस्पतिराह–

अप्रियोक्तिस्ताडनञ्च पारुष्यं द्विविधं स्मृतम् ।
एकैकं तु त्रिधा भिन्नं दमश्चोक्तलक्षणः ॥
देशग्रामकुलादीनां क्षेपः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसम्बधमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥

'द्रव्यं विना' इत्यत्र द्रव्यशब्दोऽभिधेयपरः । तेनोच्यमानार्थव्यतिरिकेणैवंविधमभिधानं वाक्पारुष्यमित्यर्थः । द्रव्यं विना द्रव्यवैशिष्ट्यं विना इति मदनरत्नः । अभिघट्टन-मुत्पाटनम् (व्य. प्र.) । भगिनीमातृसम्बन्धमुपपातकशंसन 'तव भगिनी, तव माता मया ग्राह्या' इति अभिकीर्तनमित्यर्थः (वि. र. १४२) । वाग्दुष्टं परिभाषयन् कात्यायनः

योऽगुणान् कीर्तयेत्क्रोधान्निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानुयोगी च वाग्दुष्टं तं नरं विदुः ॥
दुष्टस्यैव हि यान् दोषान् कीर्तयेत्क्रोधकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥

वाग्दुष्टं वाक्पारुष्यदुष्टमिति विवादरत्नाकरः (२४३) । इदानीं वाक्पारुष्यविषये मिताक्षरां प्रस्तूयते; तल्लक्षणं चोक्तं नारदेन (१५।१) । देशादीनामाक्रोशं न्यङ्ग-संयुतम् । उच्चैर्भाषणमाक्रोशः, न्यङ्गमवद्यं तदुभयुक्तं यत्प्रतिकूलार्थमुद्वेगजनन्नार्थं वाक्यं तद्वाक्पारुष्यं कथ्यते । तत्र 'कलहप्रियाः खलु गौडाः' इति देशाक्रोशः । 'नितान्तं लोलुपाः खलु विप्राः' इति जात्याक्रोशः । 'क्रूरचरिता ननु वैश्वामित्राः' इति कुलाक्षेपः। आदिग्रहणत्वात्स्वविद्याशिल्पादिनिन्दया विद्वच्छिल्पादि पुरुषाक्षेपो गृह्यते । तस्य च दण्डतारतम्यार्थं निष्ठुरादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं तेनैवोक्तम् (१५।२)। तत्र धिङ्मूर्ख जाल्ममिति साक्षेपम्।अत्र न्यङ्गमित्यसभ्यम्। अवद्यं भगिन्यादिगमनं तद्युक्तमश्लीलम्। सुरापोऽसीत्यादिमहापातकाद्याक्रोशैर्युक्तं वचस्तीव्रम्।

एवं जातिगुणयोर्विधिविशेषदर्शने तथा प्रथममध्यमोत्तमभावेन त्रिधाभिहित-वाक्पारुष्यान्तर्गतभेददर्शने तथा 'निष्ठुराश्लीलतीव्रत्वादिवाक्पारुष्यविशेषदर्शने तथा श्रुताभिजनदेशकर्मशरीरपितृमातृगुरुर्वाद्यधिक्षेपविशेषदर्शने तन्निबन्धनोच्चावचदण्ड-

1. व्य. प्र., ४८३ ।

विधायिकाः स्मृतयो यद्यपि वचः समुच्चयकारैः समुच्चिता अस्माभिस्तु संप्रति तदर्थानुष्ठाननिष्ठप्रजाशिक्षकाभावाद् वृथा ग्रन्थविस्तरापत्तिर्मा भूदिति न समुच्चिताः (स्मृ. चं. २ पृ. ३२७)।

'संप्रति तदनुष्ठानाभावाद् ग्रन्थविस्तरतः किमर्थमित्युपरतम्', यद्यपि वाक्पारुष्य-दण्डपारुष्ययोर्विषयभेदेनाऽन्येऽपि दण्डविशेषाः स्मृतिभिरुपदिष्टाः सन्ति तथापीदानीन्तनै राजभिः प्रजाक्षोभप्रसङ्गेन तादृग्दण्डस्य कर्त्तुमशक्यत्वादत्युपयोगाभावेन निरर्थकग्रन्थविस्तरभयान्नात्रास्माभिः संगृहीता इति मदनरत्नः । वाक्पारुष्यमुपवादः कुत्सनमभिभर्त्सनमिति **कौटल्यः**[1] ।

**दण्डपारुष्यम्**

रोषात् परशरीरेष्वभिद्रोहः प्रहरणं हस्तादिभिर्भस्मादिभिश्चोपघातो रज्जु-पाषाणादिभिश्च भस्मधूलीपानीयाशुच्यादिना, दण्डपारुष्यमुच्यते । दण्डपारुष्येऽपि त्रैविध्यं त्रिप्रकारत्वं दृष्टमधममध्यमोत्तमक्रमेण । अवगूरणेन मन्दः । निस्सङ्ग-प्रहरणैर्मध्यमः । शोणितोत्पादनैरुत्तमः। निकृष्टमध्यमोत्तामानां द्रव्याणां हरणात् त्रीणि साहसानि उक्तानि । तान्येवैतानि दण्डपारुष्याणि । अत्र **नारदः**

**परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।**
**भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥**
**तत्रापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात् ।**
**अवगूरणनिस्सङ्गपातनक्षतदर्शनैः ॥**
**हीनमध्यमोत्तमानां तु द्रव्याणां समतिक्रमात् ।**
**त्रीण्येव साहसान्याहुः प्रोक्तं कण्टकशोधनम् ॥ १५।४-६ ॥**

अथवा पूर्वश्लोके यथा त्रीणि साहसानि कण्टकशोधनमिति, नच दण्डपारुष्य-साहसयोरेतयोरुभयोरप्युपलब्धो विधिः पञ्चविध उक्तः । असज्जनैकार्थ्यादीनां विशुद्धिश्च, प्रथमसाहसादिना दण्डभाक्त्वं चाकार्यकारिणां यथा भवति 'भक्तावकाशदातार' इत्यादिना–

**विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि ।**
**विशुद्धिर्दण्डभाक्त्वं च तत्र संबध्यते यथा ॥ १५।७ ॥**

परगात्रेषु स्थावरजङ्गमात्मकद्रव्येषु हस्तपादायुधैरादिग्रहणाद्ग्रावादिभिर्योऽभिद्रोहो हिंसनं दुःखोत्पादनं तथा भस्मना आदिग्रहणाद्रजः पङ्कपुरीषाद्यैश्च य उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनं तदुभयं दण्डपारुष्यम् ।

1. तुलनीयम्–Historical Jurisprudence, Vol. IX. Ch II.
Continental History of Criminal Law, Ch. VI.

दण्ड्यतेऽनेनेति दण्डो देयः, तेन यत्पारुष्यं विरुद्धाचरणं जङ्गमादेर्द्रव्यस्य तद्दण्ड-पारुष्यम् । तस्य चावगोरणादिकारणभेदेन त्रैविध्यमभिधाय हीनमध्यमोत्तमद्रव्य-रूपकर्मत्रैविध्यात्पुनस्त्रैविध्यं नारदेनोक्तम् (१५।५-६)—तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् । अवगोरणनिःसङ्गपातनक्षतदर्शनैः' । हीनमध्योत्तमानां च द्रव्याणां समतिक्रमात् । त्रीण्येव साहसान्याहुस्तत्रकण्टकशोधनम् ॥

निःसङ्गपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि त्रिप्रकाराण्येव । सहसा कृतानि दण्डपारुष्याणीत्यर्थः । तथा वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्त-कलहयोर्मध्ये यः क्षमते न केवलं तस्य दण्डाभावः, किन्तु पूज्य एव । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च बद्धवैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा तयोर्द्वयोरपराधविशेषापरिज्ञानेऽधिकारिणः, तेषामशक्यत्वे तान् राजा घातयेदेव; नार्थं गृह्णीयादित्येवं पञ्चप्रकारा विधयो नारदेनैवोक्ताः—

पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः ।
स मन्यते यः क्षमते दण्डभाग् योऽतिवर्तते ॥
पारुष्यदोषधुतयोर्युगपत् सम्प्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयः स्यात् समस्तयोः ॥
पूर्वमाक्षारयेद् यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद् यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥
द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः ।
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः ॥
यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृषु ।
स एव विनयं कुर्यान्न तद्विनयभाङ्नृपः ॥
मला ह्येते मनुष्येषु धनमेषां मलात्मकम् ।
अतस्तान् घातयेद् राजा नार्थदण्डेन दण्डयेत् ॥ १५।८-१३ ॥

तत्र बृहस्पतिः

हस्तपाषाणलगुडैर्भस्मकर्दमपांसुभिः ।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते ॥ २१।१ ॥

व्यासः

भस्मादीनां प्रक्षेपणं ताड़नं च करादिना ।
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यतो ॥
दण्डपारुष्यं स्पर्शनमवगूर्ण प्रहतमिति ॥ अर्थ. ३।१९ ।

**स्त्रीसङ्ग्रहणम्**

यस्माद् भार्यां रक्षतो रक्षणमसङ्कीर्णविशुद्धापत्योत्पादनेन स्वसन्ततिं तथा शिष्टसमाचारं पितृपितामहाद्यन्वयमात्मानं विशुद्धसन्ताननिमित्तौर्ध्वदेहिकलाभेन स्वधर्मञ्च विशुद्धभार्यस्याधानादावप्यधिकाराद्रक्षति । तस्मात्स्त्रियो रक्षितुं यतेतेति । पतिः शुक्ररूपेण भार्यां संप्रविश्य गर्भमापाद्य तस्यां भार्यायां पुत्ररूपेण जायते । तथा च श्रुतिः "आत्मा वै पुत्रनामासि" इति । जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुनर्जायते । तथा च बह्वृचब्राह्मणम्–"पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" ।

यस्माद्यादृशं पुरुषं शास्त्रेण विहितं प्रतिषिद्धं वा तादृशशास्त्रोक्तपुरुषसेवनेनोत्कृष्टं निषिद्धपुरुषसेवनेन च निकृष्टं पुत्रं जनयति । तस्मादपत्यविशुद्ध्यर्थं पत्नीं यत्नतो रक्षेत् । कश्चिदबलात्संरोधादिनापि स्त्रीयो रक्षितुं न शक्तः, तत्रापि व्यभिचारदर्शनात् ।

धनस्य संग्रहणे विनियोगे च द्रव्यशरीरशुद्धौ भर्त्रग्निशुश्रूषादिकेऽन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणे एनां नियोजयेत् । आप्ताश्च ते आज्ञाकारिणश्च तैः पुरुषैर्गृहे रुद्धा अप्यरक्षिता भवन्ति याः दुःशीलतयात्मानं रक्षन्ति । यास्तु धर्मज्ञतया आत्मानमात्मना रक्षन्त ता एवं सुरक्षिता भवन्ति । अतः धर्माधर्मफलस्वर्गनरकप्राप्त्याद्युपदेशेनासां संयमः कार्यः[1] ।

स्त्रीपुंसयोर्मिथुनीभावः सङ्ग्रहणम् । प्रथमसाहसदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं व्यासेन विवृतम्–

**त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् ।**
**अदेशकालभाषाभिर्निर्जने च परस्त्रियः ॥**
**कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् ।**
**प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।**
**प्रलोभनं चान्नपानैर्मध्यमं साहसं स्मृतम् ।**
**सहासनं विविक्ते तु परस्परमुपाश्रयः ॥**
**केशाकेशिग्रहश्चैव सम्यक् सङ्ग्रहणं स्मृतम् ।**

सङ्ग्रहणज्ञानपूर्वकत्वात्तत्कर्त्तुर्दण्डविधानस्य तज्ज्ञानोपायं तावदाह–

**पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ।**
**सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥**

**( याज्ञ. २।२८३ )**

---

1. मनु. ९।७-१३ ।

सङ्ग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः । परस्परकेशग्रहणपूर्विका क्रीडा केशाकेशि । परभार्यया सह केशाकेशिक्रीडनेनाभिनवैः कररुहदशनादिकृतव्रणैः रागकृतैर्लिङ्गैर्द्वयोः संप्रतिपत्या वा ज्ञात्वा सङ्ग्रहणे प्रवृत्तो ग्रहीतव्यः । 'परस्त्री'ग्रहणं नियुक्तावरुद्धादिव्युदासार्थम् । तथा च–

**नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।**
**अदेशकालसंभाषं सहैकासनमेव च ॥ २।२८४ ॥**

किं च, यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्ध्वरुहादिस्पर्शनं साभिलाष इवाचरति । तथा अदेशे निर्जने जनताकीर्णे वान्धकाराकुले अकाले संलापनं करोति । परभार्यया वा सहैकमञ्चकादौ रिरंसयेवावतिष्ठते च, सोऽपि सङ्ग्रहणे प्रवृत्तो ग्राह्यः । एतच्चाशङ्क्यमानदोषपुरुषविषयम्, इतरस्य तु न दोषः । यथाऽऽह **मनुः**

**यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।**
**न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रमः ॥ ८।३५५ ॥**

यः परस्त्रिया स्पृष्टः क्षमतेऽसावपि ग्राह्य इति तेनैवोक्तम्–

**स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा ।**
**परस्परस्यानुमते सर्वं सङ्ग्रहणं स्मृतम् ॥ ८।३५८ ॥**

यश्च मयेयं विदग्धाऽसकृद्रमितचरीति श्लाघया भुजंगजनसमक्षं ख्यापयत्यसावपि ग्राह्य इति तेनैवोक्तम् ।

**दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् ।**
**पूर्वं मयेयं भुक्तेति तच्च सङ्ग्रहणं स्मृतम् ॥**
**( नार. १२।६९ )**

सङ्ग्रहणं परस्त्रिया सह सम्बन्धः[1] । अपरार्केणोद्धृतो **बृहस्पतिः**

**पापमूलं सङ्ग्रहणं त्रिप्रकारं निबोधत ।**
**बलोपधिकृते द्वे तु तृतीयमनुरागजम् ॥**
**अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया ॥**
**प्रलपन्त्या च रहसि बलात्कारकृतं तु तत् ।**
**छद्मना गृहमानीय दत्त्वा वा मद्यकार्मणम् ॥**
**संयोगः क्रियते यत्र तत्तूपाधिकृतं विदुः ।**
**अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा ॥**
**कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥ पृ. ८५४ ।**

---

1. स्मृ. च. २ पृ. ८; व्य. प्र. ३९७; वि. र. ३७९; परा. मा. ३ पृ. २६२; बृह. २४।१-५ । तुलनीयम् Section 375 of the IPC, sec. 493, 497, 498.

तत्र बलात्कारकृतं स्त्रीसङ्ग्रहणं साहसान्तर्भूतत्वात् तत्प्रकरणे अधुनैव दर्शितम्, इति मदनरत्नः । एक शय्यासनं क्रीडा चुम्बनालिङ्गनं सङ्ग्रहणमिति बृहस्पतिः[1] । गन्धमाल्यानां धूपभूषणवाससां च प्रेषणं रहसि सम्भाषणमिति व्यासो बृहस्पतिश्च[2] । प्रथमसङ्ग्रहस्तु अपाङ्गप्रेक्षणं हास्यं दूतीसम्प्रेषणं भूषणवस्त्राणां स्पर्श इति[3] ।

**कात्यायनः**

**यानि कर्माण्यभिलषन् पुमान् वै कुरुते क्वचित् ।**
**आरम्भास्ते तु निर्दिष्टा गर्हिताः कामसाधकाः ॥**
**दूतोपचारयुक्तश्चेदवेलास्थानसंस्थितः ।**
**कण्ठकेशाम्बरग्राही कर्णनासाकरादिषु ॥**
**एकस्थानासनाहारः सङ्ग्रहो नवधा स्मृतः ।**
**न ग्राह्यो ह्यन्यथाकारी ग्राहको दण्डमर्हति ॥**
**गर्भपातो नखानां च दर्शनं गर्भधारणम् ।**
**धारणं परवस्त्राणामलङ्कारायुधस्य च ॥**
**एभिश्चिह्नैः सदा ज्ञेया व्यभिचाररताः स्त्रियः ।**
**गन्धमाल्याम्बरैश्चापि लेख्यसंप्रेषणैस्तथा ।**
**ग्राहकं सर्वमेव स्यादारम्भकरणं हि यत् ।**
**अस्मादकार्यसंसर्गाद्ग्रहं सङ्ग्रहणं विदुः ॥**
**कामी तु संस्थितो यत्र आरम्भे कामसाधके ।**
**तत्तस्माद्ग्रहणं तस्य प्राहुः सङ्ग्रहणं यतः ॥**

अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा वाच्यः[4] । स्वयं गृहे आगताया न सङ्ग्रहणम् । दुष्टान् दारान् क्लीबाक्षमयोर्दारान् दाराणामेवेच्छयोपगच्छन्न सङ्ग्रहणम् ।

**साहसं स्तेयञ्च**

सहो बलम्, तस्मिन् भवं साहसम् । सहसा बलेन बलवद्भिः प्रसह्य प्रतिज्ञातं यत्किञ्चित् कर्म क्रियते परस्वहरणादि, तत् साहसमिति । तत् साहसं त्रिविधम्—प्रथमम्, मध्यममुत्तममिति । फल्गुसारादिविषयभेदेन मनुसंहितासु शास्त्रान्तरेषु च तस्य त्रिप्रकारस्यापि लक्षणमुक्तम् । परपरिग्रहे फलमूलोदकशाकपुष्पादीनां क्षेत्रोपकरणस्य हलयुगवरत्रादेर्भङ्गः, क्षेत्रोपकरणस्य फलकन्दशाकादीनामाक्षेपो हरणम्,

---

1. २४।८ ।
2. बृह. २४।१० ।
3. बृह. २४।६ ।
4. आप. २।२६, १८-१९ ।

उदकादेश्च सेतोरवमर्दम्, सस्यादेश्चाहरणं सर्वेषां वा यथासम्भवम् । एतत्प्रथमं साहसमल्पद्रव्यापहारविषयम् । वस्त्राणां पशूनामजादीनां पक्वान्नस्य क्षीरोदेर्गृहोपकरणस्य घटपीठकोलूखलमुसलशूर्पादेः पूर्ववद् भङ्गादिकरणं मध्यमद्रव्यविषयान्मध्यमं साहसम् । व्यापादो मरणं विषशस्त्राग्निहस्तमुष्ट्यादिभिः । परदाराणाञ्चातिक्रमः । अन्यदपि येन म्रियते तस्यानुष्ठानं पुत्रमरणकथनाद्यनृतम्, तद्ध्युत्कृष्टविषयत्वादुत्तमसाहसम्[1] । यद्धान्यापहारादिकं कर्म द्रव्यस्वामिसमक्षं बलाद्धृतं तत्साहसं स्यादिति मनुः[2] ।

यत्र रक्षकसमक्षमेव ह्रियते असौ सान्वयोऽपहारः साहसम् । यत्र तु रक्षकासमक्षे परद्रव्यगृहीत्वापलापः क्रियते तत्स्तेयम् । साहसमन्वयवत्प्रसभकर्म । निरन्वये स्तेयमपव्ययने च[3] । अन्वयो रक्षणकालक्रमप्राप्तपालकनरनैरन्तर्यम्, तस्मिन्सति योऽपहारः स सान्वयोऽपहारः । यथाह **कात्यायनः**[4]

**सहसा यत्कृतं कर्म तत्साहसमुदाहृतम् ।**
**सान्वयस्त्वपहारो यः प्रसह्य हरणं च यत् ॥**
**साहसं च भवेदेवं स्तेयमुक्तविनिह्नवे ॥** ७९५-७९६ ।

आधिः पीडा धनापहरणादिद्वारा आक्रम्य प्रसह्य परस्य क्रियमाणः क्लेशः साहसरूपं स्तेयम् । छलेन क्रियमाणः आधिः केवलस्तेयमित्यर्थः । तदिदं साहसं चौर्यवाग्दण्डपारुष्यस्त्रीसङ्ग्रणेषु व्यासक्तमपि बलदर्पावष्टम्भोपाधितो भिद्यते इति दण्डातिरेकार्थं पृथगभिधानम् ।

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्[5] । साधारणस्य यथेष्टविनियोगानर्हत्वाविशेषेण परकीयस्य द्रव्यस्यापहरणं साहसम् । राजदण्डं जनाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणहरणपरदारप्रघर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम् । अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात्साहसत्वमिति । तस्य च दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणं नारदेन विवृतम्[6] ।

तस्करस्तेनादीनामुल्लेखः ऋग्वेदत एव[7] (ऋ. ७।२८।३) । पथ एकः पीपाय तस्करो यथाँ एष वेद निधीनाम् (ऋ. ८।२९।६); तनूत्यजेव तस्करा वनर्गू रशनाभि-

---

1. नारदीयमनुः १४।१-५ ।
2. स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् ॥ ८।३३२ ।
3. अर्थ. ३।१७।१-२ ।
4. सरस्वतीविलासे ७९५-७९६; स्मृ. चं. २।३१६; वि. र. पृ. २८७ ।
5. याज्ञ. २।२३० ।
6. नारद. १४।३-९ ।
7. ऋग्वे. १।१९१।५; १।५०।२; ४।३८।५; ६।१२।५; ६।२८।७; ८।६७।१४; ७।५५।३ ।

र्दशभिरभ्यधीताम् (ऋ. १०।४।६) । स्तेनाः गुप्तचौराः तस्कराः प्रकटचोराः अतिप्रकटा निर्भया ग्रामेषु बन्दिकराः मलिम्लुवः, इति विस्तृतं वाजसनेयीसंहितायाम्—

**ये जनेषु मलिम्लवः स्तेनासस्तकरा वने ।**
**ये कक्षेष्वधायवस्ताँस्ते दधामि जम्भयोः ॥ ११।७९ ॥**

प्रसह्य बलात् प्रज्ञातमादानं स्तेयमित्युच्यते । एष एव तस्य साहसस्य भेदो विशेषश्च । तदपि स्तेयं द्रव्यापेक्षं त्रिविधम्, ऊनमध्यमोत्तमम् । क्षुद्रद्रव्यापकर्षणाद्दल्पम्, मध्यमद्रव्यापकर्षणान्मध्यमम्, उत्तमद्रव्याणामपकर्षणादुत्तमम्[1] । द्विविधास्तस्कराः प्रकाशा अप्रकाशश्च। चौरादीनां मध्याद्ये तुलाप्रतिमानलोष्टचयादिना हिरण्यादिपण्यविक्रयिणस्तमनुचितेन गृह्णन्ति ते प्रकाशवञ्चकाः स्तेनाश्चौराः सद्विच्छेदादिना गुप्ताटव्यायाश्च परधनं गृह्णन्ति ते प्रच्छन्नवञ्चकाः । उत्कोचका ये कार्यिभ्यो धनं गृहीत्वा कार्यमयुक्तं कुर्वन्ति। औपधिका भयदर्शनाद्ये धनमुपजीवन्ति। वञ्चका ये सुवर्णादिद्रव्यं गृहीत्वा परद्रव्यप्रक्षेपेण वञ्चयन्ति । कितवा द्यूतसमाह्वयदेविनः । धनपुत्रलाभादिमङ्गलमादिश्य ये वर्तन्ते ते मङ्गलदेशवृत्ताः । भद्राः कल्याणाकारप्रच्छन्नपादा ये धनग्राहिणः । ईक्षणिका हस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीविनः । महामात्रा हस्तिशिक्षाजीविनः । चिकित्सकाश्चिकित्साजीविनः असम्यक्कारिण इति महामात्रचिकित्सकविशेषणम्। शिल्पोपचारयुक्ताश्चित्रलेखाद्युपायजीविनस्तेऽप्यनुजीव्यमानशिल्पोपायप्रोत्साहनेन धनं गृह्णन्ति । पण्यस्त्रियश्च परवशीकरणकुशला इत्येवमादीन्प्रकाशं लोकवञ्चकांश्चारैर्जानीयात् । अन्यानपि प्रच्छन्नचारिणः शूद्रादीन्ब्राह्मणादिवेषधारिणो धनग्राहिणो जानीयात् । तानुक्तान्, वञ्चकान् सभ्यैः प्रच्छन्नैस्तत्कर्मकारिभिर्वणिजां स्तेये वणिग्भिरेवमादिभिः पुरुषैरेतद्व्यतिरिक्तैः कार्पटकादिभिश्चारैरनेकस्थानस्थैर्ज्ञात्वा स्ववशान् कुर्यात्[2]—

**तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः ।**
**कुर्वीत शासनं राजा सम्यक्सारापराधतः॥**

(मनु. ९।२६२)

बृहस्पतिः

**प्रकाशश्चाप्रकाशश्च तस्करा द्विविधाः स्मृताः ।**
**प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधा ॥**
**नैगमा वैद्यकितवाः सद्योत्कोचकवञ्चकाः ।**
**दैवोत्पादविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः ॥**

---

1. नारदीय. १४।११-१२ ।
2. मनु. ९।२५६-२६२ ।

**अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः ।**
**प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥ २२।१-३ ॥**

तत्र ये क्रेयार्थं मानतुलाविशेषेण मुष्णन्ति द्रव्याणामागमस्थाननिर्गमनापेक्षार्थं कुर्वन्ति ते 'प्रकाशवञ्चकाः' वणिजकाः । 'उत्कोचकाः' ये कस्यचित्कार्येण कस्यचिद्राजामात्यादेः प्रवृत्ता ग्रहणातिकार्यसिद्धौ प्रवर्तन्ते । "औपधिकाः" छद्मव्यवहारिणः । 'कितवाः' धनग्रहणवञ्चकाः विप्रलम्भकाः । 'मङ्गलादेशवृत्ता' ये ह्युपदेशिका ज्योतिषिकादयः । 'सर्वस्य करवर्धने 'भद्रप्रेक्षणिकाः' प्रशंसिपुरुषलक्षणाः । 'महामात्राः' मन्त्रिपुरोहितादयो राजनिकटिकाः, ते "चेदसम्यक्कारिणः" 'शिल्पोपचारयुक्ताः' चित्रपत्रच्छेदरूपकारादयः । पण्ययोषितो निपुणाश्चोपचारेणासत्प्रीतिदर्शनेन ।'प्रच्छन्नवञ्चकाः' ये रात्रेरनुहरन्ति ते। 'स्तेना आटविका' विजने प्रदेशे वसन्ति (मेधातिथिः)[1]।

अत्र **राज्यस्य दायित्वं** महत्त्वपूर्णम् । तस्करग्रहणपूर्वकत्वाद्दण्डनस्य, ग्रहणस्य च ज्ञानपूर्वकत्वात्, ज्ञानोपायं तावदाह—

**ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।**
**पूर्वकर्मापराधी च तया चाशुद्धवासकः ॥**

**( याज्ञ. २।२६६ )**

यः 'चौरोऽयमिं'ति जनैर्विख्याप्यते असौ ग्राहकै राजपुरुषस्थानपालप्रभृतिभिर्ग्रहीतव्यः । अपहृतभाजनादिना चौर्यचिह्नेन नाशदेशादारभ्य चौरपदानुसरणेन वा ग्राह्यः । यश्च प्राक्ख्यातचौर्यः, अशुद्धोऽप्रज्ञातो वासः स्थानं यस्या सावशुद्धवासकः, सोऽपि ग्राह्यः । 'नाऽहं शूद्र' इत्येवंरूपेण, 'नाऽहं डित्थ' इत्येवंरूपेण, स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः । द्यूतपण्याङ्गनामद्यपानादिव्यसनेष्वतिप्रसक्तास्तथा "कुतस्त्योऽसि त्वम्"? इति चौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति, तर्ह्यसावपि ग्राह्यः । बहुवचनात्स्विन्नललाटादीनां ग्रहणम् । तथा ये निष्कारणं 'कि यदस्य धनम्, किं वाऽस्य गृहम्' इति पृच्छन्ति, ये च वेषान्तरधारणेनात्मानं ये गूहयित्वा चरन्ति, ये चायाभावेऽपि बहुव्ययकारिणः, ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामविज्ञातस्वामिकानां विक्रयकास्ते सर्वे चौरसंभावनया ग्राह्याः । एवं नानाविधचौरलिङ्गान्पुरुषान् गृहीत्वा एते चौराः किं वा साधव इति

---

1. बृह. २२।१-४; व्यास. २८७; वि. र. २८८; नारदी. प्रकीर्णक; ५६ ।
**व्यासः**

**साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः ।**
**अविज्ञातविशेषाश्च ज्ञेयाः प्रच्छन्नवञ्चकाः ॥**
**उत्क्षेपकः सन्धिभेत्ता पान्थमुट् ग्रन्थिभेदकः ।**
**स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥**

**( स्मृ. चं. २ पृ. ३१८; व्य. प्र. पृ. ३८७ )**

सम्यक् परीक्षेत, न पुनर्लिङ्गदर्शनमात्रेण चौरनिर्णयं कुर्यात् । अचौर्यस्यापि लोप्त्रादि-लिङ्गसम्बन्धसंभवात्[1] इति मिताक्षरा । एवं चौर्यशङ्कया गृहीतेनाऽत्मा संशोधनीय इत्याह–

**गृहीतः शङ्कया चौर्ये नात्मानं चेद्विशोधयेत् ।**
**दापयित्वा हृतं द्रव्यं चौरदण्डेन दण्डयेत् ॥**

**( याज्ञ. २।२६९ )**

यदि चौरशङ्कया गृहीतस्तन्निस्तरणार्थमात्मानं न शोधयति तर्हि वक्ष्यमाण-धनदापनवधादिदण्डभाग्भवेत्। अतो मानुषेण तदभावे दिव्येन वा आत्मा शोधनीयः। ननु 'नाहं चौरः' इति मिथ्योत्तरे कथं प्रमाणं संभवति? तस्याभावरूपत्वात् । उच्यते, –दिव्यस्य तावद्भावाभावगोचरत्वं 'रुच्या वाऽन्यतरः कुर्यात्' इत्यत्र प्रतिपादितम् । मानुषं पुनर्यद्यपि साक्षाच्छुद्धमिथ्योत्तरे न संभवति, तथापि कारणेन संसृष्टे भावरूपमिथ्याकारणसाधनमुखेनाभावमपि गोचरयत्येव । यथा 'नाशापहारकाले अहं देशान्तरस्थ' इत्यभियुक्तैर्भाविते चौर्याभावस्याऽपि अर्थात्सिद्धेः शुद्धिर्भवत्येवेति मिताक्षरा ।

यस्य राज्ञोऽमात्यादिसहितस्य पश्यत एव राष्ट्रादाक्रोशन्त्यः प्रजास्तस्करादिभिरपि ह्रियन्ते स मृत एव न तु जीवति । जीवनकार्याभावाज्जीवनमपि तस्य मरणमेव–

**विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः ।**
**संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥**

**( मनु. ७।१४३ )**

**नहि दण्डादृते शक्यः कर्त्तुं पापनिग्रहः ।**
**स्तेनानां पापबुद्धीनां निभृतं चरतां क्षितौ ॥**

**( मनु. ९।२६३ )**

चौर्याणां नियमने राजा परमुत्कृष्टं यत्नं कुर्यात् । यस्माच्चौरनिग्रहाद्राज्ञः ख्यातिर्निरुपद्रवतया राष्ट्रं च वृद्धिमेति । चौराणां नियमनेन यो नृपतिः साधूनामभयं ददाति स एव पूज्यः पूर्वेषां श्लाघ्यो भवति । सत्रं गवायनादिक्रतुविशेषः यद्यस्मात्सत्रमिव सत्रं तदभयदानाच्चौरनिग्रहरूपाभयदक्षिणं सर्वदैव तस्य बृद्धिमेति । अन्यद्धि नियतकालीनं नियतदक्षिणञ्च, एतत्सर्वकालीनमभयदक्षिणं चेति[2] ।

नारदो 'लोकवञ्चक' इति प्रयुक्तवान् । राज्ञः तेषां निग्रहणे विशेषदायित्वम् । कूटशासनकार्षापणविवर्णादिकाः, ज्योतिषनैमित्तिकेक्षणिकादयः । एवमादयः प्रकाशा लोकचोराः । तत्र यत्नः कर्त्तव्यः प्रतिमासतुलाद्यवेक्षणादिना[3] ।

---

1. याज्ञ. २।२६७-२६८ ।
2. मनु. ८।३०२, ३०३ ।
3. नारदीय. १८।५५ ।

प्रच्छन्नचोरास्तु बहिर्ग्रामादटव्याद्याश्रिताः ग्रामजनपदनगरपथ्यन्तराश्रिताश्च, सुप्तादीनां केचिच्छद्मना, प्रसह्य केचित् । तान् विदित्वा निगृह्णीयात् । देशग्रामघातका गृहघातकाश्च मार्गमुषः ग्रन्थिच्छेत्तार एवम्प्रकाराः प्रच्छन्नचोराः । तानेवम्प्रकारान् बुद्ध्वा कुशलैश्चोरैः तत्कर्मकारिभिश्चोरव्यञ्जनैः पुराणचोरैश्चानुसृत्य गृह्णीयात् । अमुत्रासत इति तैश्चारयित्वा गृह्णीयात् । अथवा चोरव्यञ्जनास्तैः सहैकार्थीभूताश्चोराः कस्मिंश्चिद् गृहे फल्गु द्रव्यं तत्र निधाय तान् गृहीत्वा मोषयित्वा प्रत्ययमुत्पाद्य पुनः ग्रामान्तरेषु मनुष्यान् गूढान् निधाय तत्र प्रवेश्य ग्राह्येयुः । सभादीनि नित्यं चारैः परीक्ष्याणि तेऽत्र चोरचिह्नैः ग्रहीतव्याः । तदन्वेषणतत्परैः परीक्ष्य एतैर्ग्रहीतव्यास्ते । तथाऽन्ये प्रणिहिताश्चोराः तैः संहत्य दर्शितप्रत्ययाः 'अन्तर्धानमन्त्रोऽयमनेन मन्त्रेणापहितो न दृश्यते मनुष्य' इति पूर्वं राज्ञा सङ्केतिते गृहे दिवस एव प्रविश्य भाजनादि गृहीत्वा निष्क्रामन्ति । गृहजनश्च तूष्णीमास्ते । ततोऽपरस्मिन् गृहे गूढमनुष्ये प्रवेश्य ते तथोत्पादितप्रत्ययाः चित्रवादिनः 'इदं चेदं चास्मिन् गृहेऽस्ति पर्याप्तमेतदस्माकमि'ति प्रोत्साह्य प्रवेश्य ग्राहयेयुः ।

श्रद्धेयवाक्याः पुराणचोराः तैः सहैकीभूता भोजनं चोद्दिश्य पानं वा 'यूयं निमन्त्रिता आगच्छतास्मद्गृहे भोक्तुमि'ति दारकस्य बहुदण्डनमिति निमित्तेषूद्दिश्य, महादानं वा अहमस्मिन् देशे वस्तुमुत्सहे देशान्तरं यास्यामि यन्ममास्ति तद् युष्मभ्यं दास्यामि अमनुष्यायां वेलायामागच्छतेति, समाजं वा पुत्रं वा पश्यामः उत्सवं वेति, रात्रावागच्छत अदो गृहं तन्मुष्याम इति, एवमेषां समागमं कारयेयुः । समागतान् ग्राहयेयुः ।

अचोरा अपि यदृच्छया चोरैः समागता दृश्यन्ते । तान् विचार्य राजा मुञ्चेत् । न तावता अविचार्यैव शासितव्याः, चोरैः सह दृष्टा इत्येतावता नाविचार्य शासितव्याः । तथा गृहीतान् चोरान् ताडयित्वा लगुटादिना, गर्दभादिना च भ्रामायित्वा, अवघुष्य च सर्वत्र चतुष्पथचत्वरशृङ्गाटकेषु एवंकर्माण इति छेदनताडनदहनादिभिर्मारयितव्यास्ते अन्ये मैवं कुरु, इति[1] । अत्र आपस्तम्बः–**क्षेमकृद्राजा यस्य विषये ग्रामे अरण्ये वा तस्करभयं न विद्यते** (२।१०।२५।१५) । राज्ञ आदर्शसाफल्यम्–'**न मे स्तेनो जनपदे**' इति घोषणायाम् । अन्यस्थितौ–

**अशासंस्तस्करान् यस्तु बलिं गृह्णाति पार्थिवः ।**
**तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥**

**(मनु. ९।२५४)**

**पापास्तु यस्य राष्ट्राद् वै वर्धन्ते दस्यवः सदा ।**
**तत्पापमतिवृद्धं हि राज्ञो मूलं निकृन्तति ॥ हारीतः ॥**

---

1. नारदीय. १८।५५-६५ ।

**द्यूतसमाह्वयः**

अक्षशलाकादिभिरप्राणैर्यत्क्रियते तल्लोके द्यूतं कथ्यते । यः पुनः प्राणिभिर्मेष-कुक्कुटादिभिः पणपूर्वकं क्रियते स समाह्वयो ज्ञेयः । एते कितवादयो गूढचौरा राष्ट्रे वसन्तो नित्यं वञ्चनात्मकक्रियया सज्जनान्पीडयन्ति[1] । नेदानीमेव परं किन्तु पूर्वस्मिन्नपि कल्पे द्यूतमेतदतिशयेन वैरकरं दृष्टम् । अतः प्राज्ञः परिहासार्थमपि तन्न सेवेत[2] ।

द्यूतसमाह्वयस्वरूपं नारदेनाभिहितम्–

**अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।**
**पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥ १७।१ ।**

अक्षाः पाशकाः, बध्नश्चर्मपट्टिका, शलाका दन्तादिमय्यो दीर्घचतुरस्राः, आद्य-ग्रहणाच्च तुरङ्गादिक्रीडासाधनं करितुरङ्गरथादिकं गृह्यते । तैरप्राणिभिर्यद्देवनं क्रीडा पणपूर्विका क्रियते । तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः 'च' शब्दान्मल्ल-मेषमहिषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते, तदुभयं यथाक्रमेण द्यूत-समाह्वयाख्यं विवादपदम् । द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । तत्र द्यूतसभाधि कारिणो वृत्तिमाह–

**ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।**
**गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥**
**( याज्ञ. २।१९९ )**

परस्पर संप्रतिपत्या कितवपरिकल्पितः पणो ग्लह इत्युच्यते । तत्र ग्लहस्तदाश्रया शतिका शतपरिमिता तदधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः, तस्माद्धूर्तकित-वात्पञ्चकं शतमात्मवृत्त्यर्थं सभिको गृह्णीयात् । पञ्चपणा आयो यस्मिन् शते तत् पञ्चकं शतम् । जितग्लहस्य विंशतितमं भागं गृह्णीयात् । सभाकितवनिवासार्था यस्यास्त्यसौ सभिकः । कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी सभा-पतिरुच्यते । इतरस्मात्पुनरपि पूर्णशतिकवृद्धेः कितवाद्दशकं शतं जितद्रव्यस्य दशमं भागं गृह्णीयात् ।

द्यूतनिन्दा तु प्रसिद्धैव, यथाऽऽहकात्यायनः

**द्यूतं नैव तु सेवेत क्रोधलोभविवर्धनम् ।**
**असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥**
**ध्रुवं द्यूतात्कलिर्यस्मात् विषं सर्पमुखादिव ।**
**तस्माद्राजा निवर्तेत विषये व्यसनं हि तत् ॥**

---

1. मनु. ९।२२३-२२६ ।
2. मनु. ९।२२७ ।

**वर्तेत चेत्प्रकाशं तु द्वारावस्थिततोरणम् ।**
**असंमोहार्थमार्याणां कारयेत्तत्करप्रदम् ॥**

परञ्च, राज्ञाश्रये द्यूतविधानमङ्गीकृतम्–

**द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।**
**तत्प्रवर्तितमन्यैश्च राजभागसमन्वितम् ॥**
**सभिकाधिष्ठितं कार्यं तस्करज्ञापकं हि तत् ।**

द्यूतं तावद्राज्ञा सर्वथा निवर्तनीयम् । यदि तु तस्करज्ञापनाय क्रियते तदा उक्तक्रमेणेतिविवादरत्नाकरः । एकस्मिन् प्रदेशे राजकीयचारपुरुषाद्यधिष्ठितं तस्करादि प्रजाकण्टकपरिज्ञानार्थमधर्मरूपमपि धर्मान्तरोपायतया महतेऽभ्युदयाय संपद्यत इति विश्वरूपः (याज्ञ. २।२०३) । द्यूतपराजितकितवानां तु बन्धनादिना पणग्राहको भवेत् । पणग्रहणात्प्रागेव स्वद्रव्यं जेत्रे नृपाय च यथाभागं दद्यात् सभिकः–**सभिको ग्राहकस्तस्य दद्याज्जेत्रे नृपाय च ( बृह. २७।३ ) ।**

सभिको देवयिता । स कारयेत् । तन्निमित्तं च देयं राजकुले । जेतुश्च तद्-वृद्धिर्लाभः । शताद् दशकं द्यूतकरणनिमित्ता वृद्धिः । द्विरभ्यस्ता एकरूपास्तृतीयोऽन्यः सत्त्वस्य । तस्मिन् पतिते स जयति, इतरो जितो भवति तं पणम् । संशये कितवेष्वेव तिष्ठेयुः, नान्यत्र राजकुलादौ । त एव प्रमाणम् । व्यवहारदर्शने त एव कितवाः साक्षिणः । न तत्र साक्षिपरीक्षा । असम्मतौ दानग्रहणं नान्यं द्यूतमण्डल-माश्रयेद्, अन्यसभिकमण्डले न दीव्येत् । न च सभिकं दापयन्तं रोधादिना प्रति-हन्यात् । न किञ्चित्कुर्यात्, यथेष्टं दापयितुं लभेत । कूटाक्षैर्देवनशीलानधर्मपुरुषान् कण्ठे मालामक्षैर्ग्रथितामासज्ज्य द्यूतमण्डलात् देवनस्थानान्निर्वासयेत्[1] ।

**याज्ञवल्क्यः**

**निजधर्माविरोधेन यस्तु सामयिको भवेत् ।**
**सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ २।१८६ ॥**

तदतिक्रमादौ दण्डमाह–

**गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।**
**सर्वस्वहरणं कृत्वा तं राष्ट्राद् विप्रवासयेत् ॥ २।१८७ ॥**

यः पुनर्गणस्य ग्रामादिजनसमूहस्य संबन्धि साधारणं द्रव्यमपहरति, संवित् समयस्तां समूहकृतां राजकृतां यो लङ्घयेत्, तदीयं सर्वं धनमपहृत्य स्वराष्ट्रात् विप्रवासयेत् । गणिनां मध्ये ये समूहहितवादनशीलास्तद्वचनमितरैर्गणाना-मन्तर्गतैरनुसरणीयम् । यस्तु गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी स राज्ञा

---

1. नारदीयमनु. १७।१-६ ।

प्रथमसाहसं दण्डनीयः। समूहकार्यनिर्वृत्त्यर्थं स्वपार्श्वं प्राप्तान् गणिनो निवर्तितात्मीय-प्रयोजनान् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत्।

पूगव्राते चान्योन्यसमुत्सृज्य समरे न गन्तव्यमित्यादयः सन्ति समयाः गणे तु पञ्चमेऽह्नि पञ्चमे वाब्दे कर्णवेधः कर्त्तव्य इत्येवमादिरस्ति समयः। गणादिष्वत्र आदिशब्देन ब्रह्मपुरीमहाजनः परिगृहीतः। तत्र गुरुदक्षिणाद्यर्थमागतो माननीय इत्यादिसमयोऽस्ति। दुर्गे तु धान्यादिकं गृहीत्वा अन्यत्र यास्यतो न तद्विक्रेयम् इत्यस्ति समयः। जनपदे तु क्वचिद्विक्रेतृहस्ते दशबन्धग्रहणं कार्यं क्वचित्क्रेतृहस्ते इत्यादिकोऽस्त्यनेकविधः समयः। जनपदे तथेत्यत्र तथा शब्दोऽनुक्तग्रामघोषपुरादीनां प्रदर्शनार्थः। तत्र न गोप्रचारस्थाने खातव्यमित्यादिकोऽस्ति ग्रामे समयः। आभीरस्त्रीपुरुषव्यभिचारे न दण्ड इत्यादिकोऽस्ति घोषे समयः[1]।

**ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।**
**गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम्॥**
**स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृतम्।**
**जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी॥**

**(याज्ञ. २।१९९-२००)**

गलितं निर्गलितं यत् सभिकहस्तात् पराजितानां देवनार्थे द्रव्यम्, यच्च द्यूतोप-करमक्षादि, तद् 'गलत्सभिकं' द्रव्यम्, तदर्था वृद्धिः 'गलत्सभिकवृद्धिः'–विश्वरूपः। हलायुधस्तु शतिका शतपरिमाणा यस्य वृद्धिः स शतिकवृद्धिः। येन शतमेकं जितमिति यावत् तस्मात् शतं गृह्णीयादित्यर्थः–विवादरत्नाकरः। किञ्च जितं यत् कितवैः तत्पराजितेभ्यः सभिक उद्ग्राहयेत्–विश्वरूपः। सभिको धूर्तकितवो राज्ञा रक्षितो राज्ञे यथा कृतभागं दद्यात् जितां चोद्ग्राहयेत् जेत्रे सत्यवाक् क्षमी सन् दद्यात्। सत्यवचा इति दृष्टमूलभूतयाज्ञवल्क्यमिताक्षरयोर्दृष्टम्। तत्र जितं सत्यवचाश्च जेत्रे दद्यादित्यर्थः इति फलतो न विशेषः–विवादरत्नाकरः।

**संविद्व्यतिक्रमः समस्यानपाकर्म वा**

पाखण्डनैगमादीनां स्थितिः समय उच्यते[2]। इति पारिभाषिकधर्मेण व्यवस्थानं समयः, तस्यानपाकर्माव्यतिक्रमः परिपालनं तद् व्यतिक्रम्यमाणं विवादपदं भवति। तदुपक्रमार्थं किञ्चिदाह–

**राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।**
**त्रैविद्यं वृत्तिमब्रूयात् स्वधर्मः पाल्यतामिति॥**

**(याज्ञ. २।१८५)**

1. स्मृ. चं. २ पृ. २२३।
2. नारद. १३।१।

नारदः

**दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम् ।**
**प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥**

यल्लोभादिदोषवत्करणं श्रुतिस्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितं तद्बहुकालप्रवृत्तमपि राज्ञा निवर्चनीयम् ।

**धार्मिकापराधाः**

द्विजलिङ्गिनः शूद्राः, कितवाः, कुशीलवाः, वेदविद्विषः, श्रुतिस्मृतिबाह्यव्रतधारिणः, अनापदि परकर्मजीविनः, शौण्डिकाः, मद्यकराः मनुष्या धर्मविरुद्धाचरणत्वादपराधिनः । एते राष्ट्रे वसन्तो नित्यं वञ्चनात्मकक्रियया सज्जनान् पीडयन्ति[1] । यः स्नानदानादिना जनोपकारकं तडागं सेतुभेदादिना विनाशयन्ति तेऽपराधिजनाः सन्ति । यत्तु संक्रमध्वजयष्टिदेवताप्रतिमाभेदिनः सोऽस्मादेव देवतागारभेदकस्य वधविधानान्मृन्मयपूजितोज्झितदेवताप्रतिमाविषयोऽत्र द्रष्टव्यः[2] । अभिचारहोमादिषु शास्त्रीयेषु मारणोपायेषु लौकिकेषु च मूलनिखननपदपांशुग्रहणादिषु कृतेष्वनुत्पन्नमरणफलेषु द्विशतपणग्रहणरूपो दण्डः कर्त्तव्यः । मरणे तु मानुषमारणदण्डः । एवं मातृपितृभार्यादिव्यतिरिक्तैरसत्यैर्व्यामोह्य धनग्रहणाद्यर्थं वशीकरणे तथा कृत्यासूच्चाटनापाटवादिहेतुषु क्रियमाणासु नानाप्रकारासु द्विशतपणदण्ड एव कर्त्तव्यः[3] । पण्यस्त्रियश्च परवशीकरणकुशला इत्येवमादीन्प्रकाशं लोकवञ्चकांश्चारैर्जानीयात् । अन्यानपि प्रच्छन्नचारिणः शूद्रादीन्ब्राह्मणादिवेषधारिणो धनग्राहिणो जानीयात्[4] ।

कृत्याभिचाराभ्यां यत्परमापादयेत्तदापादयितव्यः । कामं भार्यायामनिच्छन्त्यां कन्यायां वा दारार्थिनां भर्तरि भार्याया वा संवननकरणम् । अन्यथा हिंसायां मध्यमः साहसदण्डः (कौ. ४।१३।३९-४१) । अत्र **याज्ञवल्क्यः**

**स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधावकः ।**
**अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशेत् ॥**
**शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।**
**अयुक्तं शपथं कुर्वन्नयोग्यो योग्यकर्मकृत् ॥**
**वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।**
**साधारणस्यापलापी दासीगर्भविनाशकृत् ॥**

1. मनु. ९।२२५-२२६ ।
2. मनु. ९।२७९-२८० ।
3. मनु. ९।२९० ।
4. मनु. ९।२६० ।

पितृपुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः।
एषामपतितान्योन्यत्यागी च शतदण्डभाक्॥ २।२३४-२३७।

**स्त्रीपुंयोगः**

यद्यपि स्त्रीपुंसयोः अन्योन्यमर्थिभावेन राजसभायां व्यवहारो निषिद्धः तथापि प्रत्यक्षेण कर्णाकर्णिकयाऽपि ज्ञाते परस्परविहितवृत्तिव्यतिक्रमे दण्डादिना जायापती निजधर्ममात्रे राज्ञा स्थापनीयौ, अन्यथा दण्डनीयौ, इति विबोधयितुं पुंस्त्रीधर्मः प्रदर्श्यते[1]। विवाहसंस्कारविवाह्याविवाह्यविवाहस्वरूपपरिगणनशुल्कादिविभागाः स्त्री-पुंसां यस्मिन् कीर्त्यन्ते स्त्रीपुंसंयोग इत्येवसंज्ञकं तद् विवादपदम्[2]।

दम्पत्योः परस्परधर्मव्यतिक्रमे सत्यन्यतरज्ञाने दण्डेनापि स्वधर्मव्यवस्थानं राज्ञा कर्त्तव्यम्। स्वीयैर्भर्त्रादिभिः सदा स्त्रियः स्वाधीनाः कार्याः अनिषिद्धेष्वपि रूपरसादि-विषयेषु प्रसक्ता अपि आत्मवशाः कार्याः। पिता विवाहात्पूर्वं स्त्रियं रक्षेत्पश्चाद्भर्ता तदभावे पुत्राः। तस्मान्न स्त्री कस्याञ्चिदप्यवस्थायां स्वातन्त्र्यं भजेत्। भर्ता रक्षति यौवने। अभर्तृपुत्रायाः संनिहितायाः पित्रादिभिरपि रक्षणात्। प्रदानकाले पिता तामददन् गर्ह्यो भवति। पतिश्च ऋतुकाले पतीमगच्छन् गर्हनीयो भवति। पत्यौ मातरमरक्षन् पुत्रो निन्द्यः स्यात्। स्वल्पेभ्योऽपि दुःसङ्गेभ्यो दौःशील्यसंपादकेभ्यो विशेषेण स्त्रियो रक्षणीयाः किं पुनर्महद्भ्यः। यस्मादुपेक्षितरक्षणाद्द्वयोः पितृ-भर्तृगणयोः सन्तापं दापयेयुः। सर्वेषां ब्राह्मणादिवर्णानां भार्यारक्षणलक्षणं धर्मं सर्वधर्मेभ्य उत्कृष्टं जानन्तोऽन्धपङ्ग्वादयोऽपि भार्यां रक्षितुं यतेरन्[3]।

एकव्रतस्कन्नभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति। जीवति जारजः कुण्डो मृते भर्तरि गोलकः। तस्माद्व्रतोपघाताज्जायां रक्षेत्। जायानाशे कुलनाशः। तन्तुनाशे देवपितृयज्ञनाशः। धर्मनाशे आत्मनाशः। आत्मनाशे सर्वनाशः।

'रक्षा' नाम अनर्थप्रतिघातः। अनर्थस्तु अनाचारवृत्तातिक्रमेणाप्रवृत्तिपरेण च अन्यायतो धनहरणादिना परिभवः। तस्य प्रतिघातो निवारणम्। तत् पित्रादिभिः कर्त्तव्यम्। जीवत्यपि भर्तरि पितुः पुत्रस्य चाधिकारः। सर्व एते सर्वदा तत्संरक्षणं कुर्युः। अन्यदेव अस्वातन्त्र्यमन्या एव रक्षा। अन्यतन्त्राया अपि शक्योऽनर्थः प्रतिहन्तुम्। 'न स्त्री स्वातन्त्र्यमर्हति'—नानेन सर्वक्रियाविषयमस्वातन्त्र्यं विधीयते। किं तर्हि, नास्वातन्त्राऽन्यमनस्का स्वात्मसंरक्षणाय प्रभवति शक्तिविकलत्वात्स्वतः। न केवलं शास्त्रोपदेशादेव स्त्रीरक्षा कर्त्तव्या, यावदिमानि बहूनि प्रयोजनानि।

---

1. वि. र., ४०९।
2. नारदी. १२।१।
3. मनु. ९।१-६; याज्ञ. १।८५; नारद. १६।३०।

तस्माद्रक्षेत भार्यां मा स्म वर्णसङ्कराभिभवोऽस्त्वित्याह । अप्रमत्तो रक्ष तन्तुमेव न वादधे क्षेत्रे परबीजानवाप्सुः भार्यां रक्षन्ति कौमारीं परचेतसः, इति विवादरत्नाकरः (४११)।

नैताः कननीयरूपं विचारयन्ति । न चासां यौवनादिके वयस्यादरो भवति । किन्तु सुरूपं कुरूपं वा पुमानित्येतावतैव तमुपभुञ्जते । पुंसो दर्शने संभोगाद्यभिलाषशीलत्वात्, चित्तस्थैर्याभावात्, स्वभावतः स्नेहरहितत्वाच्च एता यत्नेनाऽपि लोके रक्षिताः सत्यो व्यभिचाराश्रयणेन भर्तृषु विक्रियां गच्छन्ति[1] ।

शयनोपवेशनालङ्करणशीलत्वं कामक्रोधानार्जवपरहिंसाकुत्सिताचारत्वानि सर्गादौ मनुः स्त्रीभ्यः कल्पितवान् । जातकर्मादिक्रिया स्त्रीणां मन्त्रैर्नास्तीत्येषा शास्त्रमर्यादा व्यवस्थिता । ततश्च मन्त्रवत्संस्कारगणाभावान्न निष्पापान्तःकरणाः इन्द्रियं प्रमाणम्, धर्मप्रमाणश्रुतिस्मृतिंरहित्वान्न धर्मज्ञाः । अमन्त्राः पापापनोदनमन्त्रजपरहितत्वाज्जातेऽपि पापे तन्निर्णेजनाक्षमाः । अनृतवदशुभाः स्त्रिय इति शास्त्रमर्यादा ।

व्यभिचारशीलत्वं स्त्रीणां स्वभावस्तत्र श्रुतिं प्रमाणतयोपन्यस्यति । तथा बह्वयः श्रुतयो बहूनि श्रुतिवाक्यानि 'न चैतद्विद्मो ब्राह्मणाः स्मोऽब्राह्मणाः वा' इत्येवमादीनि निगमेषु स्वालक्षण्यं व्यभिचारशीलत्वम् । तासां श्रुतीनां मध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्तभूतास्ताः श्रुती शृणुत ।

कश्चित्पुत्रो मातुर्मानसव्यभिचारमवगम्य ब्रूते । मनोवाक्कार्यकर्मभिः पतिव्यतिरिक्तं पुरुषं या न कामयते सा पतिव्रता ततोऽन्याऽपतिव्रता[2] । निरिन्द्रिया ह्यदायाश्च स्त्रिया मता इति श्रुतिः[3] । अत्र मनुः

**प्रजननार्थं महाभागाः पूजार्हा गृहदीप्तयः ।**
**स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥**
**उत्पादनमपत्यस्य जातस्य परिपालनम् ।**
**प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥**
**अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।**
**दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥**
**पतिं या नाभिचरति मनो वाग्देहसंयता ।**
**सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥**
**व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।**
**सृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥ ९।२६-३० ॥**

---

1. मनु. ९।१४-१५ ।
2. मनु. ९।१७-२१ ।
3. बौ. ध. सू. २।३।४७ ।

पतिर्विषयसंजातद्वेषां स्त्रियं वर्षं यावत्प्रतीक्षेत । तत ऊर्ध्वमपि द्विषन्तीं स्वदत्तमलङ्कारादि धनं हृत्वा नोपगच्छेत् । ग्रासाच्छादनमात्रं तु देयमेव । या स्त्री द्यूतादिप्रमादवन्तं मदजनकपानादिना मत्तं व्याधितं वा शुश्रूषाद्यकरणेनावजानाति सा विगतालङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्या । वातादिक्षोभप्रकृतिस्थम्, पतितम्, क्लीबम्, अबीजं बाध्यरेतस्त्वादिना बीजरहितम्, कुष्ठाद्युपेतं च पतिमपरिचरन्त्यास्त्यागो न करणीयो न च धनग्रहणं करणीयम्[1] । प्रियंवदाम्, कुशलाम्, अव्यभिचारिणीम्, पुत्रवतीं त्यजन्नन्यत्र सक्तो राज्ञा बहुतरेणानुरूपेण दण्डेनानुशिष्य तस्यामेव व्यवस्थाप्यः[2] । अत्र **याज्ञवल्क्यः**

**आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् ।**
**त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ १।७६ ॥**

निर्दोषां त्यागहेतुभूतदोषरहिताम् (व्य. प्र. ५२०) । यस्त्यजति अधिविन्दति स राज्ञा स्वधनस्य तृतीयांशं दाप्यः । निर्धनस्तु भरणं ग्रासाच्छादनादि दाप्यः (मिता.) । शास्त्रोक्तत्यागहेतून् विनैव यो मोहादिना स्वस्त्रियं त्यजति तस्यान्येन स्वदारमोचिनः तन्मोचनद्वारेण तया सह विहितश्रौतस्मार्तादिधर्मस्य तस्यामुत्पाद्यमानसन्तानस्य च त्यक्तुर्निष्कृतिर्नास्तीत्यर्थः । इह लोके तस्य राज्ञा चोरवद्दण्डनं कार्यम्[3] 'गृहं पत्नी न ह्यपत्नीकं विद्यात्' तस्मात्पत्नी गृहाचारपरा स्यात् ।

**स्वामिपालविवादः**

दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये पालस्य गर्हणीयता । रात्रौ पुनः पालप्रत्यर्पितानां स्वामिगृहस्थितानां स्वामिनो दोषः । अन्यथा यदि रात्रौ अपि पालहस्तगता भवन्ति तत्र दोष उत्पन्ने पाल एव गर्हणीयतां प्राप्नोति । यो गोपालाख्यो भृत्यः क्षीरेण न भक्तादिना स्वस्वाम्यनुज्ञया गोभ्यः श्रेष्ठामेकां गां भृत्यर्थं दुह्यात्सा भक्तादिरहिते गोपाले भृतिः स्यात् । एवं चैकगवीक्षीरदानेन दश गाः पालयेत् । नष्टं दृष्टिपथातीतम्, कृमिभिर्नाशितम्, श्वभिः खादितं हतम्, विवरादिपातमृतम् । प्रदर्शनं चैतत् पालसम्बन्धिरक्षकाख्यपुरुषव्यापाररहितं मृतं पलायितं गवादि, पशुपाल एव तु स्वामिने दद्यात् । चौरैः पुनः पटहादिविघुष्य हृतं पालो दातुं नार्हति । विघुष्येति चौराणां बहुत्वं प्रबलत्वकथनपरम् । सन्निहिते देशे हरणकालान्तरमेवात्मीयस्वामिनः कथयति ।

---

1. मनु. ९।७७-७९ ।
2. नारदीय. १२।९७ ।
3. स्मृ. चं. पृ. ५७६ ।

स्वयं मृतेषु पशुषु कर्णचर्मलाङ्गूलप्रवालान्नाभेरधोभागस्नायुरोचनाः स्वामिनां दद्यात् । अन्यानि च चिह्नानि शृङ्गखुरादीनि दर्शयेत् । अजाश्चाविकाश्चाजाविकम्, तस्मिन्नजाविके वृकैः परिवृत्ते सति पालेऽनागच्छति यामजामेडकां वा वने वृको हन्यात्स पालस्य दोषः स्यात् । तासामजाविकानां पालेन नियमितानां संघीभूय वने चरन्तीनां यत्नाद्यपि कश्चित्कुतश्चिदुत्प्लुत्यालक्षितो यां कांश्चिद् हन्यात् न पालस्तत्र दोषभाक् ।

चतुर्हस्तो धनुः । शम्या यष्टिस्तस्याः पातः प्रक्षेपो ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि, त्रीन्वा यष्टिप्रक्षेपान्यावत्पशुप्रचारार्थं सस्यवपनादिसंरोधपरिहारः कार्यः । नगरसमीपे पुनरयं त्रिगुणः कर्त्तव्यः । तस्मिन्परिहारस्थाने यदि केनचिददत्ता-वृतिकं धान्यमुप्यते तच्चेत्पशवो भक्षेयुस्तत्र पशुपालानां नृपो दण्डं न कुर्यात् । तत्र परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमयीं तथाविधामुच्छ्रितां कुर्यात् । यामपरपार्श्वे उष्ट्रो न विलोकयेत्, तस्यां च यत्किञ्चिच्छिद्रं श्वसूकरमुखप्रवेशयोग्यं तत्सर्वं मा वृणुयात् ।

वर्त्मसमीपग्रामसमीपवर्तिनि वा परिहारस्थे क्षेत्रे दत्तवृत्तौ सपालः पशुः पालानिवारितो द्वारादिना कथञ्चित्प्रविष्टो यदा भक्षयति तदा पणशतं दण्ड्यः । पशोश्च दण्डासम्भवात् पाल एव दण्ड्यः । विपालान् पुनर्भक्षणप्रवृत्तान् क्षेत्ररक्षको निवारयेत् । वर्त्मग्रामव्यतिरिक्तेषु पशुर्भक्ष्ययन्सपादं पणं दण्डमर्हति । अत्रापि पाल एव दण्ड्यः । सर्वत्र क्षेत्रे पशुभक्षितं फलं स्वामिने पालेन स्वामिना वा यथापराधं दातव्यमिति निश्चयः ।

प्रसूतां गामनिर्गतदशाहां तथा च चक्रशूलाङ्कितोत्सष्टवृषान् हरिहरादिप्रतिमा-संबन्धिपशून् पालसहितान् पालरहितान् वा सस्यभक्षणप्रवृत्तान् मनुरदण्ड्यानाह । उत्सृष्टवृषाणामपि गर्भार्थं गोकुले पालैर्धारणात् सपालत्वसंभवः । क्षेत्रकर्षक-स्यात्मपशुसस्यभक्षणेऽयथाकालं वपनादौ वापराधे सति यावतो राजभागस्य तेन हानिः कृता ततो दशगुणदण्डः स्यात् । क्षेत्रिकाविदिते भृत्यानामुक्तापराधे क्षेत्रिकस्यैव दशगुणार्धदण्डः[1] ।

**क्रीत्वानुशयः**

तत्र नारदः ·

**क्रीत्वा मूल्येन यः पण्यं क्रीतं न बहु मन्यते ।**
**क्रीतानुशय इत्येद् विवादपदमुच्यते ॥ १२।१ ।**

---

1. मनु. ८।२२९-२४३; नारद. ९।१०-१७; बृह. १६।१४; आप. ध. सू. २।२८।२-४; याज्ञ. २।१६४, १६५; विष्णु. ५।१३७-१३९ ।

विक्रयार्थं यद्द्रव्यं तत् 'पण्यम्' यद्विक्रीय तदुत्पन्नेन द्रव्यान्तरक्रयादिना पुरुषो व्यवहरति जीविकाधनमार्जयितुम्—तथा पणभूमौ प्रसारितमप्रसारितञ्च भवति वणिजाम्। तत्रेह 'पण्य' ग्रहणात् कश्चिद् विशेषो विवक्षितः। इतरथा क्रीत्वा मूल्येन इत्येतावदपेक्ष्यम्। 'कः पुनरसौ विशेषः'? उच्यते। यत्क्रीतमपि पण्यत्वमजहद् वणिग्भिः विक्रीयते। तर्हि विक्रयार्थमेव क्रीणन्ति। तेषां वणिजमितरेतरं विक्रीणतां च नारदीयो विधिः।

क्रीत्वा विक्रीय वा किञ्चिद्द्रव्यं विनश्वररूपं स्थिरार्थं भूमिताम्रपट्टादि यस्य लोके पश्चात्तपो जायते न साधु मया क्रीतमिति स क्रीतं दशाहमध्ये प्रत्यर्पयेत्। विक्रीतं वा गृह्णीयात्। दशादूर्ध्वं क्रीतं न त्यजेत्। नापि विक्रीतं विक्रयिको बलेन दापयेत्। विक्रीतं बलेन गृह्णन् परित्यजन् राजा षट् शतानि पणान् दण्ड्यः।

उन्मादादिदोषानकथयित्वा दोषवतीं कन्यां वराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिं पणान् दण्डं कुर्यात्। नेयं कन्या क्षतयोनिरियमिति यो मनुष्यो द्वेषेण ब्रूयात् तस्या उक्तदोषविभावयन् पणशतं राजा दण्डं प्रकल्पयेत्। 'अर्यमणं नु देवं कन्या अग्निमयक्षत' इत्येवमादयो वैवाहिका मनुष्याणां मन्त्राः कन्याशब्दश्रवणात् कन्यास्वेव व्यवस्थिताः। नाकन्याविषये क्वचिच्छास्त्रे धर्मविवाह-सिद्धये व्यवस्थिता असमवेतार्थत्वात्। अत एवाह। ताः क्षतयोनयो वैवाहिकमन्त्रैः संस्क्रियमाणा अपि यस्मादपगतधर्मविवाहादिशालिन्यो भवन्ति। नासौ धर्म्यो विवाह इत्यर्थः। न तु क्षतयोनेर्वैवाहिकमन्त्रहोमादिनिषेधकमिति। अतः सामान्यविशेष-न्यायादितरविषयोऽयं क्षतयोनिविवाहस्याधर्मत्वोपदेशः।

वैवाहिका मन्त्रा निश्चितं भार्यात्वे निमित्तम्, मन्त्रैर्यथाशास्त्रप्रयुक्तैर्भार्यात्वेन निष्पत्तेः। तेषां तु मन्त्राणां "सखा सप्तपदीभव" इति मन्त्रेण कल्पनया सप्तमे पदे दत्ते भार्यात्वनिष्पत्तेः शास्त्रज्ञैर्निष्पत्तिर्विज्ञेया। एवञ्च सप्तपदीदानात्प्राग्भार्यात्वा-निष्पत्तेः सत्यनुशये जह्यान्नोर्ध्वम्। न केवलं क्रय एव अन्यत्राऽपि यस्मिन् यस्मिन् संबन्धित्वेनादौ कार्ये यस्य पश्चात्तापो जायते तमनेन दशाहविधिना धर्मादनपेते मार्गे नृपः स्थापयेत्[1]।

अत्र **नारदविधिः**। क्रेता क्रीत्वा मूल्यं दत्त्वा यदि दुष्क्रीतम् इत्यनुशोचति तस्मिन्नेवाहनि प्रतिदेयमविकृतं द्रव्यम्। विकृतं नेत्येतस्मादेव गम्यते। द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशं त्रिंशद्भागमावहेद् दद्यात्। त्रिंशद्भागं बहिस्तद् द्रव्यं तृतीयेऽह्नि ददत् तद्द्विगुणं पञ्चदशांशं दद्यात्। ततः परतः चतुर्थादारभ्य तस्यैव क्रेतुर्भवति, नास्ति प्रदानम्। क्रेता च क्रयात् पूर्णमेव पण्यस्य गुणदोषौ परीक्षेत। परीक्ष्य निर्दोषं क्रीतं न विक्रेतुः प्रतिदातव्यं न देयम्। नहि तेनानिच्छता ग्रहीतव्यं

1. मनु. ८।२२२-२२८।

प्रथमादप्यह्न आरभ्य । परीक्ष्य क्रीणीयादित्युक्तम् । परीक्षणस्यावधिरुच्यते । त्र्यहाद् दोह्यानां गवादीनाम् । तावता कालेन सारासारता ज्ञातुं शक्या । पञ्चाहाद् बाह्यानाम् अश्वादीनां परीक्षणम् । मुक्तादीनां सप्ताहाद् ज्ञायते विशेषः कृत्रिमादिः ।

पुंसामर्धमासम्, तावता कालेन शीलादिर्ज्ञायते । मासेन स्त्रियाः गूढप्रचारत्वादेतावता कदाचिद् ज्ञायते । दशाहाद् बीजानामुपहतानुपहतत्वं ज्ञायते । लोहानामय आदीनां वस्त्रादीनां च दर्शनादेव ज्ञायते, तथापि दिवसेन सुज्ञातं भवति । परिमुक्तं मृदितम्, न भोगमात्रेण । मलिनम्, सदोषमपि छिद्रादिसहितमपि न तत् प्रतिदातव्यम् । तथाभूतस्य ज्ञात्वा क्रीतत्वात् । तथाभूतं च विक्रीणाति न परीक्षत एवेति नास्ति ।

सकृद् धौतस्य दीनारमूल्यस्य पादार्धं हीयेत । तन्मूल्यार्धैकादशभिर्ग्राह्यम् । द्विर्धौतस्येत्येवं सर्वम् । द्विर्धौतस्य पाद ऊनः, त्रिर्धौतस्य त्रिभागोनः, एवं चतुर्धौतमर्धमूल्यं भवति । पञ्चमादारभ्याष्टमो भागोऽपचीयते । पञ्चमे साष्टभागमर्धम् । षष्ठे सपादम् । एवं यावत् क्षीणदशं जीर्णम् । ततः क्षयनियमो नास्ति । इच्छातः क्रयः । लोहानामपि, न वस्त्राणामेव । सुवर्णादीनां सर्वेषां हेतुरग्निः कटकादिक्रियाविधौ । नह्यग्निसंयोगमन्तरेणाविलीनानां कटकादयः शक्याः कर्तुम् । ततोऽग्निसङ्गमात् संस्क्रियमाणानां यः क्षयो दृष्टः स उच्यते क्रमेण ।

सुवर्णं न क्षीयते । रजतं पलशते द्वे पले क्षीयेते । पात्रादिकरणे त्रपुसीसयोः शतेऽष्टौ पलानि । शते पञ्चपलं ताम्रे क्षयः । ताम्रविकारेषु सर्वेष्वेवम् । अयसो लोहस्य न क्षयनियमः तन्निमित्तानां येभ्यो लोहमुत्पद्यते तेषामनेकत्वात् कुतश्चिदुत्पन्नस्य कश्चित् क्षयं इत्यनियमः ।

तन्तुविकारस्य वस्त्रकम्बलादेः संस्कारे कार्पासोर्णसूत्रयोः दशभिः पलैः कृतमेकादशपलं भवति । एवं शतपलस्य दशोत्तरं शतं भवति । तन्तुविकाराणामेषा वृद्धिरुक्ता । पञ्चपलावृद्धिः । सूक्ष्माणां शते त्रीणि पलानि सत्रिभागानि । एतेनान्तरालावस्थानामनुपातेन कर्तव्यो विभागः । पुष्पपट्टानां च रोमविद्धस्य छेदकृतः क्षयः त्रिंशांशः । उत्पादितशिल्पविशेषाणां तु कौशेयानां वल्कलानां च न वृद्धिर्न च क्षयः समान्येव सूत्राण्येतानि भवन्ति ।

क्रीत्वाविरूपकं क्रीतमिति नानुशयं कुर्यात् । वणिग् विचक्षणः तथा परीक्ष्य क्रीणीयाद् यथा पश्चात्तापो न भवति । दानग्रहणयोश्च पण्यानां क्षयं वृद्धिं च जानीयात् । तथा तत्र न वञ्च्यते । पण्यानामागमञ्च । अदृश्यमानविशेषस्यापि जन्मभूम्या विशेषपरिच्छेदो भवति । अत्रोपदेशफलं यथोक्ताकरणे दण्डः[1] ।

1. नारदी. ९।१-१६; कात्या. ६८६-६८७; याज्ञ. २।२५८; बृह. १८।७,९ ।

**सीमाविवादः**

द्वयोर्ग्रामयोर्मर्यादां प्रति विप्रतिपत्तावुत्पन्नायां ज्येष्ठे मासि ग्रीष्मरवितापसंशुष्कतृणत्वात् प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमां निश्चिनुयात् । न्यग्रोधादीन्वृक्षान्क्षीरिण उदुम्बरादींश्चिरस्थायित्वात्सीमालिङ्गभूतान् कुर्वीत । गुल्मान् प्रकाण्डरहितान् वेणूंश्च प्रचुरकण्टकत्वादिभेदेन नानाप्रकारान्सीमावृक्षान् बल्लीर्लताः स्थानानि कृत्रिमोन्नतभूभागान् शरान् कुब्जकगुल्मांश्च प्रचुराल्पभोगत्वेन आदरार्थं पृथङ्निर्दिष्टान् सीमालिंङ्गभूतान् कुर्यात् । एवं कृते सीमा न नश्यति । तडागकूपदीर्घिकाजलनिर्गममार्गदेवगृहाणि सीमारूपेषु ग्रामद्वयसन्धिस्थानेषु कर्त्तव्यानि। एतेषु सीमानिर्णयाय विख्याप्य कृतेषूदकाद्यर्थिजना अपि श्रुतिपरम्परया चिरकालेऽपि साक्षिणो भवन्ति । सीमानिर्णये सर्वदास्मिंल्लोके मनुष्याणां विभ्रममज्ञानं दृष्ट्वाभिहितव्यतिरिक्तानि गूढानि सीमाचिह्नानि कारयेत्[1] ।

प्रस्तरास्थिगोवालतुषभस्मकर्पटिकाशुष्कगोमयपक्वेष्टकाङ्गारपाषाणकर्मरसिकता अन्यान्यप्येवंप्रकाराणि कालाञ्जनकार्पासास्थिप्रभृतीनि यानि चिरकालेनापि भूमिरात्मसान्न करोति तानि ग्रामयोः सन्धिषु सीमायां "प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत्" इति बृहस्पतिवचनात् स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा प्रच्छन्नातिभूमौ निखाय धारयेत् ।

विवदमानयोर्ग्रामयोश्चिह्नै राजा सीमामुन्नयेत् । वसतोः पुनरविच्छन्नया भुक्त्या सीमानिर्णयो न तु त्रिपुरुषादिकतया । तस्य "आधिःसीमा" इति पर्युदस्तस्त्वात् । ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमां निश्चिनुयात्। यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेऽपि प्रच्छन्नाङ्गारतुषादिकुम्भा अमी स्थानान्तरं नीत्वा निखाता नायं सीमान्तरुर्न्यग्रोधः स नष्ट इत्यादि समस्त एव यदि सन्देहः स्यात्तदा साक्षिप्रमाण एव सीमाविवादनिश्चयो भवेत् ।

ग्रामिकजनसमूहानां ग्रामद्वयस्थनियुक्तयोर्वादिप्रतिवादिनोश्च समक्षं सीमाविषये सीमालिङ्गसन्देहे लिङ्गानि साक्षिणः प्रष्टव्याः । ते पृष्टाः साक्षिणः समस्ता न द्वैधेन सीमाविषयेण येन प्रकारेण निश्चयं ब्रूयुस्तेन प्रकारेणाविस्मरणार्थं पत्रे सीमां लिखेत् । तांश्च सर्वान् एव साक्षिणो नामविभागतो लिखेत् । ते साक्षिण इति सामान्यश्रवणेऽपि "रक्तस्रग्वाससः सीमां नयेयुः" (२।१५२) इति याज्ञवल्क्यवचनाद्रक्तपुष्पमालाधारिणो लोहितवाससो मस्तके मृल्लोष्ठानि गृहीत्वा यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तस्तां सीमां यथाशक्ति निर्णययुः ।

---

1. मनु. ८।२४४-२४९ ।

ते सत्यप्रधाना साक्षिणः शास्त्रोक्तेन विधानेन निर्णयस्था निष्पापा भवन्ति। अतथ्येन तु निश्चिन्वन्तः प्रत्येकं पणशतद्वयं दण्डं दाप्या भवेयुः। ग्रामद्वयसंबन्धि-सीमाविवादसाक्ष्यभावे चतुर्दिशं समन्तभवाः सामन्तास्तद्वासिनश्चत्वारो ग्रामवासिनः साक्षिधर्मेण राजसमक्षं सीमानिर्णयं कुर्युः। साक्षिधर्मेण राजसमक्षमनुभवेन निर्णयमकुर्वतां ग्रामवासिनां ग्रामनिर्माणकालादारभ्य मौलानां पुरुषक्रमेण तद्ग्राम-स्थानां सीमासाक्षिणामभावः सन्निहितवनचारिणः **पृच्छेत्**।

लुब्धकान्, पक्षिवधजीविनः, गोपालान्, मत्स्यजीविनः, मूलोत्पाटनजीविनः, सर्पग्राहिणः, शिलोञ्छवृत्तीनन्यांश्च फलपुष्पेन्धनाद्यर्थं वनव्यवहारिणः पृच्छेत्। एते हि स्वप्रयोजनार्थं तेन ग्रामेण सर्वदा वनं गच्छेयुस्तद्ग्रामसीमाभिज्ञाः संभवन्ति। ते व्याधादयः पृष्टाः सीमारूपेषु ग्रामसन्धिषु येन प्रकारेण चिह्नं ब्रूयुस्तत्तेनैव प्रकारेण राजा द्वयोर्ग्रामयोः सीमां व्यवस्थापयेत्। एकग्रामेऽपि क्षेत्रकूपतडागोद्यानगृहाणां सीमासेतुविवादे समस्तदेशवासिसाक्षिप्रमाणक एव मर्यादाचिह्ननिश्चयो विज्ञेयो न व्याधादिप्रमाणकः।

सीमाचिह्ननिमित्तं विवदमानानां मनुष्याणां यदि सामन्ता देशवासिनो मिथ्या ब्रूयुस्तदा ते सर्वे प्रत्येक राज्ञा मध्यमसाहसं दण्डनीयाः। एवञ्चासामन्तरूपाणां पूर्वोक्तद्विशतो दमो ज्ञेयः। गृहतडागोद्यानक्षेत्राणामन्यतमं मारणबन्धनादिभयकथन-पूर्वमाक्रम्य हरणे पञ्चपणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरतो द्विशतो दमः। लिङ्गसाक्ष्याद्यभावे सीमायां परिच्छेत्तुमशक्यायां राजैव धर्मज्ञः पक्षपातरहितो ग्रामद्वयमध्यवर्त्तिनीं विवादविषयां भूमिं येषामेव ग्रामवासिनामुपकारातिशयो भवति तद्व्यतिरेकेण च महाननिर्वाहस्तेषामेव दद्यादिति शास्त्रव्यवस्था[1]।

मिताक्षराभिमता[2] सीमाक्षेत्रादिमर्यादा चतुर्विधा–जनपदसीमा, ग्रामसीमा, क्षेत्रसीमा, गृहसीमा चेति। सा च यथासम्भवं पञ्चलक्षणा। तदुक्तं नारदेन– "ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता। राजशासननीता च सीमा पञ्चविधा स्मृता"। एवं भूतायां षोढा विवादः संभवति। यथाऽऽह **कात्यायनः**

**आधिक्यं न्यूनता चांशे अस्ति नास्तित्वमेव च।**
**अभोगभुक्तिः सीमा च षड्भूवादयस्य हेतवः॥**

तथा हि–"ममात्र पञ्चनिवर्तनाया भूमेरधिका भूरस्ति' इति केनचिदुक्ते पञ्चनिवर्तनैव नाधिकेत्याधिक्ये विवादः। 'पञ्चनिवर्तनो ममैवांश" इत्युक्ते अंश एव

1. मनु. ८।२४५-२६५।
2. याज्ञ. २।१५०।

नास्तीत्यस्तिनास्तित्वविवादः सम्भवति । 'मदीया भूः प्रागविद्यमानभोगैव भुज्यते' इत्युक्ते न सन्तता चिरन्तन्येव ये 'भुक्ति' रित्यभोगभुक्तौ विवादः । इयं मर्यादियं वेति सीमाविवाद इति षट्प्रकार एव विवादः संभवति । षट्प्रकारेऽपि भूविवादे श्रुत्यर्था-भ्यां सीमाया अपि निर्णीयमानत्वात् सीमानिर्णयप्रकरणे तस्यान्तर्भावः । यथाऽऽह

**याज्ञवल्क्यः**

**सीम्नो विवादे क्षेत्रस्य सामन्ताः स्थविरादयः ।**
**गोपा सीमाकृषाणा ये सर्वे च वनगोचराः ॥**
**नयेयुरेते सीमानं स्थलाङ्गारतुषद्रुमैः ।**
**सेतुवल्मीकनिम्नास्थिचैत्याद्यैरुपलक्षिताम् ॥ २।१५०-१५१ ।**

समन्ताद्भावाः सामन्ताः । चतसृषु दिक्ष्वनन्तरग्रामादयस्ते च प्रतिसीमं व्यवस्थिताः; 'ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम् । गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि' ॥ इति कात्यायनवचनात् । 'ग्रामादि' शब्देन तत्स्थाः पुरुषा लक्ष्यन्ते । ग्रामः पलायित इति यथा । 'सामन्त' ग्रहणञ्च तत्संसक्ताद्युपलक्षणार्थम् । उक्तञ्च कात्यायनेन

**संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः ।**
**संसक्तसक्तसंसक्ता पद्माकाराः प्रकीर्तिताः ॥**

स्थविरा वृद्धाः । आदिग्रहणेन मौलोद्धृतयोर्ग्रहणम् । वृद्धादिलक्षणं तेनैवोक्तम्—

**निष्पद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः ।**
**वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः ॥**
**ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।**
**तन्मूलत्वात्तु मौला ऋषिभिः परिकीर्तिताः ॥**
**उपश्रवणसंभोगकार्याख्यानोपचिह्निताः ।**
**उद्धरन्ति पुनर्यस्मादुदाहृतास्ते ततः स्मृताः ॥**

निम्नगायाः नद्या अपहृतेनापहरणेनौत्सृष्टानि स्वस्थानात्प्रच्युतानि नष्टानि वा लिङ्गानि यासु मर्यादाभूमिषु तत्र तत्प्रदेशानुमानादुत्सृष्टनष्टचिह्नानां प्राचीन-प्रदेशानुमानात् ग्रामादारभ्य सहस्रपरिमितं क्षेत्रमस्य ग्रामस्य पश्चिमे भागे इत्येवंविधात् प्रमाणाद् वा प्रत्यर्थिसमक्षमविप्रतिपन्नाया अस्मार्तकालोपलक्षितभुक्तेर्वा निश्चिनुयुः । यथाऽऽह याज्ञवल्क्यः

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशाऽपि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥
अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ।
अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ॥

आरामायतनग्रामनिपानोद्यानवेश्मसु।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥
मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥
न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन्कूपः स्वल्पक्षेत्रे बहूदकः ॥
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥
फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत्।
स प्रदाप्यः कष्टफलं क्षेत्रमन्येन कारयेत्[1] ॥ २।१५२-१५८।

**निक्षेपः**

पूर्वमुपचयापेक्षया परहस्ते दत्तमृणं तदनपेक्षया रक्षणार्थमेवान्यहस्ते द्रव्यमुपनिधिरिति ऋणादानान्तरमुपनिधेरवसरः। सत्कुलप्रसूते, सदाचारवति, धर्मवेदिनि, सत्याभिधायिनि, बहुपुत्रादिपरिजने, ऋजुप्रकृतौ मनुष्ये, व्यभिचाराभावान्निक्षेपं स्थापयेत्। यो मनुष्यो येन प्रकारेण मुद्रारहितं समुद्रं वा ससाक्षिकमसाक्षिकं वा यमर्थं येन प्रकारेण समर्पणं तेनैव प्रकारेण ग्रहणं न्याय्यम्। समुद्रस्थापितसुवर्णादिर्निक्षेप्ता स्वयमेव मुद्रां भित्वा यदा वदति मयेदं तुलयित्वा समर्पयेत्यभिधानं दण्डाद्यर्थम्।

यः पुरुषो देहि मे निक्षिप्तं हिरण्यादि द्रव्यमित्येवं निक्षेप्त्राप्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापिते प्राड्विवाकेन तस्य निक्षेप्तुरसंनिधौ याचनीयः। प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैश्चारपुरुषैरतिक्रान्तबाल्यैः सौम्यादिभिर्नृपोद्रवादिव्याजाभिधायिभिर्हिरण्यानि तत्त्वेन तत्र निक्षेपयित्वा तैरेव चारपुरुषैः स निक्षेपधारी प्राड्विवाकेन चारपुरुषनिक्षिप्तसुवर्णं याच्यः। स निक्षेपधारी यथान्यस्तं समुद्रं वा यथाकृतं कटकमुकुटाकारेण रचितं यदि तथैव प्रतिपद्येत सत्यमस्ति गृह्यतामिति तदा परेण पूर्वनिक्षेप्त्रा प्राड्विवाकवेदिना यन्निक्षिप्तमित्यभियुज्यते तत्र न किञ्चिदस्ति।

---

1. बृह. १९।१,२, ८-९, २०-२१, ३१, ३८, ३९, ४०, ४५, ४६, ४९, ५१।
नारद. १४।१, २, ३, ४, ५, ८, ९-१०, ११, १५, १७, १८, २६, २७, २८, ३०, ३५, ३८, ३९, ४०, ४१, ४२, ४३।
कात्यायन. ७२९, ७३३, ७३७, ७३४, ७३८-३९, ४०-४९, ७५०-५४-७५, ७६२-६४, ७६७।
वि. र. १९९, २००-२०६, १०४, २०९, २१०, २११-१६, २१८, २१९-२३९।
स्मृ. चं. पृ. ५४९, ५५१, ४९८।

तेषां चारपुरुषाणां यन्निक्षिप्तं हिरण्यं यथान्यस्तं यदि तन्न दद्यात्तदा द्वावपि निक्षेपौ ज्ञापकचारसंबन्धिनौ संपीड्य दापनीयः स्यादित्येवंरूपो धर्मस्य धारणा निश्चयः। निक्षिप्यत इति निक्षेपः। मुद्राङ्कितमगणितं वा यन्निधीयते स उपनिधिः। ब्राह्मणपरिव्राजकवदुपदेशभेदः । तौ निक्षेपोपनिधी निक्षेप्तर्युपनिधातरि जीवति प्रत्यनन्तरे तदीय पुत्रादौ तदनन्तरे तद्धनाधिकारिणि कदाचिन्न निक्षेपधारिणा देयौ। यस्तस्य पुत्रादेरपि पितुरसमर्पणविनाशे तौ निक्षेपोपनिधी नश्यतः। पुत्रादेः पितुश्च पुनरविनाशे समर्पणे च कदाचिदविनाशिनौ स्याताम्, तस्मादनर्थसन्देहान्न देयौ।

निक्षेप्तुर्मृतस्य निक्षेपधारी तद्धनाधिकारिणि पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति स राज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति नाक्षेप्तव्यः। तत्रस्थे धनान्तरसद्भावलक्षणवाक्छलादिपरिहारेणैव प्रीतिपूर्वकं निश्चिनुयान्न तु झटिति दिव्यादिदानेन । तस्य निक्षेपधारिणः शीलमवेक्ष्य धार्मिकोऽयमिति ज्ञात्वा सामप्रयोगेण निश्चिनुयात्। मुद्रितादौ पुनस्तस्य निक्षेपधारी यदि प्रतिमुद्रादिना न किमप्यपहरेत्तदा तस्मिन्नपि तेन किं दूषणं प्राप्नुयात् । चौरैर्मुषितम्, उदकेन देशान्तरं प्रापितम्, अग्निना वा दग्धं निक्षेपं निक्षेपधारी न दद्यात्। यदि स्वयं तस्मान्न किञ्चिदपि अपहरति।

निक्षेपस्यापह्नोतारमनिक्षिप्य याचितारं सर्वैः सामादिरुपायैर्वैदिकैश्च शपथैरग्निहरणादिभिर्नृपो निरूपयेत्। निक्षिप्तधनं यो न समर्पयति–यश्चानिक्षिप्तं प्रार्थयति तौ द्वौ सुवर्णमुक्तादौ महति विषये चौरवद्दण्ड्यौ । स्वल्पविषये ताम्रादौ तत्समं दण्डनीयौ । निक्षेपापहारिणं निक्षिप्तसमं धनं दण्डयेत् । समशिष्टत्वादनिक्षिप्य याचितारमपि । न च पुनरुक्तिः । महत्यपराधे ब्राह्मणेतरस्य चौरवदिति शरीरदण्डस्यापि प्राप्तौ तन्निवृत्त्यर्थमिदम्, दापयेदिति धनदण्डनियमात् । उपनिधिर्मुद्राङ्कितं निहितधनं तस्यापहर्तारं कथितविशेषणं राजा दण्डयेत्।

राजा त्वयि रुष्टः तस्मात्त्वां रक्षामि मम धनं देहि धनधान्यादिलोभोपकरणं वानृतमभिधाय छद्मभिर्यः परद्रव्यं गृह्णाति स छद्मधनसहकारिसहितो बहुजनसमक्षं करचरणशिरश्छेदादिभिर्नानाप्रकारैर्वधोपायैः राज्ञा हन्तव्यः। यः सुवर्णादिर्यावत् परिमितो येन साक्षिसमक्षं निक्षेपः कृतस्तत्र परिमाणादिविप्रतिपत्तौ साक्षिवचनात्तावानेव विज्ञातव्यः। विप्रतिपत्तिं कुर्वन्नप्येतदुक्तानुसारेण दण्डं दाप्यः। रहसि येन निक्षेपोऽर्पितः निक्षेपधारिणा च रहस्येव गृहीतः स निक्षेप रहस्येव प्रत्यर्पणीयः न प्रत्यर्पणे साक्ष्यपेक्षा। यस्माद्येनैव प्रकारेण दानं तेनैव प्रकारेण प्रत्यर्पणं दातव्यमिति श्रवणान्निक्षेपधारिणोऽयं नियमविधिः। राज्ञा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रादियुतस्य

कोपनिधिरूपस्य तथा प्रीत्या कतिचित्कालं भोगार्थामर्पितस्यानेनोक्तप्रकारेण न्यस्तधनधारिणमपीडयन्निर्णयं कुर्यात्[1] ।

पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम् इत्यमरः । स्मार्ते त्वेषां भेदोऽस्ति । वासनस्थ...न्यस्य यदर्पितम् । द्रव्यमुपनिधिर्न्यासः प्रकाश्य स्थापितं तु यत् । निक्षेपः शिल्पहस्ते तु भाण्डं संस्कर्तुमर्पितम् । इति क्षीरस्वामी । निक्षेपद्रव्यस्याधारभूतं द्रव्यान्तरं वासनं करण्डादि, तत्स्थं वासनस्थं यद्द्रव्यं रूपसंख्यादिविशेषमनाख्याय अकथयित्वा मुद्रितमन्यस्य हस्ते रक्षणार्थं विस्रम्भादर्प्यते स्थाप्यते तद्द्रव्यमौपनिधिकमुच्यते । इति मिताक्षरा (याज्ञ. २।६५) । यस्मिन् स्थापितं तेन यथैव पूर्वमुद्रादिचिह्नितमर्पितं तथैव स्थापकाय प्रतिदेयम् ।

**याज्ञवल्क्यः**

**न दाप्योऽपहृतं तं तु राजदैविकतस्करैः ।**
**भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ॥**
**आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चाऽपि सोदयम् ।**
**याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥ २।६६-६७ ॥**

न्यासो निर्दिष्टस्वरूपं द्रव्यं यद्रक्षणार्थं समर्पितम् । निक्षेपोन्यहस्त एव यदन्यस्मै देयत्वेन निक्षिप्तम्[2] । ग्राहकस्य समक्षं गणयित्वा स्थापितं निक्षेपः । गृहस्वामिनोऽसमक्षं गणितमगणितं वा तस्मिन्नागते एतद्दातव्यमित्युक्त्वाऽन्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यासः । मुद्राङ्कितसमक्षगणितं स्थापितमुपनिधेरवसरः[3] । पूर्वमुपचयापेक्षया परहस्ते दत्तमृणं तदनपेक्षया रक्षणार्थमेवान्यहस्ते द्रव्यमुपनिधिरिति ऋणादानानन्तरमुपनिधेरवसरः[4] । यद्भयादुपनिधिरन्यस्य हस्ते न्यस्तस्तद्भयातीते काले ग्राह्य इत्यर्थः । तद्भयातीतेऽपि काले स्वयमेव नायाचितमर्पणीयम्। सकृद्याचितमर्पयेदिति बृहस्पतिस्मरणात् । तद्भये वर्तमाने स्वयमेवायाचितं दीयमानं कालहीनं तस्य दानं दौष्ट्येनैवेति तद्ददतोऽपि दण्डो युक्तः[5] ।

यो मूल्यं गृहीत्वा विक्रीतमपि वस्त्रादि याचितं न ददाति क्रेता वा क्रीत्वा क्रयसाधनमूल्यं याचितं न ददाति स पञ्चकशतक्रमेण वृद्धिं दद्यात्[6] । याचितमवक्रीतकं वा यथाविधं गृह्णीयुस्तथाविधमेवार्पयेयुः । भ्रेषोपनिपाताभ्यां देशकालोपरोधि

---

1. मनु. ८।१७८-१९६ ।
2. विश्वरूपः, याज्ञ. २।६९ ।
3. स. वि. पृ. २६५ ।
4. व्य. प्र. पृ. २८० ।
5. व्य. प्र. पृ. २८५ ।
6. वि. र. पृ. १५ ।

दत्तं नष्टं विनष्टं वा नाभ्याभवेयुः । शेषमुपनिधिना व्याख्यातम्[1] । यदैकस्य हस्ते निक्षिप्तं द्रव्यं तेनाऽप्यनु पश्चादन्यहस्ते स्वामिने देहीति निहितं तदन्वाहितम्[2] । प्रतिन्यासस्य च परस्परप्रयोजनापेक्षया त्वयेदं मदीयं रक्षणीयं ममेदं त्वदीयं रक्ष्यते इति न्यस्तस्य ग्रहणम्[3] । न केवलं पुत्रानेव नाभ्याभवेयुः किं तर्हि येषां सकाशे निध्यादयः कृतास्तानपि नाभ्याभवन्ति[4] ।

न्यासादिकः...दाप्यः स एव तत्। एवकारेण त्वपराधानन्तर्गततत्पुत्रादिव्यवच्छेदः। तथा च नाभ्याभवेयुरित्यधिकारे गौतमः निध्यन्व...राधेन । सर्वान् पुत्रादीन्निरपराधान्[5] । पितृपरोक्षे तु तद्गृहीतो न्यासः पुत्रादिना न देयः । ऋणातिरिक्तर्णत्वादिति नष्टातिरिक्तप्रातिभाव्यातिरिक्तानां बलात्कारगृहीतानामुक्तानां सर्वेषामन्यदेवत्वेनान्येन दानेऽतिप्रसङ्गात् । ऋणादिवद्विशेषवचनाभावाच्च[6] ।

यदा राजदैवविनष्टं तन्निक्षिप्तमित्युक्त्वा निक्षेपं न ददाति, तदा निक्षेपाश्रयस्वाभिमतपुरुषेण राजदैवोपघातस्यानुरूपविभावनं कार्यम्[7] । यादृशेन प्रकारेण समुद्रमसमुद्रं ससाक्षिकमसाक्षिकमित्येवादि स तथैवेति, सोऽर्थो निक्षिप्तः तथैव गृहीतव्यः । 'यथा दायो'दीयते निक्षिप्यते तथा गृह्यते[8] । 'समुद्रे' निक्षेपेऽन्यदप्यस्मिन् भाण्डे द्रव्यमभूत्, नाशितं कृमिभिरित्यादिकं पर्यनुयोगं नाप्नुयान्निक्षेपधारी तत्र धारणकस्य । एवं मूषिकादिनाशे द्रष्टव्यम् । यदि दारुमयभाण्डे वस्त्रादिकं स्थापितं तीक्ष्णदशनैर्मूषिकैर्दारु भित्वा भक्ष्येत न निक्षेपधारिणो दोषः ।

नाभ्याभवेयुरिति अनुवृत्तौ गौतमः (१२।३९) । निध्यन्वाधियाचिताऽवक्रीताधयो नष्टाः सर्वाननिन्दितान् पुरुषापराधेन । 'याचितम्' उत्सवादिषु याञ्चयाऽऽनीतमाभरणादि । 'अवक्रीतम्' अदत्तमूल्यमर्धदत्तमूल्यं वा । 'आधिः' गोप्याधिः कांस्यादिरित्यर्थः । एते चोरहरणाग्निदाहादिना नष्टाः सन्तो न केवलं पुत्रानेव अध्याभवेयुः । 'अनिन्दितान्' अप्रमादकारिण इत्यर्थः । 'पुरुषापराधः' पुरुषप्रमादः आलस्यादिः । एवं निन्दितैः प्रमादकारिभिः ते दातव्या एव (मस्करी पृ. २०९)[9] ।

---

1. अर्थशास्त्र. ३।१२ ।
2. वि. र. पृ. ८४ ।
3. मिता., याज्ञ. २।६७ ।
4. हरदत्तः, गौ. ४।३५ ।
5. वि. चि. पृ. २६ ।
6. वि. च. पृ. २७ ।
7. वि. र. ८७ ।
8. मेधातिथिः, मनु. ८।१८० ।
9. अन्येषां मतानि–
   नारद. ५।१, २, ९, ७-८, १४-१५; ४।३५ ।
   बृह. ११।१३, २, ४-१०, १३, १४, १५, १८, २० ।
   कात्यायनः ५९२, ६११, ५९९, ६००, ५९७, ६०१, ६०३-६०९ ।

**अस्वामिविक्रय:**

अजानानः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्र तस्यादोषः। स्वामी द्रव्यमाप्नुयात्। यद्यप्रकाशं हीनमूल्यं च क्रीणीयात्तदा क्रेता विक्रेता च चोरवच्छास्यौ[1] । अस्वामी यः स्वामिना चाननुमतः परकीयं द्रव्यं विक्रीणीते वस्तुतश्चौरमचौरमात्मानं मन्यमानं तं साक्षित्वं न कारयेत् । न कुत्रचिदपि प्रमाणीकुर्याद् । एष परस्वविक्रयी यदि स्वामिनो भ्रात्रादिरूपत्वेन सान्वयः सम्बन्धी भवति तदा षट्पणशतान्यवहार्यो दण्डनीयः । यदि पुनः स्वामिनः सम्बन्धी न भवति, अनपसरश्च स्यात्, अपसरत्यनेनास्मात् सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः स यस्य स्वामिसंबन्धिपुत्रादेः सकाशान्नास्ति तदा चौरसम्बन्धि पापं प्राप्नोति । तद्दण्डनीयः । अस्वामिना यत्कृतं यद्दत्तं विक्रीतं वा तदकृतमेव बोद्धव्यम् । व्यवहारे यथा मर्यादा तथा कृतं न भवति । यस्मिन् वस्तुनि संभोगो विद्यते क्रयादिरूपस्त्वागमो नास्ति तत्र प्रथमपुरुषगोचर आगम एवं प्रमाणं न संभोग इति शास्त्रमर्यादा ।

विक्रीयतेऽस्मिन्निति विक्रयदेशो विक्रयः ततो यत्क्रेयधनं किञ्चिद्व्यवहर्तृ-समूहसमक्षं क्रीयतेऽनेनेति क्रयो मूल्यं तेन यस्माद् गृह्णीयात् । अतो न्यायतः एवास्वामिविक्रेतृसकाशात्क्रयणाद् विशुद्धं धनं लभते । अथ मूलस्वामीविक्रेता मरणाद्देशान्तरादिगमनादिना वा हर्तुं शक्यते प्रकाशक्रयणे चासौ निश्चितस्तदा दण्डानर्ह एव क्रेता राज्ञा मुच्यते । नष्टधनस्वामी च यदस्वामिना विक्रीतं द्रव्यं तत्क्रेतुर्हस्ताल्लभ्यते । अत्र च विषयोऽर्धमूल्यं क्रेतुर्दत्वा स्वधनं स्वामिना ग्राह्यम् । कुङ्कुमादिद्रव्यं कुसुम्भादिना मिश्रीकृत्य न विक्रेतव्यम् । न चासारं सारमित्यभिधाय। न च तुलादिना न्यूनम् । न परोक्षावस्थितम् । न रागादिना स्थगितरूपम् । अत्रास्वामिविक्रयसादृश्यादस्वामिविक्रये दण्ड एव स्यात् । शुल्कदेयां शुल्क-व्यवस्थाकाले निरवद्यां दर्शयित्वा यदि सावद्या वराय दीयते तदा द्वे अपि कन्ये तेनैवैकेन शुल्केनासौ वरः परिणयेदिति मनुराह । शुल्कग्रहणपूर्वककन्याया दानस्य विक्रयरूपत्वादर्थक्रयविक्रयसाधर्म्येणास्यात्राभिधानम् । उन्मत्तायास्तथा कुष्ठवत्या या चानुभूतमैथुना तस्या ब्राह्मणादिविहितात्पूर्वमुन्मादादीन्दोषान् वरस्य कथयित्वा दण्डार्हो न भवति । तेनाकथने दण्ड इति गम्यते[2] ।

---

मत्स्य. २४१।४; परा. मा. ३ पृ. २८१; अपरार्कः पृ. ६६२, ६६४, २८३, २८८; स्मृ. चं. २ पृ. ३, १७८, १७९, १८१, १८२, १८४, १८३; व्य. प्र. पृ. २८०, २७९, २८१, २८२, २८४, २८६, २८५, २८७।

1. वि. ध. सू. ५।१६४-१६६ ।
2. मनु. ८।१९७-२०५ ।

तत्र नारदः

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥ ७।१ ।

याज्ञवल्क्यः

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ वा गृहीत्वा स्वयमर्पयेत् ॥ २।१६९ ।

नष्टं वापहृतं द्रव्यमन्येन गृहीतमासाद्योपलभ्यद्रव्यग्राहिणं हर्तारमिति व्यपदिश्य राजपुरुषैः व्यवहारनिर्णयाय ग्राहयेत् । यदि तु राजकीयासन्निधानं देशकालातिपत्तिं चाशङ्केत तदा स्वयमपि गृहीत्वा राज्ञे हर्तारमर्पयेत । अन्या च व्याख्या । नष्टापहृतमासाद्य क्रीत्वा स्वामिना प्रार्थ्यमाने हर्तारं ग्राहयेत्। मूल्यमर्पयेत्। देशकालातिपत्तौ सा अप्रकाशक्रयेणापि गृहीत्वा स्वयमर्पयेत् तदाप्यदोष इत्यभिप्रायः (विश्वरूपः) । विज्ञानेश्वरस्तु-द्वितीयव्याख्यां नाभ्युपगच्छति 'विक्रेतुर्दर्शनाच्छुद्धिः' इत्यनेन पौनरुक्त्यप्रसङ्गभिया । निक्षेपोक्तप्रकारेण गूढचारप्रयोगं कृत्वा पुरुषाणां धर्माधर्मयोः समन्यूनाधिकभावं निश्चित्य स्वयमेव राजा निर्णयेत्[1] ।

**संभूयसमुत्थानम्**

वणिक्प्रभृतयः वणिजः ऋत्विजः कर्मकराः कर्षका इत्येवमादयः यत्र सम्भूय संहृत्य वाणिज्यज्योतिष्टोमादिकं कर्मात्मार्थं कुर्वन्ति, तत् सम्भूयसमुत्थानं नाम व्यवहारपदम् । समुपतिष्ठन्ते ऋद्धिं प्राप्नुवन्ति ऐक्यमत्येनोत्कृष्टामवस्थां प्राप्नुवन्त्यनेनेति समुत्थानम् । यथाऽऽह नारदः

फलहेतोरुपायेन कर्म सम्भूय कुर्वताम् ।
आधारभूतः प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः ॥
समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा ॥
भाण्डपिण्डव्ययोद्धारभारसारान्वेक्षणम् ।
कुर्युस्ते व्यवहारेण समये स्वे व्यवस्थिताः ॥
प्रमादान्नाशितं दाप्यः प्रतिषिद्धकृतं च यत् ।
असन्दिष्टं च यत् कुर्यात् सर्वैः सम्भूयकारिभिः ॥

---

1. बृह. १२।२, ६, ७, ३-४, ९, १०-१२ ।
कात्यायनः ६१५, ६१७, ६१४, ६१२, ६२०, ६१३, ६१८, ६१६, ६१९ ।
मनुयमौ. ८।१९७ ।
विष्णु. ५।१६४-१६६ ।
वि. र. १०२, १०३, १०५, १०६, ११० ।

दैवतस्कररराजोत्थे व्यसने समुपस्थिते ।
यस्तत् स्वशक्त्या संरक्षेत् तस्यांशो दशमः स्मृतः ॥
एकस्य चेत् तद्व्यसनं दायादोऽस्य तदाप्नुयात् ।
अन्यो वासति दायादेऽशक्ताश्चेत् सर्व एव वा ॥
ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात् सम्प्रकल्पितम् ॥
ऋत्विग् याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि ॥
ऋत्विक् तु त्रिविधं प्रोक्तः पूर्वैर्जुष्टः स्वयंवृतः ।
यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥
क्रमागतेष्वेव धर्मो वृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिके तु सांयाज्ये तत्त्यागे नास्ति किल्बिषम् ॥
शुल्कस्थानं वणिक्प्राप्तः शुल्कं दद्याद् यथोपगम् ।
न तद् व्यतिहरेद् राज्ञां बलिरेष प्रकल्पितः ॥
शुल्कस्थाने परिहरन्नकाले क्रयविक्रयी ।
मिथ्योक्त्वा न परीमाणं दाप्योऽष्टगुणमत्ययम् ॥
कश्चिच्चेत् सञ्चरन् देशात् प्रेयादभ्यागतो वणिक् ।
राजास्य भाण्डं संरक्षेद् यावद्दायाददर्शनम् ॥
दायादेऽसति बन्धुभ्यो ज्ञातिभ्योऽस्य समर्पयेत् ।
तदभावे सुगुप्तं तद् धारयेद् दशतीः समाः ॥
अस्वामिकमदायादं दशवर्षोषितं ततः ।
राजा तदात्मसात् कुर्यादेवं धर्मो न हीयते ॥ ३।२-१६ ॥

यज्ञे कृतवरण ऋत्विक् यदि किञ्चित्कर्म कृत्वा व्याध्यादिना कर्म त्यजति तदा तस्येतरर्त्विग्भिः पर्यालोच्य कृतानुसारेण दक्षिणांशो देयः । माध्यन्दिनसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्म परित्यजन्न तु शाठ्यात्स कृत्स्नमेव दक्षिणाभागं लभेत । कर्मशेषं प्रकृतमन्येन कारयेत् । यस्मिन् कर्मणि आधानादौ अङ्गमङ्गं प्रति या दक्षिणा यत्संबन्धेन श्रुताः स्युः स एव ता आददीत न तत्तद्भागमात्रं सर्वे विभज्य गृह्णीरन्निति संशयः । केषाञ्चित् शाखिनामाधानेऽध्वर्यवे रथो देयत्वेनाम्नायते, ब्रह्मणे वेगवानश्वः, होत्रे चाश्वः, उद्गात्रे सोमक्रयवहनशकटम्, अतो व्यवस्थाम्नानसामर्थ्याद्या दक्षिणा यत्सबन्धत्वेन श्रूयते स एव तामाददीत ।

"तं शतेन दीक्षयति" इति श्रूयते । तत्र सर्वेषां षोडशानामृत्विजां मध्ये ये मुख्या ऋत्विजो होत्रध्वर्युब्रह्मोद्गातारः समग्रदक्षिणायास्तेऽर्धहरा अष्टचत्वारिंशद्गोभाजो

भवन्ति । यद्यपि तस्यार्धं पञ्चाशद् भवति तथापीहन्यूनार्धग्रहणेनापि इमेऽर्धिन उच्यन्ते सामीप्यात् । अपरे मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्ते मुख्यर्त्विग्गृहीतदक्षिणार्धग्रहणेनार्धिन उच्यते । तृतीयिनोऽच्छावाङ्नेष्ट्रग्रीत्प्रतिहर्तारस्ते मुख्यर्त्विग्गृहीतस्य तृतीयांशं लभन्ते । पादिनस्तु ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्या एते मुख्यर्त्विग्गृहीतस्य चतुर्थमंशं लभन्ते । एतच्च 'षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रश्च तृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्यः' इति सूत्रयता कात्यायनेन स्फुटीकृतम्[1] ।

पूर्ववृत्तेषु ऋत्विक्षु मध्ये एकस्य मरणादौ 'वृत्ते' यदाऽन्यं वृणुते, 'पूर्वाहूतस्य दक्षिणा' तन्मरणपक्षे तद्दायादानां कर्मानुरूपा सा । पश्चादाहूतः कश्चित् किञ्चित् कर्मानुरूपं लभते । यदा तु 'कालं' मासपक्षादिकं 'निमित्तं' 'वाऽन्यदपेक्ष्य' उद्भाव्य गतः, तदा यजमानस्तं प्रतीक्षेत, 'नान्तरा यजेत' । 'आत्ययिको वा' समयातिक्रियप्रतिसन्धानवान् 'क्रतुं' ऋत्विगन्तरेण समापयेत् । पूर्ववृत्तस्तु ऋत्विक् 'प्रोष्य' प्रवासं कृत्वा 'प्रत्यागतः' 'किञ्चित्' पारितोषिकं यजमानाल्लभेत । यजमानप्रतिषिद्ध ऋत्विक् कामाद् व्रजन् पणशतं दण्ड्यः । अथ स्वभावत एव दुष्ट इति विज्ञायते, तदा यजमानस्य ऋत्विक्कुलपरीक्षाधिकृत उपाध्याय एव दण्ड्यः । एवं व्याधिते पतिते उन्मत्ते 'प्रहीणे' अभिशापादिना त्यक्ते 'प्रध्वस्ते' कर्माक्षमताहेतुवाधके संप्रसादकरणं तं सन्तोष्य ऋत्विगन्तरवरणेऽप्यनुज्ञाकरणम्[2] ।

**कात्यायनः**[3]

**परराष्ट्राद्धनं यत्स्याच्चोरैः स्वाम्याज्ञया हृतम् ।**
**राज्ञे दशांशमाहृत्य विभजेरन् यथाविधि ॥**
**चोराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।**
**शूरोंऽशास्त्रीन् समर्थो द्वौ शिष्टास्त्वेकैकमेव च ॥**
**तेषां च प्रसृतानां यो ग्रहणं समवाप्नुयात् ।**
**तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समक्रिया ॥**

1. मनु. ८।२०६-२१० ।
2. वि. र. पृ. १२१-१२२ ।
3. अन्येषां मतानि–
बृह. १३।३, १, ५-९, ११, १३, १६-१७, २०, २१, २२-२७, २९-३१, ३२-३४, ३६-३९,
बौधा. १।१८।१६ ।
वि. र. ११२, ११३, ११४, ११५, ११७, ११८, १२१, १२२, १२३, १२४, १२५, १२६ ।
स्मृ. चं. २ पृ. १८४, १८५, १८९, ४३०, ४३४, ४३६; व्य. प्र. २९८, २००, २९९, ३००, ३०४, ३८९; पारा. मा. ३ पृ. ३०४, ३०५, ३११, ३१२ ।
अपरार्कः पृ. ८३२, ८३१, ८३८; व्य. नि. पृ. २८४-२८५; व्य. म. पृ. २०१ ।
कौ. ३।१४ ।

**वणिजां कर्षकाणाञ्च चोराणां शिल्पिनां तथा ।**

**अनियम्यांशकर्त्तृणां सर्वेषामेष निर्णयः ॥ ६३३-६३७ ॥**

**दत्ताप्रदानिकम्**

अधुना विहिताविहितमार्गद्वयाश्रयतया दत्तानपकर्म दत्ताप्रदानिकमिति च लब्धाभिधानद्वयं दानाख्यं व्यवहारपदमभिधीयते । तत्स्वरूपञ्च नारदेनोक्तम्–

**दत्वा द्रव्यमसम्यग्यः पुनरादुमिच्छति ।**

**दत्ताप्रदानिकं नाम व्यवहारपदं हि तत ॥ ४।१ ।**

असम्यगविहितमार्गाश्रयेण द्रव्यं दत्त्वा पुनरादातुमिच्छति यस्मिन्विवादपदे तद्दत्ताप्रदानिकम् । दत्तस्याप्रदानं पुनर्हरणं यस्मिन् दानाख्ये तद्दत्ताप्रदानिकं नाम व्यवहारपदम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपरकर्मेत्यर्थादुक्तं भवति । दत्तस्यानपकर्म अपुनरादानाख्यं यत्र दानाख्ये विवादपदे तद्दत्तानपकर्म। तच्च देयादेयादिभेदेन चतुर्विधम् । तत्र देयमित्यनिषिद्धदानक्रियायोग्यमुच्यते । अदेयमस्वतया निषिद्धतया वा दानार्हम् । यत्पुनः प्रकृतिस्थेन दत्तमव्यावर्तनीयं तद्दत्तमुच्यते । अदत्तं तु यत्प्रत्याहरणीयं तत्कथ्यते ।

स्वकुटुम्बाविरोधेन देयम् (याज्ञ. २।१७५) अर्थात् कुटुम्बभरणावशिष्टमिति यावत्। तद्द्यात्; तद्भरणस्यावश्यकत्वात् । 'कुटुम्बाविरोधेन' इत्यनेनादेयमेकविधं दर्शयति । 'स्वं दद्यात्' इत्यनेन चास्वैभूतानामन्वाहितयाचितकाधिसाधारणनिक्षेपाणां पञ्चानामप्यदेयत्वं व्यतिरेकतो दर्शितम् । यत्पुनर्नारदेनाष्टविधत्वमेदयत्वमुक्तम् (४।३-४), एतददेयत्वमात्राभिप्रायेण, न पुनः स्वत्वाभावाभिप्रायेण; पुत्रदारसर्वस्वप्रतिश्रुतेषु स्वत्वस्य सद्भावात् ।

'स्वं दद्यात्' इत्यनेन दारसुतादेरपि स्वत्वाविशेषेण देयत्वप्रसङ्गे प्रतिषेधमाह– **दारसुतादृते** । दारसुतव्यतिरिक्तं स्वं दद्यात्, न दारसुतमित्यर्थः । तथा पुत्रपौत्राद्यन्वये विद्यमाने सर्वं धनं न दद्यात् । 'पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेत्' इति स्मरणात् । तथा हिरण्यादिकमन्यस्मै प्रतिश्रुतमन्यस्मै न देयम् ।

एवं दारसुतादिव्यतिरिक्तं देयमुक्त्वा प्रसङ्गाद्देयधनग्रहणं च प्रतिग्रहीत्रा प्रकाशमेव कर्त्तव्यमित्याह–

**प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ।**

**देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥**

**( याज्ञ. २।१७६ )**

यद्यस्मै धर्मार्थं प्रतिश्रुतं तत्तस्मै देयमेव यद्यसौ धर्मात्प्रच्युतो न भवति । प्रच्युते न पुनर्दातव्यम्; 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' (गौ. ५।२३) इति गौतमस्मरणात् । न्यायमार्गेण यद्दत्तं तत्सप्तविधमपि पुनर्नापहर्तव्यम्, किन्तु तथैवानुमन्त-

व्यम् । यत्पुनरन्यायेन दत्तं तददत्तं षोडशप्रकारमपि प्रत्याहर्तव्यमेवेत्यर्थादुक्तं भवति । नारदेन च (४।३)–दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् इति प्रतिपाद्य दत्तादत्तयोः स्वरूपं विवृतम्–

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः॥
अदत्तं तु भयक्रोधशोकवेगरुजान्वितैः।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम्।
कर्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत्॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम्॥
(नार. ४।८, ९, ११)

अयमर्थः–पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम्, भृतिर्वेतनं कृतकर्मणे दत्तम्, तुष्ट्या बन्दिचारणादिभ्यो दत्तम्, स्नेहाद्दुहितृपुत्रादिभ्यो दत्तम्, प्रत्युपकारतः उपकृतवते प्रत्युपकाररूपेण दत्तम्, स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो यद्दत्तम्, यच्चानुग्रहार्थमदृष्टार्थं दत्तम्; तदेतत्सप्तविधं दत्तमेव न प्रत्याहरणीयम् । भयेन बन्दिग्राहादिभ्यो दत्तम् । क्रोधेन पुत्रादिभ्यो वैरनिर्यातनायान्यस्मै दत्तम्, पुत्रवियोगादिनिमित्तशोकावेशेन दत्तम्, उत्कोचेन कार्यप्रतिबन्धनिरसार्थमधिकृतेभ्यो दत्तम् । परिहासेनोपहासेन दत्तम् । एकः स्वं द्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः । छलयोगतः शतदानमभिसंधाय सहस्रमिति परिभाष्य ददाति । बालेनाप्राप्तषोडशवर्षेण, मूढेन लोकवादानभिज्ञेन, अस्वतन्त्रेण पुत्रदासादिना, आर्तेन रोगाभिभूतेन, मत्तेन मदनीयमत्तेन, उन्मत्तेन वातिकाद्युन्मादग्रस्तेन वा, अपवर्जितं दत्तम्, तथा–'अयं मदीयमिदं कर्म करिष्यति' इति प्रतिलाभेच्छया दत्तम्, अचतुर्वेदाय 'चतुर्वेदोऽहम्' इति उक्तवते दत्तम्, 'यज्ञं करिष्यामीति' धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तम्, इत्येवं षोडशप्रकारमपि दत्तमदत्तमित्युच्यते; प्रत्याहरणीयत्वात् । आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम् । कात्यायनः

स्वस्थेन आर्तेन वा दत्तं श्रावितं धर्मकारणात्।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः॥

तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम्–

योगाधमनविक्रीतं योगदानप्रतिग्रहम्।
यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥
(मनु. ८।१६५)

योग उपाधिः । येनागामिनोपाधि विशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविगमे तान् क्रयादीन् विनिवर्तयेदित्यस्यार्थः । यः पुनः षोडशप्रकारमप्यदत्तं गृह्णाति, यश्चादेयं प्रयच्छति, तयोर्दण्डो नारदेनोक्तः (८।१६५)–

गृह्णाति अदत्तं यो लोभाद्यश्चादेयं प्रयच्छति ।
अदेयदायको दण्ड्यस्तथा दत्तप्रतीच्छकः ॥

येन यागादिकर्मार्थं कस्मैचिद्याचमानाय धनं दत्तं प्रतिश्रुतं वा, पश्चाच्च तद्धनमसौ यागार्थं न विनियुञ्जीत तदा तद्दत्तमपि धनं ग्राह्यं प्रतिश्रुतं च न देयम् । यदि तद्दत्तमसौ गृहीत्वा लोभादहङ्काराद्वा न त्यजति, प्रतिश्रुतं वा धनं बलेन गृह्णाति तदा तस्य चौर्यपापस्य संशुद्ध्यर्थं राजा स्वर्णं दण्डं दापनीयो भवति[1] ।

अपक्रिया क्रियापायः । तस्य नञा प्रतिषेधः । दानमेवं न चलितं भवति । एषैव दाने स्थितिरिति यावत् । कथं प्रतिश्रुत्यादीयमाने धर्मो न नश्यतीति नैषा शङ्का कर्त्तव्या । एष एवात्र धर्मो यन्न दीयते दत्तं च प्रत्यादीयते[2] । सर्वस्वं पुत्रदारमात्मानं प्रदायानुशयिनः प्रयच्छेत[3] । नदीवेगज्वालास्तेनव्यालोपरुद्धः सर्वस्वपुत्रदारात्मदानेनार्तस्त्रातारमाहूय निस्तीर्णः कुशलप्रदिष्टं वेतनं दद्यात् । तेन सर्वत्रार्तदानानुशया व्याख्याताः (अर्थ. ३।१६) । दृष्टं च लोकेऽपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात्सम्प्रदानस्य द्रव्ये स्वामित्वम् । न च स्वीकरणात् स्वत्वं स्वीकर्तुरेव दातृत्वापत्तेः । उत्पन्नमपि स्वत्वं संप्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्थं क्रियत इति स्वीकारशब्दार्थः[4] ।

**बृहस्पतिः** ( १४।४-६; ८ )

सप्तागमाद्गृहक्षेत्राद्यद्यत्क्षेत्रं प्रदीयते ।
पित्र्यं वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥
स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम् ।
वैवाहिके क्रमायाते सर्वदानं न विद्यते[5] ॥
सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥
विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधनमविक्रये ॥

---

1. मनु. ८।२१३-१४ ।
2. मेधातिथिः, मनु. ८।२१४ ।
3. कौ. ३।१६ ।
4. दायभागः १।२१-२४ पृ. १३-१५ ।
5. बन्धकमाधिस्तद्वाचारेणाधिरूपेण देयम् । तद्विवाहाल्लब्धं चेत्तस्यां भार्यायां सत्यां सर्वमदेयम् । तथा पितामहादिक्रमायातं पुत्रसद्भावे–अपरार्कः ७८०; वैवाहिकपदेन शौर्यार्जितमपि विवक्षितम्–वि. र. ११० ।

सप्तागमात्–

**सप्तवित्तागमाः धर्म्या दायो लाभः क्रयो जयः ।**
**प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥**

इति मनूक्तेः (१०।११५) सप्तविधशौर्याद्यागमलब्धधनादुद्धृत्य तद्धनमाश्रित्य ग्रहक्षेत्रादि दातव्यमिति । न त्वनागमित्यर्थः । अत्र च सप्तविधशौर्याद्यागमलब्धाद्धनादुद्धृत्य तद्धनं दातव्यमित्यक्षरार्थः। वस्तुत नु कुटुम्बभक्तवसनोचितधनाधिकं स्वत्वहेतुना लब्धं गृहक्षेत्रादिकं देयं न तु स्वत्वहेतुमन्तरेणाव्याप्तं देयमित्यर्थः । अत एव तद्धनागमाश्रित्येत्यर्थ इत्याह कल्पतरुः ।

इति मनूक्तेः–अत्र दायोऽन्वयागतं धनम्, लाभो निध्यादेः जयोऽत्र सङ्ग्रामे शत्रोरभिभवः, प्रयोगः कुसीदम्, कर्मयोगः कृषिवाणिज्यादि इति गृहस्थकाण्डे (पृ. २५९) कल्पतरुः । "सप्तागमाद् गृहक्षेत्राद्यचत्क्षेत्रं प्रदीयते' इति च पाठे" सप्तविधशौर्याद्यागमप्रकारलब्धगृहक्षेत्रादुद्धृत्य दातव्यम् । न त्वनागममित्यर्थः[1]" (अपरार्कः पृ. ७८०) ।

**भृतिविधिः–तत्राभ्युपेत्याशुश्रूषा**

शुश्रूषामाज्ञाकर्म तव करिष्यामि इत्यभ्युपेत्य तत्कर्म यो न करोति, अभ्युपेत्याशुश्रूषेति । शुश्रूषां प्रतिपाद्यमानः पञ्चविधः; चतुष्प्रकारः कर्मकरो भृत्यर्थः; दासास्त्रिपञ्चकाः । शिष्यश्चान्तेवासी च भृतकश्च शिष्यान्तेवासिभृतकाः । शिष्य उपनीयाध्याप्यते । अन्तेवासी शिल्पार्थमभ्युपगतः । भृतको वेतनेन कर्म करोति । अधिकर्मकृत् कुटुम्बव्यापारे स्थापितः । एते चत्वारः कर्मकराः प्रोक्ताः । दासा इत्युक्तास्ते गृहजादयः । इतर इच्छातः कर्मप्रतिपन्नाः, दासास्तु नियोगतोऽस्वतन्त्राः । अस्वतन्त्रमेषां चतुर्णां सामान्यं स्वाम्यधीनाः सर्वे । दासस्य तूक्तो विशेषः 'गृहजातः' इत्यादि । कर्मापि द्विविधं शुभमशुभञ्च । अशुभं दासस्य कर्मोक्तम् । द्विविधे कर्मणि कर्मकराणां शेषं शुभम्[2] ।

यावद् विद्याग्रहणं तावच्छुश्रूषेत प्रयतश्च गुरुम् । विसर्जनोत्तरकालमनियमः, धर्मार्थी शुश्रूषेत, न दण्ड्यः । प्राक् तु विनेयोऽशुश्रूषन् । गुरुदारषु गुरुपुत्रेषु च तथैव गुरुवृत्तिः[3] । अनुशासनीयो गुरुणा इच्छानुविधायी न स्याच्चेत् । धर्माद्यतिक्रमे भर्त्सनीयः । तथाप्यतिक्रामन्तं रज्ज्वा वेणुदलेन वा शिष्यात्, नोपेक्षेत । अननुविधीय-

---

1. अन्येषां मतानि–
वसिष्ठः १५।१-५; गौ. ५।२४; दक्ष. ३।१९-२०; वि. र. १२७, १२८, ११०, १३०, १३१, १३२, १३७, १३४-१३६; वि. चं. पृ. ३६; परा. मा. ३।३२०; स्मृ. चं. पृ. ४४२, ४४६, ४४५, ४५२, २ पृ. १९३; स. वि. पृ. २८५; व्य. प्र. ३१०; व्य. नि. पृ. २९८ ।
2. ना. म. सं. ५।१-५ ।
3. ना. म. सं. ५।८ ।

मानमनुशासदपि रज्ज्वादिना न भृशं ताडयेत् । मन्दं ताडयेत् त्रासजननार्थम् । मन्दमपि शिरसि वक्षसि च न ताडयेत् । ताडयित्वा च सान्त्वयेद्, अन्यथा गुरुर्दण्ड्यः स्याद् राज्ञा[1] । अन्तेवासिविधिः–आत्मनोऽभिमतं शिल्पं नानाप्रकारं तस्माच्छिल्पोपाध्यायसकाशादाहर्तुं ग्रहीतुमिच्छन् पित्रादिभिरनुज्ञातस्तस्यान्ते वसेत् तेन सह कालव्यवस्थां कृत्वा, 'इयन्तं कालं तव कर्मकरिष्यामि भवानप्यमुं शिल्पं ग्राहयतु माम्' इति। तथेत्यनुज्ञातः तदधीनो वसेत् तावन्तं कालम्[2] ।

भृतकस्त्रिविधः, उत्तमो मध्यमोऽधमश्चेति । तेषां शक्त्यनुरूपा च भृतिः कर्माश्रया। शक्तोऽपि भक्त्या न कुर्यात् कर्मानुरूपाल्पा भृतिः। भक्तोऽप्यशक्तः स्तोकं कुर्यात्, तस्यापि तदनुरूपा भृतिः। शक्तश्च भक्त्या करोति तस्य भूयसी भृतिरित्यादि द्रष्टव्यम्[3] । आयुधैः सेवकः उत्तमः । कर्षको मध्यमः । अधमो भारवाहः काष्ठोदकयवधान्यवहनादिप्रत्युपन्नप्रतिदिवसकर्मकरः । एष त्रिविधो भृतः ।

अर्थेषु भाण्डागारादिषु योऽधिकृतः स्यात् स्वामिना गृहचिन्तायां च सोऽधिकर्मकरः। तदधीना इतरे । सर्वकर्मणामुत्कृष्टे कर्मण्यधिकृत उत्तमः कर्मकरः । कौटुम्बिकश्च स एवोच्यते । शिष्यादयोऽधिकर्मकरान्ताः चत्वारः शुभकर्मकराः । अशुभकर्मकरा[4] शेषा दासाः पञ्चदशोच्यन्ते–

**गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।**
**अशनादिभृतस्तद्वदाधत्तः स्वामिना च यः ॥**
**ऋणाच्च मोक्षितोऽनल्पाद् युद्धप्राप्तः पणे जितः ।**
**तवाहमित्युपगतः प्रव्रज्यापसृतः कृतः ॥**
**भक्तदासश्च विज्ञेयस्तथैव बडबाभृतः ।**
**विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥**

(ना. म. ५।२४-२६)

आज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्यो न संपादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यम्[5] । अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् । तथा पशुपस्य[6] । यत्तु मनुना

**ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ ।**
**पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥ ८।४१५ ॥**

---

1. ना. म. सं. ५।१२-१३ ।
2. ना. म. सं. ५।१५ ।
3. ना. म. सं. ५।२० ।
4. ना. म. सं. ५।२१-२३ ।
5. मिताक्षरा–याज्ञ. २।१८२ ।
6. आप. ध. सू. २।२।२८।२-३ ।

इति सप्तविधत्वमुक्तम्, तेषां दासत्वप्रतिपादनार्थम्, न तु परिसंख्यार्थम् । 'यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्' (व्य. १९६) । बलावष्टम्भेन यो दासीकृतः, स मुच्यते । यदि स्वामी न मुञ्चति, तर्हि राज्ञा मोचयितव्यः । दासान्तेवासिनस्तु धर्मविशेषम्[1]–

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ।
स्वामिप्राणप्रदो भक्तत्यागात्तन्निष्क्रयादपि ॥

प्रव्रज्यावसितस्य तु मोक्षो नास्ति–

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ॥

( याज्ञ. २।१८३ )

**वेतनस्यानपाक्रिया**

वेतनस्य दानादानविधिक्रमो यत्र विवादपदे तद्वेतनस्यापाकर्मेत्युच्यते, तत्र निर्णयमाह–

गृहीतवेतनः कर्म त्यजन्द्विगुणमावहेत् ।
अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ।
दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥
देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥
यो यावत् कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥
अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥

( याज्ञ. २।१९३-१९८ )

कर्मणस्त्वादौ मध्येऽवसाने वा, चतुर्थपादे पञ्चसप्ताष्टविंशतिरिति पठित्वा, व्याख्यातवान् आदौ पञ्च, मध्ये सप्त, अवसानेऽष्टविंशतिरिति क्रमेण इति पारिजातः[2] । अपरिभाष्य वाणिज्यं पाशुपाल्यं कृषिं वा करोति तस्य तदुत्पन्नोपचयदशमभागभाक्त्वमित्यवसेयम् (विश्वरूपः) । यः कर्मभृतिमवस्थाप्य स्वामी

1. याज्ञ. २।१८२ ।
2. वि. र. १५६ ।

वाणिज्यपशुपालनकृषिकर्माणि कारयेत् । स तस्यैव वाणिज्यादिफलतो दशमं भागं महीभृता दातव्यः । कर्त्तव्योचितदेशकालावतिक्रामन् न्यूनत्वादिनाऽन्यथा कुर्वन् भृतकः स्वामिनश्छन्देन इच्छया भृतिं लभते । स्वाम्यपेक्षितं चाधिकं कुर्वन् अधिकां भृतिं लभेत । अनेकपुरुषैः यत्साध्यं कर्म, तत्र चोभयोरप्यसाध्ये कर्मानुरूपेण वेतनं देयम् । यत्र तु स्वामिकर्मकारयोरन्यतरस्य वा साध्यं भवति, तत्र यथाश्रुतं यथाविहितं वेतनं कार्यम् ।

पारिजाते तु 'उभयोरपि' इत्युभयग्रहणमनेकोपलक्षणार्थम्, तेन द्वाभ्यामशक्यकर्मणि तदा यो भृत्यो यावत्कर्म करोति, तस्मै कर्मानुरूपेण वेतनं देयम्, साध्ये तु यथापारिभाषितं देयम् इति व्याख्यातम् । एतेन 'साध्ये' इति पदमवगतम्[1] । यो भृतिपरिक्रीतो व्याध्यपीडितो यथानिरूपितं कर्माहङ्कारान्न कुर्यात् सकर्मानुरूपेण सुवर्णादिकृष्णलान्यष्टौ दण्डनीयः । वेतनस्य चाऽस्य न देयम् । यदा व्याध्यादिपीडया कर्म न करोति स्वस्थः सन् यादृग्भाषितं तादृक्कर्म कुर्याद् वेतनं च चिरकालादपि लभेतैव । यत्कर्म यथाभाषितं पीडितोऽन्येन न कारयेत्सुस्थो वा न कुर्यान्नापि कारयेत्तस्य किञ्चिच्छेषस्य कृतस्य कर्मणोऽपि वेतनं न देयम्[2] ।



1. वि. र. १५७ ।
2. मनु. ८।२१५-२१७; नारद. ९।१-९; ना. म. सं. ६।१-२३; बृह. १६।१-९; आप. २।२८।२-४; कात्यायन. ६५७, ६६१, ६५०; वि. र. १५६, १५७, १५८, १५९, १६०, १६१, १६२, १६३, १६४, १६५, १६७; स्मृ. चं. पृ. ४८१-४८२; व्य. म. २१३ ।

# अध्यायः ५

## दण्डः

आरम्भिके समाजे दण्डविधानस्यैतदेवोद्देश्यमासीत् यदपराधी दुःखमनुभवेत् । अत एव तदानीं मूलतो वैयक्तिकस्य प्रतिशोधस्य भावना भवतिस्म अधिकं क्रियाशीला । पीडितस्यैषा भावना यदपराधी तथैव कष्टमनुभवेत् यथा स तं कष्टमन्वभावयत् । अत्र हि प्रायः प्रकृतावधिकं विश्वस्यते स्म । आत्मरक्षेति कृत्वा कस्यचिद्धहननमपि अपराध एव । तदानीं हि आत्मगौरवपरिरक्षार्थमपि पीडितस्तथा ईहते यथा अपराधी क्षतिंपरिपूरयेत्, कष्टं वानुभवेत् । नेत्राभ्यां नेत्रयोः, दन्तेभ्यश्च दन्तानां प्रतिदानम्, नेत्रक्षतेर्नेत्रेण, दन्तक्षतेर्दन्तैः पूरणं वा स्पष्टयति इमां भावनाम् । अस्याञ्च समानक्षतिपूर्त्तौ तदेव शस्त्रं सैव वा प्रक्रिया प्रयुज्यतेस्म, येन शस्त्रेण यथा वा प्रक्रिययापराधिना पीडितस्य क्षतिः कृता । अस्यां प्रतिफलीयस्थितौ पीडाया उचितं प्रमाणं मूल्यं स्वरूपं वा निर्धार्यते स्म । वधचौर्यप्रभृतिष्वन्येषु च वैयक्तिकेष्वपराधेषु शारीरिको दण्डो दृश्यते। लघुष्वप्यपराधेषु मृत्युदण्डः सम्भाव्यते । देवविषयकेषु अपराधेषु अपराधी महद्दारुणं दण्डयते, क्वचित्-क्वचित्त्वपराधिनो दाहदण्डो दृश्यते, क्वचित्तु इतोऽप्यधिकं दण्डस्य दारुणता यदपराधी अतिदुस्सहां व्यथामनुभाव्यमानः जनैर्भक्ष्यतेस्म अपि । अफ्रिकादेशे एवंविधा दण्डव्यवस्था प्राय आसीदादिमजातीयेषु[1] ।

ऋणस्याप्रत्यावर्तनेऽङ्गच्छेदादीनामिव दासीकरणस्यापि व्यवस्था प्रायः सर्वत्रैव दृश्यते । चौर्ये चोरस्य विक्रयोऽपि दण्डतया व्यवस्थापितः । अपराधिनोऽवमानननार्थं शिरोमुण्डनमपि लभ्यते । प्रतिफलस्यानर्पणोऽर्थाच्क्षतेरपूरणे सामान्यतः दासीकरणप्रक्रिया दृश्यते सार्वत्रिकी । आटव्यानां पारिवारिकनियमानतिवर्तने सामान्यत आसीन्निष्कासनदण्डः[2] । धनिभिरपराधिभिः प्रायः प्रतिफलतया धनं प्रदीयतेस्म । इत्थं कैश्चिदपराधान् विहाय सामान्यतोऽपराधेषु प्रतिफलव्यवस्था लभ्यते । अत्रैव दण्डेनापराधेन च परिवाराणां सम्बन्धः स्फुटीभवति । परिवारप्रधानः तत्परिवारप्रतिकूलमाचरणे प्रतिफलतया अपराधिनम्, तदीयां कन्यां भार्यां वा दासी करोति क्रीणाति वा ।

---

1. Westermarck, 1, 179. Encyclopaedia of Religion and Ethics, Vol. IV, 251. Ellis, Tshi, Speaking Peoples, 1887, p. 166. Kaullman, Victoria Nyoza, Berliss, 1889, 170.
2. Westermarck, 1, 172.

प्रतिशोधभावनैव प्रतिफलव्यवस्थायाः पृष्ठभूमिः, परं न स दण्डो वक्तुं शक्यो यतः प्रतिशोधो भवति वैयक्तिकः, दण्डश्च सामाजिकः। प्रतिशोधो हि तस्याव्यक्तेः तां व्यक्तिं प्रति व्यवहारो यस्या ययापराद्धम्, एवं वोच्यतां यत् कर्तृतया विषयतया च व्यक्तिगत एव व्यवहारः प्रतिशोधः। दण्डः पुनः समाजस्य तं पुरुषं प्रति स व्यवहारः यं व्यवहारं समाजः सामाजिकानां नियमानामुल्लङ्घयितर्यनुतिष्ठति। इत्थञ्च व्यक्ति-विषयकः परं समाजगतो सामाजिको वा व्यवहारो दण्डः। प्रतिशोधे व्यक्तिः समूहो वा पीडितपक्षमनुमोदयति। अस्यामवस्थायां वैयक्तिकस्सामूहिको वा प्रतिशोधः स्वी-क्रियते। व्यक्तिः स्वीयस्य हितस्याधिकारस्य वा भङ्गभियः प्रतिशोधमङ्गीकरोति। एवं हि स भवति सुरक्षात्मकः। प्रथमतस्तु प्रतिक्रियात्मक एव, नात्र कश्चिदपि कस्यापि हितमुपेक्षितुमर्हति।

प्रारम्भिके समाजे समाजेन तदीयैः प्रतिनिधिभिर्वा प्रतिशोधभावनामेव आधार-शिलीकृत्य न्यायो व्यवस्थापितः। तदानींतनो दण्डः सामाजिकसंरक्षणदृष्ट्या ईषदूनः प्रतिशोध एव। तदानींतनस्समाजःकष्टम्, प्रायश्चित्तमन्यद्वा यत्किमपि दण्डस्वरूपं व्यवस्थापयत् न तदुपेक्षितुमनङ्गीकर्तुं वा क्षम्यतेस्म अपराधिना। वैयक्तिकः प्रतिशोधः सामाजिको न्यायश्च तुल्यकोटिकौ आस्तां तस्मिन् समाजे। इयांस्तु विशेषः सामाजिको न्यायः भवत्यापेक्षिको निष्पक्षः। परमपराधी न केवलमात्मनैव अपि तु निर्णायकैरपि अवज्ञायते।

सामाजिको न्यायः प्रथमं सीमित एव भवति। अथ चापेक्षते वैयक्तिकं सामाजिकं प्रतिशोधम्। एष न्यायोऽप्युच्यते यत एतस्य कार्यान्वयने न व्यक्तेरपि तु समाजस्याधिकारः। अस्य च कार्यान्वयने समाजेन स्वायत्तीकृते न्यायस्य भवत्येकं विशिष्टस्वरूपम्। सामाजिके न्याये अपराधी पीडितस्य बान्धवानां हस्तेषु समर्प्यते। अस्यामवस्थायां निर्णयस्तत्कार्यान्वयनञ्चापि पीडितस्य सम्बन्धिनामेव भवति हस्तगतम्। सम्बन्धिन एव तस्यामवस्थायां वैयक्तिकप्रतिशोधे प्रायः प्रतिफलमेव विधीयते यद्येवं करणे सामाजिक्याः सुरक्षाया न सम्भाष्येत् क्षतिः। सभ्यताया विकाशेन सहैव कुटुम्बस्य, ग्रामस्य, समूहस्य वा प्रधाना अपि उद्गताः। तदानीमेषा व्यवस्था प्रधानैः सञ्चाल्यतेस्म।। प्रारम्भिकसमाजे कौटुम्बिकैस्सम्बन्धैः सह अस्या व्यवस्थायाः प्रवर्तने इतोऽप्यधिकं सारल्यम्। येन व्यवहारेण एकः पीड्यते सोऽपरमपि पीडयितुमलम्।

अस्यामवस्थायामात्मरक्षार्थं या परम्परा आधारशिलीक्रियते, तया सदाचारस्य विधेश्च बीजमारोप्यते। अनयोरतिवर्तनमेवापराधः। प्रारम्भिकसमाजीयाना-मुचितानुचितव्यवहाराणां निर्णयस्याभिव्यञ्जनमेव सदाचारः। एतदनुसारेणैव कर्मणा-मौचित्यानौचित्ये परीक्ष्येते। यद्यप्येतेषु कानिचिदीदृशानपि कर्माणि येषां नाचारेण

सम्बन्धः । इत्त्थं नैतिकी धारणा सामाजिकं न्यायम्, सामाजिकं प्रतिशोधञ्चाभिव्यनक्ति । सामाजिके न्याये नैतिकतायाः संस्पर्शो भवत्यधिकः यतोऽस्य सम्बन्धो बहुभिर्जनैः । एवंरीत्या ईक्षणे दण्डस्यापि नैतिकतया सम्बन्धः परिलक्ष्यते । प्रारम्भिकस्य समाजस्य द्वितीयचरणे, यदा समाजो विकाशमायातः, दण्डस्य दारुणतैधमाना दृश्यते । इतः प्रागासीदपराधानुपाती दण्डः ।

अपराधनिरोधार्थं प्रसरन्त्याः प्रतिशोधप्रवृत्तेर्यो व्यक्तिविशेषेण सम्बन्धस्तत एव प्रधानानां प्रभुता उद्गता । एतेन केन्द्रियवादिस्थितिर्विकाशमायाति । प्रधानैः सञ्चाल्यमानया दण्डव्यवस्थया वैयक्तिकप्रतिशोधभावनया क्रियमाणा रक्तपातादयोऽप्यल्पतां नीताः । क्वचित्-क्वचित्तु व्यक्त्या प्रतिफलग्रहणविषयकाः स्वीया अधिकारा अपि प्रधानेभ्यः समर्पिताः । अस्यां स्थितौ न केवलः परामर्शः अपितु निर्णयोऽपि प्रधानायत्तोऽभूत् । यदि पुरुषः गवेषणायामक्षमस्तदा प्रधानास्तस्य साहाय्यमाचरन्ति । समाजीया अन्येऽपि जनाः सौजन्यभावनया कार्येऽस्मिन् तमुपकुर्वन्ति । इत्त्थं दण्डप्रयोगेण शनैः शनैर्व्यक्तिगततां विहाय प्रधानगततां प्रत्युन्मुखी भूतम् । एवं क्रमेण दण्डसञ्चालनं केन्द्रीयव्यक्तिविशेषे विश्राम्यत्, राजतन्त्रमुद्भावयत् ।

प्राचीनभारतीयसमाजे प्रतिशोधभावनाया हेतोर्दण्डविधिर्न तथा विकाशमायातः । वैदिके काले आसीद् यादृशी व्यवस्था तत्र न दृश्यते प्रधानानां स्थितिः, अपितु सामाजिकीनां संस्थानां विकाशस्य स्वरूपं लभ्यते । तासां प्रभुर्न कश्चिद् व्यक्तिविशेषः नापि सञ्चालकः । ताभिश्च संस्थाभिर्न केवलं प्रतिफलमेव व्यवस्थापित अपित्वपराधानां दण्डानामुचितव्यवस्थापि तासां कर्त्तव्यक्षेत्रे । एषा च स्थितिरुत्तरवैदिककाले स्फुटविकाशमायाता । तदानीं दण्डानां सूची अपि पुर आयाता । व्यवतिष्ठत च दण्डस्य दार्शनिकं सामाजिकञ्च स्वरूपम् । स्थितिमिमां स्पष्टयितुं दण्डस्य सर्वाङ्गविषयिणी मीमांसा इहापेक्ष्यते ।

वेदेषु दण्डशब्दो दृश्यते परं न तस्य तत्र न्यायिकप्रशासने राज्यसञ्चालने वा स्फुटः प्रयोगः । अनयोर्विषये शब्दस्यास्य प्रयोगो ब्राह्मणग्रन्थेषु लभ्यते[1] । सूत्रकाले दण्डस्य विभिन्नान्यङ्गानि विकाशमापुः[2] । आर्यानार्ययोर्व्यतिणेपे निवारयिता राजा । अतस्तद्धर्मान् दण्डप्रयोगाश्च आह—

राजा सर्वस्येष्टे ब्राह्मणवर्जम् । साधुकारी साधुवादी । त्रय्यामान्वीक्षिक्या वाऽभिविनीतः । शुचिर्जितेन्द्रियो गुणवत्सहायोपाय सम्पन्नः । समः प्रजासु स्यात् । हितमासां

1. शत. ब्रा. ५।४।४।७; ताण्ड्य. १७।१ ।
2. **दण्डस्तु देशकालकर्मवर्णवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्यः, आगमदृष्टान्ताच्च**, वसिष्ठसं २१।१७-९; बौधा. १।१०।१८ ।

कुर्वीत । तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यः । तेप्येनं मन्येरन् । धर्मस्य ह्यंशभाग्भवति इति। ब्राह्मणञ्च पुरोदधीत विद्याभिजनवाग्रूपवयः शीलसम्पन्नं न्यायवृत्तं तपस्विनम् । तत्प्रसूतः कर्माणि कुर्वीत । ब्रह्मप्रसूतं हि क्षत्त्रमृध्यते न व्यथत इति च विज्ञायते । यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत । तदधीनमपि ह्येके योगक्षेमं प्रतिजानते (गौ. ध. स. २।२।१-१६) ।

शान्तिपुण्याहस्वस्त्ययनायुष्मन्मङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्यात् । यथोक्तमृत्विजोऽन्यानि । तस्य च व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणम् । देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणम् । कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे । तेभ्यो यथाधिकारमर्थान्प्रत्यवहृत्य धर्मव्यवस्था । न्यायाधिगमे तर्कोऽभ्युपायः । तेनाभ्यूह्य यथास्थानं गमयेत् । विप्रतिपत्तौ त्रैविद्यवृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेत् । तस्य ह्यस्य निःश्रेयसं भवति । **दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत्** (गौ. २।२।१७-२८) । वर्णाश्रमाः स्वस्वधर्मनिष्ठाः प्रेत्यकर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतचित्रवित्तसुखमेधसो जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता नश्यन्ति । **तानाचार्योपदेशो दण्डश्च पालयते** । तस्माद्राजाचार्यावनिन्द्यावनिन्द्यौ । दण्डैनादान्तान्दमयेदित्युक्तम् (गौ. २।२।२९-३२) । तत्र कियत्यपराधे कियान्दण्ड इत्यत आह—

> **शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्यो येनोपहन्यात् । आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च । गोप्ता चेद्वधोऽधिकः । अथ हास्य वेदमुपश्रृण्वतस्त्रपुजन्तुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः । आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः । शतं क्षत्त्रियो ब्राह्मणाक्रोशे । अध्यर्धं वैश्यः । ब्राह्मणस्तु क्षत्त्रिये पञ्चाशत् । तदर्धं वैश्ये । न शूद्रे किञ्चित् । ब्राह्मणराजन्यवत्क्षत्त्रियवैश्यौ । अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य । द्विगुणोत्तराणीतरेषां प्रतिवर्णम् । विदुषोऽतिक्रमे दण्डभूयस्त्वम् । फलहरितधान्यशाकादाने पञ्चकृष्णलमल्पम् । पशुपीडिते स्वामिदोषः । पालसंयुक्ते तु तस्मिन् । पथि क्षेत्रेऽनावृत्ते पालक्षेत्रिक्रयोः ॥ गौ. २।३।१-१८ ॥**

अग्रिमेऽध्याये गौतमेन दण्डपरिमाणं विस्तरेण धर्मशास्त्राणामाधारभूतत्वेन वर्णितम् । यथाविधे राज्ये च सामाजिकी सुरक्षैव मुख्यं प्रयोजनम् । एवं दण्डव्यवस्थाऽपि सामाजिकीं सुरक्षामुद्दिश्यैव प्रवर्तिता सूत्रकारैः । अत एवास्यां जाति-

देशकुलादीनामपि समीक्षा दृश्यते । दण्डविधौ देशकालवयोविद्यादिष्विव दण्ड्यस्य मनस्थितावपि अवधेयम् । एवंविधा नियमाः समेषामपि सूत्रकाराणामनुमताः ।

गौतमः दम् धातोर्दण्डशब्दमाह । एतदनुसारेण च दण्डो निरोधकः । राजाऽपि च नियन्त्रकत्वाद् दण्ड इति व्यपदिश्यते । परं न राजा स्वतन्त्रः । नाऽपि दण्डोऽपित्वेतदुभयमपि विधिना नियन्त्रितम् । द्वयोरप्यनयोर्नियन्त्रकः: विधिरिति दर्शनं सूत्रकाराणाम् । विधिमतिवर्तमानो राजाऽपि भजति दण्डम् । शक्तिं विना न्यायो निष्क्रियः । एष पक्षो नाभिमतः सूत्रकाराणाम् तथापि एतैर्मानवीयः स्वभावः प्रकृत्या पवित्र उक्तः । अथ चैतदपि स्वीकृतं यन्न भयेनैवाधिकारस्य कर्त्तव्यस्य वा सुरक्षा भवति अतस्तैर्नियमानां व्यवस्थायाश्च सुरक्षार्थं विधिरूपा शक्तिराश्रिता ।

दण्डस्याविर्भावः न मानवीयोऽपितु दैवः । अत एव दण्डे दैवगुणा अनुस्यूताः । स पुरुषं पुनाति । एष हि न पाशविकप्रतीकारः शक्तिं सन्तोषयति, न वा केवलं भाविनोऽपराधिनो भीषयते नापि केवलमपराधिनमपराधात् निवर्तयति अपि तु अपराधिनं कल्याणमार्गमपि दर्शयति । पीडितोऽपि स्वीयमस्तित्वं रक्षयितुं क्षमेत, लभेत च स्वीयामुपयोगितामित्येव दण्डव्यवस्थाया अर्थः । एवं हि स आत्मनो नैतिकमूल्यं प्रतिष्ठापयितुं क्षमते । प्रारम्भिकस्य समाजस्य य प्रतीकारात्मकः पक्षस्तस्यापि बीजं दृश्यते सूत्रग्रन्थेषु विधेः प्रतिष्ठापनार्थं दार्ढ्यार्थं वा प्रतारणा-मप्यनुमन्यन्ते सूत्रकाराः । परमिदं प्रतारणं न ते सार्वत्रिकं मन्यन्ते यतो यदा व्यक्तिः क्षुद्रतया विधेर्मर्यादामतिवर्तते तदैवैतदपेक्ष्यते[1] ।

वैदिकसमाजस्य कानिचिद् वैशिष्ट्यान्यासन् । इदमेकमस्य मुख्यं वैशिष्ट्यं यदसौ समाजः स्वत एव सञ्चाल्यमान आसीत् । शासनस्य प्रातिनिध्यं व्यवस्थया क्रियत, व्यवस्थायाश्च सञ्चालकः समाज एव । व्यवस्था तावत् क्रमेण विकशन्ती केषुचिदंशेषु प्राशासनिकतामाससाद । तदानीं समाजो नासीदनेकेषु वर्गेषु विभक्तः । बाह्येभ्यः शत्रुभ्यः संघबद्धेभ्यश्च भीतिः तैश्च सह कीदृशः सम्बन्धो व्यवस्थापनीयः कीदृशं वा तेषु व्यवहर्तव्यमित्येषा विचारणा द्वयमप्येतद् वैदिकसमाजमाक्रमत । परं विधिसंहितायां न तेषां कृते आसीद् व्यवस्था वैषम्यम् । एवंविधानां समाजानामा-चाराः परिगृहीताः । एषा स्थितिर्यथाकथञ्चित् सूत्रकालं यावदन्ववर्तत । यद्यपि ब्राह्मणकालादुत्तरमस्यामारब्ध परिवर्तनम् । तदानीं शासनसञ्चालक आसीद्राजा । सहैव न्यायसञ्चालकतापि तस्मिन्नेव व्यश्राम्यत । ततश्च समाजस्य प्रशासन-मूर्ध्वमुखतां विहायाधोमुखताम् आययौ ।

---

1. Neibuhr, Human Destiny, PP. 266-267.
Prof. Cahn, Sense of Injustice, PP. 7,27.
Konkunov, Theory of law.

दस्युदासशूद्रकिरातकोलपुलिन्दप्रभृतयो विभिन्ना अवैदिक्यो जातयो वैदिकसमाजे पदं निधातुमारभन्त। एताभ्यश्च वैदिकसमाजः कथं रक्षणीय इत्येषोऽपि प्रश्न उत्थितः। मनुकालं यावद् उपनिवेशैः सह वैदिकसमाजस्य सम्बन्धाद् राजशक्तिविस्तारं प्रशासनञ्च कठोरतां ययौ। बौद्धक्रान्त्योद्भावितां स्थितिं नियमयितुं सामाजिकान् सदस्यान् नियमविशेषैर्निबन्धुञ्च शक्तेश्चरमं स्वरूपमवततार। नीतिधर्मसम्पत्तिजीवनसदाचारादीनां सुरक्षार्थं दण्ड एव एक उपायोऽभूद् आश्रयणीय इदानीम्। समाजे व्यक्तौ च स्वतः सञ्चालनस्य क्षमता नावशिष्यत। एतत्समं समीक्ष्य सूत्रकालादुत्तरवर्तिन्याः स्थितेः स्वरूपादिके आलोच्यमाने मूलभूतः प्रश्नो भवति समाहितः। एतदवधेयं यद् वेदानां मूलधारायास्सुरक्षायां व्यवहारे च सम्रैरपि शास्त्रकारैश्चेष्टितम्, एष एव तेषां यथास्थितिसुरक्षायां प्रयासः।

धर्मसूत्राणां निकटवर्त्ति धर्मशास्त्रम्। मनुमतानुसारं राज्ञः प्रयोजनसिद्धये सर्वप्राणिनां रक्षितारं **धर्मस्वरूपं पुत्रं दण्डं** ब्रह्मणो यत्केवलं तेजस्तेन निर्मितं न पाञ्चभौतिकं देहं ब्रह्मा पूर्वं सृष्टवान्। तस्य दण्डस्य भयेन चराचराः सर्वे प्राणिनो भोगं कर्त्तुं समर्था भवन्ति, अन्यथा बलवता दुर्बलस्य धनदारादिग्रहणे तस्याऽपि तदपेक्ष्य च बलिनेति कस्याऽपि भोगो न सिध्येत्, वृक्षादीनां स्थावरादीनां छेदने भोगासिद्धिः, तथा सतामपि नित्यनैमित्तिकस्वधर्मानुष्ठानमकरणे याम्ययातनाभयादेव।

तं दण्डं देशकालादौ दण्डस्य च शक्तिं विद्यादिकं यस्मिन्नपराधे यो दण्डोऽर्हतीत्यादिकं शास्त्रानुसारेण निरूप्यापराधिषु प्रवर्तयेत्। स एव दण्डो वस्तुतो राजा तस्मिन् सति राजशक्तियोगात्। स एव पुरुषस्ततोऽन्ये स्त्रिय इव तद्विधेयत्वात्, स एव नेता तेन कार्याणि नीयन्ते प्राप्यन्ते, स एव शासिता शासनमाज्ञा तद्दातृत्वात्, स एव चतुर्णामप्याश्रमाणां यो धर्मस्तस्य संवादने प्रतिभूरिव प्रतिभूर्मुनिभिः स्मृतः।

यस्माद्दण्डः सर्वाः प्रजा आज्ञां करोति तस्मात्साधूक्तं शासितेति ज्ञेयम्। यस्मात्स एव प्रजा रक्षति ततो युक्तमुक्तं राजेति। निद्राणेष्वपि रक्षितृषु दण्ड एव जागर्ति तद्भयेनैव चोरादीनामप्रवृत्तेः। दण्डमेव धर्महेतुत्वाद्धर्मं जानन्ति। कारणे कार्योपचारः ऐहिकपारत्रिकदण्डभयादेव धर्मानुष्ठानात्। स दण्डः शास्त्रतः सम्यक् निरूप्यापराधानुसारेण देहधनादिषु धृतः सर्वाः प्रज्ञाः सानुरागाः करोति। अविचार्य तु लोभादिना प्रयुक्तः सर्वाणि बाह्यार्थपुत्रादीनि नाशयति।

यदि राजानलसो भूत्वा दण्डप्रणयनं न कुर्यात्तदा शूले कृत्वा मत्स्यानिव बलवन्तो दुर्बलानभक्ष्यन्। बलिनोऽल्पबलानां हिंसामकरिष्यन्नित्यर्थः। अत्र बलवन्तो दुर्बलान्हिंस्युरिति मात्स्यन्याय एव स्यात्।

यदि राजा दण्डं नाचरिष्यत्तदा यज्ञेषु सर्वदा हविरनर्हःकाकः पुरोडाशमखादिष्यत्। तथा कुक्कुरः पायसादि हविरलेक्ष्यत्। न कस्यचित्कुत्रचित्स्वाम्यमभविष्यत्।

ततो बलिना तद्ग्रहणाद् ब्राह्मणादिवर्णानां च मध्ये यदवरं शूद्रादि तदेवोत्तरं प्रधानं प्रावर्तिष्यत् । सर्वोऽयं लोको दण्डेनैव नियमितः सन्मार्गेऽवतिष्ठते । स्वभावविशुद्धो हि मानुषः कष्टेन लभ्यते । तथा सर्वमिदं जगद्दण्डस्यैव भयादावश्यकभोजनादि-रूपेऽपि भोगे समर्थं भवति ।

इन्द्रादिसूर्यवाय्वादयो देवास्तथा दानवगन्धर्वराक्षसपक्षिसर्पा अपि जगदीश्वर-परमार्थभयपीडिता एव वर्षदानाद्युपकाराय प्रवर्तन्ते । तथा च श्रुतिः "भयादस्याग्नि-स्तपति, भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति । दण्ड-स्यानाचरणादनुचितेन वा प्रवर्तनात्सर्वे ब्राह्मणादिवर्णा इतरेतरस्त्रीगमनेन सङ्कीर्येरन्, सर्वशास्त्रीयनियमाश्चतुर्वर्गफला उत्सीदेयुः, चौर्यसाहसादिना च परस्यापकारात्सर्व-लोकसंक्षोभश्च जायेत ।

यत्र देशे शास्त्रप्रमाणावगतः श्यामवर्णो लोहितनयनोऽधिष्ठातृदेवताको दण्डो विचरति तत्र प्रजा व्याकुला न भवन्ति। दण्डप्रणेता यदि विषयानुरूपं सम्यग्जानाति। तस्य दण्डस्य प्रवर्तयितारमभिषेकादिगुणयुक्तनृपतिमवितथवादिनं समीक्ष्यकारिणं तत्त्वातत्त्वविचारोचितं प्रज्ञाशालिनं धर्मार्थकामानां ज्ञातारं मन्वादयोऽप्याहुः । तं दण्डं राजा सम्यक् प्रवर्तयन्धर्मार्थकामैर्वृद्धिं गच्छति । यः पुनर्विषयाभिलाषी विषमः कोपनः क्षुद्रश्छलान्वेषी नृपः स प्रकृतेनैव दण्डेनामात्यादिना कोपादधर्माद्वा विनाश्यते।

यतो दण्डः प्रकृष्टतेजः स्वरूपः स्वशास्त्रैरसंस्कृताभिर्दुःखेन ध्रियतेऽतो राजधर्म-हितं नृपमेव पुत्रबंधुसहितं नाशयति । दोषाद्यनपेक्षया यो दण्डः क्रियते स बन्धु-नृपनाशान्तरं धन्वादिदुर्गराष्ट्रं देशं पृथिवीलोकं जङ्गमस्थावरसहितं 'हविःप्रदानजीवना देवाः' इति श्रुत्या हविःप्रदानाभावेऽन्तरिक्षगतानृषीन् देवांश्च पीडयेदिति । स दण्डो मन्त्रिसेनापतिपुरोहितादिसहायरहितेन मूर्खेण लोभवता शास्त्रसंस्कृतबुद्धिपरेण नृपतिना शास्त्रतो न प्रणेतुं शक्यते । अर्थादिशौचयुक्तेन सत्यप्रतिज्ञेन यथाशास्त्रव्यवहारिणा शोभनसहायेन तत्त्वज्ञेन कर्तुं शक्यत इति । आत्मदेशे यथाशास्त्रव्यवहारी स्यात् । शत्रुविषयेषु तीक्ष्णदण्डो भवेत्। निसर्गस्नेहविषयेषु मित्रेष्वकुटिलः स्यान्न कार्यमित्रेषु । ब्राह्मणेषु च कृताऽल्पापराधेषु च क्षमावान् भवेत्[1] ।

दण्डप्रयोगे वर्णादीनामपेक्षा अनिवार्या । ब्राह्मणक्षत्रियाभ्यां परस्परं पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः । ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यः । ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः[2] । वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे कृते ब्राह्मणक्षत्रियवद्वैश्ये शूद्राक्रोशिनि प्रथम साहसः । शूद्रे वैश्या-

1. मनु. ७।१४-३२ ।
2 मनु. ८।२७६ ।

क्रोशिनि मध्यमसाहसः, इत्येवं रूपं दण्डस्य प्रणयनं जिह्वाच्छेदरहितं यथावत्कर्त्तव्यमिति शास्त्रनिश्चयः (मनु. ८।२७७)।

दण्डविनिर्णये विधिरावश्यकः[1] । विधिसम्मतदण्डप्रयोक्तुः राज्ञो राष्ट्रे चौरः, परदारगामी, परुषवादी, गृहदाहादिसाहसकारी, दण्डपारुष्यकर्त्ता च नास्ति, स राजा शक्रलोकभाग्भवति[2] । स्तेनादीनां पञ्चानां स्वराष्ट्रे निग्रहः समानजातीयेषु राजसु मध्ये राजा साम्राज्यकृदिह लोके च यशस्करो भवति[3] । अवैदिकमर्यादाचरणे लिप्तान् द्यूतसेविनः, नर्तकगायकान्, वेदविद्विषः, श्रुतिस्मृतिबाह्यव्रतधारिणः, अनापदिपरकर्मजीविनः, शौण्डिकान्मद्यकरान् मनुष्यान् क्षिप्रं राजा राष्ट्रान्निर्वायेत्[4] । सेनापत्यम्, राज्यम्, दण्डप्रणेतृत्वम्, सर्वभूम्याधिपत्यादीन्येतत्सर्वमुक्तप्रयोजनं वेदात्मकशास्त्रज्ञ एवार्हति[5] । दण्डो हस्त्यश्वरथपादातमिति बलपरमपि व्याख्यातम्[6]।

जातिद्रव्यपरिमाणपरिग्रहविनियोगवयःशक्तिगुणदेशकालादीनां दण्डगुरुलघुभावंकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह–

**क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।**
**देशकालवयःशक्ति संचित्यं दण्डकर्माणि ॥**

**(याज्ञ. २।२७५)**

मूल्याद्यनुसारतो दण्डः प्रकल्पनीयः । त्रिप्रकारेष्वपि द्रव्येष्वौत्सर्गिकः प्रथममध्यमोत्तमसाहसरूपो दण्डनियमः। मृन्मयेषु मणिकमल्लिकादिषु गोवाजिव्यतिरिक्तेषु च महिषमेषादिपशुषु ब्राह्मणसंबन्धिषु च कनकधान्यादिषु तरतमभावोऽस्तीति उच्चावचदण्डविशेषाकाङ्क्षायां मूल्याद्यनुसारेण दण्डः कल्पनीयः । तत्र च दण्डकर्मणि दण्डकल्पनायां तद्धेतुभूतं देशकालवयः शक्तीति सम्यक् चिन्तनीयम् । एतच्च जातिद्रव्यपरिमाणपरिग्रहादीनामुपलक्षणम् ।

तथा हि–"अष्टापाद्यं स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणीतरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वम्" इति । अयमर्थः–किल्बिषशब्देनाऽत्र दण्डो लक्ष्यते । यस्मिन्नपहारे यो दण्ड उक्तः स विद्वच्छूद्रकर्तृकेऽपहारेऽष्टगुण आपादनीयः । इतरेषां पुनर्विट्क्षत्रब्राह्मणादीनां विदुषां स्तेये द्विगुणोत्तराणि किल्बिषाणि षोडशद्वात्रिंशच्चतुःषष्टिगुणा दण्डा आपादनीयाः । यस्माद् विद्वच्छूद्रादिकर्तृकेष्वपरिहारेषु दण्डभूयस्त्वम्। तथा परिमाणकृतमपि दण्डगुरुत्वं दृश्यते ।

---

1. मनु. ८।३०१ ।
2. मनु. ८।३८६ ।
3. मनु. ८।३८७ ।
4. मनु. ९।२२५ ।
5. मनु. १२।१०० ।
6. मनु. ९।२९४ ।

हर्तुर्ह्रियमाणस्वामिगुणापेक्षया सुभिक्षदुर्भिक्षकालाद्यपेक्षया वा ताडनाङ्गच्छेदन-वधरूपा दण्डा योज्याः। तथा सङ्ख्याविशेषादपि दण्डविशेषो रत्नादिषु । अकुलीनानां तु दण्डान्तरम् । तथापराधगुरुत्वादपि दण्डगुरुत्वम् । इत्येवं सर्वेषामानन्त्यात्प्रति द्रव्यं वक्तुमशक्तेर्जातिपरिमाणादिभिः कारणैर्दण्डगुरुलघुर्भावः कल्पनीयः । पथिकादीनां पुनरल्पाहारे न दण्डः ।

**महाभारते** दण्डस्य सार्वभौमः स्वरूपः–

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
दण्डः संरक्षते धर्मं तथैवार्थं जनाधिपः ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एवं विद्वन्नुपाधत्स्व भावं पश्यस्व लौकिकम् ॥
राजदण्डभयादेके पापाः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥
परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥
दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥
यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥
वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
दानदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते ॥
असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशांपते ॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ते नेता चेत्साधु पश्यति ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥
नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥

नाच्छित्वा परमर्माणि नाकृत्वा कर्मदुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ।
नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ॥
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
य एव देवा हन्तारस्तांल्लोकोऽर्चयते भृशम् ॥
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ।
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ॥
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ।
दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।
जले मत्स्यान् इवाभक्ष्यन् दुर्बलान्बलवत्तराः ॥
सत्यं चेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधुनीतः ।
पश्याग्नयश्च प्रतिशाम्य भीताः सन्तर्जिता दण्डभयाज्ज्वलन्ति ॥
अन्धं तम इवेदं स्यान्न प्राज्ञायत किञ्चन ।
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥
येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ॥
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः ।
दण्डस्य हि भयाद् भीतो भोगायैव प्रवर्तते ॥
चातुर्वर्ण्यप्रमोदाय सुनीतिनयनाय च ।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम् ॥
यदि दण्डान्न विभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हर्वींषि च ॥
ब्रह्मचार्यधीयीत कल्याणीं न दुहेत गाम् ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥
विष्वग्लोपः प्रवर्तेत भिद्येरन्सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चित् यदि दण्डो न पालयेत् ॥

न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं सुप्रतिष्ठितः ॥
न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ॥
हविः श्वा प्रलिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुराडाशं यदि दण्डो न पालयेत् ॥
यदीदं धर्मतो राज्यं विहितं यद्यधर्मतः ।
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान् यजस्व च ॥
सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
अर्थे सर्वे समारम्भाः समायत्ता न संशयः ॥
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥

(महा. शां. १५।३-४८)

यद्यप्येष पूर्वपक्षोऽर्जुनेन द्रौपद्याः समर्थने प्रस्तुतः, यश्च भीमसेनेन समर्थितोऽग्रिमेऽध्याये, युधिष्ठिरेणोत्तरपक्षव्याख्याने समाहितः तथापि अस्माकं प्रयोजनाय अध्यायोऽयमत्यन्तमहत्त्वपूर्णः ।

एतदनुसारं दण्डमेव धर्ममाहुर्विद्वान्सः । दण्ड एव धर्मार्थकामान् परिरक्षतीत्येष एव त्रिवर्गः । एवंविधेन विवेचनेन वैदिकसमाजतो विकशन्त्यां परम्परायां परिवर्तनमारब्धम् । इदानीं व्यक्तिर्दण्डभयेनैव नियमान् परिपालयति । ब्रह्मचारी, गृहस्थः, वनस्थः, भिक्षुर्वाऽपि न स्वभावतः पवित्रः । मनुष्या अपि दण्डभीरेव कर्त्तव्यपालने प्रवर्तन्त इति दर्शनमर्जुनस्य । दण्डोऽयं राजदण्डो वा स्याद् यमदण्डो वा परं दण्डभीरेव पापादपि निवारयति मानवम् । भयं मनुष्यस्य स्वाभाविकी एव वृत्तिः। दण्डः स्वयं विष्णुर्नारायणो महापुरुषश्च । सूर्योऽन्धतमसमिव, अंकुशो गजमिव, दण्डो दुष्टान् निगृह्णाति[1] । अनेनैव राजा शास्ति महीम् भुङ्क्ते च प्रजा सुखम्[2] ।

महाभारतीयेन दण्डसिद्धान्तेन स्फुटमिदं यत्तदानीं सामाजिकी स्थितिरासील्लब्धपरिवर्तना । विधेर्राज्यस्य, दण्डस्य, राज्ञश्च यदासीत् समाजशक्त्या नियन्त्रणं बन्धनं वा तदपनीय दण्डशक्तिर्विस्तारमाययौ । अनया च शक्त्या इयद् व्याप्तं यत् त्रिवर्गोऽप्यस्यामेवान्तर्बभौ । एषैव च शक्तिः अभूत त्रिवर्गस्याप्य-

1. शानि. ६७।६-११ ।
2. शान्ति. ५६।३-७ ।

धिष्ठात्री[1]। राजा कालस्य कारणमुद्घोषितः। इत्थं यथा-यथा दण्डशक्तेर्विकाशः तथा-तथा मानवस्वभावो मूलतः पवित्रनिर्भयश्चेत्येषा धारणा दूरं ययौ। अन्यत्र भीष्मेण वैदिकपरम्परानुसारं मानवस्वभावस्य मौलिकं पावित्र्यं सात्त्विकत्वञ्च उट्टङ्कितम्। अर्जुनेन पुनः स्वभावोऽयं भयपूर्ण उक्तः। तत्र हि भीष्मेण युधिष्ठिरं प्रभावयितुमैष्यत, परं तदीयवाण्यां युगानुसारिता लक्ष्यते। भीष्मो हि वैदिक-परम्परया सह स्वयुगीयानां मान्यतानां समन्वयमीहते। महाभारते यो **निष्कामयोगः** प्रतिष्ठापितो न सोऽर्जुनीयं सिद्धान्तं संवदति। यदि मानवीयः प्रवृत्तिर्मूलतो भयाविष्टा दुष्टा च तदा न सः कर्मयोगे शक्नोति रन्तुम्। अत एव महाभारते तथा प्रयतितं यथा स्यान्मूलवैदिकपरम्परा सुरक्षिता, परं नैतावता युगस्थितिः शक्योऽपेक्षितुम्।

यथा-यथा सामाजिक्यः परिस्थित्यः पर्यवर्तन्त तथा-तथा दण्डसिद्धान्ते दमपक्षो विकासमायातः। प्रागुक्तैस्तत्वैः व्यक्तेस्समाजस्य, राज्यस्य च पारस्परिकाणां सम्बन्धानां निर्धारणे साहाय्यं कृतम्।

दण्डसिद्धान्तीयो दमपक्षः कृष्णेन आत्मनो रूपमुक्तः। कौटल्येनाऽपि मात्स्य-न्यायपरिहारार्थं दण्डशक्तिराद्रियतः—

आन्वीक्षकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः। अलब्धलाभार्था लब्धपरिरक्षिणी रक्षितविवर्धनी वृद्धस्य तीर्थेषु प्रतिपादिनी च। तस्यामायात्ता लोकयात्रा। तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात्। न ह्येवंविधं वशोपनयनमस्ति भूतानां दण्ड इत्याचार्याः।

नेति कौटल्यः। तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृत्युदण्डः परिभूयते। यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजा धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति किमङ्ग पुनर्गृहस्थान्। अप्रणीतो हि मात्स्यन्यायमुद्भावयति। बलीयानबलं हि ग्रसते दण्डधराभावे। तेन गुप्तः प्रभवति (१।४।१-१७)।

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु ॥ १।४।१९ ॥

(अतएव) धर्माधर्मौ त्रय्यामर्थानर्थौ वार्तायां नयापनयौ दण्डनीत्यामिति कौटल्यः। तस्माद्दण्डमूलास्तिस्रो विद्याः। विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। कृतकः

---

1. न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते।
न क्लीबस्य गृहे पुत्राः मत्स्या इव पङ्क इवासते ॥
नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते।
नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत।
(शान्ति. १४५।१३-१४)

स्वाभाविकश्च विनयः । क्रिया हि द्रव्यं विनयति नाद्रव्यम् । शुश्रूषाश्रवणग्रहण-धारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम् (१।५।१-३) ।

विद्यानां तु यथास्वमाचार्यप्रामाण्यादविनयो नियमश्च । वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत । वृत्तोपनयनस्त्रयीमान्विक्षिकीं च शिष्टेभ्यो वार्तामध्यक्षेभ्यो-दण्डनीतिं वक्तृप्रयोक्तृभ्यः (१।५।४-८) ।

दण्डस्याभावे जगत्यराजकता प्रसरति । चतुरो वर्णानाश्रमांश्च धर्मञ्चापि दण्डेनैवाभिरक्षति राजा । दण्ड एव सर्वान् स्व-स्वकर्तव्येषु नियमयति[1] । आन्वीक्षिक्याः, त्रय्याः, वार्तायाश्च तिसृणामपि विद्यानां दण्डविद्यैव प्रतिष्ठापयित्री । इहलोकार्थमिव परलोकार्थमपि दण्डमपेक्ष्यते कामन्दकः । यथाविधिदण्डप्रयोगेणैव त्रिवर्गस्थापयितुं बर्धयितुमुन्नमयितुञ्च शक्यते । लोभकामादिभिर्भ्रष्टपथोऽयं लोकः दण्डेनैव सन्मार्गं प्रत्यावर्तयितुं शक्यः । कृशम्, विकलम्, व्याधितं वापि पतिं दण्डभियैव परिगृह्णाति कुलाङ्गना । इत्थं दण्डः प्रजापतिरिव स्वयं प्रजा विभर्ति । स्वगुरोः कौटल्यस्य मनोश्च यथापरस्परेण समन्वयः स्यात्तथा प्रयतितं दण्डसिद्धान्तं विवेचयता कामन्दकेन । धर्म एव दण्डरूपसर्वभूतहितार्थं दण्डमसृजत्प्रभुः । नारदीयादिस्मृतिषु धर्मशास्त्रेषु चैवंविध एव विमर्शो दृश्यते ।

मनुना दण्डो न विधेरेकं मुख्यं वैशिष्ट्यमेव स्वीकृतोऽपि तु अनयोर-नन्यतयैवोक्ता। मनोर्दण्डव्यवस्थायां सामाजिकानां परिवर्तनानामनल्पः प्रभावः परि-लक्ष्यते । एतन्मतानुसारं हि पवित्रः पुरुषो दुर्लभः । द्वेषघृणेर्ष्यादयो वृत्तयः मनुष्ये स्वार्थप्रवृत्तिं संघर्षप्रवृत्तिञ्चोद्भावयन् । मात्स्यं न्यायो धार्मिकीं मर्यादामामर्दयि-तुमारभत । धर्मसंतिष्ठापयिषया प्राणिमात्रक्षेमकाम्यया च ब्रह्मणा ब्रह्मतेजोमयो दण्डः सृष्टः । स च दण्डो ब्रह्मपुत्रो धर्मरूप एव । स हि श्यामवर्णो लोहिताक्षश्च हिनस्ति पापानि । तमेतमाश्रयमाणा प्रजा भजते सुखम् ।

अस्य च चत्वारो दन्ताः चत्वार एव च भुजाः । एतस्योग्रं स्वरूपं भीषयते लोकम् । दण्डप्रयोक्त्रा भवितव्यं सत्यवादिना, समीक्षकप्रज्ञाशालिना, धर्मार्थकाममोक्ष-विवेकिना च[2] । एवंविध एव शासकस्त्रिवर्गमधिगच्छति । अन्यथा हि प्रयोक्तुरेव

1. वायुपु. १।७।२२ ।
ऋ. १।२९।५; १।७।१३ ।
रघु. १७।६२; ११।३; १।२६ ।
कामन्दक. १३।१७; १४।१३; १७।४९ ।
श्रीमद्भागवत. ६।३।५; ४।२१।१२; ४।२२।४५; ६।३।२ ।
राजतरंगिणी. ४।६।५५ ।

2. तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्य कारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥
(मनु. ७।२६)

सर्वनाशाय कल्पते दण्डः। महातेजस्वी दुर्धर्षोऽपि च राजा राजधर्ममतिवर्तमानो याति सपरिवारो विनाशम्। स्थावराणि जङ्गमानि समान्यपि नियम्यन्ते दण्डेन। सर्वैरपि दण्डभिया स्व-स्वकर्त्तव्यानि परिपाल्यन्ते। दण्डं प्रयुञ्जानेन शक्तिदेशकालविद्यादीनां दण्डेन सह समन्वयोऽपेक्षणीयः। दण्डः स्वयं राजा, नेता, शासकश्च; अयमेव च वर्णाश्रमपरिपालने धर्मस्य प्रतिभूः। असावेव शास्त्यभिरक्षति च प्रजाः। एतद् भियैव काकः पुरोडाशं श्वा च हविरादत्ते। समेऽपि दण्डेनैव सन्मार्गमधिष्ठाप्यन्ते। नास्य सम्बन्धः केवलैर्मनुष्यैरेवापितु देवदानवगन्धर्वकिन्नरपशुपक्ष्यादिभिरपि। एतेऽपि च दण्डनीत्या स्व-स्वकर्त्तव्यान्यनुतिष्ठन्ति। किंबहुना श्रुतिस्तु अग्निवायुमृत्युसूर्या-दीनामपि स्व-स्वकर्त्तव्येषु प्रवृत्तिं दण्डभी मूलिकामाह।

दण्डशक्तेरेवं माहात्म्यं वर्णयन् मनुः व्यक्तेः समाजात् किं बहुना सर्वस्मादेव परामाह दण्डशक्तिम्। सा हि धर्मस्यापि रक्षिका। परमसौ दण्डो न विधेः परः। अतः दण्डप्रयोक्तरि विधीयसंप्रभुतां प्रत्यादरः, आत्मनियन्त्रणञ्च द्वयमप्येत-दपेक्षितम्। मनुस्सामाजिक्या स्थित्यापि दण्डस्य सम्बन्धमिच्छति। दण्ड एव वर्णानां विध्यादेश्चापि रक्षायै प्रभवति। राजापि सामाजिकी व्यवस्थामतिवर्तमानो भजते दण्डम्। इत्थं दण्डेन साम्पत्तिका अधिकाराः सामाजिकाः सम्बन्धाः परम्परागता व्यवस्थाश्च संरक्ष्यन्ते स्म[1]। सहैवैतत्प्रतिपादकानि शास्त्राण्यपि तमेवाश्रित्य प्रतिष्ठातुमशकन्। स्वकालिक्या वर्गीयव्यवस्थायाः वर्गीयशक्तेः, तदुपजीव्यानां शास्त्राणाञ्च सर्वतः सुरक्षामिच्छति मनुः। दण्डशक्त्यैव सा सम्भवतीति शक्तिमेतां

---

1. तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्धते।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते॥
दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम्॥
ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम्।
अन्तरिक्षगतांश्चैव मुनीन्देवांश्च पीडयेत्॥
सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च॥
शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा।
प्रणेतुं शक्यते दण्डः सुसहायेन धीमता॥
स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः॥
अतस्तु विपरीतस्य नृपतेरजितात्मनः।
संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि॥
स्वे स्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः।
वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता॥
(मनु. ७।२७-३४)

महदाद्रियतेऽसौ। अनया च तदीयया व्यवस्थया व्यक्तिस्समाजो राज्यञ्च त्रयमप्येतद् अपरिवर्तनीयस्य शासनविधेरनुयायितां नीतम्[1]। अस्मिन् विधौ शङ्कोद्भावनमपि अभूदपराधः।

**दण्डस्याधारा उद्देश्याश्च**

शतपथब्राह्मणानुसारं धर्मस्येव दण्डशक्तेरपि राज्ञा सम्बन्धः। ततः प्रभृति राजशक्तेः केन्द्रीयकरणमारब्धम्। उत्तरकाले च परिस्थितयः प्रचुरं परिवर्तनमायाताः, अतः सामाजिकानां नियमानानां संरक्षार्थं दण्ड उपासितः। यद्भिया समेऽपि अनुवर्तेरन् सामाजिकीं मर्यादाम्। वैदिककालादारभ्य मनुं यावद् दण्डस्वरूपे यत्परिवर्तनं लक्ष्यते तत्र अवैदिकीनां जातीनां सम्मिश्रणम्, स्थानीयानां संघटनानां राजनीतिकशक्तेर्ह्रासः, आर्थिकी विषमता, वर्गीयतामाश्रित्य विधेः प्रतिष्ठापना चेत्येवंविधा शक्तय आसन् क्रियाशीला। एवंस्थितौ जनकल्याणम्, सामान्यहितम्, जनेच्छा इत्येवंविधा उद्घोषा न तैस्समग्रस्समाजो व्याप्तुं शक्यते। परं भयात्मिकां पृष्ठभूमिमधिष्ठितो दण्डो दमरूपतां विजहौ। स हि लोभेर्ष्यामहत्त्वाकाङ्क्षादिकं सर्वविधमेव मानसिकं दौर्बल्यं नियन्त्रयति। नानेन राज्यस्य कोऽप्यधिकारः निर्मीयते वा राज्ये कीदृशोऽप्यधिकारः, अपितु राज्यमवस्थितमेव स्वीयमधिकारं दण्डद्वारा दृढयति, चरितार्थयति च। तद्धि समाजहितकाम्यया दण्डशक्तिं प्रयुङ्क्ते। अत्र अनुशासनार्थमाज्ञानुवर्तनार्थञ्च दमोऽपि उपायतया आश्रीयते[2]। दण्डशक्तेः प्रयोगो न केवलमपराधिनं निग्रहणात्येव अपितु ईदृशं वातावरणमपि प्रस्तौति, येनापराधस्थितिरेव नोद्भूत्। शक्त्या न कोऽप्यधिकारः प्रतिष्ठापयितुं शक्यः[3]।

कौटल्यात् प्राक् तीक्ष्णदण्डो मृदुदण्डश्चेति द्वे परम्परे अर्थाद् दण्डस्य द्वे विधे आसन्। कौटल्येन हि परम्पराद्वयमप्येतत् समन्वयमानीतम्। स हि दण्डं जीवमात्रस्य सुरक्षाया मूलमिच्छति। तस्य चाधारोऽनुशासनम्। अनुशासनमिति च विनय उच्चते। स द्विविधः-कृतकः (नैमित्तिकः) स्वाभाविकश्च। प्रयत्नपूर्वकं कारणविशेषैर्लभ्यमानः कृतकः, यश्च वासनावशात् स्वभावत एव सिद्धः प्रयत्नानपेक्षः स स्वाभाविको विनयः। इत्थं कौटल्येन विनयस्य बौद्धिको नैतिकश्चेति उभावपि पक्षौ समावेश्येते। मनुरपि दण्डधरस्य राज्ञः कृते बौद्धिकमनुशासनं सम्मन्यते। धर्मज्ञानां समादरः, इन्द्रियजयः, सामाजिकस्य नेतुस्सम्मानः, वृद्धसेवा चेत्येदीनि यानि राज्ञः

---

1. एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि॥

(मनु. ७।३३)

2. J.S. Mekenji, Outlines of Philosophy, p. 133.
3. Bosanquet, The philosophical Theory of the State, p. 34.
T.H. Green, Principles of Political Obligaions, p. 140.

कर्त्तव्यानि मनुना निर्दिष्टानि, तेषामेतेषामनुशासनस्थापनैव मुख्यं प्रयोजनमिच्छत्यसौ[1] । दण्डेन सम्बद्धौ अन्यावपि द्वौ शब्दौ–बलं शक्तिश्च । कौटल्यश्शब्दाविमौ यथासख्यं सैन्यशक्त्योः प्रायुङ्क्त । शक्तयो हि तिस्रः–मन्त्रशक्तिः, प्रभुशक्तिरुत्साहशक्तिश्च । निर्माणम् पालनम् संहारश्च त्रयमेतद् दैव्याश्शक्तेः फलम् । कौटल्येन बलं शक्तिञ्च दण्डेन सह सम्बद्ध्य न्यायालयीयसीमापेक्षया व्यापकतामानीतो दण्डः । अयं हि दण्डो देवलोकादारभ्य स्थावरजङ्गमसामाजिकसंघटनराज्यप्रकृत्यादिकं यावदखिलं व्याप्नोत् । तत्र सैनिकशक्तिर्दैवशक्तिं यावत् समा अपि शक्तयः समन्वयमायाताः ।

इत्थं शक्तिरेव दण्डस्याधारतया अवतिष्ठते परं नोत्पीडनप्रतारणादियुता सा । दण्डो विधेः सर्वोच्चतायाः साधकः । अतो नैतं राजा स्वेच्छया प्रयुङ्क्ते अपि तु कञ्चिदाधारमाश्रित्य कञ्चिदुद्देश्यञ्च पुरस्कृत्यैव । प्रयुञ्जानस्तु समूलः नाशमायति[2]। दण्डं प्रयुञ्जानेन राज्ञा तद्विषयका विभिन्नाः पक्षा आलोचनीयाः[3] । स यथेच्छं दण्डं

---

1. ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषां च शासने ॥
वृद्धांश्च नित्यं सेवेत विप्रान्वेदविदः शुचीन् ।
वृद्धसेवी हि सततं रक्षोभिरपि पूज्यते ॥
तेभ्योऽधिगच्छेद्विनयं विनीतात्माऽपि नित्यशः ।
विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ॥
( मनु. ७।३७-३९ )

2. यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानवम् ।
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ।
अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥
यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ॥
( याज्ञ. १।३५६-३५९ )

3. राजा त्वहितः सर्वानाश्रमान् परिपालयेत् ।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतैस्तथा ॥
( नारदी. १८।५ )

श्रुतिस्मृतिविरुद्धं च जनानामहितं च यत् ।
न तत् प्रवर्तयेद् राजा प्रवृत्तं च निवर्तयेत् ॥
( नार. १८।८ )

अनादिश्चाप्यनन्तश्च द्विपदां पृथिवीपतिः ।
दीप्तिमत्त्वाच्छुचित्वाच्च यदि स्यान्न पथश्च्युतः ॥
( ना. १८।१३ )

यदि राजा न सर्वेषां नियतं दण्डधारणम् ।
कुर्यात् पथो व्यपेतानां विनश्येयुरिमाः प्रजाः ॥
( ना. १८।१४ )

मा प्रयुक्तेति राजकीयानामन्येषां कर्मचारिणां सामाजिकानां प्रतिनिधीनाञ्च परामर्शः अपेक्षणीयः। कौटल्यात् प्राक् बौद्धसंस्कृतिः पदं न्यदधात्। बौद्धानामहिंसावादस्य दण्डविधावभूत् प्रभावः ते हि सममन्यन्त मृदुदण्डपक्षम्। अपरतोऽन्येषामाचार्याणां तीक्ष्णदण्डे आसीत् प्रयासः। कौटल्येन पक्षद्वयमपि संगमय्य यथार्हदण्डव्यवस्था प्रतिष्ठापिता। उत्तरवर्त्तिभिश्च विचारकैः कौटल्य एव मार्गोऽनुसृतः। कौटल्यो लोभस्वार्थपक्षपातशक्तिसंञ्चयादिकं दुष्प्रणीतदण्डस्याधारम् आतिष्ठते। एवं विधेनोदेति समाजे क्रान्तिः। दुष्प्रणीतदण्डोऽयं तपो निरतेषु तपस्विष्वपि उद्वेगमुद्भावयति का कथा सामाजिकानां जनानाम्। दण्डस्य दुष्प्रयोगेण बहवो राजानो विनाशमभजन्त। यथाविधिप्रयुज्यमानेनैव दण्डेन प्रजास्त्रिवर्गेण योज्यन्ते अतो विधिनियन्त्रितस्य दण्डस्य द्वयमेव मूलम्-अनुशासनं विनयश्च।

राज्ञा धर्मेण च दण्डस्य सम्बन्धे विविच्यमाने दण्डस्योद्देश्यः प्रकाशमायाति। दण्डस्य प्रयोगः धर्मनियन्त्रणे धर्मसंरक्षणार्थं प्रयोज्यः। एवंविधो दण्डप्रयोक्ता धर्मावतारो निगदितः। न्यायपरिपालनार्थं दण्डं प्रयुञ्जानोऽधिपो युज्यते महता यशो निचयेन। शारींरिकाल्लौकिकाच्च दण्डाद् राजानं मोचयन् लिखति नारदो यद्राजा न कदापि अनुचितमाचरति, तदीया आज्ञैव विधिः। राजाज्ञा परिपालनं दण्डस्य प्रयोजनं कार्यं वा[1]। राजाज्ञायाः प्रतिकूलमाचरन्तं तदनुसरणे प्रवर्तयितुं दण्ड एव प्रभवति। परमन्यत्र स (नारदः) एवाह यद् दण्डो जनकल्याणाऽर्थः, राज्ञा हि शक्तेस्स्थाने न्यायः प्रयोक्तव्यः। याज्ञवल्क्यः शास्त्राज्ञामेव पश्यति। विभिन्नैराचार्यैः धर्म एव राजाज्ञाया दण्डस्य च आधारो नियन्त्रकश्च आस्थितः। कौटल्यः प्रजाहितमेव सर्वोच्चं सम्मन्यते-प्रजासुखे सुखम् (अर्थ. १।१९)। वस्तुतो यदि दण्डो राज्ञश्शक्तिस्तदा धर्मस्तस्योद्देश्यः। द्वयोस्समन्वये एव दण्डस्संस्कृतेर्विकाशस्य मूलतां धर्मश्च मानवीयस्य चरमलक्ष्यस्य साधकतां याति[2]।

---

सतामनुग्रहो नित्यमसतां निग्रहस्तथा।
एष धर्मः स्मृतो राज्ञामर्थश्चापीडयन् प्रजाः॥

(नार. १८।१७)

1. तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु॥
समीक्ष्य स धृतः सम्यक्सर्वा रञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः॥

(मनु. ७।१६-१९)

2. कामन्दक. ५।३७; ५।३८-स दण्डो वधबन्धपरिक्लेशार्थहरणलक्षणस्तीक्ष्णमृदुमध्यमभेदेन त्रिविधा (जयमंगला)। महा. शा. १५।३; ४९।३५; सभा. २२।२४; वन. ११५।१२; अनुशा. १५३।३; विष्णु. ३।३५६; १९०-९६।
B. K. Sarkar, Political Institutions and Theories, pp. 211-212.
J. S. N. Ganguli, Philosophy of Dharma, Historical Quarterly, Vol. II.

**आवश्यकता, उत्पत्तिस्वरूपञ्च**

प्राचीनभारतीयसिद्धान्तानुसारमृतं सृष्टेर्मूलम् यत्तपसोऽध्यजात । तत एव समुद्रसंवत्सरादय उदपद्यन्त । सृष्टेः प्रागपि ऋतं प्रत्यतिष्ठत, तदेव च सृष्ट्यात्मना विकाशमायातम्[1] । सांख्यसिद्धान्तानुसारं सत्त्वरजस्तमोभ्यः सृष्टेर्विकाशः । प्रारम्भावस्थायां मूलावस्थायां वा सत्त्वमवतिष्ठते । तत्रैव च रजस्तमसोरुच्चावच्च भावेन सम्बन्धे विकाशक्रम आरब्ध्यते । अखिलेष्वपि च स्थावरेषु जङ्गमेषु च भावेषु किं बहुना विश्वस्य प्रतिकणं तत्त्वानामेषां (सत्वरजस्तमसां) संस्पर्शः[2] । अमीषां त्रयाणां गुणानां विपर्ययेनैव सर्वमेव वस्तुजातं विकाशपरिवर्तनं वानीयते । समाजस्य प्रारम्भिक्यामवस्थायां भवति सत्त्वस्य प्राधान्यम् ।

प्रभावोऽस्य व्यक्तिः समाजस्य च सम्बन्धेषु परिलक्ष्यते । अस्याञ्च अवस्थायां धर्मस्य परिपालनं नापेक्ष्यते बाह्यं नियन्त्रणमिति समाजः स्वत एव सञ्चाल्यते । अतः पूर्ववर्त्तिनि' स्थितिस्तु इतोऽप्यधिकं स्वतः परिपूर्णासीत् । तदानीं हि जनः सम्बन्धनिरपेक्षः । द्वितीयचरणे सम्बन्धास्तु विकाशमायाताः परं न नियन्त्रणं व्यकसत् । तृतीयचरणे पारस्परिकेषु सम्बन्धेषु धार्मिकाः नियमास्तु प्रस्तुताः किन्तु नासीत् काचित् नियन्त्रिका शक्तिः नाप्यासीदस्या आवश्यकता । इमामेव स्थितिं काश्यपसंहिता देवयुगमादियुगं कृतयुगञ्चाह । युगेऽस्मिन् पुरुषे (व्यक्तौ) विशुद्धिः अपरमिता शक्तिः, प्रभाप्रभावः, वीर्यः, धर्मः, सत्त्वम्, ओजश्चेत्यादिका गुणा स्वाभाविका प्रत्यतिष्ठन्, नासीच्च संस्पर्शः रागद्वेषादीनां दोषाणाम् ।

कालान्तरे सत्त्वमभिभूय रजस्तमसी उद्गते । फलतः कृद्युगात् सामाजिक्यः सभ्यताया विकास आरब्धः । एषैव च स्थितिर्भारतीयैर्विचारकैः पतन इति वा व्यपदिष्टा । अथ समाजेन त्रेतायुगे पदार्पणमारब्धम् । तत्र शनैः शनैर्लोभादयो वृत्तयो विकाशमायाताः—चरकसंहिताः—

"भ्रश्यति तु कृद्युगे.... लोभः प्रादुरासीत् । ततस्त्रेतायां लोभादभिद्रोहः, अभिद्रोहादनृतवचनम्, अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघातभयतापशोकचिन्तोद्वेगादयः प्रवृत्ताः" ।

विवेचितेनानेन स्फुटं यन्मनुष्ये सात्त्विकवृत्तिभिः सह राजसीनाम्, तामसीनाञ्च वृत्तीनामुदय एव युगपरिवर्तने हेतुः । विकासश्चायं प्राकृतिकानां तत्त्वानां परिवर्तनेन समाविशत् यत्परिवेशे पुरुषो व्यवहरति । युगक्षयानुरूपदण्डनीतिव्याख्याने भीष्मः—

---

1. ऋग्वे. १०।१९।१।
2. चरकसंहिता-पुरा खलु अपरिमितशक्तिप्रभाप्रभाववीर्यधर्मसत्त्वशुद्धतेजसं पुरुषाः बभूवुः । तेषां क्रमादपचीयमानसत्त्वानामुपचीयमानरजस्तमस्कानां तेजोऽन्तर्दधौ।" पराशरकृतज्योतिषसंहितायाः भट्टोपलकृतबृहत्संहितायाः टीका पृ. १५ ।

दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यग्धर्मेभ्यो नियच्छति ॥
चातुर्वर्ण्ये स्वकर्मस्थे मर्यादानामसंकरे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥
दण्डनीत्यां यदा राजा सम्यक्कार्त्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालसृष्टं प्रवर्तते ॥
ततः कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।
वैदिकानि च सर्वाणि भवन्त्यपि गुणान्युत ॥
ऋतवश्च सुखः सर्वे भवन्त्युत निरामयाः ।
प्रसीदन्ति नराणाञ्च स्वरवर्णमनांसि च ॥
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।
नाधर्मो विद्यते तत्र धर्म एव तु केवलम् ॥
इति कार्तयुगानेतान्धर्मान्विद्धि युधिष्ठिर ।

(शां. ६९।७६-८६)

दण्डनीत्यां यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥
अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥
अर्धं त्यक्त्वा यदा राजा नीत्यधर्ममनुवर्तते ।
ततस्तु द्वापरं नाम कालः संप्रवर्तते ॥
अशुभस्य यदा त्वर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवि भवत्यर्धकला तथा ॥
दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥
सर्वेषां वर्णानां स्वधर्माच्च्यवते मनः ।
शूद्रा भैक्ष्येण जीवन्ति ब्राह्मणाः परिचर्यया ॥
योगक्षेमस्य नाशश्च वर्तते वर्णसङ्करः ।

(शां. ६९।८७-९३)

इत्थं दण्डनीत्या राजा स्वर्गादिकं प्राप्नोति राज्ञां च दण्डनीतिः कृतादीन् जनयति तावुभौ च प्रजानां क्षेमं जनयत । धर्मव्यवहारदण्डेश्वरजीवरूपेण पञ्च-प्रकारात्मको राजा । वेदोक्तो दोषः पारदार्यादिस्तान्निवृत्त्यर्थं पर्षदं प्रति गतश्चेत्तत्र प्रायश्चित्तात्मको वेदहेतुक एव दण्डः । कुलाचारप्रयोक्तो यो व्यवहारस्तदात्मको न्यायः स यद्यपि दण्डः प्रत्ययदृष्टस्तथाऽपि स व्यवहारपदार्थो मन्वादिभिः स्मृतोऽस्ति। अतः सोऽपि वैदिकप्रणीतत्वाद्वेदविषयात्मको वेदार्थगोचरोऽस्ति । दण्डो धर्मशब्देन व्यवहारशब्देन चोच्यते । दण्डाधिष्ठात्र्या देवताया इदं ध्यानादिकमज्ञानाददण्ड्य-दण्डजं दोषं निराकर्त्तुं दण्डकर्तृभिरमात्यादिभिर्ध्येयम् । यदि तु लौकिकानि दण्डधर्मव्यवहाराङ्गान्यन्यत्रोत्प्रेक्ष्यन्ते तर्हि एवं व्याख्येयम्। तत्र दण्डः संहर्तत्वाद्रौद्रो रुद्रश्च नीललोहितः । तत्र राज्ञो दण्ड्ये द्वेषात्तद्धने च लोभात्प्रणेयस्य दण्डस्य मालिन्यरागोत्पन्नत्वान्नीललोहितं दण्डस्य रूपम् चतस्रो दंष्ट्रा इव प्राणिनां वधसाधनानि यत्र सः । तथा हि । केचिन्मानभङ्गेन केचिद्धनहरणेन केचिदङ्गवैकल्येन केचित्प्राणव्यापादनेन च वध्यन्तेऽतस्तान्येव तद्दंष्ट्रा । चत्वारो भुजाः अर्थादानकर्त्तारो यस्य सः तथाहि । प्रजाभ्यः सामन्तेभ्यश्च करादानम् । अनृतात्प्रत्यर्थिनस्तत्समं द्रव्यादानम् । धनवतः कदर्याद्विप्रात्सर्वस्वादानं चेति ।

अथ तस्यैव व्यवहारूपिणो रूपं वर्णयति "अष्टपान्नैकनयनः शंकुकर्णोर्ध्वरोम-वान् । जटी द्विजिह्व" इति आवेदनं भाषा संप्रतिपत्तिर्मिथ्योत्तरं कारणोत्तरं प्राङ्न्यायं प्रतिभूः क्रियाफलसिद्धिश्चेत्यष्टौ वादाः । एतैर्हि निमित्तैर्दण्डश्चरति नान्यथेत्येतेषां पादत्वम् । तत्र आवेदनमर्थिना सभ्यान्प्रति गत्वा देवदत्तो मदीयं शतं सुवर्णानाम-मुकस्मिन् देशे काले साक्षिणि च गृहीत्वा न ददातीति तद्धस्तेन लेखनं पुनरपि प्रत्यर्थिनमाहूय तत्समक्षं तथैव लेखनं भाषा । तत्र प्रत्यर्थिनाऽहमेतस्य धारयामी-त्युक्ते न कस्यापि दण्ड इति तदिदं संप्रतिपत्तिरूपमुत्तरम् । न दण्डपादत्वेन गण्यते नाहमेतस्य कारणमीति मिथ्योत्तरं मया गृहीतमासीत्पुनः परावृत्त्य दत्तमिति कारणोत्तरम्। अस्मिन्नर्थेऽनेन पूर्वमहमभियुक्तस्तत्र पराजितो मयेति प्राङ्न्यायोत्तरम् । त्रिविधेऽप्यस्मिन्नुत्तरेऽर्थिप्रत्यर्थिभ्यां प्रतिभूर्देयः अहमेतस्मिन्पराजित इदं द्रव्यं दास्यामीति क्रिया, स्वमतसाधकानां साक्षिपत्रभोगशपथादीनां प्रदर्शनं ततोऽच्यवने तस्य जय इति एते दण्डस्य पापाः । दण्डस्य नामानि–

**धर्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः ।**
**असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवङ्करः ॥**

**( शां. १२१।२२ )**

दण्डो हि भगवान् विष्णुः, नारायाणः, महान्पुरुषः । तथोक्ता ब्रह्मकन्येति लक्ष्मी-र्वृत्तिः सरस्वती । दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः (शा. १२१।२३-२४) । तथा च–

आत्मानमात्मना दण्डं ससृजे देवसत्तमः ।
तस्माच्च धर्मचरणान्नीतिर्देवी सरस्वती ॥
ससृजे दण्डनीतिं सा त्रिषु लोकेषु विश्रुता ।
(शां. १२२।२४-२५)

तथा चाह–

श्रूयन्ते हि पुराणेषु प्रजा धिग्दण्डशासनाः ।
दान्ता धर्मे प्रधानाश्च न्यायधर्मानुवृत्तिकाः ॥
तं धर्म्ममसुरास्तात ! नामृष्यन्त जनाधिपः ।
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन् प्रजाः ॥
तासां दर्पः समभवत् प्रजानां धर्म्मनाशनः ।
दर्पान्मानस्ततः पश्चात्क्रोधस्तासामजायत ॥
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम् ।
ह्रीश्चैवाऽप्यनशद् राजन् ! ततो मोहोऽध्यजायत ।
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा ॥
परस्परावमर्दन न बर्धन्त्यो यथासुखम् ।
ताः प्राप्य तु स धिग्दण्डो न कारणमतोऽभवत् ॥
ततोऽभिगच्छन् देवांश्च ब्राह्मणाश्च अवमन्य ह ।
(शां. २६८।८-१४)

उक्त प्रसङ्गे भीष्मपराशराभ्यां विषयोऽयं स्फुटम् । पराशर आह, धर्मप्रधान-समाजे धर्मन्यायं चानुवर्तमानेषु जनेषु धिग्दण्ड एवासीत् प्रर्याप्तस्सत्या-मावश्यकतायाम् । परं कालान्तरे रजस्तमसोः विकाशेन पुरुषे राजस्यस्तामस्यश्च वृत्तयः उदगच्छन् । क्रमेण च प्रजासु दर्पमानक्रोधलज्जामोहादयः पदं निदधुः । फलतो धिग्दण्डो नाशकन्नियमयितुं समाजे चाव्यवस्था उद्भूता । जनैर्देव-द्विजादीनामप्यवमाननमारब्धम् ।

स्थितिमिमां राजनीतिक्याः वाचेत्थं वर्णयति भीष्मः–प्राक्काले नासीत् राजा, राज्यं वा, न वासीत्, दण्डो दण्डप्रयोक्ताज्ञा । धर्म एव समरक्षत् प्रजाः, धर्मेणैव प्रजा आत्मानं पर्यपालयन् । कालान्तरे शनैः-शनैः खेदमोहाभ्यां धर्मस्याभिभव आरब्धः । जना लोभेनाक्रान्ताः । स च कामरागावुद्भावयत् । फलतः लोकः कर्त्तव्याकर्त्त-व्यविवेकेऽभूदशक्तो विमुखो वा । धर्मध्वंसमालोक्य त्रस्ता जना ब्रह्माणं शरणं ययुः ।

ब्रह्मणा लोकानुग्रहकाङ्क्षया अध्यायसहस्रात्मिका धर्मार्थकामविषयकविधिसंहिता प्रोक्ता[1]।

एतेन स्फुटं यदादर्शयुगादुत्तरोत्तरं पतने मानवीयाः प्रवृत्तय एव मूलम् । मनुप्रभृतयः समेऽप्याचार्याः इममेव सिद्धान्तः समर्थयन्ते । एतेषां हि एतद् दर्शनम्–द्वेषेर्ष्याघृणाप्रभृतयो दुर्वृत्तय एव मनुष्ये स्वार्थभावनामजीजनत् । बलवता दुर्बलस्य पीडनमारब्धम् । धर्ममर्यादा विनाशोन्मुखं याता । समाजे च मात्स्यन्यायो विकसितुमुपचक्रमे । अतो धर्मसंतिष्ठापयिषया लोकहिताकांक्षया च ब्रह्मणा तेजोमयो दण्डः सृष्टः । स च– ब्रह्मपुत्रो धर्मरूप एव । मात्स्यन्यायं परिहर्तुं समैरपि विचारकैः दण्डस्य देवप्रणीतता आद्रिता, आश्रिता च । परं मात्स्यन्यायीयस्समाजो नासीदीदृशो यत्र मनुष्याः परस्परेण संघर्षार्थं स्युर्बद्धपरिकराः । वैदिकैर्दार्शनिकै-र्मानवीयस्वभावो मूलतो विशुद्ध आख्यातः । अतस्तैस्स्वर्गे भुवि क्वापि वा नेदृशस्य समाजस्य स्थितिस्स्वीकृता यत्र मानवः केवलाभिरीर्ष्याद्विषघृणाप्रभृतिभिर्दुर्वृत्तिभिरेव सञ्चाल्येत । केषाञ्चिद्बाह्यानां कारणानां शान्तिभञ्जनेऽव्यवस्थोद्‌भावने वा प्राचलत् प्रयासः, तेभ्यो सुरक्षार्थं दण्डो राज्यञ्चोदभूताम्[2]।

राधाविनोदपालमतानुसारम् ऐतरेयब्राह्मणे उपलभ्यमानानि प्रमाणानि देवैर्व्यवस्थापितां संविदां द्योतयन्ति, न तेषां तस्या वा भू आसिभिः प्राणिभिः कश्चन सम्बन्धः । आरम्भत एव मनुष्ये सामाजिकाः भावा लभ्यन्ते । अतः वैदिककाले प्रायेण प्राक् सामाजिकी स्थितिर्नोपलभ्यते । अत एव समाजेन राज्येन प्राशासनिक-संघटनेन च सदैव वैदिकसमाजस्य आरम्भोऽभूत् ।

---

1. न वै राज्यं न राजासीन्न दण्ड्यो न च दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥
पाल्यमानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत् ॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥
नष्टायां प्रतिपत्तौ च मोहवशा नरास्तथा ।
लोभस्य वशमापन्नाः सर्वे भरतसत्तमः ॥
(शां. ५९।१४-१७)
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभिजानन्त कार्याकार्ये युधिष्ठिर ॥
(शां. ५९।१९)

2. तुलनीयम्–Views on the State of Nature. Pulzky, Theory of law and Civil Society, pp. 25-76.
Roussou's Social Contract; ऐ. ब्रा. ४।७।८ ।
Radhavinod pal, The History of Hindu Law, p. 188.

यस्यां सामाजिक्यां स्थितौ दण्डविधिः प्रादुर्भूता तस्या निरूपणमावश्यकम् । सदैव मानवीयस्वभावविषयकः प्राचीनानां विचारकाणां दृष्टिकोणोऽपि अवधेयः । ऐतरेयब्राह्मणे महीदासेन मनुष्यो ब्रह्माण्डस्य सूक्ष्मं रूपमास्थितः । यदेकस्मिन् तदेव समस्मिन्नपि विद्यते । मूलतूलप्रक्रियानुरोधेन विश्वं शक्यते व्याख्यातुम् । आत्मतत्त्वे ज्ञाते सृष्टिर्भवति ज्ञाता । पशुमनुष्ययोरेष विशेष्यः यत् पशुः क्षुत्पिपासाप्रयास-प्रवृत्तिभावनाभिः सञ्चाल्यते मनुष्यश्च विवेकशक्त्या । शक्तिरियं न मनुष्यमात्रे समाना । चित्तस्थित्यनुसारेणेयं विकाशमायाति । चेतना हि कर्त्तव्याकर्त्तव्यविवेचने प्रभवतीति इयमेव विवेकशक्तिः । सा च मानवमात्रे । मनुष्ये ध्वन्या सह वाणी मस्तिष्केन सह बुद्धिमत्ताऽपि उपलब्धा अस्ति । स हि विवेके क्षमः । विवेकार्थ-मैन्द्रियकीबौद्धिकी चेति द्वे शक्ती अपेक्ष्येते । इन्द्रियाणि हि बाह्यं जगद् बुद्ध्योप-लम्भयन्ति । अर्थाद् बुद्धिरिन्द्रियद्वारा बाह्यान् भावान् संस्पृशति। येन विचारा उद्यन्ति । मनुष्यो यत्किमपि उपलभते न तेनैव संतुष्यति अपि तु ततोऽप्यग्रे गन्तुमीहते । विवेकशक्तिर्मानवे एव अतोऽसावेव सृष्टे रहस्यमवगन्तुं प्रभवति, अवगच्छति च । वैदिकैर्मनुष्यस्य यादृशी व्याख्या प्रस्तुता सैव पुराणे सृष्टिनिर्माणे आश्रिता । देवपशुपक्ष्यादिषु निर्मितेष्वपि साधनस्य पूर्त्तिर्नाशक्यत । यतः कस्मिंश्चित् सत्त्वस्यैव, कस्मिंश्चिच्च तमस एव प्राधान्यम् । अन्ततस्स्रष्ट्रा मानवमसृजत । तत्रैव ज्ञानधारणा समभवत् ।

इत्थं व्यक्तिसमाजसम्बन्धविषयकेणैतेन प्रस्तुतेन विवेचितेन मनुष्यो मूलतः सात्त्विकः पवित्रश्चेति स्फुटम् । पश्चाद् वातावरणादिप्रभावेन तत्र लोभक्रोधादयो दुष्प्रवृत्तय उदिताः । एताभिश्च प्रवृत्तिभिः सामाजिकास्सम्बन्धा अव्यवस्थामानीताः । ईर्ष्यादिदुर्वृत्तिवशङ्गतं मनुष्यं सन्मार्गमानयितुन्नासीत् प्रारम्भिके समाजे काचन् व्यवस्था । शिष्टाः स्थितिमिमां परिचिन्वन्तोऽप्यासन् अधिकारशून्याः । व्यक्तौ समाजे च पारस्परिको व्यवहार उद्भूतः, परन्नासीत् तस्य निर्णायको नियामको वा कश्चित्, एषैव वा अवस्था मात्स्यन्यायप्रवृत्तेर्मूलम् । स्थितेरस्याः परिजिहीर्षया ब्रह्मा विधिं दण्डं शासनञ्च प्रत्यतिष्ठिपत् । विधिपालनार्थं दण्डशक्तिराविर्भूता ।

**दाण्डिक्यो विमुक्तयः**

भारतीयदण्डव्यवस्थायां न दण्डस्यापराधिनो निग्रहमात्रमुद्देश्यमपि तु अपराधः, अपराधी, परिस्थितिः, आयुः, देशः, व्यक्तित्वञ्चेत्यादीनामपि दण्डेन सम्बन्धः । एवंस्थिते न्यायाधीशैर्दण्डप्रयुञ्जानैः स्वकीयां विवेकशक्तिं प्रयोक्तुमवसरो लब्धः । विवेकावसरे च मानवतायास्सामान्यैस्तत्त्वैः सहान्योऽपि केचन आधाराः न्यायाधी-शैरालोच्यन्तेस्म, यानाश्रित्य अपराधी शक्यस्तैर्मोचयितुमपराधात् । एवंविधा दाण्डिक्यो विमुक्तयः संशोधितस्य दण्डसिद्धान्तस्य पूरिकाः ।

ब्राह्मणं पुनश्चौरं महत्यप्यपराधेऽपि न घातयेत् । अपितु ललाटेऽङ्कयित्वा स्वदेशान्निष्कासयेत् । अङ्कनं च श्वपदाकारं कार्यम्; तथा च **मनुः**

**गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।**
**स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥**

**( मनु. ९।२३७ )**

एतच्च दण्डोत्तरकालं प्रायश्चित्तमाचिकीर्षतां द्रष्टव्यम् । यथाऽऽह मनुः

**प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।**
**नाङ्क्या राजा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥**

**( मनु. ९।२४० )**

इतरेषां वैश्यादीनां स्तेयकिल्बिषाणि प्रतिवर्णं द्विगुणोत्तराण्यापादनीयानि । वैश्यस्य षोडशगुणं क्षत्रियस्य द्वात्रिंशद्गुणं ब्राह्मणस्य चतुःषष्टिगुणमिति । यथा यथा वर्णोत्कर्षेण विद्योत्कर्षस्तथा तथा विहितातिक्रमे दण्डभूयस्त्वं भवति । निषेधदोषं ज्ञात्वाऽपि प्रवर्तमानस्य दोषस्याधिक्यं भवति । अजानतस्त्वन्धकूपपतनवदनुग्रहेऽस्ति । अष्टापाद्यमित्यादेरपवादः [1]। पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः । चक्षुनिरोधस्त्वेतेषु ब्राह्मणस्य । आचार्य ऋत्विक् स्नातको राजेति त्राणँ स्युरन्यत्र वध्यादित्यापस्तम्बः [2]।

यत्तु शङ्खेनोक्तम् 'अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतिशीलशौचाचारवन्तश्च' इति, यदपि कात्यायनेन 'आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च । एतेषामपराधे तु दण्डो नैव विधीयते' इति तच्छरीरार्थदण्डयोर्निषेधार्थं न पुनर्दण्डमात्रस्य[3]। ब्राह्मणस्य धनदण्डविधानादक्षतत्वोपदेशः शरीरपीडापरिहारार्थः कल्पते–सत्यपि धनस्य दशसङ्ख्याऽन्तर्भावे । वयं तु ब्रूमः–'समग्रधनमक्षत' मित्यत्र धनपीडाऽपि निषिद्धैव ब्राह्मणस्य । तस्माद्यः सकृत्कथञ्चिदपराद्धः श्रुतिशीलाभिजनयुक्तस्तस्य धनदण्डोऽपि नास्ति । तथा च गौतमस्तादृशमेव ब्राह्मणमधिकृत्य 'द्वौ लोके धृतव्रतौ' इत्युपक्रम्य 'षड्भिः परिहार्यश्चेत्यादि' (८।१-३) इति मेधातिथिः [4]। ब्राह्मणः पुनर्महत्यपराधेऽक्षतशरीरो देशान्निस्सारयेदिति कुल्लूकभट्टः ।

न च 'राजा सर्वस्येष्टे ब्राह्मणवर्जम्' (११।१) इति गौतमवचनान्न ब्राह्मणा दण्ड्या इति मन्तव्यम्; तस्य प्रशंसार्थत्वात् । यत्तु 'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च' (गौ. ८।१२-१३) इति, तदपि 'स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणकुशल-

1. **द्विगुणोत्तराणीतरेषां प्रतिवर्णम् । विदुषोऽतिक्रमणे दण्डभूयस्त्वम्–गौ. ध. सू. २।३।१३-१४ ।**
2. आप. ध. सू. २।१०।२७।१६,१७,२१ ।
3. स्मृ. चं. २ पृ. १२६ ।
4. मनु. ८।१२४ ।

स्तदपेक्षस्तद्वृत्तिश्चाष्टचत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा सामयिकाचारिकेष्वभिविनीत' (गौ. ८।४-११) इति, बहुश्रुतविषयम्; न ब्राह्मणमात्र-विषयमिति मिताक्षरा[1] । न शरीरो ब्राह्मणदण्डः (गौ. १२।४३) । अवध्यो वै ब्राह्मणः सर्वापराधेषु । ब्राह्मणस्य ब्रह्महत्यागुरुतल्पगमनसुवर्णस्तेयसुरापानेषु कबन्ध-भगश्वपदसुराध्वजास्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्धनम्[2] मृच्छकटिकेऽपि (९) "अयं हि पातकी विप्रो न वध्यो मनुरब्रवीत् । राष्ट्रादस्मात्तु निर्वास्यो विभवैरसतैः सह" ।

स्पष्टं यद्ब्राह्मणस्तु राष्ट्रान्निर्वास्यः, न दण्डनीयः । लोभादिकारणविशेष-परिज्ञानेऽभ्यासे च मनुनोक्तम् (८।१२०-२१) तथा मनुः

**कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान् धार्मिको नृपः ।**
**प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥ ८।१२३॥**

इति, एतच्चाभ्यासविषयम्, कुर्वाणानिति वर्तमाननिर्देशात् । त्रीन् वर्णान् क्षत्रियादीन् पूर्वोक्तं दण्डं दण्डयित्वा प्रवासयेन्मारयेत् । अर्थशास्त्रे 'प्रवास' शब्दस्य मारणे प्रयोगात्, अस्य चार्थशास्त्ररूपत्वात् । तत्राऽपि प्रवासनमोष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेण द्रष्टव्यम् । ब्राह्मणं तु दण्डयित्वा विवासयेत् स्वराष्ट्रान्निर्वासयेत् । यद्वा—वाससो विगतो विवासाः । विवाससं करोतीति विवासः । विवासयेत् नग्नीकुर्यादित्यर्थः । अथवा वसत्यस्मिन्निति वासो गृहम् । विवासयेद् भग्नगृहं कुर्यादित्यर्थः ।

ब्राह्मणस्यापि लोभादिकारणविशेषापरिज्ञानेऽनभ्यासे च तत्र तत्रोक्तो दण्ड एव । अभ्यासेष्वर्थदण्डविधानञ्च । तत्रापि जातिद्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गौ देशान्निर्वासनञ्चेति व्यवस्था द्रष्टव्या । लोभादिकारणविशेषापरिज्ञानेऽन-भ्यासे चाल्पविषये कौटसाक्ष्ये ब्राह्मणस्याऽपि क्षत्रियादिवदर्थदण्ड एव । महाविषये तु देशान्निर्वासनमेव । अत्राप्यभ्यासे सर्वेषां मनूक्तं द्रष्टव्यम् । नच ब्राह्मणस्यार्थदण्डो नास्तीति मन्तव्यम् । अर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे नग्नी-करणगृहभङ्गाङ्करणविप्रवासनं दण्डाभावो वा प्रसज्येत; "चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम् । शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्" इति स्मरणाच्च । तथा मनुः—सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजनम् (८।३७८) इति स्मरणात् ।

---

1. याज्ञ. २।४; ब्राह्मणो वेदमाद्यं करोति । ब्राह्मण आपदुद्धरति । तस्माद् ब्राह्मणोऽनाद्यः सोमो राजा भवति इति ह प्रेत्य चाभ्युदयकमितीह विज्ञायते—वसिष्ठः १।४५-४६ ।
2. बौ. ध. सू. १।१०।१८-१९; बृह. ९।१० ।

यत्तु शङ्खवचनम्–"त्रयाणां वर्णानां धनापहारवधबन्धाः क्रियासु चोपरोधो महत्स्वपि पातकेषु विवासोऽङ्ककरणं ब्राह्मणस्य" प्रायश्चित्तानि शोधनं वा इति, तत्र धनापहारः सर्वस्वापहारो विवक्षितः। वधसाहचर्यात्। शारीरस्त्ववरोधादिजीविताऩ्तः प्रकीर्तितः। जीवितग्रहणान्तो दण्डः। यदप्युक्तम्–"राष्ट्रादेनं बहिष्कुर्यात् समग्रधनमक्षतम्" इति, तत्प्रथमकृतसाहसविषयम्; न सर्वविषयम्। शारीरस्तु ब्राह्मणस्य न कदाचिद् भवति। 'न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्" (मनु. ८।३८१) इति सामान्येन मनुस्मरणात्[1]।

सर्वापराधेष्वपीडनीयो ब्राह्मणः। तस्याभिशस्ताङ्को ललाटे स्याद् व्यवहारपतनाय। स्तेये श्वा। मनुष्यवधे कबन्धः। गुरुतल्पे भगम्। सुरापाने मद्यध्वजः।

**ब्राह्मणं पापकर्माणमुद्धुष्याङ्ककृतव्रणम्।**
**कुर्यान्निर्विषयं राजा वासयेदाकरेषु वा॥**

(कौ. ४।८।३२-३८)

न त्वेवं स्त्रियं गर्भिणीं सूतिकां वा मासावरप्रजाताम्। स्त्रियास्त्वर्धकर्म वाक्यानुयोगो वा। ब्राह्मणस्य सत्त्रिपरिग्रहः श्रुतवतस्तपस्विनश्च। तस्यातिक्रम उत्तमो दण्डः कर्त्तुः कारयितुश्च कर्मणा व्यापादनेन च[2]। ब्राह्मणस्य वधो नाऽस्ति तुल्यदोषत्वेऽपि जातेः पूज्यत्वात्। अत्र नारदः

**शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्।**
**ललाटे चाभिशस्ताङ्को निर्याणं गर्दभेन च॥**

(नारदी. १४।९)

स्त्री, रुग्णः, अतिक्रान्ता, शीतिवर्षोवृद्धः, अनतिक्रान्तषोडशवर्षो बालो वा भजते दण्डस्य प्रायश्चित्तस्य वार्धम्। व्यतीतपञ्चवर्षोऽनतिक्रान्तैकादशवर्षश्च बालो यदि गुरुकुलस्थः पित्रादिकुलस्थो वा तदा नासौ राजदण्डमर्हति। प्रायश्चित्तमेव तं शोधयितुमलम्। अष्टवर्षो बालश्शिशुः, षोडशवर्षश्च "पौगंड" उच्यते। अस्यामवस्थायामपराध्यं नार्हति दण्डम्। शंखेन अपराधाद्विमुक्तये पञ्चवर्षाणि न्यूनतममायुरिति व्यलेखि, माण्डव्यस्तु चतुर्दशवर्षाणि चरमां सीमामाह एतद्विषये। एतस्यामवस्थायां यद्यपराधी बालः शक्तस्तदा स्थानादिमं मार्जयेत्तेन। एष एव च तस्य दण्डः यदि तस्य चापराधो गरीयान् तदा ताऽनीयोऽसौ। यदि चापराधेऽल्पवयस्केण सह वयस्थस्यापि हस्तः, तर्हि वयस्थ एवोत्तरदायी। कौटल्येन विषयोऽयं

---

1. न ब्राह्मणवधाद् भूयानधर्मो विद्यते भुवि।
तस्मादस्य वधं राजा मनसाऽपि न चिन्तयेत्॥
(मनु. ८।३८१)

2. कौ. ४।८।२२-२५।

सोदाहरणं स्फोरितः । तद्यथा वयस्थे चालके रथमधितिष्ठति अल्पवयस्को रथं चालयन् अपराध्यति चेद् वयस्थस्यैव दण्डमाह कौटल्यः ।

काश्चन आंशिक्यो भवन्ति विमुक्तयः । यत्रापराधी न पूर्णतया दण्डान्मोच्यतेऽपि तु दण्डमात्राल्पी क्रियते । स्त्रीबालरुग्णवृद्धोन्मत्तादयो मोच्यन्ते दण्डाद् अज्ञानेन सहानवधानतापि यद्यपराधे प्रयोजिका केवलाज्ञानत एवापि तु प्रमादतोऽपि अपराध्यन् नार्हति दण्डान्मुक्तिम् । वधस्तेयवाक्पारुष्यादिष्वपराधेषु वर्णानुरोधेन दण्डो व्यवस्थापितः । शूद्रापेक्षया उच्चवर्णानां विशेषतो ब्राह्मणानां दण्डाद् आपेक्षिकी मुक्तिरुक्ता । परन्नायमस्यार्थो यद् ब्राह्मणाः सर्वथा दण्डमुक्ता आसन्निति, अपित्वेतेषां दण्डे मात्राकृतो भेदः । शूद्राद्यपेक्षया ब्राह्मणस्य दण्डोऽल्पो गुरुरपीति यावत् । ते हि समाजे यशोजीविनः । अत एव एतेषां कृते सामाजिकेन दण्डेन शरीरनिग्रहस्थाने यशो निग्रह उक्तः । इमे हि तथा दण्डनीयो येनैषां यशोजीविनां यशस्यादाहतम् । अल्पेनापि च दण्डेन तावान् यशो निग्रहः शक्यः, यावान् महतापि दण्डेन न शरीरनिग्रहः । परं नास्यार्थो यदेषां नैव शारीरिको दण्ड इति, यतो मृत्युदण्डोऽपि दृश्यते अमीषाम् ।

**परिमाणं स्वभावश्च**

भारतीयो दण्डविधिरशक्यः परिवर्तयितुम् । अपराधानां दण्डानाञ्चाधाराः सन्ति निश्चिताः न्यायाधीशानां कृते विधेः सीमानिर्धारितास्ति यामनतिवर्तमानैरेव तैर्निर्णयम् । विधेः सीमा अपराधिनो व्यक्तित्वमपराधस्य स्वरूपं वा, संशोधयितुं परिवर्तयितुं वा न प्रभुर्न्यायाधीशः । परं निर्णये स्वीयं विवेकं व्यक्तिगतं निर्णयञ्च प्रयोक्तुमाश्रयितुं वा क्षमते सः । अपराधिनः, अवस्था, ज्ञानम्, जातिः, सामाजिकी योग्यता, शारीरिकक्षमता, मानसिकी दशा, उद्देश्यः, समयः, अपराधस्वभावश्चेत्यादीनां विवेचने स स्वीयं विवेकं व्यक्तिगतनिर्णयाधिकारञ्च प्रयुङ्क्ते । इत्थं दण्डसंहितायां विधिना समं विवेकोऽपि आदृतः ।

गौतमः न्यायाधीशानामेतत्कर्त्तव्यमाह—यदेते पुरुषक्षमतापराधानुबन्धादिना सममेतदपि आलोचयेयुर्यत् किमनेन (अपराधिना) अपराधोऽयं पुनरावर्तितः[1] । देशकालपदावस्थाकर्तव्यस्वाध्यायादिकमालोच्यैव दण्डविधानमनुमन्यते वसिष्ठः[2] । देशकालविद्याक्षमताद्यनुरोधेन दण्डो व्यवस्थाप्य इति दर्शनं मनोः[3] । याज्ञवल्क्यः अपराधदेशकालवयोबलकर्मवित्तानुसारेणैव दण्डव्यवस्थां निर्णयं वा निर्दिशति[4] ।

1. गौ. १२।५१ ।
2. वसिष्ठ. १९।९ ।
3. मनु. ७।१६ ।
4. याज्ञ. १।३६६ ।

आपस्तम्बः पुनः मार्गान्तरमेव निरदिशत् । एतन्मतानुसारं हि कर्तारम्, प्रयोजयितारम्, परामर्शदातारञ्च समीक्ष्यैव दण्डो व्यवस्थापनीयः[1] । देशकालयोः, अनुबन्धस्य, वातावरणादेः वैयक्तिक्याः सामाजिक्याश्च क्षमतायाः पर्यालोचनं दण्डव्यवस्थापने आवश्यकं मनुते कौटल्यः । अपराधे पुनरावर्तमाने भवति दण्डो गुरुः[2] । न केवलं शास्त्रमेवानुरुध्य दण्डो व्यवस्थाप्यः, अपितु तत्र अपराधवातावरणादिकमपि समीक्ष्यमिति बृहस्पतिः[3] । अपराधेऽपराधिना स्वीक्रियमाणे दण्डस्य मात्राल्पतां याति[4]।

दण्डप्रयोगे अपराधिनोऽपराधस्य च स्थितिर्विशेषतोऽवधेया । न्यायाधीशो युक्तिभिः स्थितिमिमां समीक्षेत[5] । दण्डेन अपराधानुपातिनैव भवितव्यमिति दर्शनं विष्णोः[6]। अपराधिनोऽवस्था, देशो, वैयक्तिक्या सामाजिक्या क्षमतया सममपराधस्य गुरुत्वमूले अथचापराधेनापराधिने सहजं कृत्रिमं वा सम्बन्धं समालोच्यैव दण्डो व्यवस्थाप्य इत्येतद्विषये न वैमत्यं कस्यापि शास्त्रकारस्य[7] । अपराधविषयिणी मनोवृत्तिः, स्थानम्, समयशक्तिरपराधश्च एत एव दण्डस्याधाराः[8] । अत्रैव जात्यादेः सामाजिक्यां स्थितौ व्यक्तित्वे च वैषम्यं भवति दण्ड वैषम्ये प्रयोजकम् ।

●

---

1. आप. ध. सू. २।२।२९।१ ।
2. अर्थ. पृ. २२६ ।
3. बृ. २।१२ ।
4. नार. १।२४५,२४६ ।
5. शां. ५७।१३ ।
6. विष्णु. ३।६५ ।
7. मनु. ८।१२६ ।
8. विष्णु. ३।६६ ।

# अध्याय: ६

## दण्डसिद्धान्तः

आधुनिकैर्विधिशास्त्रिभिर्दण्डविषयकं सिद्धान्तं चतुष्टयं व्यवस्थाप्यते— प्रतीकारात्मकः, अवरोधकः, निरोधकः, सुधारात्मकः । प्रतीकारात्मको दण्डो हि प्रतिदानरूपः परमेष आसीत् समूलः, तद्यथा अक्षिभ्यां अक्ष्णोः, दन्तेभ्यो दन्तानां प्रतिदानम् । यथार्थवादिनो विचारकाः नेच्छन्ति दण्डस्य साध्येन सम्बन्धम्, अपितु घटिततथ्यानि यावदेव तं सीमितयन्ति । यथापराधमेव दण्डः प्रतिफलञ्च द्वयमप्येतद् व्यवस्थापनीयं न्यायालयेन । आदर्शवादिनः कांट महोदयोऽपि प्रतीकारात्मकं दण्डं सम्मन्यते[1] ।

अपराधमवरोद्धुं अन्यान् सामाजिकान् सदस्यान् प्रबोधयितुञ्च भवदवरोधको दण्डः अपराधस्याविरोधोऽन्येषां सामाजिकानां जनानां प्रबोधश्च द्वयमेतद् भवत्यवरोधकस्य दण्डस्योद्देश्यम् । एवं दण्डोऽपराधिनं पुनरपराधाचरणायोग्यतां नयति, भयञ्चोत्पादयत्यस्यात एव । वैयक्तिकस्वातंत्र्योच्छेदका अङ्गच्छेदप्राणापहरणदेशनिष्कासनाजीवनकारावासप्रभृतयो दण्डस्यास्य कुक्षिमाविशन्ति । निरोधकदण्डसिद्धान्तस्तावदवरोधकसंशोधकयोरुक्तदण्डयोस्समन्वयं व्यवस्थापयति । अनयोर्हि परस्परात् पृथक्करणमपि दुष्करम्[2]।

दण्डोऽयमेकतो नागरिकान् प्रतिबोधयति,अपरतश्च अपराधस्य मूलानि समापयति येन मा भूदपराधस्य पुनरावृत्तिः। व्यक्तिवादिन्या विचारधारया व्यक्तिर्व्यक्तित्वमभ्युपगतम् । प्रभावोऽस्य दण्डसिद्धान्तेऽप्यभूत् । दण्डसिद्धान्तोऽपि अनेन प्रभावितः । संशोधनात्मकः सिद्धान्तोऽस्या एव विचारधाराया परिणामः । अत्र हि अपराधापेक्षया अपराधी अधिकमवधीयते । अपराधी न दण्डस्यैवापितूपचारस्यापि भाजनम् । अतः सामाजिक्या सुरक्षया सहापराधिनो व्यक्तित्वमप्यवधेयम् । मनःस्थितिविशेषवशेनापराधमाचरन्नपराधी परिवर्तनमप्यायातुं शक्नोति । कदाचिन्महाजनैरप्यपराध्यते । राज्येनानुकूलं वातावरणं प्रस्तूयेत चेदपराधिनोऽपराधप्रयोजिका मनःस्थितिरपि प्रशाम्येत्[3] ।

---

1. कांट, हास्टी कृतोऽनुवादः,पृ. १९५ ।
   वूल्जे, पॉलिटिकल सायंस, १ पृ. ३३५ ।
   फ्राई, स्टडीज़ बाई दि वे, थ्योरीज़ ऑफ पनिशमेंट, पृ. ४३-७१ ।
2. सेमुअल होर, क्रिमिनल जस्टिस बिल(१९३०) ३४२ ।
   मैक्सडुग्वी, सोशल साइकॉलॉजी, पृ. १२ ।
3. Vinogradoff,Historical Jurisprudence, 1, p.59.

उक्तसिद्धान्तचतुष्टयादन्योऽप्येको दण्डविषयकः प्रायश्चित्तसिद्धान्तः। सिद्धान्तोऽयं नैतिकतामाश्रितः। नायं पूर्णतया विधिसीमामाबद्धुं शक्यते[1]। प्रायश्चित्तं हि भवति पापस्य दण्डश्चापराधस्य। यदा पापापराधयोर्नासीत् स्फुटो भेदः अर्थान्नासीदनयोः पूर्णतया विषयविभागः, इदं पापमयमपराध इति, तदासीत् प्रायश्चित्तस्यैव विशेषः प्रभावः। यद्यपि अपराधविधिर्नैतिकतामुत्सृज्य न शक्यो व्यवस्थापयितुं तथापि नास्य पूर्णतया आचारसंहितासीमामाबन्धनमुचितम्। ईदृशान्यपि पापान्याचारिका अपराधा वा, यानि दण्डसीमांतो बहिर्भूतानि। अतः तावत् प्रायश्चित्ते राज्येन हस्तक्षेपः कर्त्तुं न शक्यते, यावत्सामाजिकैः प्रतिनिधिभिरेतदुचितं व्यवस्थाप्यते, प्रयुज्यते वा।

**प्रतीकारात्मकः दण्डः**

प्रारम्भिके समाजे प्रतीकारात्मको दण्डोऽधिकं प्रयुज्यते स्म। अद्यत्वेऽपि एतदंशानां स्थितिर्न शक्या अपह्नोतुम्। यतो हि व्यवतिष्ठन्तेऽद्यापि प्रतिफलदण्डाः, तेषु चानिवार्या प्रतीकारांशाः। यद्राज्येन प्रतीकारात्मकं पक्षं विचिकासयिषति। पुरुषमधिष्ठितायाः प्रतीकारभावनायाः ह्रासे ईदृशीं दण्डव्यवस्थामपि समापयिष्यति राज्यम्। प्रतीकारपक्षस्यासीत्तदानीं विशेषतो महत्त्वं यदा व्यक्तेरधिकारैर्नासादितं स्वीयमौचित्यम्। प्रतीकारो नाधिकारः न वाधिकारात्मकतामायातुं शक्नोति यतो ह्यनेन सामाजिकं हितं विहन्यते। प्रतीकारस्य अधिकाररूपतायामभ्युपगम्यमानाया अधिकारस्य विलोप एव स्यात्। प्रारम्भिके समाजे ग्रामस्य, कुटुम्बस्य, समुदायस्य वा प्रधानद्वारा व्यक्तेरधिकारा व्यक्तिमयान्तिस्म। व्यक्तेर्न कश्चिदप्यन्यानपेक्षः मूलाधिकारः। अस्यामवस्थायां नैका व्यक्तिर्व्यक्त्यन्तरस्य प्रतीकारमपेक्षते स्म। ग्रामम्, कुटुम्बम्, समुदायं वा द्वारीकृत्यैव प्रतीकारो व्यक्तिमायाति स्म। पुरुषस्तदानीन्नासीत् स्वतंत्रो नागरिकः, अपि तु संघटनविशेषस्य घटकतयैव तस्य स्थितिः। तत्र संघटनं प्रति कानि मे कर्त्तव्यानि इत्येतद् विषयकाः कर्त्तव्यभावा एवाधिकाराणां स्थाने प्रत्यतिष्ठन्।

वैदिकसमाज आसीत् संघबद्धः। व्यक्तेर्व्यक्तित्वमपि कुटुम्बेषु, ग्रामेषु, सामाजिक-संघटनेषु च निविष्टमासीत्। व्यक्तिरपराधः कुटुम्बस्यैव संघटनस्यैवापराधो मन्यते स्म। दण्डविधौ प्रतीकारः प्रतिफलतया प्रस्फुटति। एतदेव च (प्रतिफलम्) "वैरदेय"-माख्यातम्। एष एव देयशब्दः स्मृतिषु पारिभाषिकतां ययौ। प्रतिफलं हि न व्यक्त्या स्वयं दीयतेस्म अपितु संघटनद्वारा। चौर्यदण्डे प्रतिफलस्यैतद् रूपं परिदृश्यते[2]। व्यक्तिः संघस्यैकमङ्गमितिकृत्वा तस्याः संघबद्धाया दण्डेन समं सम्बन्धे

---

Gluck, Crime and Justice, pp. 214-215.
Paton, Jurisprudence, p. 350.

1. G.W. Paton, A Text Book of Jurisprudence, p. 347.
Page, Crime and Community. p. 1069.
2. उत धा नेमो अस्तुतःपुमाँ इति ब्रुवे पणिः। स वैरदेय इति समः। ऋ. ५।६१।८।

प्रस्तूयमाने तत्राधारो लक्षमनुपातश्च न यान्ति स्फुटताम् । ऋणस्य अप्रत्यावर्तने व्यक्तिर्भजति संघस्य सदस्यता । अक्षभ्यामक्ष्णोर्दन्तेभ्यो दन्तानां प्रतिदानमित्यस्या यहूदीयोक्तेर्मूलं दृश्यते वेदेषु[1] इत्याधुनिकाः । किन्तु प्रयोगस्यास्य संघेन सम्बन्धे वस्तुस्थितिः सन्दिग्धा । स्मृतिकालं यावत् व्यक्तेर्व्यक्तित्वं प्रास्फुटत्। जेन्सेन महोदयेन मनुवचनान्याश्रित्य तदानीं प्रतीकारात्मकदण्डसिद्धान्तस्य प्रयोगः समर्थितः[2] ।

वैदिककाले ऋतस्य ईश्वरेच्छाया वा उल्लंघनस्य फलं दैवः प्रकोपो मृत्युर्वा मन्यते स्म । एकस्य व्यक्तिविशेषस्य अपराधेन समस्तसमाजो दण्डं भजते[3] । एवंविधस्य दण्डस्य परिज्ञाने दिव्यं साक्ष्यमुपायः। एष प्रकारः प्रायः समेष्वपि प्राचीन-समाजेषु दृश्यते[4] । परं दिव्यसाक्ष्याश्रयणेन दण्डव्यवस्थापने वैदिकानामन्यैवैका धारणा । ते हि देवान् विधेः संरक्षकानवगच्छन्ति । न कश्चिदप्यपराधो देवानां परोक्षः । दिव्येन साक्ष्येण देवाभिमतो निर्णयः प्रकाशमायाति[5] शतात्मापि न दैवान् नियमानुल्लंघ्य क्षमते जीवितुम्[6] । दिव्यं हि साक्ष्यमपराधिनं दण्डेन वा योजयत

---

अव राजन् पशुतृपं न तायुं सृजावत्सं न दाम्नो वसिष्ठम् । ऋ. ९।८६।५ ।
अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥
(ऋ. १०।३४।४)

1. Prof. Basu, Indo Aryan Polity, p. 99.
2. Institute of Hindu Law, p. 192.
3. प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥
सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।
रुद्रास एषामिषिरासो अद्रुहः स्पशःस्वञ्चःसुदृशो नृचक्षसः ॥
ऋतस्य गोपा न दभाय सुक्रतुस्त्रीष पवित्रा हृद्यन्तरा दधे ।
विद्वान् त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतान् ॥
ऋतस्य तन्तुर्विततःपवित्र आ जिह्वाया अग्रे वरुणस्य मायया ।
धीराश्चित् तत् समिनक्षन्त आशताऽत्रा कर्तमव पदात्यप्रभुः ॥
(ऋ. ९।७३।६-९)

ग्रिस्वोल्ड, रेलिजन ऑफ ऋग्वेद, पृ. १२६ ।
केगी, ऋग्वेद, पृ. १८ ।
4. Vinogradoff, Common Sense in law, p. 243.
5. प्र ये मिनन्ति वरुणस्य धाम प्रिया मित्रस्य चेततो ध्रुवाणि । ऋ. ४।५।४ ।
पातां नो देवाश्विना शुभस्पतीं उषासानोक्त न उरुष्यताम् ।
अपां नपादपह्रुती गयस्य चिद्देव त्वष्टर्वर्धय सर्वतातपे ॥
(अथर्व. ९।३।३)

अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्र आयन्तेन रोहान्रुरुहुर्मेध्यासः ।
(अथर्व. ४।१३।१)

6. न देवानामति व्रतं शतात्मा च न जीवति । ऋ. ८।३३।९ ।

निर्दोषतामेव वास्य प्रमाणयति । स्मृतिकालं यावत् दिव्यःसाक्षी दण्डव्यवस्थायां साक्षिमात्रतयावतस्थे । वर्णादिकमपि तेन सह योजितम् । पश्चिमदेशेषु दिव्य-साक्ष्यानुसारी न्याय ऐश्वरो न्याय आस्थितः । एष एतस्य निष्कर्षो यद् दिव्यसाक्षि-रूपेणापि प्रतीकारात्मकदण्डसिद्धान्तो विकाशमायातः ।

**निरोधकदण्डः**

निरोधकदण्डसिद्धान्तः अपराधस्य पुनरावृत्तिमवरुणद्धि । अपराधस्य पुनरा-वृत्तेरवरोध एव दण्डस्यास्योद्देश्यः । अनेन हि प्रतिरोधात्मकसुधारात्मकौ दण्डौ समन्वयमानीयेते । एष सिद्धान्त आसीत् सार्वभौमः । कल्याणस्थापनायां यानि बाधकानि तत्त्वानि तानि प्रशम्य तेषां दमनपूर्वकं वा अपराधो यथा न पुनरावर्तेत तथा प्रयास एव दण्डस्यास्य मूलम् । अस्यामवस्थायां दमनमपि सुधारमूलकतां याति । संशोधनात्मकनिरोधकात्मकयोर्दण्डयोरेष विशेषः, यद् द्वितीयो भयप्रवृत्ति-मास्थितः, दुष्प्रवृत्तीरपनीय सत्प्रवृत्तीनां स्थापनमुद्देश्यम् । दण्डस्यास्य प्रायश्चित्तेन महान् सम्बन्धः । प्रारम्भिके समाजे संरक्षणस्य आसीत् महती आवश्यकतेति तदानीं दमनसिद्धान्तः प्रयुज्यते स्म । परं दण्डव्यवस्था केवलं निरोधकैवेति दर्शनं भ्रमः, यद्भयस्थित्या अर्थात् केवलेन भयोद्भावनेन न शक्यन्तेऽधिकाराः स्थापयितुं संरक्षितुं वा ।

दमनसिद्धान्तेऽपि न प्रस्तरेण इष्टिकायाः समाधानस्य प्रतिशोधस्य वा भावना, दमनसिद्धान्तोऽपि न प्रस्तरेणेष्टिकाया समाधानमित्येतां रीतिं प्रतिशोधं वा समर्थयते । अत्रापि अपराधिनो नियन्त्रणे भवति प्रयासः । सिद्धान्तमिमं मनुरपि समर्थते । यद्यपि दमनशब्दो व्यवहृतस्तथापि अपराधिनो दमनापेक्षया अपराधस्य निवर्तनमेव मुख्यमुद्देश्यं मतम् । उद्देश्य. ुसारेण दमनस्यावस्था गुणात्मकं परिवर्तनं याति । विधिमवजानन् कश्चिदपि दण्डयितुं हन्तु वापि शक्यते । एतस्यैष परिणामो यत् सर्वैरपि विधेःपरिपालने जागरूकैरभूयत । न कोऽपि तमवज्ञातुमुत्सहते स्म । विधेरतिवर्तने तत्कालं राज्येन यथाविहितं दण्डो व्यवस्थाप्यते स्म । इदमवधेयं दमनसिद्धान्तः प्रशासकस्यान्यस्य वा कस्यापि इच्छाथाः पूर्त्ति न समर्थयते । दमन-प्रयोगस्याधाराः सन्ति निश्चिताः । न तत्र कार्यपालिका मनागपि संशोधनं कर्त्तुमीष्टे, यतोऽस्या मूलानि शास्त्राणि । विधेः सम्यक् कार्यान्वयनं परिपालनमेव वा दमन-स्योद्देश्यम् । समस्तापि व्यवस्था विधिनिषेधपर्यालोचननिबन्धना ।

**सुधारात्मकः दण्डः**

एष दण्डो भवति ज्यायान् अत्र हि पीडितस्य अपराधिनश्चोभयोरप्यधिकारा अवधीयन्ते । समाजकल्याणमेवोचितदण्डस्य लक्ष्यम् । अतोऽपराधिनो नैतिककल्याण-

विषयिण्या समस्याया अपि समाधानमत्रावश्यकम् । अस्यां स्थितौ समाजस्य पुर एष प्रश्नो जागर्ति यदपराधी कथङ्कारमुचितं मार्गं नेतव्यो येन तदीया असामाजिक्यो वृत्तय उच्छिद्येरन् । राज्यं हि समाजीयान् धारणामाहत्य अनुकूलं वातावरणं प्रस्तौति ।

दमनसिद्धान्ततः पश्चात् सुधार-(संशोधन) सिद्धान्त उदेति । दमनस्य नियन्त्रणस्य च प्रचुरं प्रयोगेण अपराधा यान्ति ह्रासम् । अस्यामवस्थायां सुधार-सिद्धान्तो निर्बाधं पदं निधत्ते । एषा चावस्था सम्भवति सभ्यतायाश्चरमे चरणे। वेदेष्वीदृशो दण्डो नोल्लिखितः । कौटल्येन शुक्रेण चात्र महदवहितम् । कठोरदण्ड-व्यवस्थायां कौटल्यस्य महती प्रसिद्धिः परमुद्देश्यविषये तस्य दृष्टिस्सुधारात्मि-कैवासीत् । यद्यपराधानां स्यादुचितं कश्चिदप्यपराधमिति दर्शनं तस्य । अपराधिनोऽ-निग्रहे हि अपराधोऽन्यमपि आक्रमितुं शक्नोति, अन्योऽप्यपराधमाचरिष्यन्तीति यावत् । कौटल्यस्य मतं स्फुटमेव, स हि पश्यति अपराधस्समाजेऽवतिष्ठेत् चेदेकमिव अन्यामपि असौ संक्राम्येत् संक्रामकरोग इव । समाजस्य सम्यक् संस्थापनार्थं व्यवस्थापनार्थं वापराधिनो विनाशापेक्षया अपराधस्योच्छेदोऽवरोध एव वा ज्यायान् । एवंविधामपराधविषयिणीं मनोवृत्तिमपराधस्थितिञ्चोन्मूल्य सुधारसिद्धान्तः प्रतिष्ठापितः समर्थितश्च । कारागृहेषु अपराधिनः कथं स्थाप्यन्ते स्म, कथञ्च तेषां मनोवृत्तेः संशोधने प्रयत्यते स्मेत्यस्य विवेचनेन निदर्शनेन वा विषयोऽयं शक्यते दोषयितुम् ।

शुक्रस्य दर्शनम्, "यावद् अपराधिनो मनोवृत्तिर्न शुध्यति न तावदपराधस्योच्छेदः सम्भाव्यते" । अत एव अपराधिनो वृत्तेः परिहारे शोधने वा दण्डविधानेन विशेषतः प्रयत्यते । दमनं हि दण्डस्य साधनं शोधनं च साध्यम् । स हि तमेव दण्डं मन्यते येनापराधस्योच्छेदः । दमनेन पशवोऽपि नियन्त्र्यन्ते । शुक्रेण ईदृशानां पतितानां जनानां महती नामावलिर्निर्दिष्टा ये वातावरणविशेषेण सामाजिकस्थितिवशेन वा दूषिताः । एतेषां कृते राज्यस्य राज्ञो वा एतत् कर्त्तव्यं तेनोच्चं यद्राजा ईदृशान् अवसरं प्रदाय जीवनस्योद्देश्येषु शिक्षयेत्, जीवनस्योद्देश्यमवगमयेत् । अपराधिनो बन्दीकृत्य देशान्तरेष्वपि शक्यन्ते प्रेषयितुम् । बन्दिभिः मार्गनिर्माणादादिकं कर्म कारणीयम् । धर्मं संस्थापयितुं नैतिकतां विकाशयितुञ्च राजा दण्डं प्रयुञ्जीत् । अपराधिन उचितं दण्डनं वस्तुतः तस्मिन्ननुकम्पैव । अनेन हि सोऽसन्मार्गात् सन्मार्गमानीयते । कामान्दकस्याप्येतदेव दर्शनम् । उद्देश्यमिमं प्रयुज्यमानो दण्डो धर्मस्य नैकट्यमासादयति । चरित्रस्य नैतिकतायाः, मानवीयगुणानाञ्च, विकाशो दण्डस्य उद्देश्यः । यत्किमपि विचार्यते तत् परिस्थितिविशेषसापेक्ष्यम् कार्यतया परिणमतीति यावत् । राजदण्डेन व्यक्तिरुचितं मार्गमानीयते ।

अन्यत्रापि मनोवृत्तीनां शोध एव दण्डस्य मुख्य उद्देश्य आख्यातः । यद्यपराधी कुटुम्बेन, सम्बन्धिना, वर्गेण, अन्येन वा संघटनेन व्यक्तिविशेषेण वा प्रागेव दण्डितस्तदा राज्ञ एतत् कर्त्तव्यं यत् स तथा प्रयतेत् येनासौ उचितं मार्गमानीयेत । एकदापराधाचरणेन नापराधिनो जीवनयोग्यता याति विलयम्, अपि तु मनोवृत्तीनां शोधनेन स शक्यो न्याय्ये मार्गे प्रतिष्ठापयितुम् । परं पूर्वापराधस्य हेतोस्तेन स्वीया मनोवृत्ती शोधयितुमुचितं कार्यमाचरितुञ्चावसर एव न लभ्येच्चेद् भवेदेव स विवशः पुनरपराद्धुम् । दुष्टानां दण्डनेन समाजो याति नैरापद्यम् इति मतिर्महाभारत-काराणाम् । राजा जनेभ्यस्तादृशमवसरं प्रददीत येन ते जीवनमुचितं यापयेयुः । प्रत्यक्षेणाप्रत्यक्षेण च यथा सुधारसिद्धान्तस्योद्देश्यः शक्य उपगन्तुं दमनस्य नियन्त्रण-स्य च प्रत्यक्षं फलं सुधार एव ।

वस्तुतो दण्डो न साध्योऽपितु साधनम् । अत एव सामाजिकं कल्याणं तस्योद्देश्यम् । सामाजिककल्याणस्थापनार्थञ्च भवितव्यमेव दण्डेन सुधारवादिना । सुधारपक्षमाश्रित्यैवायमुक्तमुद्देश्यं स्थापयितुमीष्टे । विषयेऽस्मिन् बन्दिषु आचर्यमाणा व्यवहारा भवन्ति मुख्याः । एतत् स्फोरणार्थमेव च अपराधप्रकारनिरूपणावसरे प्रथमं सा पृष्ठभूमिरस्माभिः उपस्थापिता यस्या आलोचनेनापराधिषु कीदृग् व्यवह्रियते स्म इति स्फुटं परिज्ञायते । बन्दिविषयकाणां व्यवहाराणामध्ययने अपराधिनां मनोवृत्तेः शोधनमेवासीन्मुख्यमुद्देश्यमिति अवगम्यते । स्त्रीबालवृद्धातुरादीनां रज्जुवेत्र-बंशयष्ट्यादिभिर्दण्डनं नानुमन्यते मनुः। शुक्रेण तु कलाचतुःषष्टौ दण्डपरिज्ञानमप्येका कलोक्ता । देशनिष्कासनं वधश्च इमौ यद्यपि कठोरौ दण्डौ परमीदृश दण्ड-व्यवस्थापकानां तदानींतनानां विचारकाणां दर्शनं यदपराधिनः सापि परिस्थितिः सम्भाव्यते यदा तस्य शोधनं भवेदशक्यम् । ईदृशामपराधिनामेवंविधा दण्डा आवश्यकाः, तादृशोऽपि भवत्यपराधी यस्य उपचारैः शोधनमशक्यम्, एवंविधस्यैव कृते वधादयो दण्डाः । एवंविधेष्वेव च अपराधिषु वधादेर्व्यवस्था, अन्यत्र तु मृत्युदण्डोऽसम्मत एव समेषामपि विचारकाणाम् ।

कारागृहेषु बन्दिभिः विभिन्नानां निर्माणादीनां कार्याणां कारणम्, तेषु विश्व-सनञ्च सर्वप्रथमं शुक्रेणैव निर्दिष्टम् । बन्दिनां कारागृहे न्यूनान्न्यूनं कालं यावत् स्थापनं व्यवस्थापितं मनुना कौटल्येन च । एतन्मतानुसारं हि बन्दिनां कारागृहकालो यथा न्यूनान्न्यूनः स्यात् तथा विधेयम् । एतदर्थञ्च तैः सेवादिकं कार्यं कारयित्वा तेषां कारावासावधेस्संकोचं निर्दिशत एतौ । इदमत्र ध्येयं यत् तेषां बन्दिभिः सेवादि-कार्याणां कारणं तस्य प्रतिफलतया तेषां कारावासावधिरल्पीक्रियते । यत्तैः कारागृहे सेवादिकमाचर्यते सोऽप्येकस्तेषां दण्ड एवेति दण्डस्यास्य आधिक्यं कारावासा-वधेर्न्यूनीकरणेन पूर्यते । प्रतिपञ्चमं दिने निष्क्रयं गृहीत्वापि बन्दिनः शक्या

मोचयितुम्। राज्ञो जन्मदिने राजपुत्रस्य जन्मनि, युवराजस्याभिषेकदिने, विजयदिने, शुभनक्षत्रे, पर्वणि च बन्दिनां मोक्षमाह कौटल्यः। अतोऽन्योऽपि बन्दिनां मोचनस्य तृतीयो विधिर्यदकस्मात् कारागृहं सम्प्राप्ता बन्दिनः शीघ्रंमोचनीयाः। तेषामाचरणे निरीक्षणीयम्। पुनरपराधं नाचरिष्यामीति तैःप्रतिज्ञायमाने एव शक्यास्ते मोचयितुम्।

**प्रायश्चित्तम्**

सुधारात्मकस्य दण्डस्य यदाधुनिकं स्वरूपं न तद् वैदिकसमाजे परिदृश्यते। दण्डस्यास्य प्रायश्चित्तविधौ शक्यते समावेशः। एतावानेव विशेषो यत् प्रायश्चित्तं पापस्य दण्डश्चापराधस्य। नैतिकेन विधिना न पापस्य सम्बन्धः। अत एव प्रायश्चित्तस्यापि न वैधानिक्या प्रक्रियया सह योगः। अनवधानतया दैव्यापदा च पापेन सह प्रायश्चित्तस्य सम्बन्धो लभ्यते तैत्तरीयसंहितास्थेषु केषुचिन् मंत्रेषु[1]। एतेन स्फुटं यत् पापेन सहापराधभावोऽपि विकशन्नासीत्। कौषीतिकीब्राह्मणे पापपर्यायतया स्खलनशब्द उक्तः [2]। श्रौतसूत्रेषु विधेरतिवर्तने प्रायश्चित्तप्रयोगः प्रचुरं निर्दिश्यते[3]। यद्यपि तत्र विधिरिति न न्यायपालिकाक्षेत्रीयो विधिः (Law) विवक्षितस्तथाऽपि पापस्य स्थानेऽपराधस्य बीजारोपणमारभ्यत एव। अस्यामवस्थायां पापस्य प्रायश्चित्तमपि वैदिकपरम्परागतमेव आसीत्[4]।

प्रायश्चित्तस्यैव निष्कृतिरित्येष पर्याय उक्तः। यज्ञीयविधेः परिपालनेऽनुष्ठाने वा जायमानस्य प्रमादस्य प्रायश्चित्तं विशेषतः प्रतिपादितम्। मीमांसकैः सदैव निषिद्धस्य कर्मणोऽनुष्ठानेऽपि एतैः प्रायश्चित्तं व्यवस्थापितम्[5]। अपरञ्चैतैः दृष्टा-दृष्टाभ्यां प्रायश्चित्तसम्बन्धस्य व्यवस्थापनात्। प्रायश्चित्तस्य सुयोजनात् तस्य दार्शनिकोऽपि पक्षः पुर आयातः। एतस्यैष परिणामो यत् स्मृतीर्निबन्धग्रन्थांश्च यावन्नित्यम्, नैमित्तिकम्, काम्यञ्चेति प्रायश्चित्तस्य तिस्रोविधा अभूवन्[6]। ततश्च पापस्य ज्ञानमूलकत्वमज्ञानमूलकत्वञ्चाश्रित्य प्रायश्चित्तेषु तारतम्यं व्यवस्थापयत्[7]।

---

1. तै. सं. २।१।२।४; २।१।४।१; ३।३।३।२-३; ५।१।९।३; ५।३।१२।१।
2. यद्वै यज्ञस्य स्खलितं वोल्बणं वा भवति ब्राह्मण एवं तत्प्राहुस्तत्स त्रय्या विद्यया भिषज्यति। (कौ. ब्रा. ६।१२)।
3. विध्यपराधे प्रायश्चित्तिः—आश्व. श्रौ. ३।१०; शा. श्रौ. ३।१९।१; वै. श्रौ. २०।१।
4. अथर्व. १४।१।२०; वा. सं. ३९।१२; ऐ. ब्रा. ५।२; शत. ब्रा. ४।५।७।१; ७।१।४।९; ११।५।३; १२।४।१।६; कौ. ब्रा. ५।९।
5. जै. १२।३।१६ अत्र शबरस्वामी; १३।३।१७; आप. श्रौ. ९।१।१।
6. प्राय. तत्त्व. पृ. ४६७; प्राय. वि. पृ. ३१७; मदनपा. पृ. ७०३, ७०४।
7. परा. मा. २।१ पृ. १३।

प्रायश्चित्तव्यवस्था विस्तरेण विश्लेषणीयम् । यो ब्राह्मणं हतवान् स वने कुटीं कृत्वा हतस्य शिरः कपालं तदभावेऽन्यस्यापि चिह्नं कृत्वाऽरण्ये भैक्षभुगात्मनः पाप-निर्हरणाय द्वादशवर्षाणि वसेद् व्रतं कुर्यात् । अत्राऽपि कृतवापनो निवसेदिति । मुन्यन्तरोक्ताऽपि विशेषा ग्राह्याः । तथा च यमः

"सप्तागाराण्यपूर्वाणि यान्यसङ्कल्पितानि च ।
संविशेत्तानि शनकैर्विधूमे भुक्तवज्जने ॥
भ्रूणघ्ने देहि मे भिक्षामेनो विख्याप्य संचरेत् ।
एककालं चरेद्भैक्ष्यं तदलब्धोदकं पिबेत् "॥

अयं च द्वादशवार्षिकविधिर्ब्राह्मणस्याज्ञानकृतब्राह्मणवधे—"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्" (मनु. ११।८९) इति । क्षत्रियवैश्यशूद्राणां तु क्रमेणैतद् द्वादशवार्षिकं द्विगुणं त्रिगुणं चतुर्गुणं च द्रष्टव्यम् । यथोक्तं भविष्यपुराणे—

"द्विगुणाः क्षत्रियाणां तु वैश्यानां त्रिगुणाः स्मृता ।
चतुर्गुणास्तु शूद्राणां पर्षदुक्ता महात्मनाम् ॥
पर्षदुक्तव्रतं प्रोक्तं शुद्धये पापकर्मणाम् ।"

यावद्भिर्ब्राह्मणैर्ब्राह्मणानां सभा, ततो द्विगुणैः क्षत्रियाणां द्रष्टव्यवहारदर्शनाद्यर्था सभा भवेत्, त्रिगुणैर्वैश्यैर्वैश्यानाम् । चतुर्भिः शूद्रैः शूद्राणामिति संभवाच्च क्षत्रिया-दीनां त्रयाणां व्रतमपि द्विगुणत्रिगुणचतुर्गुणमित्यर्थः । एतानि च मनूक्तब्रह्मवध-प्रायश्चित्तवचनानि गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेन भविष्यपुराणे व्याख्यातानि।

"हन्ता चेद्गुणवान्वीर अकामान्निर्गुणो हतः ।
कर्त्तव्यानि मनूक्तानि कृत्वा वै आश्वमेधिकम् ॥
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा बने वसेत् ।
गच्छेदवभृथं वाऽपि अकामान्निर्गुणे हते ॥
जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृतं तथा ।
अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् ॥"

इति विश्वामित्रवचनात्प्रायश्चित्ताधिक्यमूहनीयम् । कामकृते तु ब्राह्मणवधे द्विगुणं ब्रह्मवधप्रायश्चितं चतुर्विंशतिवर्षम्[1] । तदाहाङ्गिराः—

"अकामतः कृते पापे प्रायश्चित्तं न कामतः ।
स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके ॥"

युद्धभूमावुभयबलप्रेरितशरसंतापस्थाने मृतः शुद्धिमाप्नुयात् । गाढमर्मप्रहार-जनिततीव्रवेदनो मृतकल्पो मूर्च्छितो जीवन्नपि विशुद्ध्यति । लक्ष्यभावश्च प्रायश्चित्ती

1. मनु. ११।७२ ।

अयमित्येवं विदुषां धनुर्विद्याविदां संग्रामे स्वेच्छया कर्त्तव्यो न तु राज्ञा बलात्कारयितव्यः। यथाह मनुः

**लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः।**
**प्रायस्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः॥ (११।७३)**

धनुः शराद्यायुधधारिणां ब्रह्मवधपापक्षयार्थमयं लक्ष्यभूत इत्येवं जानतां स्वेच्छया बाणलक्ष्यभूतो वावतिष्ठेत। यावन्मृतो मृतकल्पो वा विशुद्ध्येत्। तदाह **याज्ञवल्क्यः**

**सङ्ग्रामे वा हतो लक्ष्यभूतः शुद्धिमवाप्नुयात्।**
**मृतकल्पः प्रहारार्तो जीवन्नपि विशुद्ध्यति ॥३।२४८॥**

अग्नौ प्रदीप्ते वाधोमुखस्त्रीन्वारान्शरीरं प्रक्षिपेत्। "तथा प्रास्येत यथा म्रियेत" इत्यापस्तम्बवचनादेवं प्रक्षिपेत्। एतत्प्रायाश्चित्तद्वयमनन्तरे "यजेत वाश्वमेधेन" (मनु. ११।७४) इत्येवं प्रायश्चित्तत्रयमिदं कामतः क्षत्रियस्य ब्राह्मणवधविषयम्। मनुश्लोकमेव लिखित्वा व्याख्यानं भविष्यपुराणे दृश्यते।

स्वर्जिता यागविशेषेण गोसवेन अभिजिता विश्वजिता वा याजयेत्। एतानि चाज्ञानतो ब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि वेदानां मध्यादेकं वेदं जपन्स्वल्पाहारः संयतेन्द्रियो ब्रह्महत्यापापनिर्हरणाय योजनानां शतं गच्छेत्। एतदप्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तम्। सर्वस्वं वा वेदविदे ब्राह्मणाय दद्यात्। यावद्धनं जीवनाय समर्थम्। गृहं वा गृहोपयोगिधनधान्यादियुतम्, अतः सर्वस्वं वा गृहं वा सपरिच्छदं दद्यात्। जीवनायालमिति वचनाज्जीवनपर्यन्तं सर्वस्वं गृहं वा दद्यान्न ततोऽल्पम्। एतच्चाज्ञानतो जातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम्।

नीवारादिहविष्यान्नभोजी विख्यातप्रसवणादारभ्यापश्चिमोदधेः स्रोतः प्रतिसरस्वतीं यायात्। एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्वके। लूनकेशनखश्मश्रुर्गोब्राह्मणोपकारान् ग्रामसमीपे गोष्ठपुण्यदेशवृक्षमूलान्यतमे निवसेत्। प्रक्रान्ते द्वादशवार्षिकेऽन्तराग्न्युदकहिंसकाद्याक्रान्तब्राह्मणस्य गोर्वा परित्राणार्थं प्राणान्परित्यजन्ब्रह्महत्याया मुच्यते। गोब्राह्मणं वा ततः परित्रायामृतोऽप्यसमाप्तद्वादशवर्षोऽपि मुच्यते।

स्तेनादिभिर्ब्राह्मणसर्वस्वेऽपह्रियमाणे तदानयनार्थं निर्व्याजं यथाशक्ति प्रयत्नं कुर्वस्तत्र त्रिवारान् युद्धे प्रवर्तमानो नानीतेऽपि सर्वस्वे ब्रह्महत्यापापात्प्रमुच्यते। अथवा प्रथमवार एव विप्रसर्वस्वमपहृतं जित्वा अर्पयति तथापि मुच्यते। यद्वा धनापहारकत्वेन स्वेनैव ब्राह्मणो युद्धेन मरणे प्रवर्तते तदा यद्यप्यहृतसमधनदानेन तं जीवयति तदापि तन्निमित्ते तस्य प्राणलाभे ब्रह्महत्या पापान्मुच्यते। एवमुक्तप्रकारेण सर्वदा नियमोपहितः स्त्रीसंयोगदिशून्यः संयतमनाः समाप्ते द्वादशे वर्षे ब्रह्महत्यापापं

नाशयति। अश्वमेधे ब्राह्मणानामृत्विजां क्षत्रियस्य यजमानस्य समागमेषु ब्रह्महत्या-पापं शिष्ट्वा निवेद्यावभृथस्नातो ब्रह्महत्यापापान्मुच्यते, द्वादशवार्षिकस्योपसंहृतत्वात् । स्वतन्त्रमेवेदं प्रायश्चित्तम् ।

यस्माद्ब्राह्मणो धर्मस्य कारणं ब्राह्मणेन धर्मोपदेशे कृते धर्मानुष्ठानाद्राजा तस्याग्रं प्रान्तं मन्वादिभिरुच्यते, ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्मतरुनिष्पत्तेः । तस्मात्तेषां समागमेऽश्वमेधे पापं निवेद्यावभृथस्नातः शुद्ध्यतीत्यस्यैव विशेषः । ब्राह्मण उत्पत्तिमात्रेणैव किं पुनः श्रुतादिभिर्देवानामपि पूज्यः सुतरां मनुष्याणां लोकस्य च प्रत्यक्षवत्प्रमाणम्, तदुपदेशस्य प्रामाण्यात् । यस्मात्तत्र वेद एव कारणं वेदमूल- कत्वादुपदेशस्य । तेषां विदुषां ब्राह्मणानां मध्ये वेदशास्त्रज्ञोऽपि किमुताधिकाः यत्पापनिर्हरणाय प्रायश्चित्तं ब्रूयुस्तत्पापिनां विशुद्धये भवति । यस्माद्विदुषां वाक्पावयित्री ततश्च प्रकाशप्रायश्चित्तार्थं विदुषामपि परिषदवश्यं कार्या। रहस्य- प्रायश्चित्ते पुनरेतन्नास्ति, रहस्यत्वविरोधात् । एवं मनुस्मृतौ एकादशाध्याये विस्तरेण प्रायश्चित्तविधानम् ।

आत्मघातविषये **यमः**

**आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः ।**
**मृतोऽमेध्येन लेप्तव्यो जीवतो द्विशतं दमः ।**
**दण्ड्यास्तत्पुत्रमित्राणि प्रत्येकं पणिकं दमम् ।**
**प्रायश्चित्तं ततः कुर्युर्यथाशास्त्रप्रचोदितम् ॥ २०-२१ ॥**

गुरुतल्पगामी तु सुषिरां सूर्मिं प्रविश्योभयत आदीप्याभिदेहेदात्मानम् । मिथ्यैत-दिति हारीतः । योह्यात्मानं परं वाभिमन्यतेऽभिशस्त एव स भवति[1] । प्राप्ते प्रयागवटमूलनिवेशबन्धौ सार्धं शतेन गृहिणीभिरमुत्र मुक्तिम्[2] ।

ध्वजं कुर्याच्चिह्नार्थं समया ग्रामं च संवसेत् । न चैवान्तरवसायिभ्यः सुरां दद्यादनापदि[3] । मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन दोषस्त्वापञ्चमाद्वर्षादूर्ध्वं पित्रोः सुहृद्गुरोः[4] । या ब्राह्मणी च सुरापी न तां देवाः पतिलोकं नयन्तीहैव सा चरति क्षीणपुण्याप्सु लुभवति शुक्तिका वा[5] । तथा **मनुः**

**प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ।**
**तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ॥**

1. आप. ध. सू. १।१०।२८।१५-१७; मत्स्य. १८६।३४-३५; गौ. ३१।१; शल्य. ३९।३४-३५; अनुशासन. २५।६२-६४; वन० ८५।८३ ।
2. E. I. Vol. XII 205 at p. 211.
E. I. Vol I, p. 140.
3. अपरार्कः पृ. १०६९-१०७० ।
4. वसिष्ठ. २१।११ ।
5. ताण्ड्य. १७।१।२ ।

**स त्वप्सु तं घटं प्रास्य प्रविश्य भवनंस्वकम् ।**
**सर्वाणि ज्ञातिकर्माणि यथापूर्वं समाचरेत् ॥**
**एतदेव विधिं कुर्याद्योषित्सु पतितास्वपि ।**
**( मनु. ११।१८६-८८ )**

हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्यं चरन्ति च न कृषिं न वणिज्यां षोडशो वा एतत्स्तोमः समाप्तुमर्हति[1] । गरगिरो वा एते ये ब्रह्माद्यं जन्यमन्नमदन्त्यदुरुक्तवाक्यं दुरुक्तमाहुरदण्ड्यं दण्डेन घ्नन्तश्चरन्त्यदीक्षिता दीक्षित-वाचं वदन्ति षोडशो वा एतेषां स्तोमः पाप्मानं निर्हन्तुमर्हति यदेते चत्वारः षोडशा भवन्ति तेन पाप्मनोऽधिनिर्मुच्यन्ते[2] । अत्र सायणः—"ब्राह्मणैर्भोज्यं जन्यं जनपपद-सम्बन्धि अन्नमदन्ति ब्राह्मणार्थपरिकल्पितमन्नं बलात्कारेण भुञ्जत इत्यर्थः ।" व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः । व्यवहार्या भवन्ति[3] । तेषां संस्कारेप्सुर्व्रात्य-स्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्ति, इति वचनात्[4] । एवं लौकिकाग्निष्वेवावकीर्णिनिषादस्थपतिवद् व्रात्यस्तोमस्य स्मार्तस्य सावित्रीपतने प्रवर्तनमुचितम्[5]। द्वादशवर्षब्रह्मचर्यव्रतादिनातिक्लेशादालस्यादिना वा सकृदेवैक-स्मिन्दिने पावमान्यादिभिः स्नानं करोति चेत्तर्हि तद्दिनमारभ्यैव स्मार्तधर्मपरि-ग्रहाधिकारः । ...कालातिक्रमे बहुकालरूपे यावकप्रत्याम्नायचतुर्दशप्राजापत्यानि ग्राह्याणि । पितृपितामहव्रात्यतायां चतुर्दशप्राजापत्यान्येव भवेयुः कालदैर्घ्य-नैयत्यादित्यनुसंधेयम्[6] ।

तथा च देवलः

**बलाद्दासीकृता ये च म्लेच्छचाण्डालदस्युभिः ।**
**अशुभं कारिताः कर्म गवादिप्राणिहिंसनम् ॥**
**उच्छिष्टमार्जनं चैव तथा तस्यैव भोजनम् ।**
**खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ।**
**तत्स्त्रीणाञ्च तथा सङ्गं ताभिश्च सह भोजनम्**
**मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ।**
**चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् ॥**
**चान्द्रायणं पराकञ्च चरेत्संवत्सरोषितः ।**

---

1. ताण्ड्य. १७।१।२ ।
2. ताण्ड्य. १७।१।९ ।
3. कात्या. श्रौ. सू. २२।४।२७-२८ ।
4. पार. गृ. २।५ ।
5. व्रात्यताशुद्धि. पृ. ४२ ।
6. तदेव पृ. २३ ।

संवत्सरोषितः शूद्रो मासार्धं यावकं पिबेत् ॥
मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ।
ऊर्ध्वं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ॥
संवत्सरैश्चतुर्भिश्च तद्भावमधिगच्छति ॥ १७-२२ ॥

चतुर्वत्सरनियमश्च बलाद् गृहीतो म्लेच्छाद्यैरित्यादिदेवलस्मृतिदर्शनादुन्नेयः[1] । निमित्तपरिगणनवेलायामुपपातकानन्तरं जातिभ्रंशकरादीनि परिगणितानि, तत्र प्रायश्चित्तान्युच्यते । तत्र मनुः

जातिभ्रंशकरं कर्म कृत्वाऽन्यतममिच्छया ।
चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥
संकरापात्रकृत्यासु मासं शोधनमैन्दवम् ।
मलिनीकरणीयेषु तप्तः स्याद्यावकस्त्र्यहम् ॥ ११।१२४-१२५ ॥

यमेनाऽप्यत्र विशेष उक्तः–

"संकरीकरणं कृत्वा मासमश्नाति यावकम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं समाचरेत् ॥
अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिर्महासान्तपनेन च ॥
मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।'

बृहस्पतिनाऽपि जातिभ्रंशकरे विशेष उक्तः–

"ब्राह्मणस्य रुजः कृत्वा रासभादिप्रमापणम् ।
निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत्" ॥

एतेषाञ्च जातिभ्रंशकरादिप्रायश्चित्तानां मन्वाद्युक्तानां जातिशक्त्याद्यपेक्षया विषयो विभजनीयः । निमित्तानामानन्त्यात्प्रतिव्यक्तिप्रायश्चित्तस्य वक्तुमशक्यत्वात् सामान्यत नोपदिष्टानुपदिष्टविषये प्रायश्चित्तविशेषज्ञानार्थमिदमाह–

देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्तान् निष्कृतिः ॥
( याज्ञ. ३।२९३ )

सत्यमस्त्येव सामान्यतः प्रायश्चित्तोपदेशस्तथापि सर्वत्र देशकालादीनामपेक्षितत्वादस्त्येव कल्पनावसरः । अतः पापापेक्षया ह्रासः कल्पनीयः प्रायश्चित्तान्तरं वा। ननु कथं पापस्य लघुत्वम्? येन प्रायश्चित्तस्य ह्रासकल्पना स्यात् । नच प्रायश्चित्ताल्पत्वादिति वाच्यम् । अनुक्तनिष्कृतित्वादेव । सत्यम्,–किन्तु अर्थवादसंकीर्तनाद्बुद्धिपूर्वाबुद्धिपूर्वानुबन्धाद्यपेक्षया च सुबोध एव दोषस्य गुरुलघुभावः ।

---

1. अपरार्क. पृ. १२००; बृहद्यम. ५।५; प्रायश्चित्तविवेकः, पृ. ५५ ।

तथा दण्डह्रासवृद्ध्यपेक्षया च प्रायश्चित्तगुरुलघुभावः । यथा ब्राह्मणावगोरणादौ सजातीयविषये प्राजापत्यादिकमुक्तम्, तत्र यदा चानुलोम्येन प्रातिलोम्येन वावगोरणादि क्रियते, यदा वा मूर्धावसिक्तादिभिस्तदा दण्डस्य तारतम्यदर्शनादेव दोषाल्पत्वमहत्त्वावगमात्प्रायश्चित्तस्यापि गुरुलघुभावः कल्पनीयः । दर्शितश्च दण्डस्य गुरुलघुभावः' प्रतिलोमापवादेषु द्विगुणस्त्रिगुणो दमः" इत्यादिना ।

एवं स्मृतिकालं यावदपराधदण्डसिद्धान्तः साकल्येन विकाशमायातः । पापस्य-भूयांसोंऽशा अपराधश्रेणी समाविष्टाः । पापस्य न केवलं वैयक्तिकत्वमेवापि तु सामाजिकत्वमप्यास्थीयत । इदानीं पापेन वैयक्तिकतैव सामाजिकाप्यासादिता । कामतोऽकामतश्चेति पापस्य द्वेऽवस्थे व्यवस्थापिते; अवस्थाद्वयमिदमाश्रित्यैव प्रायश्चित्तव्यवस्था अभ्युपगता[1] । महापातकेषु प्राणोत्सर्गोऽपि प्रायश्चित्ततया विहितः । यो वस्तुतो मृत्युदण्डः शक्यो वक्तुम्[2] । अत्र हीदं दुनिर्णयं यदेषोऽपराधस्य दण्ड उत पापस्य प्रायश्चित्तम् । यतः स्मृतयः श्रुतीयां परम्परामप्यनुवर्तन्ते स्वयुगीय व्यवस्थानां समन्वयोपि च ईहन्ते । परमपरानुवर्तने पापभावः, स्वयुगीयव्यवस्थानुरोधे चापराधभावः प्रस्फुटति । अतः प्रायश्चित्तो दण्डश्च यातः साहचर्यम् । वेदेषु प्रायश्चित्तानि न राज्येनानुष्ठाप्यन्तेऽपि तु व्यक्त्या स्वयमेवानुष्ठीयन्ते। तदतिवर्तनस्य परिणामस्तु न वेदैः स्फुटं निर्दिश्यते । स्मृतिषु विकल्पविषयिणी व्यवस्था दृश्यते। स्मृतयो हि प्रायश्चित्तस्य व्यवस्थापनं राज्यस्य कर्तव्यमाहुः ।

प्रायश्चित्तस्य व्यक्त्या समाजेन चेत्युभाभ्यामपि सम्बन्धादेका महती असङ्गति-रपि भवत्युपस्थिता । पापी अपराधी वा प्रायश्चित्तदण्डयोरुभयोरपि भवत्युत्तरदायी । वेदविस्मरणस्नानशयनादिविषयकाणां पापानां प्रायश्चित्तस्य व्यक्त्यैव सम्बन्धः, अर्थादीदृशं प्रायश्चित्तं व्यक्तिगतमेव । चौर्यवधादीनां प्रायश्चित्तं पुनः सामाजिकम् । एवंविधेषु पापेषु, अपराधेषु वा दण्डोऽपि व्यवस्थापितः । इत्थञ्च एतेषु प्रायश्चित्त-दण्डश्चेत्युभयमपि विधीयते । यत इमानि पापानि अतः प्रायश्चित्तस्य, यतश्चैषां समाजेनापि सम्बन्धः अर्थादिमेऽपराधा अपि अतः राजदण्डस्य विषयाः । पापाराधयोरेवंविधेन सम्मिश्रणेन सांकर्येण वा ईदृशी असङ्गतिरुपस्थिता । धर्मे आधारतया अभ्युपगते असंगतिरियं विस्तारमायात् । राजद्रोहः राजमार्गध्वं-सादिकमपि पापेषु, अपराधेषु चागण्यत ।

अत्र ह्येषा विचारणोदेति यद् दण्डप्रायश्चित्तयोः सांकार्यमायातयोः राज्यस्य परिषदश्च अनयोः संस्थयोः कीदृशः सम्बन्धः कीदृशो वा अङ्गाङ्गिभावः ? द्वयो-रेतयोः कस्या प्राथम्यम् प्राधान्यं वाश्रयणीयम् ? उभेऽपि संस्थेऽनिवार्ये उत

1. परा. मा. २।१ पृ. १३; मनु. ११।४५; याज्ञ. ३।२२६; गौ. १९।३-६; वसिष्ठ. २२।२-५ ।
2. मनु. ११।७३; याज्ञ. ३।२४७-२४८; गौ. २२।२-३; मनु. ११।९०-९१; याज्ञ. ३।२५३ ।

विकल्पतयोपस्थिते । ब्राह्मणकाल एव न्यायपालिकाकार्यपालिकयोः कार्यक्षेत्राणां विभाजनम् आरभ्यत इति शक्यं वक्तुं कानिचित् प्रमाणान्याश्रित्य । अस्यामवस्थायामुक्ताः प्रश्ना भवन्त्यधिकमवधेयाः । निबन्धग्रन्थकारैः समस्येयमेवं समाधित्सिता तद्यथा चौर्यादीनपराधान् यदि शिष्टा आचरेयुस्तदा सामान्यदण्डेन सह प्रायश्चित्तेन ते शोधनीयाः । निबन्धकारोक्तस्य समाधानस्यायमाधारो वर्गीया विषमता । वर्गीयविषमतामादृत्यैव शिष्टैरपराधानामाचरणे साधारणदण्डेन सह प्रायश्चित्तेन तेषां शोधनमाहुः निबन्धकारः । नैतेन समुचिता समाहितिर्भवति ।

वस्तुत एकतः परिषदः राज्ञश्चाधिकाराः ह्रासं विकाशञ्चायाता अपरतश्चोभयः सम्बन्धा अपि परिवर्तनम् । सूत्रकालं यावत् समस्तानामपि प्रायश्चित्तानां व्यवस्थासीत् परिषदायत्ता येष्वपराधा अपि समाविष्टाः । परिषदीयां व्यवस्थामुपेक्षमाणः पुरुषो नियन्त्र्यते स्म राज्ञा । इत्थं प्रायश्चित्तानां निर्णयः परिषदः, तदीयव्यवस्थायाश्च कार्यान्वयनं राज्ञः कर्त्तव्यमासीत् । स्मृतिकालं यावद्राज्यशक्तिविकाशं परिषच्छक्तिश्च ह्रासं याता; फलत उभयोः सम्बन्धाः परिवर्तिताः । बधादयोऽपराधेषु गणिताः, अतस्तद्विषयकाणि प्रायश्चित्तानि दण्डरूपतामासादयन्ति राज्ञोऽधिकारक्षेत्रेऽन्तर्भूतानि । केवलानां वैयक्तिकानां पापनामेव प्रायश्चित्तानि परिषद्भिर्व्यवस्थाप्यन्ते स्म, तेषाञ्च प्रायश्चित्तानां क्रियान्वयनं राज्यस्यैवाधिकारविषया। वैदिककाले एतदखिलमपि कार्यजातं समाजेन तदीयैः प्रतिनिधिभिर्वा सञ्चाल्यते स्म ।

वैदिकपरम्परया समं समन्वये उक्तस्थितिः स्मृतिकालेऽपि न पूर्णतया प्रकाशमायाति किन्तु स्थितेरस्याः स्पष्टीकरणस्य बीजानि आरोप्यन्ते तदानीम् । अर्थशास्त्रकाले अशोककाले स्थितिरियमधिकं स्पष्टीभवति । वैयक्तिकानां पापानां राज्यसम्बद्धापराधानाञ्च दण्डव्यवस्थापने इमे संस्थे (परिषद्राज्ये) स्वतन्त्रे अर्थात् परस्परानपेक्ष्येऽभूताम् । सामाजिकीभिः परिस्थितिभिः सह प्रायश्चित्तस्याधाराः स्वरूपञ्चापि परिवर्तनमाययुः ।

दण्डप्रायश्चित्तयोः समिश्रणेन दण्डोऽपि विशुद्धेर्मुक्तेश्च उपाय अमन्यत । अत्र दण्डविषयिणी देवोद्भावितत्त्वधारणाऽभूदधिकं सहायिका । यथाविधिदण्डनेन अपराधिनो विशुद्धिसम्पादनं राज्ञः कर्त्तव्यम् । विशुद्धिसम्पादने राजासीदुत्तरदायी । अत्र विषये शंखलिखितस्य आख्यानमुदाहरणतया उल्लेखनीयम् । लिखितेन राजाज्ञा विनैवाम्रफलं गृहीतम् । ततश्च तेन स्वयमेव स्वीयोक्तपापस्य स्वीयकरच्छेदनं प्रायश्चित्तमाचरितम् । एवं राज्ञा विधास्यमानो दण्डः लिखितेन स्वयमेव भुक्तः एष एव स्मृतिकारः शंखलिखितः । एवमपि मिलमहोदयेन भारतीयदण्डविधाने आक्षिप्तम् । तेन हि स्वकालिकं भारतमेव प्राचीनभारतमवगतम् यस्तस्य वस्तुतो

भ्रमः । यदि च स्वयमेवात्मसमर्पणेनात्मशुद्धेः भावः स्वीयापराधिनि जागृयात् तदा राजकीयः राजपुरुष विभागः समाप्तिमेव यायात्, स्थाप्येत च स्वयं संञ्चालिता समाजव्यवस्था या मिलमहोदयेन निर्दिष्टा विशेषस्त्वग्रे ।

**दण्डप्रकाराः**

यथा-यथा सभ्यताया विकाशस्तथा तथा दण्डविधावपि परिवर्तनं लक्ष्यते । आधुनिके युगे शारीरिकी प्रतारणा अमानवीया मन्यते । शारीरिकदण्डस्यापि सीमाद्यत्वे निर्धार्यते । ब्रिटेनदेशे शारीरिकदण्डस्योच्छेदः विचारपदवीमारूढोऽस्ति[1]। मृत्युदण्डव्यवस्थापि क्रमेण ह्रासोन्मुखी एव लक्ष्यते । जार्जतृतीयकाले ब्रिटेनदेशे ६२० शारीरिका दण्डाः प्रयुक्ताः । अद्यत्वे दण्डमिमं समापयितुं प्रयत्यते । प्रतारणात्मका दण्डा अन्येषां कृते प्रतिबोधका भवन्तुनाम परमेतैः स्वयमपराधिनः क उपचारः—नात्र विषये दृष्टिर्दीयते[2] । मृत्युदण्डस्यापि प्रभावो न सामाजिक्या नैतकताया सम्पोषकः । कारावासेनापराधा अवश्यं ह्रासं याताः । अमेरिकाब्रिटेन-देशयोरेतद् विषयिणी गणना उपस्थापिता[3] । तदनुसारं सुरापानं विहाय अन्येष्वपराधेषु कारावासेन अपराधानां पुनरावृत्तिर्ह्रासं यातास्ति[4] । केचन ईदृशा अपराधिनोऽवश्यमभूवन् यैर्भुक्तकारावासैरपि अपराधा आवर्तिताः परं कारावासात्मकेन दण्डेनापराधिनां संख्यायामवश्यं ह्रासः परिदृष्टः ।

एवमपराधनिवृत्तये अपराधिषु दृष्टिपात आवश्यकः । दण्डव्यवस्थाया-मपराधापेक्षयापराधी एव अधिकमवधेयः । ब्रिटेनप्रभृतिष्वपि देशेषु विषयमिम-मवधाय ताडनप्रभृतयो दण्डाः संशोधितासमाप्तप्रायताञ्च नीताः । अस्य नायमर्थो यद्राज्यमपराधदण्डाभ्यां पृथक्करोति आत्मानम् अपसरति, अपि तु प्राचीनदण्डविधेः स्थाने दण्डस्य नूतनाःप्रकारा उद्भाविता प्रयुज्यन्ते च ते समाजशास्त्रीयतया । अस्यां नूतनायां पद्धतौ व्यक्तेस्तदीयव्यक्तित्वस्य चास्ति उचितमूल्याङ्कनम् । सम्प्रति एतद् विचार्यते विचारकैर्यन्न्ययाधीशैः सह मनोवैज्ञानिकानाम्, समाजशास्त्रिणाम्, शिक्षा-विदाञ्चापि स्थितिरपेक्षिता । ते हि दण्डविधाने एवं निर्दिशेयुर्येनापराधिनो व्यक्तित्व-स्य सामाजिककल्याणस्य च स्यात् समन्वयः[5] ।

---

1. Report of Departmental Committee on Corporal Punishment. (1938), Introduction.
2. Vinogradoff, Historical Jurisprudence, I, 58.
3. U. S. Census Bureau.
4. Fox, Modern English Prison, p. 167.
   Home Office Criminal Statics, 1938.
5. Gluck, Crime and Justice, pp. 225-226.
   Cordoz, Law and Literature, (1931), p. 79.

कारावासादन्याऽपीदृशी व्यवस्था अद्यत्वे चिन्त्यते ययापराधिनोऽपराधो मावस्थित, लभ्येत च तेन स्वीयचरित्रसंशोधनस्य सौविध्यमवसरो वा। पद्धतेरस्याः प्रभावकारी परिणामो लक्ष्यते[1]। 'पेरोल' कारागृहान्मुक्तेरेवंस्थितिः यदपराधी निश्चितां सीमामधिष्ठाय निश्चितानधिकारान् प्रयुङ्क्ते। अमेरिकादेशे एवंविधापराधविषयक एकः स्वतंत्र एव विभागः, योऽपराधिनां चरितानि निरीक्षते। तत्र हि देशे पेरोलपद्धतिरेवं समालोचिता यत् पेरोलकर्मचारिभिर्नियन्त्रणवशेन कार्यमाचरितम्। ईदृशाः पुरुषा येऽपराधेषु अभ्यस्तास्तेभ्यस्सुरक्षा बन्दीप्रत्यक्षीकरणेनापि सम्भवति अपराधिनः शोधयितुं 'क्लीनिक'व्यवस्था सम्प्रत्याश्रियते। एवंविधानामपराधिनां शोधनार्थं मानसिकी चिकित्सा मनोविज्ञानिकः प्रयोगश्च महदाद्रियेते[2]।

नवयुवकैरल्पवयस्कैश्चाचर्यमाणानामपराधाणां मूलं तदीयं कौटुम्बिकं जीवनम्। अतः ईदृशोऽपराधिनो न वासनीया कारागृहेषु, अपि तु उपस्थापनीया बालन्यायालये, एष एव प्रयोगः सम्प्रति आश्रियते। अस्य प्रभावोऽपि दृश्यते लाभकरः। इंग्लैण्डदेशे १९३८ वर्षीय 'क्रिमिनल जस्टिस बिल' निर्मातृभिः व्यवस्थेयं कारावासादधिकमुपयुक्तं मन्यते स्म[3]। व्यवस्थानया जीवनस्य संस्करणे पन्थाः प्रदर्शिताः। १९०८ ख्रीष्टीय वर्षे बोर्स्टल संस्थाभिः षोडशवर्षीयेभ्य एकविंशतिवर्षीयान् यावद् अपराधिनो नैतिकशारीरिकोद्योगिकानां प्रशिक्षणानां प्रयोगेण शोधयितुं प्रयतितम्। तेषु दमनस्थाने आत्मगौरवस्य, आत्मबलस्य, आत्मसुरक्षायाश्च भावना उद्भाविता। १९२९ वर्षे प्रतिशतमेकसप्ततेरपराधिनां शोधनपरिदृष्टम्। परं ये अपराधिनः बोर्स्टलसंस्थासु न प्रेषिताः नासिताश्च कारागृहेषु तेषां प्रतिशतं पञ्चपञ्चाशदेव शोधनमायाता[4]। एतैश्च प्रयोगैः स्फुटं प्रतीयते यन्नवयुवकेभ्यः कारावासस्थाने आत्मशोधनावसरो देयः। क्रिमिनलजस्टिसविधेयके वर्षषोडशकान्न्यूनायुषामपराधिनां कारावासो निषिद्धः।

अपराधेभ्यस्तेषां वारणं निवर्तनमुचितम् एतदर्थञ्च प्रतिरोधका एवोपाया आहताः। अपराधानामर्थिकताम्, शारीरिकतां नैतिकताञ्चानुरुध्य प्रयुज्यन्तेऽद्यत्वे प्रतिरोधका उपायाः। सामाजिकीनां सेवानां वेशाचारादीनाञ्च शोधनेनार्थिका अपराधा अल्पतां नीताः। जीवनानुकूलानां सौविध्यानां प्रदानेन मानसिकैरुपचारैश्च नैतिकेष्वप्यपराधेषु यथाह्रासःस्यात् तथा प्रयत्यते। शारीरिकैरुपचारैरपराधिनो भावनायाः नियन्त्रणे प्रयस्यते। एतैश्च उपायैः सन्तोषजनकं साफल्यमपि दृष्टम्।

---

1. Medico Legal and Criminological Review, (1940), 196.
2. Dr. Carroll, Madico Legal and Criminological Review (1940) 82.
3. Page, Crime and Community, 225.
   Home Office Criminial statics, 1938.
4. Young Offender Committee, 1927.
   Fox, op. cit. 181. Barman, The Borstal Stystem, 1934: page, op. cit., 234.

दण्डविधायकानामेषा दृष्टिर्यत्तादृशं वातावरणमुद्भावनीयं येनापराधस्य मूलानि समूलमुन्मूल्येरन् । एतदर्थञ्च अपराधाः, अपराधिनः, अपराधमूलानि चानुशील्यन्तेऽद्यत्वे ।

दण्डप्रकारेषु सभ्यतायाः प्रभावस्यैव समाजीयस्योद्देश्यस्यापि महत्स्थानम् । सोवियतरूसदेशीयानां विचारकाणां सम्पत्तेर्व्यक्तिगततां समाप्य वर्गहीनस्य समाजस्य स्थापनं लक्ष्यं स्वीकृतम् । लक्ष्यमिदं विरुन्धानः कश्चिदपि सामान्यस्याप्यस्यापराधस्य हेतोः कठोरं दण्ड्यते स्म तत्र देशे । दलविरोधिन्या नीतेराश्रयणमीदृशी महानपराधस्तत्र मन्यते स्म यस्यापराधिनः कृते कोऽपि दुष्परिणामः शक्यते । अत्रापराधे मृत्युस्सामान्यो दण्डः । उत्कोचविषयकेऽपराधेऽपि मृत्युदण्डः प्रयुज्यते स्म। जनतंत्रवादिषु देशेषु हीदृशेष्वपराधेष्वेवंविधो दण्डोऽशक्य एव । एतेषु हि दलविरोधिन्या नीतिराश्रयणे व्यक्तेः स्वातंत्र्यं नैषोऽपराधः । कोऽपि स्वविचारानुसारं दलीयसिद्धान्तान् विरोद्धुं स्वतन्त्रः प्रत्युत अस्मिन् व्यक्तेर्वैचारिके स्वातन्त्र्ये । प्रतिबन्धस्थापनमेवापराधः । उत्कोचाः आर्थिकोऽपराधो मतः । तस्मिंश्च मानसिकेनार्थिकेन चोपचारेणापराधी शक्यस्संस्कर्तुम् । यदुक्तं जनतन्त्रवादिषु देशेषु व्यक्तेः स्वीयव्यक्तित्वविषये स्वातन्त्र्यम् । अपराधानां वर्गीकरणेऽपि भवत्यस्य प्रभावः । सामाजिकलक्ष्यानुसारेणापराधेषु जायते वैशेष्यम् ।

आरम्भत एव भारतीयसमाजस्य पुर आसीत् समस्या । स्वकीयमस्तित्वं दृढयितुं विकाशयितुं चात्मानमारम्भत एव संघर्षाग्नौ पदं निधातव्यमभूदनेन समाजेन । असकृदुद्भवन्तीभिरवैदिकसमाजमूलिकाभिः समस्याभिः समाजोऽयं वर्गेषु विभागमानीतः । फलतः दण्डविधिस्तत्प्रकाराश्चापि वर्गीयतां याताः । समाजसुरक्षायां बाह्यप्रभाव इवान्यदपि बाधकमासीत्, कच्चित् समाजे औच्छृंखल्यं प्रसरेत पदं निदधेद्वा, इत्यप्यासीदाशंका । अतः बाह्यतत्त्वेभ्य आन्तरिककण्टकेभ्यश्च समाजस्य सुरक्षामभिसंधाय कठोरो व्यवास्थाप्यत । कठोरता चेयं दण्डानां तत्तद्युगानुसारेण पर्यवर्तत । सोऽपि समय आसीद् यदा ज्येष्ठभगिन्यामनूढायां दारात्परिगृह्णन् भ्राता आर्हन्मृत्युदण्डम्, दृश्यत एषा व्यवस्थाऽऽदिमवैदिकसमाजे । परं पश्चात् प्रायश्चित्तमेव दण्डस्यास्य स्थानमाससाद । एष निष्कर्षो यद् दण्डस्वरूपं युगप्रभावानुसारं परिवर्तनं तारतम्यं वा अयात् । एतदप्यवधेयं यद् भारते वैदिककालत एव प्रायश्चित्तात् पृथग्दण्डस्य स्वतंत्रं स्वरूपं परिलभ्यते । दण्डस्यास्तित्वं वेदेभ्य एवारभ्यते तत्प्रकाराश्चापि संकेत्यन्ते तत्र ।

प्रारम्भिकवैदिककाले वाग्दण्डस्य धिग्दण्डस्यच प्रचुरः प्रयोगः । भूयिष्ठेषु अपराधेष्वासीत् प्रायश्चित्तव्यवस्था । उत्तरकाले मृत्युदण्डो दृश्यते । तदानीं सामाजिकतां राजनीतिकताञ्चाश्रित्य अपराधा नासन् वर्गीकृताः । अतो विभिन्ना

दण्डा अवातिष्ठन्त । वैदिककाले वागधिक्दण्डाभ्यां सदैव अर्थदण्डेन । वधदण्डेन चापि पदं विन्यस्तम्, परं स्मृतिषु नीतिग्रन्थेषु इमे विकाशमायाताः । स्मृतिकारैर्नीतिकारैश्च चतुर्णामेषां दण्डानां प्रत्येकमनेके प्रभेदा अपि व्यवस्थापिताः । दण्डा इमे कौटल्येनापि असकृद् आम्रेडिताः ।

मनुना शरीरदण्डस्य स्थानान्यपि निर्दिष्टानि[1] । दण्डप्रकाराः नीतिग्रन्थेषु स्मृतिषु च विशदं प्रपञ्चिताः । तत्र हि दण्डस्य प्रथमं चतस्रो विधा उक्ताः । एतासाञ्च प्रत्येकमनेके प्रभेदा अपि शक्या व्यवस्थापयितुम् । धिगदण्डः, वाग्दण्डः, अर्थदण्डः, वधदण्डश्चैते चत्वारो दण्डप्रकाराः सामान्यतो मताः । मानसिकाः, शारीरिकाः, वाचिकाश्चैत्येवं रीत्या अप्येते शक्या संग्रहीतुम् । मनुना कारावासबन्धनादयः शारीरिकदण्डस्यानेके प्रभेदा दर्शिताः । सर्वविधा अपि दण्डाः कौटल्येन शश्वदाम्रेडिताः ।

अपराधस्य लघुत्वगुरुत्वाद्यनुसारेण दण्डे भवति सारल्यं कठोरता वा । सामान्यतोऽर्थदण्डो मृत्युदण्डः, अङ्गच्छेदः, कारावासः, देशनिष्कासनम्, बन्धनञ्वेत्यादिका दण्डाः प्रयुज्यन्ते स्म । अपराधस्य लघुत्वमपराधिनोऽल्पवयस्कत्वं स्त्रीत्वं बृद्धत्वं वेत्यादिकमनुसृत्य कठोरदण्डस्थाने ताडनादिरूप एव दण्डो व्यवातिष्ठत । अर्थदण्डः, शरीरदण्डश्चेमौ मूलदण्डतया नारदस्याभिमतौ । कारावासादामृत्युदण्डं स्रमेऽपि दण्डाः शरीरदण्डकुक्षौ समाविशन्ति, अर्थदण्डश्च सम्भवति काकनीत आरभ्य सर्वस्वं यावत् । एकः पणोऽपि अर्थदण्डतया शक्यो गृहीतुम् सर्वस्वमपि । याज्ञवल्क्य इव बृहस्पतिरपि दण्डस्य चतस्रोविधा निरदिक्षत् ।

मनुप्रभृतिभिः स्मृतिकारैर्दण्डानां क्रमिकतापि व्यवस्थापिता । तन्मतानुसारं हि वाग्दण्डः प्रयोज्यः । यद्यसौ दण्डोऽपराधिनं शोधयितुं नालं तदा विधेयो धिग्दण्डः । तेनापि अनिस्तारे अर्थदण्डोऽनेनापि अपराधिनोऽपराधादनिवृत्तौ मृत्युदण्डो व्यवस्थाप्यः । वाग्दण्डधिग्दण्डयोरेष विशेषो यद् वाग्दण्डे गुणवानपराधी केवलं निन्द्यते–तद्यथा नेदं भवता न्याय्यमाचरितम्, मैवं भूयः कारि इति । धिग्दण्डे तु धिक्कारः प्रयुज्यते । "धिक् त्वां मा त्वं जीवीः । पापभागसि, क्षतिस्ते स्यात्" इति येनापराधिनो भर्त्सनातोऽप्यधिकमवमाननं फलति । दण्डाविमौ स्मृतिकालं यावत् प्रत्यतिष्ठताम् । प्रायेणैतौ ब्राह्मणानां कृते साधारणेष्वपराधेषु प्रयुज्येते स्म ।

**अर्थदण्डः**

अर्थदण्डस्यानेके प्रभेदाः । शंखेन प्रथमसाहसमध्यमसाहसोत्तमसाहसभेदैर्दण्डस्यास्य त्रैविध्यमाख्यातम् । तत्र २४ पणेभ्य आरभ्य ९१ पणान् यावत् प्रथमः,

---

1. मनु. ८।१३८ ।

२०० पणेभ्यो ५०० पणान् यावद् द्वितीयः, ६०० पणेभ्यः आपणसहस्रमन्योदण्डः। स्मृतिषु पणसंख्यायां वैषम्यं दृश्यते। परमुक्तास्त्रयो भेदाःप्रायेण समैरपि अभ्युपगम्यन्ते। नारदेनोत्तमसाहसे अङ्गच्छेददेशनिष्कासनसर्वस्वापहरणमृत्युदण्डाः गणिताः। पुरुषापेक्षया स्त्रियां सरला अल्पाश्च दण्डाः प्रयुज्यन्ते स्म। अर्थदण्डतया गृह्यमाणाः मुद्राः राजकोशे सञ्चीयते स्म। पशवोऽपि अर्थदण्डतया गृहीता समर्प्यन्त राज्ञे। दण्डरूपेणादीयमानस्य द्रव्यस्यांशविशेषः पीडितायतत्सम्बन्धिभ्यश्च वितीर्यते स्म। महापातकेषु दण्डतया प्राप्तं द्रव्यं नादीयते राज्ञा अपितु प्रदीयते वरुणाय विप्रेभ्यो वा। उत्तरवैदिककालं यावद् एतद् द्रव्यं पीडिताय ब्राह्मणेभ्यो वा दीयते। परं यथा-यथा राजशक्तेर्विकाशस्तथा-तथार्थदण्डस्य अधिकोंऽशः राजकोकोषे पदं निधातुम् आरेभे।

**मृत्युदण्डः**

मृत्युदण्डश्चरमो दण्डः। महत्तमेष्वपि अपराधेषु मृत्युदण्डं परिहर्तुं प्रयस्यते। राज्यशक्ते राज्ञश्च सामाजिके विकाशे राजद्रोहः राजसम्बन्धी अन्यो वापराधः महत्तमोऽपराध आस्थितः। अपराधेऽस्मिन्नवश्यं मृत्युदण्डः प्रयुज्यते स्म। अपराधस्य मृत्युदण्ड एव प्रतीकारः। स्मृतिषु नीतिषु चैको महान् विशेषः परिलक्ष्यते। धर्मशास्त्राणि हि महापातकेषु मृत्युदण्डं विदधते, नीतिग्रन्थास्तु राज्यसम्बन्धिष्वपराधेषु। कीदृशमपि प्रायश्चित्तमनाचरतोऽपराधिनो मृत्युदण्डं निर्दिदेश मनुः। वधरूपेऽपराधे उच्चजातीयस्य निम्नजातीयस्य वा कस्याप्यपराधिनो मृत्युदण्डं व्यदधात् कौटल्यः। स्मृतिकारैः विशेषतो मनुना निम्नजातीयेन पुरुषेण उच्चजातीयया स्त्रिया सम्बन्धे पुरुषस्य मृत्युदण्डो निर्दिष्टः, अथ च तदीयं मांसं कुक्कुरादीन् भोजयेद् इत्यपि आदिष्टम्।

मृत्युदण्डस्यासन् विभिन्नाः प्रकारास्तद्यथा विषं पाययित्वा अपराधी गजस्य पुरः निक्षिप्यते, मर्दयते चासौ गजेन पदा। चोरहस्तच्छेदपूर्वकं वध्यते। चोरस्य सहायकस्तु केवलं मृत्युदण्डमर्हति नास्य वधात्पूर्वं करश्छिद्येते। स्त्रियोऽपि दुराचारप्रभृतिष्वपराधेषु अङ्गच्छेददाहादिपूर्वकं दण्डयन्ते मृत्युना। कृषिसाधनानां क्षतौ गले पाषाणं बध्वा जले निपात्य वध्यतेऽपराधी। गर्भपातिका, पतिहन्त्री वा स्त्री अपि एवंविधमेव दण्ड्यते। परं हन्तुं विषप्रयोगेण परस्य घातकः शंखं दग्धुमग्नेराहर्ता वा वृषस्य पुरः निक्षिप्य तदीय श्रृंगाभ्यां घात्यते। क्षेत्रगृहक्रीडावनग्रामादेर्दाहे, राजपत्न्या गमने (भोग) वा कष्टाग्निनापराधिनो दाहो विधीयते।

महाभारते एकस्मिन्नुपाख्याने द्युमत्सेनस्य तत्पुत्रस्य सत्यव्रतश्च मृत्युदण्डविषयकः महत्त्वपूर्णः कथोपकथनं लभ्यते। तयोः पारस्परिकेण विमर्शेन प्रकृतविषयः प्रकाशमायाति। महत्तमेष्वपि अपराधेषु अपराधिनेऽवसरः प्रदेयः, न स समूलमुच्छेद्य

इति दर्शनं सत्यवतः । सरला अपि हि पुरुषाः कदाचित् परिस्थितिविशेषवशेनापराध्यन्ति । अन्यच्च अपराधिनो वधे तत्परिवारीयास्तदाश्रिताश्च यान्ति कष्टं येषां न मनागपि संस्पर्शोऽपराधे । एवं ह्यपराधिनो मृत्युदण्डेन वस्तुतो दण्ड्यन्तेऽनागशोऽपि तत्परिवारीयाः । अपराधी अभिपुरोहितमपराधान्निवृत्तिं प्रतिजानीत निवर्तेच्च चेन्मोचनीयोऽयं दण्डात्, देयोऽस्मै अवसरः । महद्भ्यः पुरुषेभ्यस्तदीय व्यक्तित्वानुपातेन तादृशोऽवसरो देयो येन ते शोधयेयुरात्मानम्, परिहार्यश्चैषां मृत्युदण्डः । सत्यवतो विचारमिमं समादधदाह द्युमत्सेनः पुरासीदेवं स्थितिः। यदा पुरुषः स्वयमेव शोधयति स्वीयान् व्यवहारान् । प्रायेणनाचरत्यपराधान्, अपराध्यति चेदपि अल्पीय एव ।

अपराधे आचर्यमाणे स्वयमेव ततो मुक्तौ प्रयस्यत्यसौ । परमद्यत्वे ईदृशी स्थितिरुपस्थिता यद् दण्डप्रयोगेणापि नापराधिनोऽपराधान् निवर्तन्ते, वर्धमानैव च लक्ष्यते क्रमेणापराधसंख्या । अत एवंस्थितेऽपेक्षणीयः शारीरिको दण्डो मृत्युदण्डश्च । स्थितिरेषा महाभारतकालिकी । तदानीं सर्वेषामेव एष आसीत् सैद्धान्तिकी दृष्टिर्यद् वधोऽन्ये वा शारीरिका दण्डाः यथासम्भवं परिहार्याः परं समाजादपराधानपनेतुं प्रयुज्यमाना एवासन्नेवंविधा दण्डाः ।

यत्रैकतो मृत्युदण्डविरोधिन्नेवंविधा विचारा लभ्यन्ते तत्रैवापरतः दण्डस्यास्य भीषणाः प्रकारा अपि वर्णिताः । अत्र विषये हि पक्षत्रयं दृश्यते । शुक्रकामान्दकप्रभृतयो नीतिकारास्तावन्मृत्युदण्डं नानुमन्यन्ते, निषेधन्ति च । विष्णुधर्मसूत्रञ्च कृतब्रह्महत्यस्य दण्डमिमं विधत्ते, एतदनुसारं हि ईदृशोऽपराधी अवश्यं वध्यः । अपराधी प्रायश्चित्ताचरणे मुच्यतेऽपराधादिति तावद्दर्शनं मनोः। परमत्रविषये कौटल्यःस्फुटमेव आह वधप्रभृतिकमपराधमाचरन् कोऽप्यपराधी स्यादसौ कस्यापि वर्णस्य, कमपि वा हन्यात्, अर्हति मृत्युदण्डमिति ।

क्रूरदण्डानां समर्थने युक्तिरियं प्रस्तूयते यत् समाजस्य, राज्यस्य, धर्मस्य च सुरक्षार्थम्, प्रयुज्यन्ते दण्डाः, येनापराधाः मा पुनरावर्तिषत । अतोऽन्यद् यथा क्रूरदण्डानां स्याद् ह्रासः तथापि प्रयत्यते । महाभारते मृत्युदण्डो न्यषिध्यत । फाह्यानमतानुसारं नासीदुत्तरभारते मृत्युदण्डव्यवस्था । आर्थिका दण्डास्त्ववश्यं प्रयुज्यन्ते स्म । चोलस्य हर्षस्य च राज्ये एवंविधानां दण्डानां विरलता दृश्यते । एतदेव मूलमाश्रित्य कीथमैकडानलौ सिसाधयिषतो बौद्धप्रभाव एव क्रूरदण्डानामल्पताया मूलमिति । परमन्यत्रैतावेव अशोककालेऽपि क्रूरदण्डानां तदवस्थतामभ्युपगच्छतः । वस्तुतस्तदानीं क्रूरदण्डानां व्यवस्थासीत् नैतच्छक्यमस्वीकर्त्तुम् राजा, राज्यम्, धर्मः, तत्प्रतिपादिकाश्च महदाद्रिताः । वैदिकधर्मं विरुन्धानस्योपेक्षमाणस्य वा कठोरं दण्डं व्यदधात् मनुः ।

**अन्ये दण्डाः**

मृत्युदण्डस्य दण्डान्तराणाञ्च प्रचुरः प्रपञ्चो दृश्यते स्मृतिनीत्यादिषु ततोऽपि च प्राचीनतमे वाङ्मये । दण्डानामेषां वर्णनं रोमाञ्चयति । इह तद्विषयकाः केचनांशाः प्रस्तूयन्तेऽस्माभिः । विषप्रयोगेण, गजाङ्घ्रिभिर्मर्दनेन, तीक्ष्णैश्शस्त्रैर्वा वध आसीत् मृत्युदण्डस्य सामान्यः प्रकारः । सन्धियोजनरूपेऽपराधे चोरस्य करच्छेदं निर्दिदेश मनुः । एवंविधा दण्डाःपेशवाकालं यावदनुवर्तमाना दृश्यन्ते । उपलभ्यमानैः प्रमाणैश्शक्यं वक्तुं यत्तदानीं गजांघ्रिभिरपराधिनो मर्दनं प्रयुज्यते स्म दण्डतया । अवैदिक्यां मुगलपरम्परायामेवंविधाः प्रयोगाः साधारणा एवासन् । दण्डविवेके मृत्युदण्डस्य द्वे विधे उल्लिखिते । तयोश्च आपेक्षिकं मृदुत्वम् । तथाहि अविचित्रो विचित्रश्चेति द्विविधो मृत्युदण्डः । विचित्र एव चित्र इत्यपि संकीर्तिताः । खड्गादिभिश्शिरच्छेदोऽविचित्रः, अपराधिनो दाहश्चित्रदण्डः । अङ्गच्छेदपूर्वकमपराधिनो वधस्तावन्मिश्रःदण्डः ।

चौर्ये चौर्यप्रभृतिष्वपराधेषु साहाय्याचरणे च साधारणं दण्डमाह मनुः । निम्नजातीयेन पुरुषेण उच्चजातीयया स्त्रिया सह व्यभिचाराचरणे कठोरो मृत्युदण्डो विहितश्शास्त्रकारैः । सम्पल्लिप्सयाभिभावकानां वधे अपराधी जीवन्नेव खादनीयः कुक्कुरादिभिः । कुलटायाः स्त्रिय एष दण्डो निर्दिष्टः यद् अस्याः पतिः कुलटात्वे प्रमाणैर्निश्चीयमाने यथेच्छमेतस्या अङ्गं प्रभवतिच्छेत्तुम् । एतदवश्यमुत्तरवर्तिभिः स्मृतिकारैः स्त्रीणां दण्डः आपेक्षिकं सारल्यं नीतः, अनुमोदिताश्च सामान्यतस्तासां शोधनोपायाः । विषप्रयोगेण पतिघातिन्याः वृषश्रृंगाभ्यां वधो निर्दिष्टः । एष च दण्डस्तस्या विभिन्नान्यङ्गानि छित्वा प्रयोज्यः । ग्रामादेर्दाहेऽपराधे अपराधिनोऽपि दाह एव दण्डः ।

मृत्युदण्डादन्येऽप्यासन् दण्डस्य प्रकाराः येषां पर्यालोचनेन तदानींतनी सामाजिकी स्थितिश्शक्या परिचेतुम् । ब्राह्मणान् धर्ममुपदिशतः शूद्रस्य वदने कर्णे च तप्ततैलनिक्षेपस्य दृश्यते विधानम् । अन्यच्च यद्यसौ द्विजादीनां जात्यादिकं निन्देत्तदास्य मुखे दशाङ्गुला तप्तलौहशलाका देया । अन्त्यजो द्विजातीन् प्रहरतोऽन्त्यजस्य तान्यङ्गानि आच्छेद्यानि यैरसौ प्रहरति । चौर्यप्रभृतिष्वपराधेषु सामान्यतो हस्तचरणादिच्छेदो विहितः । वेदानुच्चरतः शूद्रस्य राज्ञे अपशब्दं प्रयुञ्जानस्य वा जिह्वाच्छेदो निर्दिष्टः । कृत्रिमसुवर्णस्य अन्येषां वा निषिद्धानां वस्तूनां विक्रये कर्णनाशाच्छेदो दण्डः । पातकविशेषेषु अपराधिनः शरीरे विभिन्नानि चिन्हानि विलेख्यानीत्येषा लभ्यते व्यवस्था । व्यभिचारे स्त्रियः शिरोमुण्डनं व्यवस्थापितम् । ताडनदेशनिष्कासनप्रभृतयो दण्डस्तु प्रयुज्यन्ते स्म प्रचुरम् । प्रायेण

ब्राह्मणानां मृत्युदण्डस्थानीयतयासीद् देशनिष्कासनस्य प्रयोगः । ब्राह्मणेतरेषामपि दण्डोऽयं दृश्यते ।

भारतीयैर्व्यवस्थापितानामुग्रदण्डानां मृदुकरणे बौद्धप्रभावं मूलं वदन्ति बहवो विचारकाः । मतमिदं कियज्ज्याय इति तु चिन्तनीयम्, यतो यद्यपि सिद्धान्ततया प्रतिपादितं बौद्धैर्दण्डमार्दवम् । मृदुदण्डविषयिणो तेषां विचारणासीत् सैद्धान्तिकी तथापि न दृश्यते तस्याः प्रयोगान्वयः । बौद्धजातकेषु हि दण्डविषयकाणि यानि वर्णनानि लभ्यन्ते रोमाञ्चयन्ति तानि । तेष्वत्र कानिचिदुदाहर्यन्ते यानि महादुक्खक्खसुत्तन्ते स्वयमेव निरदिशत् तथागतः । तत्र हि द्वादशप्रकारास्तेन निर्दिष्टाः । ते च (१) शंखमुण्डिका, शिरशस्त्वचां प्रतक्ष्यशंखतुल्यता सम्पादनम् । (२) राहुमुखम्, आकर्णयोः मुखस्य विदारणम् । (३) ज्योतिमल्लिका, वस्त्रैः शरीरमावेष्ट्य तत्र तैलं प्रक्षिप्याग्नेर्योजनम् । (४) हस्तप्रज्योतिका, हस्तयोर्वाससा आवेष्ट्य प्रक्षिप्य च तैलं दाहः । (५) एरकवर्तिका, आग्रीवायाश्चर्म उत्पाट्य आकर्षणम् । (६) चीरकवासिका, उपस्तिनं चर्म आकटि उत्पाट्य अधस्तनस्यापि चर्मणः कटिं यावद् विदारणम् । (७) ऐणेयकः, कूरपरयोर्जान्वोश्च कीलकनिखायं तैरैव च भूमौ आश्रयित्वा दाहः । (८) षडिसंमासिका–वंशीकल्पं लौहांकुशं निगाल्य तस्यैवांकुशस्य बहिः कर्षणं येन गलाभ्यन्तरभागादेः स्याच्छेदः । (९) कार्षापणकः-भूयोभूयः पणपरमितस्य मांसस्य छेदः । (१०) खारापतच्छिका-शरीरं विदीर्य तत्र लवणस्यान्यस्य वा क्षारस्य प्रक्षेपः । (११) परिधिपरिवर्तिका–द्वयोरपि कर्णयोः कीलकं संयोज्य तच्च भूमौ निखाय शरीरास्थ्यामन्तरेव चूर्णनम्, तेन च शरीरस्य मांसपिण्डीकरणम् ।

केषुचिदपराधेषु आसीत् कारावासव्यवस्था । असकृदपराधाचरणे आजीवनं कारावासोऽपि विहितः । सश्रमकारावासोऽपि विधीयते स्म । अर्थदण्डदानेऽशक्ताः नवयुवकवृद्धरुग्णनिःसहायपुण्यशीलनिष्क्रियप्रभृतयो बन्दिनो मोच्यन्ते स्म पूर्णिमा प्रभृतिष्ववसरेषु । राज्यान्तरस्य विजये, युवराजस्याभिषेकम्, राजपुत्रजन्मनि च बन्दिनां मोक्षो दृश्यते । एतं विधान्युदाहरणानि लभ्यन्तेऽशोकीयेषु शिलालेखेषु । परम्परेयमुत्तरकाले एवं व्यकसत् यद् राज्यसम्बन्धेष्ववसरेषु बन्दिनां मोक्षोऽवस्थितः । मनुना राजमार्गे अभिराजमार्गं वा कारावासस्य निर्माणं सममन्यत येन गंच्छन्त आगच्छन्तश्च जनाः बन्दिनो वीक्ष्य प्रबुद्धयेरन् स्युर्जागरूकाः ।

●

# अध्यायः ७

## दण्डव्यवस्था (१)

पापापराधानुसारेण प्रायश्चित्तदण्डव्यवस्था प्रतिपादिता। अकार्यकारिणामेषां प्रायश्चित्तं तु प्रकल्पयेत् । यथाशक्त्यनुरूपं च दण्डं चैषां प्रकल्पयेत्[1] । महापातकिनां प्रायश्चित्तमकुर्वतां शारीरं धनग्रहणेन च धनसम्बन्धमपराधानुसारेण धर्मादनपेतं दण्डं कुर्यात्[2] । छलानि, पदानि, अपराधांश्च आवेदकैर्विनाऽपि एतानि राज्ञः स्वयमेव गृह्णीयात्[3] । सूचकेन स्तोभकेन वा प्राप्तसूचनामङ्गीकृत्या राज्ञा व्यवहार उपस्थापनीयः–

**शास्त्रेण निन्दितं त्वर्थमुख्यो राज्ञा प्रचोदितः ।**
**आवेदयति यत्पूर्वं स्तोभकः स उदाहृतः ॥**
**नृपेणैव नियुक्तो यः परदोषमवेक्षितुम् ।**
**नृपस्य सूचयेज्ज्ञात्वा सूचकः स उदाहृतः ॥**
**(कात्या. उद्धृतः स्मृ. च. २ पृ. २७; परा, मा. ३. पृ. ४२)**

अपराधानां वर्गीकरणं नारदेन दण्डसापेक्षतयेत्थं कृतम्–

**आज्ञालङ्घनकर्त्तारः स्त्रीवधो वर्णसङ्करः ।**
**परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥**
**वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च ॥**
**गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥**
**(स्मृ. च. २ पृ. २८; परा. मा. २ पृ. ४४; स. वि. पृ. ७३; दण्डनीति. पृ. १२)**

संवर्तेनाऽन्यद् वर्गीकरणं प्रस्तुतम्[4]। पितामहानुसारेण द्वाविंशति पदानि–

**उत्कर्ती सस्यघाती चाप्यग्निदश्च तथैव च ।**
**विध्वंसकः कुमार्यश्च निधानस्योपगोपकः ॥**

---

1. पैठीनसी–दण्डविवेके पृ. ७६ ।
2. **चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ।**
   **शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥**
   (मनु. ९।२३६)
3. पितामहः–स्मृ. चं. २ पृ. २७; परा. माध. ३२,४२ ।
4. स्मृ. चं. २ पृ. २८; परा. मा. पृ. ४४-४५ ।
   E. I. Vol. XVII. PP. 310, 321; Vol I. PP. 85, 88; Gupta Ins. No 39 P. 175; E. I. Vol. VI. PP. 26, 40; E. I. Vol III, PP. 53, 263, 266.

सेतुकण्टकभेत्ता च क्षेत्रसञ्चारकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ॥
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्यैव च मोचकः ॥
भोगदण्डौ च गृह्णाति दानमुत्सेकमेव च ।
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत् ॥
राजा वलीढं द्रव्यं यद्यच्चैवाङ्गविनाशनम् ।
द्वाविंशतिं पदान्याहुर्नृपज्ञेयानि पण्डिताः ॥
(स्मृ. च. २ पृ. २८; परा. मा. ३ पृ. ४५; स. वि. पृ. ७३; व्य. प्र. पृ. ३७)

एवमेव पञ्चाशतछलानि पितामहेन वर्णितानि शुक्रनीतावपि यथावत् प्रथमश्लोकातिरिक्तमुद्धृतानि[1] । अपराधातिरिक्तदशपापकर्मवर्गीकरणं शुक्रेणेत्थं कृतम्—

हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृतम् ।
संभिन्नालापव्यापादमभिख्यादृग्विपर्ययम् ॥
पापकर्मेति दश... ... ... ... ॥
(शुक्र. ३।७-८)

पापानां न केवलं प्रायश्चित्तविधानमपि तु दण्डोऽपि निर्दिष्टः[2]। तथा च मनुः

अङ्गावपीडनायां च व्रणशोणितयोस्तथा ।
समुत्थानव्ययं दाप्यः सर्वदण्डमथाऽपि वा ॥
द्रव्याणि हिंसाद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ॥ ८।२८७-२८८॥

अङ्गानां करचरणादीनां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्थाप्राप्तिः समुत्थानसंबन्धो भवति तावत्कालेन पथ्यौषधादिना यावान्व्ययो भवति तमसौ दापनीयः । अथ तं व्ययं पीडोत्पादको न दातुमिच्छति, तदा यः समुत्थानव्ययो यश्च दण्डस्तमेनं दण्डत्वेन राज्ञाः दाप्यः । तथा च याज्ञवल्क्यः

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन्कलहे समुदाहृतः । २।२२२।

1. स्मृ. चं. २ पृ. २७-२८; शुक्र. ४।५।७३-८२ ।
2. मनु. ९।२३६, २४०; बृ. २२ पृ. ३६२ ।
Maine, Ancient law, chap. X, P. 370, 3rd ed. 1866.
Dr. P. N. Sen, Hindu Jurisprudence, PP. 264-266.

देहेन्द्रियविनाशे तु यथादण्डं प्रकल्पयेत् । तथा तुष्टिकरं देयं समुत्थानञ्च पण्डितैः । असौ समुत्थानव्ययमाव्रणविरोपणाद् दद्यात्[1]। यथाऽऽह **बृहस्पतिः**[2]

**दण्डस्त्वभिहितायैव दण्डपारुष्यकल्पितः ।**

**हृते तद्द्विगुणं चान्यद्राजदण्डस्ततोऽधिकः ॥**

पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते[3] । क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् । ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः[4] । अत्र प्रायश्चित्तार्थं दण्डः । क्षत्रियं हत्वा गवां सहस्रं ब्राह्मणेभ्यो दद्यात् । किमर्थम् । वैरयातनार्थम् । **वैरं पापं तस्य यातनं निर्हरणं तदर्थम्** । ऋषभश्चात्राधिकः "सर्वत्रप्रायश्चित्तार्थ" इति तेन **प्रायश्चित्तरूपमिदं दानं** प्रायश्चित्तञ्च पापक्षयार्थं तत्किमर्थं **वैरयातनार्थमित्युच्यते** । केचिदाहुः । "नाभुक्तं क्षीयते कर्म" पुण्यमपुण्यञ्च। प्रायश्चित्तं तु नैमित्तिकं कर्मान्तरं यथा गृहदाहादौ क्षामवत्यादयः इति तन्निराकर्तुमिदमुक्तम् । अपर आह । यो येन हन्यते स हतो म्रियमाणस्तस्मिन् वैरं करोति । अपि नामाहमेनं जन्मान्तरे वध्यासमिति । तस्य वैरस्य यातनार्थमिति प्रायश्चित्तार्थत्वमपि वक्ष्यमाणेन सिद्धमिति । सर्वेष्वेतेषु निमित्तेष्वृषभोऽप्यधिको न केवलं गाव एव । इदं प्रायश्चित्तत्रयं मानवेन समानविषयम् । यथाह–"अकामतः" इत्यादि (११-१,२७-३०) । एतेषां क्षत्रियादीनां स्त्रीषु हतास्वेवमेव प्रायश्चित्तं यथा पुरुषेषु ।

अबुद्धिपूर्वकं पुनः क्षत्रियं निहत्य वृषभेणैकेनाधिकं सहस्रं यासां गवां ता आत्मशुद्ध्यर्थं ब्राह्मणेभ्यो दद्यात् । यथाऽऽह **मनुः**

**अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः ।**

**वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः ॥ ११।१२७॥**

अबुद्धिपूर्वक्रियायामर्धं प्रायश्चित्तम् । ज्ञानकामनयोस्तुल्यप्रायश्चित्तदर्शनात्तुल्यफलतैव । किंच, स्वतन्त्रप्रवृत्तिर्विषयज्ञानकामनाभ्यां नियता; तयोरन्यतरापायेऽपि तस्या असंभवादतः 'कामतः' इत्युक्तम्; "ज्ञानाज्ञानत" इत्युक्तेऽपि कामः प्राप्नोत्यविनाभावात् । नच चौरादिभिर्बलात्प्रवर्त्यमानस्य सत्यपि विषयज्ञाने कामनाभावान्नाविनाभाव इति वाच्यम् । यतोऽत्र विद्यमानस्याऽपि ज्ञानस्य प्रवृत्तिहेतुत्वाभावेनासत्समत्वम् । यत्तु–शुष्केऽपि पिपतिषोर्भ्रान्त्या कर्दमपतनम्, तत्राऽपि वास्तवज्ञाना-

---

1. कात्या. स्मृ. चं. २ पृ. ३२९; परा. माध. ३ पृ. ४१९-४२०; अपरार्कः, पृ. ८१६ ।
2. याज्ञ. २।२२६, विश्वरूपः ।
3. छान्दो. ६।१६।१।
4. आप. ध. सू. १।९।२४।१,२।

भावात्तद्विषयकामनायाश्चाभाव एव । एवमज्ञानाकामनयोरप्यव्यभिचार एव । ननु याज्ञवल्क्यस्मृतौ "प्रायश्चित्तैरपैत्येनः" इति न युक्तम्, फलनिनाश्यत्वात्कर्मणः । मैवम्; यथा पापोत्पत्तिः शास्त्रगम्या तथा तत्परिक्षयोऽपीति नाऽत्र प्रमाणान्तरं क्रमते । अत एव गौतमेन पूर्वोत्तरपक्षभङ्ग्या अयमर्थो दर्शितः ।

तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते । न कुर्यादित्याहुर्न हि कर्म क्षीयते इति । कुर्यादित्यपरे । 'पुनः स्तोमेनेष्ट्वा पुनः सवनमायान्तीति विज्ञायते । व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति भ्रूणहत्यां योऽश्वमेधेन यजते' इति पुनः सवनमायान्ति इति सवनसंपाद्यज्योतिष्टोमादिद्विजातिकर्मणि योग्यो भवति । न चेदमर्थवादमात्रम्; अधिकारिविशेषणाकाङ्क्षायां रात्रिसत्रन्यायेनार्थवादिकफलस्यैव कल्पनाया न्यायत्वात्, अतो युक्तं 'प्रायश्चित्तैरपैत्येनः" इति । ननु कामकृते प्रायश्चित्ता भावात्कथं व्यवहार्यत्वं तदभावश्च 'अनभिसन्धिकृतेऽपराधे प्रायश्चित्तम्' (२०।१) इति वसिष्ठवचनात्, मनु (११।८९) वचनाच्चावगम्यते । नैतत्; "यः कामतो महापापं नरः कुर्यात्कथञ्चन । न तस्य निष्कृतिर्दृष्टा भृग्वग्निपवनादृते" ॥ इति ।

तथा–"विहितं यदकामानां कामात्तद्द्विगुणं भवेत्" इति च कामकृतेऽपि प्रायश्चित्तदर्शनात् । यत्तु वसिष्ठवचनं "तस्याप्यकामकृतेऽपराधे प्रायश्चित्तं शुद्धिकरम्" इत्यभिप्रायो न पुनः कामकृते प्रायश्चित्ताभाव इति । यत्तु मनुवचनम्–"इयं विशुद्धिरुदिता" इत्यादि, तदपीयमिति सर्वनामपरामृष्टद्वादशवार्षिकव्रतचर्याया एव । 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इत्यनेन प्रतिषेधो न पुनः प्रायश्चित्तमात्रस्य; मरणान्तिकादेः प्रायश्चित्तस्य दर्शितत्वात् । ननु यदि कामकृतेऽपि प्रायश्चित्तमस्ति तर्हि पापक्षयोऽपि कस्मान्न स्यादविशेषाद्यदि पापक्षयोऽपि नास्ति तर्हि व्यवहार्यताऽपि कथं भवति? उच्यते,–उभयत्र प्रायश्चित्ताविशेषेऽपि फलविशेषः शास्त्रतोऽवगम्यते । अज्ञानकृते तु सर्वत्र पापक्षयः । यत्र तु "ब्रह्मसुरापगुरुतल्पगमातृपितृयोनिसम्बन्धसंबद्धागमस्तेन नास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्च" (२०।१।२) इति गौतमोक्तमहापातकादौ व्यवहार्यत्वं निषिद्धम्, तस्मिन्पतनीये कर्मणि कामतः कृते व्यवहार्यत्वमात्रं न पापक्षय इति ।

नच पापक्षयाभावे व्यवहार्यत्वमनुपपन्नम् । द्वे हि पापस्य शक्ती नरकोत्पादिका व्यवहारनिरोधिका चेति । तत्रेतरशक्त्यविनाशेऽपि व्यवहारनिरोधिकायाः शक्तेर्विनाशो नानुपपन्नस्तस्मात् पापानपगमेऽपि व्यवहार्यत्वं नानुपपन्नम् । यत्तु मनुवचनम् (११।४५) तदपि कामकृते प्रायश्चित्तप्राप्त्यर्थम्, न पुनः पापक्षयप्रतिपादनपरम् । अपतनीये पुनः कामकृतेऽपि प्रायश्चित्तेन पापक्षयो भवत्येव; "अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति । कामतस्तु कृतं मोहात्प्रायश्चित्तैः पृथग्विधैः" इति मनु

(११।४६) स्मरणात् । पतनीयेऽपि कर्मणि कामकृते मरणान्तिकप्रायश्चित्तेषु कल्मषक्षयो भवत्येव। फलान्तराभावात्। 'नास्यान्यस्मिंल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निहन्यते' (१।२४-२६) इत्यापस्तम्बस्मरणात्। इत्थमपराधस्य विकाशः स्पष्टः।

इदानीमपराधानां दण्डस्य तात्पर्यं पद्धतिश्च।

अत्र **याज्ञवल्क्यः**

**सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यत्र निष्पतेत्।**
**न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥ २।१६॥**

सन्दिग्धमर्थमधमर्णेनाङ्गीकृतमेव यः स्वतन्त्रः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति। यश्च स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो निष्पतेत् पलायेत, यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद् वदति 'सोऽपि हीनो दण्ड्यश्च स्मृतः' इति संबध्यते। 'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः' इति प्रस्तुतत्वाद्धीनपरिज्ञानमात्रमेव मा भूदिति 'दण्ड्य'ग्रहणम्। दण्ड्यस्य चापि शास्योऽप्यर्थान्न हीयत' इत्यर्थादहीनत्वदर्शनादत्र तन्माभूदिति 'हीन'ग्रहणम्। यथाऽऽह **नारदः**

**अनावेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते।**
**प्रसह्य स विनेयः स्यात्स चास्यार्थो न सिध्यति॥ १।४६॥**

ताडनादेर्दण्डस्य तात्पर्यं भयोत्पादनम्, यतो हि अन्येऽपराधकर्मणि न प्रवृत्ताः स्युः। अन्त्यजः शूद्रो येन केनचित्करचरणादिनाङ्गेन साक्षाद्दण्डादिनाऽव्यवहितेन द्विजातिं प्रहरेत्तत्वाङ्गमस्य छेत्तव्यमित्ययं मनोरुपदेशः–

**येन केनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः।**
**छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम्॥ ८।२९॥**

अन्येऽप्येवं व्यवस्थापयन्ति[1]। हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्यात्तद्देवास्य शातयेदिति विष्णुः[2]। राजदण्डभयाद् यमदण्डभयाच्च पापाः पापं न कुर्वते[3]–

**राजदण्डभयादेके पापाः पापं न कुर्वते।**
**यमदण्डभयादेके परलोकभयादपि॥**

1. येन येनाङ्गेनापराधं कुर्यात्तत्तदस्य च्छेत्तव्यमन्यत्र ब्राह्मणात्। शङ्खलिखित., व्य, म. पृ. २४९।
येनाङ्गेनावरवर्णो ब्राह्मणस्यापराध्नुयात्।
तदङ्गं तस्य च्छेत्तव्यमेवं शुद्धिमवाप्नुयात्॥
(नारद. पारुष्य. २५)

2. वि. ध. सू. ५।१९।
3. मत्स्य. २२५।१६-१७।

परस्परभयादेके पापाः पापं न कुर्वते ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥

(शान्ति. १५।५-६)

मृच्छकटिके–"श्रृणुत आर्याः श्रृणुत । एष...आर्यचारुदत्तो नाम । एतेन...वसन्तसेना मारिता । ... तदा राज्ञा पालकेन वयमाज्ञप्ता एतं मारयितुम् । यद्यपर ईदृशमुभयलोकविरुद्धमकार्यं करोति तमपि राजा पालक एवमेव शास्ति" (१०।११)। राजदण्डप्राप्त्यनन्तरं पुरुषस्य शुचिता मनुना प्रतिपादिता । सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभिर्विहितदण्डा मनुष्याः सन्तः प्रतिबन्धकदुरिताभावात्पूर्वार्जितपुण्यवशेन साधवः सुकृतकारिण इव स्वर्गं गच्छन्ति । एवं **प्रायश्चित्तवद्दण्डस्याऽपि पापक्षयहेतुत्वमुक्तम्**[1] । महद्धि पापं शुद्धस्य कर्मणः फलस्य प्रतिबन्धकम् । सतामधर्मो नैवोत्पाद्यत एषामुत्पन्नो निग्रहणेन विनाशित इति प्राक्प्रध्वंसाभावयोर्विशेषः ।

दण्डशब्दस्तु शारीरनिग्रहविषयो न हि प्रकरणमतिक्रामति । धनदण्डो हि राजार्थः। वृत्तिर्हि सा राज्ञः । शारीरे तु दण्डे दण्ड्यमानार्थता न शक्यते निह्नोतुम् । त्वक्संस्कारो हि सा । अथेयं बुद्धिः–"पालनमेव हिंसामन्तरेण न निष्पाद्यते–तच्च राजार्थमिति कुतो मार्यमाणार्थता मारणस्य"–अथ किं पालनं न पाल्यमानार्थं दृष्टमेवापह्नूयते । न हि तद्दृष्टमुपादेयं राज्ञैव स्वरक्षार्थं करशुल्कादिभृत्या उपादीयन्ते । अथः सुतरां रक्षोपयोगित्वे हिंसायां न हिंस्यमानार्थतासिद्धिः । कथं वा हिंसया दिना न रक्षानिवृत्तिर्यदि तावदेवमर्थं निगृह्यन्ते पुनरकार्यमवर्तयिष्यते तन्निरोधनादिनाऽपि शक्यते नियन्तुम् । अथ तान् निगृहीतान् दृष्ट्वा भयादन्येन प्रवर्तयिष्यन्त इति धनदण्डेनाऽपि शक्यते दुःखयितुम् । हन्यमानेष्वपि सहस्रशः प्रवर्तन्ते । तस्मादियं हिंसा रक्षा सती हिंस्यमानसंस्कार इति मन्तव्यम् । अतश्च कारणादिच्छेदने नियमः । हस्त्यादिविधिश्च दण्ड्येष्वेवादृष्टमाधास्यति, न राजार्थो भविष्यति ।

तस्माच्छरीरदण्डे पापान्मुक्तिर्न धनदण्ड इति स्थितम् । तथा च महापातकिनां हृतसर्वस्वानामप्सु प्रवेशितदण्डानां संव्यवहारपरिहारार्थमङ्कनं विहितम् । यदि च धनदण्डेन शुद्धेयुः पुनरङ्कनमनर्थकं स्यादिति मेधातिथिः । दण्डव्यवस्थाप्रभावादपराधानामभावो भारतीयसमाजस्य वैशिष्ट्यमित्यैहिका अङ्गीकृताः[2]।

---

1. राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

(मनु. ८।३१८)

वसिष्ठ. १९।४५ ।

2. Fa Hien, Legge, 1886, P. 43.
Megasthenes, Fragment, XXXVII, p. 71.
Rock Edict of Ashoka at Dhauli, Corpus 1,1, pp. 93,97.
Stephens, History of Criminal Law, vol. I, p. 471.

तात्पर्यानन्तरं पद्धतिर्विवेचनीया। हैरण्यगर्भो मनुर्दशदण्डस्थानान्युक्तवान्। यानि क्षत्रियादिवर्णत्रयविषये भवन्ति। ब्राह्मणः पुनर्महत्यपराधेऽक्षतशरीरे देशान्निस्सार्यते। लिङ्गादीन्येतानि दशदण्डस्थानानि, अतस्तत्तदङ्गेनापराधे सति अपराधगौरवलाघवापेक्षया तत्तदङ्गताडनवेदनादि कर्त्तव्यम्। अल्पापराधे यथाश्रुतं धनदण्डः। देहदण्डो मारणं महापातकादौ। पुनः पुनरिच्छातोऽपराधकरणमपेक्ष्य ग्रामारण्यादिचापराधिस्थानं रात्र्यादिकं वापराधस्यापेक्ष्य सारं चापराधकारिणो धनशरीरादिसामर्थ्यमपराधं च गुरुलाघवभावेन चालोक्य दण्डनीयेषु दण्डं कुर्यात्।

जीवतः ख्यातिर्यशः मृतस्य ख्यातिः कीर्ति, यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिह लोके यशोनाशनं मृतस्य च कीर्तिनाशनं परलोके च धर्मान्तरार्जितस्वर्गप्रतिबन्धकं तस्मात्तत्परित्यजेत्। राजा दण्डानर्हान्धनलोभादिना दण्डयन्, दण्डार्हांश्चानुराधादिनोत्सृजन्महतीमख्यातिं प्राप्नोति नरकं च व्रजति–

**अधर्मदण्डनं लोके यशोघ्नं कीर्तिनाशनम्।**
**स्वर्ग्यं च परत्राऽपि तस्मात्तत्परिवर्जयेत्॥**
**अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।**
**अयशो महदाप्नोति नरकं चैव गच्छति॥**

**(मनु. ८।१२७-१२८)**

न साधु कृतवानसि मैवं भूयः कार्षीरित्येवं वाङ्निर्भर्त्सनं प्रथमापराधे गुणवतः कुर्यात्। तथापि यदि नोपशाम्यति तदा धिग् जाल्म मा जीव हानिस्ते पापस्य भूयादित्येवमादि तस्य कार्यम्। तदापि यद्यसन्मार्गान्न निवर्तते तदा धनदण्डमस्य तृतीयं कुर्यात्। एवमपि चेन्नावतिष्ठते तदातः परं वधदण्डं ताडनाद्यङ्गच्छेदरूपं तस्य कुर्यान्न मारणम्–

**वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम्।**
**तृतीयं धनदण्डं तु वधदण्डमतः परम्॥**

**(मनु. ८।१२९)**

यो गुणवानीषत्प्रथममेवापराद्धः स वाचा निर्भर्त्स्यते। तथा विनीयमाने यदि न निवर्तते तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते। ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः। तदप्यगणयन्नैश्वर्यादिना हन्तव्यः। वधदण्डश्च ताडनाद्यङ्गच्छेदनादि, न मरणमेव। मारणञ्चेद्वधः किं तदन्यद्यन्न शक्यते–कथं चैनं पापं निगृह्णीतेत्यादिपरुषवाक्यपूर्वं दुर्विनीतेषु धनदण्डवधौ समुच्चेतव्यौ। कृतेऽपि शरीरदण्डे यदि नाऽवतिष्ठते ततो न कृतनिग्रह इत्युत्सृजेदपि तु स वधदण्डं कर्तव्यः।

---

Dr. Hart, Way to Justice, P. 94.
Dr. J. M. Brew, In the Service of Youth, 1943, Chap. XV., P. 208.

धनवधदण्डयोश्च पुनः प्रवृत्त्यर्थोऽयमारम्भः । वाग्दण्डे तु मृदुत्वात्कः पृच्छति । धनेन च निगृहीतस्य पुनर्वधो दृष्टो"ऽङ्गुलिग्रन्थिभेदस्येति" ।

दण्डं देशकालादौ दण्ड्यस्य च शक्तिं विद्यादिकं यस्मिन्नपराधे यो दण्डोऽर्हतीत्यादिकं शास्त्रानुसारेण तत्त्वतो निरूप्यापराधिषु प्रवर्तयेत्–

**तं देशकालौ शक्तिञ्च विद्याञ्चावेक्ष्य तत्त्वतः ।**
**यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥**

(मनु. ७।१६)

**अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ।**
**सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥ ८।१२६॥**

उक्तानुक्तदण्ड्येष्वपराधेषु **मातृकाश्लोकोऽयमित्युद्घोषयति मेधातिथिः** । एतदर्थानुसारेण सर्वत्र दण्डक्लृप्तिः कर्त्तव्या । तत्र पौनःपुन्येन प्रवृत्तिरनुबन्धः । प्रवृत्तिकरणं वा, अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि । तं परिज्ञाय । किमयमात्मकुटुम्बक्षुदवसायेन धर्मतन्त्रप्रसङ्गेन वा–अथ मद्यद्यूतादिशौण्डतया–तथा प्रमादाद्बुद्धिपूर्वं वा परप्रयुक्तस्वेच्छया वेत्यादिरनुबन्धः । **देशो ग्रामारण्यगृहजलजन्मप्रसवभूम्यादिः** । कालो नक्तं दिवादिः। सुभिक्षदुर्भिक्षबाल्ययौवनादि वा। सारः शक्त्यशक्ती आढ्यत्वदारिद्र्ये। अपराधोऽष्टादशानां पदानामन्यतमः । एतत्सर्वं पौर्वापर्येण निरूप्य तथा दण्डं पातयेद्यथा स्थितिः सांसारिकी न भ्रश्यतीति ।

पुनःपुनरिच्छातोऽपराधकरणमपेक्ष्य ग्रामारण्यादिचापराधिस्थानं रात्र्यादिकं वापराधस्यापेक्ष्य सारं चापराधकारिणो धनशरीरादिसामर्थ्यमपराधं च गुरुलघुभावेन चालोक्य दण्डनीयेषु दण्डं कुर्यात् । एतच्चाभिहिताभिधास्यमानदण्डशेषभूतम् । दण्डव्यवस्थानिमित्तान्याह **याज्ञवल्क्यः**

**ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ।**
**वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥ १।३६८॥**

यथाऽपराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनं कुर्वीत । एवं देशकालवयःकर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डप्रणयनं कुर्यात् ।तथा बुद्धिपूर्वाबुद्धिपूर्वसकृदावृत्त्यनुसारेण च । यद्यपि राजानमधिकृत्यायं राजधर्मो वेदितव्यः[1]। "निर्णये वयं प्रमाणं शेषे तु राजा" इति मृच्छकटिके (९) । अत्र **कौटल्यः**

---

1. बृद्धहा. ७।१९५-१९७; बृहत्परा. पृ. २८४।
**न त्वयेदं सम्यक् कृतमिति निन्दा, धिक् त्वां पापीयांसमधर्मकारिणमिति निर्भर्त्सनम्** । दण्डविवेकः पृ. २०।
**गुरून् पुरोहितान्पुत्रान्वाग्दण्डेनैव दण्डयेत् ।**
**विवादिनो नरांश्चान्यान्धिग्धनाभ्यां च दण्डयेत् ॥**
(बृह., स्मृ. च. २ पृ. १२६; व्य. नि. पृ. ५२८)

पुरुषं चापराधं च कारणं गुरुलाघवम् ।
अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च ॥
उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि ।
राज्ञश्च प्रकृतीनां च कल्पयेदन्तरान्वितः ॥ ४।१० ॥

दण्डस्तु देशकालधर्मवयोविद्यास्थानविशेषैर्हिंसाक्रोशयोः कल्प्यर्थः । (वसिष्ठ १९।९) गौतमश्च–पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः । अनुज्ञानं वेदवित्समवायवचनात् (१२।४८-४९) ।

दण्यव्यवस्थया सह कर्मविपाकसिद्धान्तोऽपि विचारणीयः । दैवात् प्रमादादन्यशरीकृतेन पूर्वजन्मार्जितदुष्कृतेन क्षयरोगादिभिः सूचितेन प्रायश्चित्तीयतां प्राप्याकृते प्रायश्चित्ते साधुभिः सह याजनादिना संसर्गं न गच्छेत् । इह जन्मनि निषिद्धाचरणैः केचित् पूर्वजन्मकृतैर्दुष्टस्वभावा मनुष्याः कौनख्यादिकं रूपविषर्ययं प्राप्नुवन्ति । ब्राह्मणसुवर्णचौरः कुत्सितनखत्वं प्राप्नोति । निषिद्धसुरापः श्यावदन्ताम्, ब्रह्महाक्षयरोगित्वम्, गुरुभार्यागामी विकोशमेहनत्वम् पिशुनो विद्यमानदोषाभिधायी दुर्गन्धिनासत्वम्, अविद्यमानदोषाभिधायको दुर्गन्धिमुखत्वम् , धान्यचौरोऽङ्गहीनत्वम्,धा न्यादेरपद्रव्येण मिश्रणकर्त्ताऽतिरिक्ताङ्गत्वम्, अन्नचौरो मन्दानलत्वम् । अननुज्ञाताध्यायी मूकत्वम्, वस्त्रचौरः श्वेतकुष्ठत्वम्, अश्वचौरः खञ्जत्वम् । एवं बुद्धिवाक्चक्षुःश्रोत्रविकलाविकृतरूपाः साधुविगर्हिताश्च प्राग्जन्मार्जितोपभुक्तदुष्कृतशेषेणोत्पद्यन्ते । यथाऽऽह मनुः

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ।
इह दुश्चरितैः केचित्केचित्पूर्वकृतैस्तथा ।
प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥
सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम् ।
ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥
पिशुनः पौतनासिक्यं सूचकः पूतिवक्रताम् ।
धान्यचौरोऽङ्गहीनत्वमातिरैक्यं तु मिश्रकः ॥
अन्नहर्त्ताऽऽयमावित्वं मौक्यं वागपहारकः ।
वस्त्रापहारकं श्वैत्र्यं पङ्गुतामश्वहारकः ॥
एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः ।
जडमूकान्धबधिरा विकृताकृतयस्तथा ॥

(मनु. ११।४६-५२)

महापातकजनितांस्तामिस्रादिनरकान् स्वजनितदुष्कृतानुरूपान् घोराननतितीव्र-वेदनापादकत्वेनातिभयङ्करान् दारुणान् दुःखैकभोगनिलयान् प्राप्य कर्मक्षयात् कर्मजन्यनरकदुःखोपभोगक्षयादनन्तरं कर्मशेषात्पुनरिह संसारे दुःखबहुलश्व-सृगालादितिर्यग्योनिषु प्रकर्षेण भूयो भूयो जायन्ते[1] ।

एतच्च क्षयित्वादिलक्षणकथनं प्रायश्चित्तोन्मुखीभूतब्रह्महाद्युद्वेगजननार्थं न पुनः क्षयित्वादिलक्षणयुक्तानां द्वादशवार्षिकादिव्रतप्राप्त्यर्थं संसर्गनिवृत्त्यर्थञ्च । तथा हि पापक्षयार्थं प्रायश्चित्तम् । नच प्रायश्चित्तेन प्रारब्धफलपापपूर्वविनाशे किंचन प्रयोजनमस्ति । नहि कार्मुकनिर्मुक्तो बाणो लक्ष्यवेधे वेद्धुस्तद्व्यापारस्य वा सत्तान्तरं पुनरपेक्षते । नच तदारब्धफलनाशार्थो पूर्वनाशोऽन्वेषणीयः । नहि निमित्तकारणी-भूतचक्रचीवरादिविनाशेन तदारब्धकरकादिविनाशः । नच नैसर्गिकं कौनख्यादिकं प्रत्यानेतुं शक्यते । किञ्च नरकतिर्यग्योन्यादिजन्यदुःखपरम्परामनुभूतस्य हि कौन-ख्यादिको विकारश्चरमं फलम् । तेन चोत्पन्नमात्रेण स्वकारणापूर्वनाशो जन्यते मन्थनजनिताशुशुक्षणिनेवारणिक्षयः । तस्मान्न पापविनाशार्थं व्रतपरिचर्या, नाऽपि संव्यवहारार्थम् । नहि शिष्टाः कुनख्यादिभिः सह संबधं परिहरन्ति । प्राचीन-क्षयात्पापनाशेन संव्यवहार्यत्वस्याऽपि सिद्धेनार्थो व्रतचर्यया । यत्तु वसिष्ठेनोक्तम् (३०६) "कुनखी श्यावदन्तश्च कृच्छ्रं द्वादशरात्रं चरेत्" इति तत्क्षामवत्यादि-वन्नैमित्तिकमात्रं न पुनः पापक्षयार्थं संव्यवहार्यत्वसिद्ध्यर्थं वेति मन्तव्यम्[2]।

**मृत्युदण्डविषयः** प्रवर्तनीयः । महत्स्वप्यराधेषु मृत्युदण्डं प्राणान्तिकं त्यजेत् । ऋते राज्यापहारात्तु युक्तदण्डः प्रशस्यते[3] । मानसोल्लासे वधदण्ड इत्त्थं व्याख्यातः– विषेक्षुदन्तिभुजगशस्त्रानलजलादिभिः पापानां प्राणहरणमिति (२।२०।१२८ पृ. १४४)। चित्रवधविधिभेदेन शुद्धवधो द्वेधा[4] । पी. वी. काणे महोदयेन कृतः वधशब्दस्य मृत्युदण्ड [5]इत्यर्थश्चिन्त्यः, यतो हि मेधातिथिना वध इत्यस्य ताडनमित्यर्थः कृतस्तत्तु समीचीनः । परञ्चात्र न सन्देहो यद्वैदिकदण्डव्यवस्थायां मृत्युदण्डस्य विधानमवश्यमासीत्[6] । श्रेयसः शयनशायिनं राजा बद्ध्वा श्वभिः खादयेत्काष्ठैश्चैनां दहेत्[7] । सत्यम्, स्त्रीब्राह्मणादिविषये मृत्युदण्डस्य निषेधोऽपवाद-रूपेण विहितः ।

---

1. याज्ञ. ३।२०६-२१६।
2. याज्ञ. १।२१६; विष्णुध. सू. ४४-४५; दण्डविवेकः पृ. ३६ ।
3. काम. १४।१६; शुक्र. ४।१।९३ ।
4. कौ. ४।११; शान्ति. ८५।२२।
5. History of Dharmashastra, Vol. III, PP. 400-401.
6. मनु. ८।३६६,३७१; याज्ञ. २।२८६-८८, २९४; वसिष्ठ. २१।१-३-५; मत्स्य. २२७।२२०; याज्ञ. २।२७८-२७९, बृद्धहा. ७।१९२।
7. शंखलिखित., वि. र. पृ-३९६। नारद.

**स्त्रीणां मृत्युदण्डविषये** स्पष्टं यद्धर्मज्ञा धर्मनिश्चये स्त्रिय अवध्या इत्याहुः। स्त्रीषु, गोषु, ब्राह्मणेषु च न शस्त्राणि पातयेत्[1]। सूतसंहितावचनमाधृत्य शूद्रकमलाकरे प्रतिपादितम्–"द्विजस्त्रीणामपि श्रौतज्ञानाभ्यासेऽधिकारिता"। शतपथब्राह्मणे स्पष्टतः स्त्रीणां वधनिषेधो निर्दिष्टः–"स्त्री वैषा यच्छीर्न वै स्त्रियं प्रत्युत त्वस्याजीवन्त्या एवाददत इति"।

यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धस्तथाऽपि प्रत्यक्षेण परम्परया वा विदिते तयोः परस्परातिचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ, इतरथा दोषभाग्भवति[2]। तथा च नारदः

**ईर्ष्यासूयासमुत्थे तु संबन्धे रागहेतुके।**
**दम्पती विवदेयातां न ज्ञातिषु न राजनि॥** (५।९)

स्त्रीणां शुचिताविधाने धर्मशास्त्रकारैर्विवेचितं विस्तरेण। तैत्तिरीयब्राह्मणे– "यज्जारं सन्तं न ब्रूयात्प्रियं ज्ञातिं रुन्ध्यात्। असौ मे जार इति निर्दिशेत् (१।६।५)[3]। स्त्रियो मानसिकदृष्ट्याऽबला इति ऋग्वेदे–"स्त्रियो हि दास आयुधानि चक्रे किं मा करन्नबला अस्य सेना" (५।३९।९); तथा तैत्तिरीयसंहितायाम्– "तस्मात्स्त्रियो निरिन्द्रिया अदायादीरपि पापात्पुंस उपस्तितरं वदन्ति" (६।५।८।२)। बौधायनोऽपि–"निरिन्द्रिया अदायाश्च स्त्रियो मता इति श्रुतिः" (२।२।५३)। यथाऽऽह मनुः

**नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मे व्यवस्थितिः।**
**निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥** (९।१८)

अस्य बीजमस्ति वेदे, संहितायां ब्राह्मणेषु च–"वज्रो वा आज्यमेतेन वे देवा वज्रेणाज्ये नाध्नस्नेव पत्नीनिराक्ष्णुवंस्ता हता निरष्टा नात्मनश्च नैशत न दायस्य च नैशत"[4]। इत्थं स्त्रियोऽस्वतन्त्रा धर्मे, पुरुषप्रधानश्च[5]। प्रजा पतिमत ह्येतन्न स्त्री स्वातन्त्र्यमर्हति। अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति। अनृताः स्त्रिय इत्येवं वेदेष्वपि पठ्यते[6]। यथा रामायणे–

**स्वभावस्त्वेष नारीणां त्रिषु लोकेषु दृश्यते।**
**विमुक्तधर्माश्चपलास्तीक्ष्णा भेदकराः स्त्रियः॥**

(अरण्य. ४५।२९-३०)

---

1. महा. आदि. १५८।३१; सभा. ४१।१३।
2. याज्ञ. २।२९४-मिताक्षरा।
3. शत. ब्रा. २।५।२।२०; कात्या. ५।५।६-१०।
4. शत. ब्रा. ४।४।२।१३।
5. गौ. ८।१; वसि. ५।१; मनु. ९।२-३; अनुशासन. २-।२१; नारद-दायभाग; १६।६१।
6. अनु. २०।१४; १९।६-७; ३८।५,६,१२,२६; मनु. ९।१८।

एतत्सर्वन्तु प्रसंगतः सन्दर्भविशेषेणावधेयः । वस्तुतः–आचार्यः श्रेष्ठो गुरूणां मातेत्येके (गौ. २।५।१४) । माता पुत्रस्य भूयांसि कर्माण्यारभते तस्यां शुश्रूषा नित्या पतितायामपि (आप. ध. सू. १।१०।२८।९)। पतितामपि तु मातरं विभृयादनभिभाषमाणः (बौ. ध. सू. २।२।२८) । पतितः पिता परित्याज्यो माता तु पुत्रे न पतति (वसिष्ठ. १३।४७), न माता पुत्रोरन्तरं गच्छेत्पुत्रः । कामं मातुरेवानुब्रूयात्सा हि धारिणी पोषणी च । न पुत्रः प्रतिमुच्येतान्यत्र सौत्रामणियागाज्जीवन्नृणान्मातुः[1] । महाभारते–

**नास्ति मातृसमा छाया नास्ति मातृसमा गतिः ।**
**नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया[2] ॥**
**( शां. २६७।३१ )**

**सर्वेषामेव पापानां प्रतिघातो हि विद्यते ।**
**न तु मात्राभिशप्तानां मोक्षः क्वचन विद्यते ॥**
**( आदि. ३७।४ )**

**नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः ( शा. ३४३।१८ )।**

माता गुरुतरा भूमेः[3] । नास्ति मातुः परो गुरुः[4] । रघुवंशे–

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।**
**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ ( ८।६६ )**

अत्र च बृहत्संहिता–

**येऽप्यङ्गनानां प्रवदन्ति दोषान्वैराग्यमार्गेण गुणान् विहाय ।**
**ते दुर्जना मे मनसो वितर्कः सद्भाववाक्यानि न तानि तेषाम् ॥**
**प्रब्रूत सत्यं कतरोऽङ्गनानां दोषस्तु यो नाचरितो मनुष्यैः ।**
**धार्ष्ट्येन पुंभिः प्रमदा निरस्ता गुणाधिकास्ता मनुनात्र चोक्तम् ।**
**जाया वा स्याज्जनित्री वा स्यात्संभवः स्वीकृतो नृणाम् ॥**
**हे कृतघ्नास्तयोर्निन्दां कुवर्तां वः कुतः सुखम् ।**
**अहो धार्ष्ट्यमसाधूनां निन्दतामनघाः स्त्रियः ॥**

---

1. शङ्खलिखित., सं. प्र. पृ. ४७९; वि. र. पृ. ३५७; स्मृ. च. १ पृ. ३५ ।
2. अनु. १०५।१४-१६ ।
3. वन. ३१३।६०।
4. अत्रि. १५१; अद्वैतं सुखदुःखयोरनुगुणम्-उत्तरराम. १।
प्रेयो मित्रं बन्धुता वा समग्रा सर्वे कामाः शेवधिर्जीवितं वा ।
स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्ति ॥ ६ ॥

**मुष्णातामिव चौराणां तिष्ठ चौरेति जल्पताम् ।**

**पुरुषश्चटुलानि कामिनां कुरुते यानि रहो न तानि पश्चात् ।**

**सुकृतज्ञतयाऽङ्गना गतासूनवगुह्य प्रविशन्ति सप्तजिह्वम् ॥**

**( ७४।५,६,११,१५,१६ )**

अत्र व्याख्यानियमोऽप्यवधेयः–एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि (जै. २।४।२१) । नहि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । किं तर्हि । निन्दितादितरत्प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते किं त्वितरस्य विधिः (शबरः)'। यथा वक्ष्यति नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति (जै. १।२।७-अत्र तन्त्रवार्तिकः)

एवम्–स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते[1] । शान्तिपर्वणि–मा वधस्त्वं स्त्रियम्...। सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु केनचित्[2] । धर्मार्थकामेषु भार्या पुंसः सहायिनी[3] । अन्यच्च–

**क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।**

**शरीरगुप्त्यभ्यधिकं धर्मं गोपाय पाण्डव ।**

**वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ॥**

**( आदि. १५५।२-३ )**

**स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु ( सभा. ४१।१३ )।**

स्त्रियः सर्वत्र शुद्धाः स्मृता[4] । व्यभिचारादृतौ शुद्धिः, शूद्रकृते तु गर्भे त्यागः । त्यागश्चोपभोगधर्मकार्ययोः, न तु निष्कासनं गृहात्तस्याः[5]। स्वदारनिरतश्चैव स्त्रियो रक्ष्याः[6]। स्त्रीणां साक्षित्वन्नाङ्गीकृतम्[7] । जघन्येऽपराधे स्त्रियोऽपि वधार्हाः–

**विप्रदुष्टां स्त्रियं चैव पुरुषघ्नीमगर्भिणीम् ।**

**सेतुभेदकरीं चाप्सु शिलां बध्वा प्रवेशयेत् ॥**

**विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।**

**विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत् ॥**

**( याज्ञ. २।२७८-२७९ )**

---

1. वन. २०६।४६।
2. शां. १३५।१३-१४।
3. शां. १४४।१३।
4. याज्ञ. १।७१।
5. याज्ञ. १।७२।
6. याज्ञ. १।८१।
7. याज्ञ. २।७०।

परञ्च प्रातिलोम्ये पुंसो वधः नार्याः कर्णादिकर्त्तनमिति विहितम्[1] । नार्यः पूज्याः भूषयितव्याश्च[2] । स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिण्यो भवन्ति[3] । अन्तर्वेश्मादौ साक्ष्याभावे सति स्त्रियोऽपि साक्षिणः स्युः[4] । परञ्च यौनापराधे वधदण्डव्यस्था–

भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥
(मनु. ८।३७१)

स्त्रियं च यो व्यापादितवानेतान् यथावत्कृतप्रायश्चित्तानपि संसर्गितया न परिवसेत्[5] ।

**ऋणादानम्**

छलेन ये बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न तत्त्वतोऽन्यत्राऽपि निक्षेपादौ यत्र छद्म जानीयात् । वस्तुतो यन्निक्षेपादि न कृतं तत्सर्वं निवर्तते । बलाद्दत्तम-प्रतिग्राह्यादि, बलाद् युक्तं भूम्यादि, बलाल्लेखितं चक्रवृद्धिपत्रादि । प्रदर्शनं चैतत् । सर्वान् बलकृतान् व्यवहारान्निवर्तनीयान्मनुराह[6] । अस्या व्यवस्थाया बीजं वेदेषु विद्यते–

यथा कलां यथा शफं यथ ऋणं संनयामसि ।
एवा दुष्व्पन्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः
(ऋ ८।४७।१७)

ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुपनक्तमेति (ऋ.१०।३४।१०)
इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि (ऋ. ८।६६।१०)
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि (ऋ. २।२७।४)
इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे (ऋ. ६।६।१।१)
जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन
देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ॥
(तै. सं. ६।३।१०।५)

ऋणमस्मिम् संनयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ (ऐ. ब्रा. ३३।१)

---

1. याज्ञ. २।२८६।
2. मनु. ३।५५-६२।
3. मनु. ८।६८।
4. मनु. ८।७०।
5. मनु. ११।१९०।
6. मनु. ८।१६५,१६८।

अनृणा अस्मिन्ननृणाः परस्मिन् तृतीये लोके अनृणाः स्याम ।
ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आ क्षीयेम[1] ॥
( तै. ब्रा. ३।७।९।८ )

यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि ।
इहैव सन्निरवदये तदेतत्तदग्रे अनृणो भवामि ॥
( तै. सं. ३।३।८।१-२ )

मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति ददाति तदपत्यं प्रमगन्दः अत्यन्तकुसीदिकुलीनः ( निरुक्तः ६।३२ ) ।

व्यवहारः कौटल्येनेत्थं विशदीकृतः–"अपाश्रयवद्भिश्च कृताः, पितृमता पुत्रेण, पिता पुत्रवता, निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन, पतिमत्या पुत्रवत्या च स्त्रिया, दासाहितकाभ्याम्, अप्राप्तातीतव्यवहाराभ्यामभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्चान्यत्र-निसृष्टव्यवहारेभ्यः । तत्राऽपि क्रुद्धेनार्तेन मत्तेनोन्मत्तेनावगृहीतेन वा कृता व्यवहारा न सिद्धेयुः ( ३।१ ) । नारदः कात्यायनश्च[2]

यद्दृणादिषु सर्वेषु बलवत्युत्तरा क्रिया ।
प्रतिग्रहाधिक्रीतेषु पूर्वा पूर्वा बलीयसी ॥
( नारद. ४।९७ )

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्त्ता चोरदण्डभाक् ॥
( कात्या. ५१७ पृ. )

मानवाः ऋणैश्चतुर्भिः संयुक्ता भुवि जायन्ते । तेभ्यश्च धर्मतः पितृदेवर्षिमनु-जैर्देयम्–

---

1. अथर्व. ६।११७।१,३।
2. स्मृ. चं. २ पृ. १४४; वि. र. पृ. ३५; स. वि. पृ. २३७; विवादभगार्णवः, १८६४।
Section 11 to 19 of the Indian Contract Act (IX of 1872).
Section 48 of the Transfer of Property Act (IV of 1882).
Banerjee's Hindu Law of Marriage and Stridhan, 1923.
Colebrook's Digest of Hindu Law.
Ghosh's Law of Endowments, 1938.
Dr. Jolly's Tagore Law Lectures on Partition, Inheritance, and Adoption.
Mayne's Hindu Law, 1938.
Mulla's Hindu Law, 1940.
K. L. Sarkar, Mimansa Rules of Interpratations.
G. C. Sarkar, Hindu Law and Hindu Law of Adoption, 1916,
Rajkumar Sarvadhikari, Principle's of the Hindu Law of Inheritance, 1922.
Dr. P. N. Sen, General Principles of Hindu Juriprudence,1918.
Steel, Law and Custom of Hindu Caste, 1868.
Stake, Hindu Law Texts.

यज्ञैस्तु देवान् प्रीणाति स्वाध्यायतपसा मुनीन् ।
पुत्रैः श्राद्धैः पितृंश्चाऽपि आनृशंस्येन मानवान् ॥
(आदिपर्व. १२०।१७-२०)

ऋणमुन्मुच्य देवानामृषीणां च तथैव च ।
पितृणामथ विप्राणामतिथीनां च पञ्चमम् ॥
(अनु. ३७।१७)

ऋणवान् तपस्वी अग्निहोत्री च यदि ऋणवान् म्रियते तद्धनं धनिनाम् । ऋणादाने अधमर्णजन्यदुरितफलाद्दासभृत्यस्त्रीपशुजन्म इति कात्यायनः [1]। अत्र कर्मविपाकसिद्धान्तः । कुसीदं व्याख्यातं नारदेन–

स्थानलाभनिमित्तं हि दानग्रहणमिष्यते ।
तत्कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम् ॥ ४।९८।

स्थानमवस्थानं मूलधनस्य तस्मिन्सत्येव लाभो वृद्धिस्तदर्थं दानग्रहणम् । देयद्रव्यं दीयत इति दानम्, तस्य ग्रहणमधमर्णेन । कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी मासम्[2] । सपादपण्या धर्म्या मासवृद्धिः पणशतस्य[3] । वृद्धिस्तु योक्ता धान्यस्य वार्धुषं तदुदाहृतम्[4] । अत्र बृहस्पतिः[5]

"कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं चाष्टगुणं कुसीदाख्यमतः स्मृतम् ॥

पुत्रसम्बन्धि ऋणं न पित्रा दातव्यम् । पैतृकमृणं पुत्रस्तु दद्यात् । अस्यापवादः– "कामक्रोधसुराद्यूतप्रातिभाव्यकृताद् विना" । पितुरेव नियोगात् कुटुम्बभरणाय वा पुत्रस्य यदृणं तत्पिता दद्यात् । कुटुम्बहेतोरुच्छिन्नं यच्छिष्यान्तेवासिदासःस्त्रीवैयावृत्यकरैश्च स्वामिना दातव्यमप्रतिविहितत्वात् । विंशात् संवत्सरादवार्क पितरि देशान्तरं गते पितृव्ये वा ज्येष्ठे वा भ्रातरि सुतः कनीयान् भ्राता भ्रातृव्यो वा नर्णं दद्यात् । अर्थादूर्ध्वं दद्यात् । तदीयं द्रव्यं धनिकाय राजा दापयेत् । स्त्रीपतिकृतमृणं स्वधनान्न दद्यात् । जीवति पत्यावहं दात्रीत्यभ्युपेतं दातव्यमेव । यद्वा पत्या सह कृतमुभाभ्यामर्थितम् । पुत्रकृतस्याप्येषैव गतिः । अपुत्रा पत्या मुमूर्षणा नियुक्ता या सा पतिकृतं दद्यात् । सति तु यस्तस्य रिक्थमादद्यात्, स दद्यात् । अभावे रिक्थभाजो राज्ञा ग्राह्यत्वाद् रिक्थस्य राजा दद्यात्[6] ।

---

1. नारद. ४।६।९; कात्या. ५५१; स्मृ. चं. २ पृ. १६१; नारद. ४।९।
2. गौ. १२।२६।
3. कौटल्य. ३।११।१।
4. नारद. ४।११०।
5. व्य. म. पृ. १६७।
6. नारदीय. १।७-१४।

भार्याकृतं च स्वेच्छया केनचिदपि प्रकारेण पत्या न दातव्यम् । अस्यापवादः– आपन्ने कुटुम्बे तदभ्युद्धरणार्थं तत्कृतं दातव्यम् । रजकव्याधगोपशौण्डिकयोषितः । एताभिः कृतं पतिः दद्यात् । 'तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम्" । या पुत्रिणी स्त्री पुत्रं समुत्सृज्यान्यमाश्रयेत्तस्या सर्वं रिक्थं हरेत् । धनं सर्वं पुत्राय दत्त्वा शरीरमात्रेणाश्रयेत् । निःस्वायाः यः पतिः स न तस्या धनं लभते । यत्तया कृतमृणं स एव तद्द्यान्न पुत्र इति । या सापत्या सप्रधनैव चान्यमश्रयेत्, अस्या भर्तुः ऋणं दद्यात्[1] । अविद्यमानधनपुत्रस्य स्त्रियमुपैति यः, तस्या वोढुः पत्युः ऋणं दद्यात्[2] ।

धनस्त्रीहारिपुत्राणां यो धनं हरेत् स ऋणं दद्यात्, यस्य तद्धनम् असतो स्त्रीधनिनोः पुत्रो दद्यात् । उत्तमा स्वैरिणीनां या पुनर्भ्वामुत्तमा तथा; तयोः पतिकृतमृणं दद्यात् यस्ते उपाश्नुते । अनापदि स्त्रीकृतानि कार्याणि अप्रमाणानि, विशेषतो गृहक्षेत्रदानाधमनविक्रयाः । दासकृतमनापद्यप्रमाणम् । न केवलं स्त्रीदासाभ्यामेव, पुत्रेण च कृतं पितर्यनिच्छति तदप्यप्रमाणम् । अप्राप्तव्यवहारस्तु स्वतन्त्रोऽपि न चर्णभाक् । ज्येष्ठे सतीतर ऋणं न दाप्या[3] ।

अथ **वृद्धिर्विवेचनीया** । कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी प्रतिमासम्[4] । पञ्च माषास्तु विंशत्यामेव धर्मो न हीयते[5] । माषो विंशतिभागस्तु पणस्य परिकीर्तितः । शते प्रयुक्तेऽशीतिभागं प्रतिमासं वृद्धिं गृह्णीयात् । पणशते प्रयुक्ते पणद्वयं वा प्रतिमासं गृह्णीयात् । ब्राह्मणादिवर्णानां क्रमेण द्विकं त्रिकं चतुष्कं पञ्चकं शतसममितो नाऽधिकं मासस्य संबन्धिनीं वृद्धिं गृह्णीयात् । नन्वशीतिभागो लघु, द्विकशतग्रहणं गुरु, कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्पेताम् । अत्र मेधातिथिगोविन्दराजौ तु पूर्ववृद्ध्या निर्वाहासंभवे द्विकशतपरिग्रह इति व्याचक्षाते । सम्बन्धकेष्वशीतिभागग्रहणं बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः, इति कुल्लूकभट्टः । **अत्र याज्ञवल्क्यः**

**अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।**
**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥ २।३७ ॥**

संबन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या भवति । अन्यथा बन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वित्रिचतुष्पञ्चकं शतं धर्म्यं भवति । ब्राह्मणेऽधमर्णे द्विकं शतम्, क्षत्रिये त्रिकम्, वैश्ये चतुष्कं शूद्रे पञ्चकम् । मासि मासि मासीत्येव द्वौ वा त्रयो वा चत्वारो वा पञ्च वा द्वित्रिचतुः पञ्चाः,

1. तदेव १।१५-१८।
2. तदेव १।१९।
3. नारदीय. १।२०-३२।
4. गौ. १२।२६।
5. बृह. १०।२८।

अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुः पञ्चकं शतम् । इयं च वृद्धिर्मासि मासि गृह्यते इति कालिका। इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति[1] । अत्र मनुः

**द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ।**
**द्विकं शतं वा गृह्णानो न भवत्यर्थकिल्बिषी ॥**
**द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।**
**मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ ( ८।१४१-४२ )**

ममैकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिं विगणय्यैकदा दातव्येत्येवं-विधनियमपूर्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्यन्तं कुर्यात् । नातिक्रान्ते संवत्सरे नियमस्य वृद्धिं गृह्णीयात्[2] । न च शास्त्राददृष्टामुक्तधर्म्यैंद्विकत्रिकशताद्यधिकां गृह्णीयात् । अधर्मत्वबोधनार्थो निषेधः। चक्रवृद्ध्यादिचतुष्टयीं चाशास्त्रीयां न गृह्णीयात् । तासां स्वरूपमाह बृहस्पतिः–"कायिका कायसंयुक्ता मासग्राह्या च कालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता" । तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता । कालावृद्धिस्तु द्विगुणाधिकग्रहणेन कायिका चातिवाहदोहादिना कारिता ऋणिकेन यानापत्काल एवोत्तमर्णपीडया कृता । चतस्रोऽपि वृद्धीरशास्त्रीया न गृह्णीयात् । तथा च बृहस्पतिः–"भागो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते । पूर्णे च सोदयं पश्चाद्वार्धुष्यं तद्विगर्हितम्" । कात्यायनः–"ऋणिकेन कृता वृद्धिरधिका संप्रकल्पिता । आपत्कालकृता नित्यं दातव्या कारिता तथा ॥ अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ।"

चक्रवृद्धिशब्देन चक्रवच्छकटादिभररूपा वृद्धिरभिमता । चक्रवृद्धिमाश्रित्य उत्तमर्णो देशकालव्यवस्थितः । स्थलपथजलपथयाने निपुणा इयद्देशपर्यन्त-मियत्कालपर्यन्तमूह्यमाने सति एतावाँल्लाभो ग्रहीतुं युक्त इत्येवं देशलाभधनज्ञा वणिगादयो यां वृद्धिं तथाविषये चावस्थापयन्ति सैव तत्र व्यवस्था तत्राभिगमं धनप्राप्तिं प्रति प्रमाणम्[3] ।

पुराणपञ्चविंशत्यां भारोऽष्टपणा वृद्धिः । एवं सद्विमासैश्चतुर्भिर्वर्षैः द्विःपर्यागतं संतिष्ठते, एषा धर्मवृद्धिः । नानया धर्माच्च्यवत इति हारीतः । अथोत्तमर्णोऽधमर्ण-

---

1. नारद. १।१०२-४।
**ऋणादानं सप्तविधम्–ईदृशमृणं देयम्, ईदृशमदेयम्, अनेनाधिकारिणा देयम्, अस्मिन समये देयम्, अनेन प्रकारेण देयम्, इत्यधमर्णे पञ्चविधम् । उत्तमर्णे दानविधिः, आदानविधिश्चेति द्विविधमिति । एतच्च नारदेन स्पष्टीकृम्–ऋणं देयमदेयं च येन यत्र यथा च यत् । दानग्रहणधर्म्याभ्यामृणादानमिति स्मृतम् ॥ १।१।४ ॥**
2. मनु. ८।१५३।
3. मनु. ८।१५७ ।

काद्यथादत्तमर्थं गृह्णीयात्। द्विकं त्रिकं चतुष्कं पञ्चकं शतं वर्णानुक्रमेण प्रतिमासम्[1]। नातिसांवत्सरीमेके[2]। अशीतिभागो वृद्धिस्स्यान्मासि मासि सबन्धके; अन्यथा तु बन्धकरहिते द्विकत्रिकत्वं वृद्धेरित्यभिप्रायः। यच्चैतद्वृद्धिपरिमाणमुक्तमत ऊर्ध्वं न गृह्णीयात्। न त्वर्वाग् ग्रहणे विरोध इति विश्वरूपः। तां वृद्धिं संवत्सरेऽतिक्रान्ते भवां न गृह्णीयादिति हरदत्तः। मासमतिक्रम्य संवत्सरवृद्धिर्न ग्राह्येत्येके मन्यन्ते।... यावद्धनसंव्यवहारस्तावद्ग्राह्यैवेति गौतमः, इति मस्करी। विनिष्कृत्य स्वधनादारभ्योपनयेदित्यर्थ इति मेधातिथिः। 'न चादृष्टां विनिर्हरेत्' शास्त्रे या न दृष्टा दशैकादशिकाद्या पञ्चकादधिका न तां गृह्णीयात्। अदृष्टामनुपचितामित्यर्थः। यावद्बहुभिर्मासैर्न संहतीभूता तावन्न ग्राह्या दिवसबृद्धिर्मासवृद्धिः। ननु तु 'मासस्य वृद्धिं गृह्णीयात्' (मनु. ८।१४२) इत्युक्तम्। परिमाणं मासिकम्। तद्वृद्धेर्न ग्रहणम्।... 'कारिता' इत्थं कृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाधमर्णौ कुरुतः। 'कायिका' कायकर्मणा संशोध्या, इति मेधातिथिः (मनु. ८।१५३)। हलायुधस्तु यदाऽशान्तलाभे—अव्यवस्थितवृद्धौ ऋणे लाभग्रहणवासनावानुत्तमर्णः स्यात्, तदा संवत्सरादर्वागेव लाभं गृह्णीयात्, न तु संवत्सरादूर्ध्वम्[3]।

मासादारभ्य संवत्सरं यावद्वृद्धिर्नियमनीया। न तु संवत्सरादूर्ध्वमिति यदि वृद्ध्या धारयसि तदेव प्रयच्छतीति नियमः कर्त्तव्यः[4]। पुराणे पणिकं मासमित्येके। एतत्सङ्करजात्यधमर्णविषयम्, चातुर्वर्ण्ये द्विकशतादीनां धर्म्यत्वाभिधानात्[5]। तूले द्विगुणं धान्यं त्रिगुणमेवं च वर्धते, तथोर्णाकार्पासः संवत्सरेण तृणशलाकं घृतगुडलवणमष्टगुणम्[6]। अत्र नारदः

**ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः।**
**देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते॥**
**द्विगुणं त्रिगुणं चैव तथाऽन्यस्मिंश्चतुर्गुणम्।**
**तथाऽष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठते॥** ४।१०५-१०६॥

आधिस्तु भुज्यते तावद्यावन्न प्रदीयते[7]। अन्त्यवृद्धौ प्रविष्टायामपि। न स्थावरमाधिमृते वचनात्। 'ऋते वचनात्' द्विगुणे धने प्रविष्टे तव आधिं दास्यामीति यदि पूर्वमेव नोक्तं भवेदित्यर्थः[8]। यथाह **मनुः**

---

1. विष्णुः ६।१-२।
2. गौ. १२।२७।
3. विवादरत्नाकरः १०।
4. नारद. ४।१०२-१०४; बृहस्पति. १०।८-९; कात्या. ४९८।
5. विवादरत्नाकरः, १२।
6. बृह. १०।११, १३; कात्या. ५०१।
7. **आधिधनं यावन्न प्रदीयते तावत्तदुत्तमर्णेनाऽऽधिश्चिरमपि भुज्यते इत्यर्थः। तेन द्वैगुण्यादिप्रत्याकलनेऽपि वृद्धिर्भोगरूपा भवत्येवेति तात्पर्यम्। पूर्णवाक्यमृणादानप्रकरणे यदर्थकं**

कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति ।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ ८।१५२ ॥

अनुसरन्त्यनुधावन्त्यनुवर्तते सर्व एवार्थाः एतमिति 'अनुसारः' शास्त्रोदितः समाचारः । स च विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तः । तस्माद् 'अधिका' वृद्धिः 'कृता' यावत्तथाधमर्णेनोत्तमर्णस्य 'न सिद्ध्यति' । कुतः 'व्यतिरिक्ता' यतः शास्त्र-बाह्येत्यर्थः । अर्थवादान्तरमाह—कुसीदपथमाहुस्तमिति । कुपुरुषा यत्र सीदन्ति तत् कुसीदम् । धर्मेण तद्धर्माणो गृह्यन्ते । कुसीदानामयं पन्था मार्गो व्यवहारो न साधूनामिति निन्दा ।

अथाकृतवृद्धिः । तत्र कात्यायनः

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥
पण्यं गृहीत्वा यो मूल्यमदत्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥
निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च ।
याच्यमानं न दद्याच्चेद् वर्धते पञ्चकं शतम् ।
प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ॥
याच्यमानं न दत्तं चेद्वर्धते पञ्चकं शतम् ।
यो याचितकमादाय तददत्वा दिशं व्रजेत् ॥
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ।
स्वदेशस्थोऽपि वा यस्तु न दद्याद्याचितोऽसकृत् ॥
स तत्र कारितां वृद्धिमनिच्छन्नपि चावहेत् ॥
(५०३, ५०७, ५०६, ५०५, ५०२, ५०४)

उद्धारोऽत्र कलामव्यवस्थाप्य गृहीतं धनम्। 'दिशं व्रजेत्' अर्थिसादेश्यं त्यजेत् । वृद्धिं दद्युः सर्वे वर्णा वा स्वप्रतिपन्नाम्। अकृतामपि वत्सरातिक्रमेण यथाभिहिताम्[1] ।

अथ परमवृद्धिस्तत्र गौतम[2]:—चिरस्थाने द्वैगुण्यं प्रयोगस्य । मनुराह—

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता ।
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ ८।१५१ ।

---

लिखितं तदर्थोऽस्य यद्यपि स्वरसतः प्रतिभाति, तथाप्यनेकनिबन्धृभिः तदर्थतयैवोत्तरार्थस्य संमतत्वात् तथैवाऽत्राऽपि लिखितम्, इति विवादरत्नाकरः (१४)।

8. भोगो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते । मूलं च सोदयं पश्चाद्वार्धुष्यं तद्विगर्हितम् । बृह. १०।२१।

1. विष्णु. ६।३।

2. गौ. १२।२८।

वृद्धया धनप्रयोगः कुसीदं तत्र या वृद्धिः सकृद्गृहीता सा द्वैगुण्यं नातिक्रामति मूलवृद्धिर्द्विगुणैव भवति। प्रतिदिनप्रतिमासादिग्राह्येति तात्पर्यम्। धान्ये पुनर्वृद्धयादि प्रयुक्ते, सदे वृक्षफले, लूयत इति लव ऊर्णालोम तस्मिन्, वाहनीये च बलीवर्दादौ प्रयुक्ते चिरेणापि कालेन मूलधान्यादिना सह पञ्चगुणतां नातिक्रामेदिति।

सदं फलं वार्क्षम्, धान्यस्य पृथगुपादानात्। 'लवः' उदीच्येषूर्णाविषयः प्रसिद्धः। 'वाह्यो' गर्दभोष्ट्रबलीवर्दादिः। धान्ये ब्रीहियवादौ 'सदे' वृक्षसमुत्थफलादौ। 'लवे' मेषादिसमुत्थोर्णादिचामरादौ, लूयत इति व्युत्पत्त्या। 'वाह्ये' तुरगादौ वाहनीयताया हिरण्यवद् द्विकशतादिमर्यादया वृद्धया प्रयुक्ते सति न पञ्चगुणत्वं वृद्धिरतिक्रामाति। संभवति कश्चिदेतादृशो यो धान्यशतमश्वशतमेव दातुमर्हति नाधिकम्।

अत्र च धान्ये पञ्चगुणमुक्तम्; बृहस्पतिना चतुर्गुणमुक्तम्; विष्णुमरीचिवसिष्ठहारीतैश्च त्रिगुणमुक्तम्; तदत्राधमर्णापकृष्टगुणत्वमध्यगुणोत्कृष्टगुणत्वैः व्यवस्था, महार्घसमार्घधान्यके कालदेशभेदेन वा व्यवस्था। कुसीदं पशूपजलोमक्षेत्रसदवाह्येषु नातिपञ्चगुणम्[1]। हिरण्ये द्विगुणा वस्त्रकुप्यके त्रिगुणा धान्ये सदवाह्यलवेषु चतुर्गुणा वृद्धिः प्रोक्ता[2]। हिरण्यस्य परा वृद्धिर्द्विगुणा। धान्यस्य त्रिगुणा। वस्त्रस्य चतुर्गुणा। रसस्याष्टगुणा[3]। पशुस्त्रीणां सन्ततिरेव वृद्धिः। पशूनां स्त्रीणां पोषणासमर्थस्य तत्पुष्टिसंततिकामस्य प्रयोगः संभवति। ग्रहणं च क्षीरपरिचर्यार्थिनः[4]। द्विगुणं हिरण्यं त्रिगुणं च धान्यम्। धान्येनैव रसा व्याख्याताः। पुष्पमूलफलानि च। तुलाधृतमष्टगुणमिति वसिष्ठः[5]। किण्वकार्पाससूत्रवर्मचर्मायुधेष्टकाङ्गाराणामक्षया। अनुक्तानां द्विगुणा[6]। तैलानां मद्यानां सर्पिषां गुडस्य लवणस्य च वृद्धिरष्टगुणा ज्ञेया[7]। तृणकाष्ठेष्टकासूत्रकिण्वपाषाणचर्मणाम् हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते[8]।

**वृद्धिनिषेधो**ऽपि व्याख्येयः। अत्र **याज्ञवल्क्यः**

**दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।**
**मध्यस्थस्थापितं तत्स्याद् वर्धते न ततः परम् ॥ २।४४ ॥**

**नारदः**

**पण्यमूल्यं भृतिर्न्यासो दण्डो यच्चाभिहारिकम्।**
**वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥ २।३६ ॥**

1. गौ. १२।३३।
2. बृह. १०।१७।
3. विष्णु. ६।११-१५।
4. याज्ञ. २।३९।
5. वसिष्ठ. २।४४-४७।
6. विष्णु. ६।१६-१७।
7. कात्या. ५११।
8. बृह. १०।२३।

कात्यायनः

चर्मसस्यासवद्यूतपण्यमूल्ये च सर्वदा ।
स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु च ॥ ५०८ ॥

संवर्तः

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथा स्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता ॥

व्यासः

प्रातिभाव्यं भुक्तबन्धनमगृहीतं च दित्सतम् ।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥

**अथाधिविधिः**, स च चतुर्विधः–स्वरूपप्रकारकालप्रमाणैः । स्वरूपप्रकारकालप्रमाणैश्चतुष्ट्वं तद्भेदेनाष्टत्वमित्यपि पक्षः । तत्र स्वरूपमेव द्विविधं स्थावरजङ्गमभेदेन । प्रकारश्च द्विविधो गोप्यभोग्यभेदेन । कालो द्विविधः अवधिनियमानियमाभ्याम् । प्रमाणं द्विविधं लेख्यसाक्षिभेदेन[1] । न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्[2] । तत्र भोग्यमाधिमधिकृत्येदमुच्यते–"न त्वेवाधौ सोपकार" इति । विविधः सोपकारः–सारिणी गौः क्षेत्रारामादि च । तस्मिन् भुज्यमाने । कुसीदे भवा कौसीदी अनन्तरोक्ता वृद्धिः, तां नाप्नुयात् । वस्त्रालङ्कारादिर्गोप्याधिर्बलान्न भोक्तव्यः भुञ्जानो वृद्धिमुत्सृजेत्प्राङ्मूल्येनात्रैनं तोषयेत् । यद्वा योगेनासारतामाधौ नीते सारावस्थाधिमूल्यदानेन स्वामिनं तोषयेदन्यथाबन्धकश्चौरः स्यात्[3] ।

आधिर्बन्धकः, उपनिधीयत इत्युपनिधिः प्रीत्या भोगार्थमर्पितं द्रव्यम्[4] । नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवाऽत्रोपनिधिशब्देन गृह्येते । एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः । यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्यौ समर्पणीयावित्यर्थः ।

दृष्यमाना गौरुष्ट्रोऽश्वश्च वहन्दमनार्थं च प्रयुक्तो बलीवर्दादिरेते प्रीत्यान्येन तु भुज्यमानाः कदाचिदपि स्वामिनो न नश्यन्ति । यत्किञ्चिद्धनजातं समक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दश वर्षाणि भुज्यमानं स्वामी प्रेक्षते मा भुङ्क्ष्वेत्यादिप्रतिषेधोक्तिं न रचयति नासौ तल्लब्धुं योग्यो भवति । तस्य तत्र स्वाम्यं निवर्तते । जडो बुद्धिविमलः न्यूनषोडशवर्षः पोगण्डः । स धनस्वामी यदि जडः पोगण्डश्च न भवति तदीयदर्शनविषये च तद्धनं भुज्यते तदा स्वामिनो व्यवहारेण नष्टं ततो भोक्तुरेव

1. आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः । जङ्गमः स्थावरश्चैव गोप्यो योग्यस्तथैव च ॥ यादृच्छिकः सावधिको लेख्यारूढोऽसाक्षिमान् । बृह. १०।३८-३९।
2. मनु. ८।१४३।
3. मनु. ८।१४४।
4. मनु. ८।१४५।

तद्धनं भवति[1]। यो वृद्ध्या दत्तं बन्धं स्वाम्यनुज्ञाव्यतिरेकेण मूर्खो निह्नवेन भुङ्क्ते तेन तस्य भोगस्य संशुद्ध्यर्थमर्धवृद्धिर्भोक्तव्या। बलभोगेन तु भोक्तव्ये बलादधिभुञ्जाने सति सर्ववृद्धित्याग एव[2]।

धनप्रयोगे द्वौ विश्वासहेतू–प्रतिभूराधिश्च। आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णोऽधिक्रियते, आधीयत इत्याधिः। स च द्विविधः–गोप्यो भोग्यश्च[3]। एवं चतुर्विधस्याधेर्विशेषमाह **याज्ञवल्क्यः**

**आधिःप्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।**
**काले कालकृतो नश्येत्फलभोग्यो न नश्यति ॥ २।५८।**

अधमर्णस्य धनं प्रयोक्तुः स्वं भवति। कृतकालस्य गोप्यस्य भोगस्य च तत्कालातिक्रमे नाश उक्तः। अकृतकालस्य भोग्यस्य नाशाभाव उक्तः। पारिशेष्या– दाधिः प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते। द्वैगुण्यातिक्रमेण निरूपित-कालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्त्तव्यम्[4]। नन्वाधिः प्रणश्ये-दित्यनुपपन्नम्। अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात्। धनिनश्च स्वत्व-हेतोः प्रतिग्रहक्रयादेरभावात् मनुवचनविरोधाच्च[5]। कालसंरोधाच्चिरकालाव-स्थानादाधेर्न निसर्गोऽस्ति, नान्यत्राधीकरणमस्ति, न च विक्रयः। एवमाधीकरण-विक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यते। उच्यते–आधीकरणमेव लोके सोपाधिक-स्वत्वनिवृत्तिहेतुः। आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः। तत्र धनद्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्व-निवृत्तिः उत्तमर्णस्य चात्यन्तिकं स्वत्वं भवति। भोग्यस्याधेश्चिरकालावस्थानेऽप्याधी-करणविक्रयनिषेधेन धनिनः स्वत्वं नास्तीति। आधिः प्रणश्येद्द्विगुणे इति तु गोप्याधिं प्रत्युच्यत इति सर्वमविरुद्धम्[6]।

किं च, गोप्याधेस्ताम्रकटाहादेरुपभोगेन वृद्धिर्भवति। अल्पेऽपि उपभोगे महत्यपि वृद्धिर्हातव्या, समयातिक्रमात्। उपकारिणि बलीवर्दताम्रकटाहादौ भोग्याधौ सवृद्धिके हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिः। विकृतिं गतः ताम्रकटाहादिश्छिद्रभेदनादिना पूर्ववत्कृत्वा देयः। तत्र गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः। उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या। आत्यन्तिकं नाशं प्राप्तः, सोऽपि देयो मूल्यादिद्वारेण। तद्दाने सवृद्धिकं

1. मनु. ८।१४४-१४८।
2. मनु. ८।१५०।
3. नारद. १।१२४-१२५।
4. बृहस्पति. ११।२७-२८।
5. मनु. ८।१४३।
6. मनु. ८।१४४।

मूल्यं लभते धनी। यदा न ददाति तदा मूलनाशः[1]। दैवकृताद्विनाशाद्विना, तथा स्वापराधरहिताद्राजकृतात्। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेनऽऽध्यन्तरं वा[2]। भोग्याधौ विशेषमाह–

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥
(याज्ञ. २।६४)

यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतं तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने द्रव्ये द्विगुणे धनिनः प्रविष्टे धनिनाऽऽधिर्मोक्तव्यः। यदि वादावेवाधौ दत्ते 'द्विगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्यः' इति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणं तदा, आधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः। अधिकोपभोगे तदपि देयम्। सर्वथा सवृद्धिमूलर्णापाकरणार्थाध्युपभोगविषयमिदं वचनम्। तमेनं क्षयाधिमाचक्षते लौकिकाः। यत्र तु वृद्ध्यर्थ एवाध्युपभोग इति परिभाषा, तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूलदानं तावदुपभुङ्क्त एवाधिम्[3]। फलभोग्यः बन्धक आधिः। स च द्विविधः–सवृद्धिकमूलापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च। तत्र च सवृद्धिमूलापाकरणार्थं बन्धं पूर्णकालमाप्नुयादृणी। यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टं तदा बन्धमाप्नुयात्। वृद्धिमात्रापाकरणार्थं तु बन्धकं सामकं दत्त्वाप्नुयादृणी।

अस्यापवादमाह–यदि प्रकर्षितं तत्स्यात्। तत् बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात् 'तदा न धनभाग्यधनी' सामकं न लभेत् धनी। मूलमदत्त्वैव ऋणी बन्धमवाप्नुयादिति यावत्। अथ त्वप्रकर्षितं तद्बन्धकं वृद्धयेऽप्यपर्याप्तम्, तदा सामकं दत्वाऽपि बन्धं न लभेताधमर्णः। वृद्धिशेषमपि दत्त्वैव लभेतेत्यर्थः। पुनरुभयत्रापवादमाह–'परस्परमतं विना' उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे 'यदि प्रकर्षितम्' इत्याद्युक्तम्, परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूलदानं तावदुपभुङ्क्ते धनी, निकृष्टमपि मूलमात्रदाने नैवाधमर्णो लभत इति मिताक्षरा।

कात्यायनः

अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः॥ ५२५॥
यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात्पूर्वसाहसम्॥ ५२६॥

---

1. विनष्टे मूलनाशः स्याद्दैवराजकृतादृते- नारद. १।१२६।
2. याज्ञ. २।५९।
3. बृह. ११।३३-३४।

आध्युपभोगे वृद्ध्यभावः । देवराजोपघातादृते विनष्टमाधिमुत्तमर्णो दद्यात् । विनष्टे मूलहानिः स्याद्दैवराजकृतादृते[1] । नाधिः सोपकारः सीदेन्न चास्य मूल्यं वर्धेत । निरुपकारः सीदेन्मूल्यं चास्य वर्धेत । उपस्थितस्याधिमप्रयच्छतो द्वादशपणो दण्डः । प्रयोजकासन्निधाने वा ग्रामवृद्धेषु स्थापयित्वा निष्क्रयमाधिं प्रतिपद्येत । निवृत्त-वृद्धिको वाधिस्तत्कालकृतमूल्यस्तत्रैवावतिष्ठेत । अनाशविनाशकरणाधिष्ठितो वा । धारणकसंनिधाने वा विनाशभयादुद्गतार्घं धर्मस्थानुज्ञातो विक्रीणीत; आधिपाल-प्रत्ययो वा । स्थावरस्तु प्रयासभोग्यः फलभोग्यो वा प्रक्षेपवृद्धिमूल्यं शुद्धमाजीवं मूल्यक्षयेणोपनयेत् । अनिसृष्टोपभोक्ता मूल्यशुद्धमाजीवं बन्धं च दद्यात्[2] ।

अत्र भोग्यो द्विविधः सप्रत्ययभोग्याधिः अप्रत्ययभोग्याधिश्चेति । सवृद्धिकमूल्याप-करणार्थो यः स सप्रत्ययभोग्याधिरित्युच्यते । वृद्धिमात्रापकरणार्थो यः सोऽप्रत्यय-भोग्याधिरित्युच्यते । तत्र सप्रत्ययभोग्याधिमाह व्यासः । काञ्चिद्वृद्धिं समाभाष्य द्रव्यमादाय तत्त्वतः । मत्क्षेत्रं भुंक्ष्व वृद्ध्यर्थमधिकं मूलनाशनम् । इत्याधिः प्रत्ययाधिः स्याद्वैगुण्ये निष्क्रयो भवेत् ।... अत्र भारद्वाजः । ...यत्तु तत्राधिकं वृद्धेर्देयं तदृणिने पुनः । हीनं यावत्तु तद्वृद्धे तावत्सम्पूरयेदृणी[3] ।

रक्ष्यमाणोऽपि यद्याधिः कालेनासारतामियात्, अन्य आधिः कार्योऽथवा धनिने धनं देयम्[4] । यथाऽऽह **बृहस्पतिः**

**बन्धहस्तस्य यद्देयं चित्रेण चरितेन वा ।**
**अदत्तेऽर्थेऽखिले बन्धं नाकामो दाप्यते क्वचित् ॥**
**धनं मूलीकृतं दत्वा यदाधिं प्रार्थयेदृणी ।**
**तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी ॥ १०।४२, ६६ ॥**
**क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।**
**मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥**
**परिभाव्य यदा क्षेत्रं प्रदद्याद्धनिके ऋणी ।**
**तदा तच्छान्तलाभेऽर्थे मोक्तव्यमिति निश्चयः ॥**
**प्रविष्टे सोदये द्रव्ये प्रदातव्यं पुनर्मम ।**
**कुसीदादिविधिस्त्वेष धर्म्यः संपरिकीर्तितः ॥ १०।६७-६९ ॥**

---

1. विष्णु. ६।५-६; नारद. ४।१२६; बृह. १०।४१, ४६; व्य. नि. पृ. २३५ अत्र व्यासवचनम् । **ये च शस्त्रमाजीवन्ति । ये चाधिम् । भिषक् । बार्धुषिकः** । आप. ध. सू. १।६।१८-२२ ।
2. कौ. ३।१२।११-१९ ।
3. स. वि. पृ. २३३-२३४; व्य. नि. पृ. २४२-२४३ ।
4. नारद. ४।१३०; कात्या. ५२४ ।

आधिमुत्तमर्णो दद्यादित्यनुवृत्तौ विष्णुः (६।७), अन्त्यवृद्धौ प्रविष्टायामपि । गृहीतधनप्रवेशार्थमेव यत्स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात्[1] । आध्यनन्तरं विक्रये सति प्राक्तनं बलवत्तरम् । यत्रैकदिवसे दानाधमनविक्रयं कृतं त्रयोऽपि तद्धनं धर्म्यं यथांशतो विभजेयुः । आधिप्रामाण्ये क्षेत्रं गृहं वा मर्यादाचिह्नितं भवेत्, ग्रामादयश्च लिख्यन्ते[2] । ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ, बलात्कारं विना कृता यस्य भुक्तिः फलं तस्य[3] । भुक्तेः प्रामाण्यं बलवत्तरम्[4] आधानं विक्रयः दानं यदा लेख्यसाक्ष्यकृतम्, एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम्[5] ।

गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत्स वध्यः । ऊनां चेत् षोडशसुवर्णं दण्ड्यः (विष्णु. ५।१८१-१८२) । यथाऽऽह बृहस्पतिः

सप्तहस्तेन दण्डेन त्रिंशद्दण्डा निवर्तनम् ।
दश तान्येव गोचर्म दत्वा स्वर्गे महीयते ॥
(अपरार्कः पृ. ३६७)

निध्यन्वाधियाचितावक्रीताधयो नष्टाः सर्वाननिन्दितान्पुरुषापराधेन (गौ. १२।३९) । पुरुषापराधस्तु यदि धारयितारः स्वद्रव्यवन्न रक्षयेयुः, यद्यग्निभयादौ स्वद्रव्यं गृहीत्वा निध्याद्युपेक्षेरन् स्वद्रव्यं वा गुप्तं निधाय बहिर्निध्यादि स्थापयेयुः । एतस्मिन् पुरुषापराधे सति दद्युरेव । उपस्थितस्याधिमप्रयच्छतो द्वादशपणो दण्डः[6] । धनप्रयोक्तुर्देशान्तरगमनादिना सान्निध्याभावे, ग्रामवृद्धेषु निष्क्रयं देयं मूल्यम्, स्थापयित्वा आधिं प्रतिगृह्णीयात् । आधिः, निवृत्तवृद्धिकः निष्क्रयस्थापनकालात्प्रभृति-वृद्धिरहितः, तत्कालकृतमूल्यः कालान्तरविनाशशङ्कायां धारणकरोपस्थानकाल एव व्यवस्थापितमूल्यः, तत्रैव प्रयोजककुल एव, अवतिष्ठेत । अविनाशस्य च यत् करणं साधनं तद्युक्तो वा, कार्यम् । अधमर्णस्य सन्निधाने वा, विनाशभयादुद्गतार्घ-मुद्रिक्तमूल्यं यथा भवति तथा, धर्मस्थानुज्ञातो विक्रीणीत ।

अननुज्ञाताधिभोक्ता मूल्याच्छुद्धमाजीवं बन्धञ्च दद्यादाधातुर्भोगमूल्यं राज्ञो दण्डं च दद्यात् स्वप्रयुक्तं मूल्यं भोगमूल्यदण्डतष्टावशिष्टमेव लभेत न तु सर्वम् । शेषमुपनिधिना व्याख्येयम् ।

---

1. वसिष्ठ., स्मृ. चं. २ पृ. १४५; व्य. नि. पृ. २४५; विष्णु. ६।९ ।
2. कात्या., स. वि. पृ. २३६ ।
3. विष्णुध. सू. ५।१८५, परा. मा. ३।२३३।
क्षेत्रमेकं द्वयोर्बन्धे यद्दत्तं समकालिकम् ।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥
बृह. परा. मा. ३ पृ. २३३; स्मृ. चं. २ पृ. १४४; व्य. म. पृ. १७३ ।
4. याज्ञ. २।६०; नारद. ४।१३९ ।
5. कात्या. ५।१८; परा. मा. ३ पृ. २३५; स्मृ. चं. २ पृ. १४४; स. वि. पृ. २३७ ।
6. कौ. ३।१२ ।

नानाभूतानामृणानां समवाये, एकं धारणिकम्, द्वौ धनिकौ, युगपत् एककाले, नाभिवदेयाताम्, धारणिकश्चेत् स्वदेशमपहाय विदेशं न प्रतिष्ठते । तत्रापीति बहुऋणसमवायेऽपि, गृहीतर्णक्रमेण प्रतिपादयेद् ऋणमृणिकः । राजश्रोत्रियद्रव्यं वा पूर्वं प्रतिपादयेत् । जायापत्योः परस्परकृतमृणं व्यवहारेण साधयितुं न योग्यम् । तथा पितापुत्रयोरविभक्तानां भ्रातॄणाञ्च परस्परकृतमृणमसाध्यम् ।

कर्षकाः राजपुरुषाश्च, कर्मकालेषु अग्राह्याः । स्त्री च अग्राह्या, कीदृशी, पतिकृतमृणमप्रतिश्राविणी अहं दास्यामीत्येनङ्गीकारिणी । अङ्गीकारिणी तु ग्राह्यैव । तत्रापवादः—अन्यत्र गोपालकार्धसीतिकेभ्यः । कृषिकर्मसिद्धसीताफलार्धभागिनस्तेषां स्त्रीप्रधानानां स्त्रियं विना। सा तु अप्रतिश्राविण्यपि ग्राह्यैव । उत्तमर्णे मृते तदपत्याय प्रयच्छति । सगोत्राय च । श्मशाने निवपति[1] । चतुष्पथे च । कक्षानादीपयति (कौशिकसूत्रम् ४६।३६-४०) ।

आधिसिद्धौ भोगोऽनिवार्यः । समर्पितस्यापि स्वीकरणेनोपभोग्यत्वसिद्धिः स्यात् । यत्नेनाऽपि तु रक्ष्यमाणोऽप्यसारतां यातश्चेत् यदि पास्यमानोऽप्यसारीभूतस्ततोऽन्य आधेयः स्यात्[2] । अत्र बृहस्पतिः

न भुङ्क्ते य स्वमाधानं न दद्यान्नं निवेदयेत् ।
प्रमीतसाक्षिऋणिकं तस्य लेख्यमपार्थकम् ॥
गृहं वार्यापणं धान्यं पशुस्त्रीवाहनानि च ।
उपेक्षया विनश्यन्ति यान्ति चासारतां तथा ॥ १०।५३ ॥
क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥
तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत् ।
प्रदाने विक्रये चैव विधिः संपरिकीर्तितः ॥ १०।४४-४५ ॥

कात्यायनश्च

आधिमेकं द्वयोर्यत्र कुर्यात्का प्रतिपद्भवेत् ।
तयोःपूर्वतरं ग्राह्यमाधाता चौरदण्डभाक् ॥
आधानं विक्रयो दानं साक्षिलेख्यकृतं तथा ।
एकक्रियानिबन्धेन लेख्यं तत्रापहारकम् ॥
यस्तु सर्वस्वमादिश्य प्राक्पश्चान्नामचिह्नितम् ।
आदध्यात्तत्कथं न स्याच्चिह्नितं बलवत्तरम् ॥
अनिर्दिष्टं च निर्दिष्टमेकत्र च विशेषितम् ।

---

1. द्रष्टव्यानि वचनानि—बृह. १०।४९, ७०, ७१, ५०, ८५; मनु. ८।१४३; याज्ञ. २।६१, ६३; कात्या. ५२९ ।
2. याज्ञ. २।६० ।

विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् ॥
यो विद्यमानं प्रधनमनिर्दिष्टं स्वरूपकम् ।
आकाशबन्धमादद्यादिष्टं नैव तद्भवेत् ॥
यद्यत्तदास्य विद्येत तदादिष्टं विनिर्दिशेत् ।
(५१७, ५१८, ५२१, ५२२, ५१९, ५२०)

यत्रैका क्रिया साक्षिमती, अन्या च साक्षिलेख्यवती, तत्र लेख्यं साक्षिमदपहारकं बलवत्, आधित्वसाधकमिति यावत् । एकक्रियानिबन्धेन लेख्ये निवेशेन हेतुना । हलायुधस्तु यत्राधानक्रिया विक्रयक्रिया वा साक्ष्यादिगुणवल्लेख्यवती, तत्रैकक्रिया-निबन्धेनैकेन श्रेष्ठेन क्रियाया निबन्धेन निवेशेन लेख्यमपहारकं भोगाभावमात्रेणा-धातुर्विमतेर्बाधकमित्याह। अत्र च 'न भुङ्क्ते यः स्वमाधानमि'त्यादिना विरोधः[1] । यः प्रथमं सर्वस्वं बन्धकत्वेनादिश्य पश्चाल्लेखनसमये नामविशेषेण लेखयति, तत्रोत्तर-कालं विवादे सति, यद्यावन्नामतो । लिखितं तत्तावत्प्रमाणम् । नोद्दिष्टमात्रमित्यर्थः । प्रधनमत्र प्रकृष्टं धनम् ।

अधुना प्रतिभूविधिर्वक्ष्यामः । यो मनुष्यो यस्य दर्शनाय प्रतिभूस्तिष्ठेत् धनदान-काले ममायमधमर्णो दर्शनीय इति स तं तस्मिन्काल उत्तमर्णस्यादर्शयंस्तद्धनं दातुं यतेत । प्रतिभूत्वेन यद्देयं धनं तत्प्रातिभाव्यम्, वृथादानं परिहासनिमित्तं दण्ड्यादिभ्यो देयत्वेन पित्राङ्गीकृतम्, द्यूतनिमित्तं च, दण्डं यद्देयं दण्डम्, शुल्कं घट्टादिदेयं तदवशेषञ्च पितृसंबन्धिनं पितरि मृते पुत्रो दातुं नार्हति । सुरानिमित्तं च यद्देयं दण्डं प्रातिभाव्यं न पुत्रो दातुमर्हतीति योऽयं पूर्णोपदेशः स दर्शनप्रतिभुवः पितुर्देयो ज्ञेयः । दानप्रतिभुवि तु पितरि मृते पुत्रमृणं दापयेत् । अदातरि दानप्रतिभुवोऽन्यस्मिन् दर्शनप्रतिभुवि प्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्यकारणमूलशोधनोचितधनग्रहणं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केन हेतुना धनं प्राप्तुमिच्छेत् । असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निरादिष्टधनोऽधमर्णेन निसृष्टधनो यावता धनेनासौ प्रतिभू-स्तच्छोधनपर्याप्तधनस्तदात्मधनादेव तद्धनं निरादिष्टोऽत्र निरादिष्टधनपुत्रो लक्षण-योच्यते । ऋणमुत्तमर्णाय दद्यादिति शास्त्रसंप्रदायः[2] ।

ऋणप्रयोगे द्विविधो विश्रम्भः–प्रतिभूराधिर्वा । त्रिविधश्च प्रतिभूः–दर्शने प्रत्यये दाने च । तत्र दर्शनप्रतिभुवमधिकृत्येदमाह–

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयन्स तं तस्य प्रयच्छेत् स्वधनादृणम् ॥
(मनु. ८।१५८)

1. विवादरत्नाकरः ३९; विष्णु. ५।१८१-१८४; व्य प्र. ३१३; स्मृ. चं. ३३४ ।
2. मनु. ८।१५८–१६२, कुल्लूकभट्टः ।

यस्य दर्शनाय प्रतिभूस्तिष्ठेदमुष्मिन्प्रदेशे मयैष तव दर्शनीयः–स तथाऽकुर्वन्स्व-धनात्तस्य ऋणं यतेत, प्रयत्नं कुर्याद्दातुमिति शेषः । दद्यादिति यावत् । ऋणग्रहणं व्यवहारवस्तुमात्रोपलक्षणार्थम् । तेन यावन्तोऽर्थविषया व्यवहारेऽनुक्राम्यन्ते तत्तद्वस्तु दद्यात् दर्शनेनान्यतरेणाभियुक्तः । वाक्पारुष्यसङ्ग्रहणादौ पणपरिभाषा कर्त्तव्या यदि न दर्शितं चेत्तन्मया दातव्यम् । अकृतायां तु परिभाषायां राजदंण्डमेव दाप्यः । शरीरे तु निग्रहान्तं विक्रयणं सुवर्णम् ।

परिहासादिनिमित्तं प्रतिश्रवणम्–'कुरु कार्यमिदं परिनिष्पन्ने इदं दास्यामीति' निष्पादिते कार्ये पित्राऽदत्ते प्रतिश्रुते कथञ्चित्पुत्रो न दाप्यते । एवं पारितोषिकादि-बंदिपरिहासादिविषयम् । यं चाहममुष्माद्वणिज एतस्येयद्दापये इति–तत्र तु मनुष्ये प्रेषिते कथञ्चिद्दातुमघटितेऽसंनिधानाद्वणिजोऽन्यतोऽपि कारणाद्दत्तान्तरे पितरि मृते पुत्रो न दाप्यते । अत्रैवेदमप्यवधेयं यन्मद्यादिना मत्तः, उन्मत्तः, व्याध्यादिपीडितोऽ-पहतोऽस्वतन्त्रबालवृद्धैरस्वतन्त्रत्त्वेन पितृभ्रातृनियुक्तादिव्यतिरेकेण कृत ऋणादान-व्यवहारे न सिद्ध्यति, इति मनुः

**मत्तोन्मत्तार्ताध्यधीनैर्बालेन स्थविरेण वा ।**
**असंबद्धकृतश्चैव व्यवहारे न सिद्ध्यति ॥ ८।१६३ ॥**

कार्यपर्यायो व्यवहारशब्दः । यत्किञ्चिद्दानाधानविक्रयादिकार्यं लेख्यादि च प्रमाणम् । एतैः कृतं तन्न सिद्ध्यति कृतमप्यकृतं भवति ।

यौगिकत्वान्मत्तादिशब्दानां यावन्मदादियुक्तास्तावत्तत्प्रमाणाभावबोधकोऽयं प्रतिषेधः । प्रदर्शनार्थं चैतदप्रकृतिस्थत्वमात्रस्य । यथोक्तम्–"कुर्यादप्रतिकृतिंगतः । तया प्रकृतमस्याहुरस्वतन्त्रे सहेतुत" इति । अप्रकृतिस्थश्चोच्यते उपप्लुतबुद्धिः स्वकार्य-विवेचनेऽसमर्थः । उक्तञ्च–

**कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः ।**
**रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिंगताः ॥**
**( नारद. १।४१ )**

कामादीनां द्वन्द्वं कृत्वा पीडितशब्देन तैः पीडिता इति साधनं कृतेति तृतीया-समासः। तेन पीडितस्य प्रतिषेधः । स चायं संप्रति मन्मथाधिष्ठितः स्त्रीपरिरम्भणादि-परीप्समानो भवति । 'अभियुक्ता' द्यूतादिक्रियान्तरे दत्तावधानाः । एते हि तत्र संसजन्तः स्वामिनोऽपि स्व इत्यस्य प्रातिभाव्यादिक्रियानिश्चयस्यानवधानान्न प्रमाणम्। यतः क्रियान्तरावहिततया परेण पृच्छ्यमाना इदमस्मै दीयतामङ्गीकृतं वा प्राति-भाव्यमियति वस्तुनीदृशेऽनेन च प्रकारेणोच्यत इत्येवमादि निपुणतो नावधारयन्ति–प्रकृतिक्रियाविघ्नो वा माभूदस्मिन्निहस्थ इत्यभिप्रायमभ्युपगच्छन्ति–गच्छ त्वं

यद्ब्रवीषि तत्सर्वमनुष्ठीयत इति पारतन्त्र्यं वाऽङ्गीकुर्वन्ति । तदुक्तम्–'अस्वतन्त्रे सहेतुत' इति ।

येन हेतुनाऽस्वतन्त्रोऽप्रमाणं सोऽस्य स्वतन्त्रस्यापि हेतुर्विद्यते । यथाऽस्वतन्त्रतः स्वमपि न विनियुङ्क्ते एवमपि कामादिवशीकृतोऽर्थविवेकं कार्याणां च गुणदोषौ क्रियमाणावनधिगच्छन्नस्वतन्त्रेण तुल्यो भवति । 'आर्तो' व्याख्यातः । अभियुक्तार्तशब्दौ च धर्मिवचनौ लक्षणया धर्मपरौ विज्ञेयौ–अभियोगोऽभियुक्त आतुर इति । व्यसनानि कामक्रोधसमुत्थितानि मृगयादीनि । अभियुक्तव्यसन्यपि काञ्चित्क्रियां तात्पर्येण कुर्वन्नुच्यते । अव्यसन्यप्रवृत्तोऽपि तद्ध्यानरतः । अथवा कामक्रोधशब्दौ कामिनि क्रोधवति वर्तेते ।

अत्र च पक्षे भयव्यसनशब्दौ कृतद्वन्द्वौ तृतीयान्तौ पीडितशब्देन सम्बध्येते । अन्ये तु स्वतन्त्रा एव । 'रागद्वेषाभ्यां परीता' व्याप्ताः । रागः क्वचिदात्मीयेष्वभिषङ्ग आत्मीयतया परिगृहीतस्य कस्यचित्संबन्धिनोऽपि ध्यायतो वाऽभिप्रेतसिद्धौ मनसः परितोषो रागः । तद्विपरीतो द्वेषविषयः । परिपन्थिन्यनात्मीयतया परिगृहीते तदस्वास्थ्यतद्विपर्यायात्परितुष्टिवृत्तिरित्येवमादिरूपौ रागद्वेषौ । सर्वथाऽस्य भाव-बुद्धिश्चलिता क्षणमपि विवक्षिते कार्ये नावतिष्ठते । अन्यद्वदन्नन्यदाचरति एवंरूपो प्रकृतिस्थः । अन्यथा सर्व एव पुरुषाः कामादियुक्ताः जराजीर्णाक्षिशिरोरोगार्त्ति-मन्तोऽप्रकृतिस्थाः स्युः । न चैवमिति मेधातिथिः ।

अध्यधीनो गर्भदासः पुत्रशिष्यौ भार्या च । यदापि रूढ्या गर्भदास एवाध्य-धीनस्तथाऽप्यस्वतन्त्रोपलक्षणार्थत्वात्सर्व एव ते गृह्यन्ते । स्वधनदानादि स्वामिन-मनुज्ञाप्य यत्कुर्वन्ति तत्सिध्यति । तथा च नारदः (१।३३)–

"यद्बालः कुरुते कार्यमस्वतन्त्रकृतं च यत् । अकृतं तदिति प्राहुः" इति ।
"अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ॥
अस्वतन्त्राः स्त्रियः पुत्रा दासाद्यश्च परिग्रहः ।
स्वतन्त्रस्तु गृही यस्य तस्य तत्स्यात्क्रमागतम् ॥"

"ननु यदि न स्वातन्त्र्यं स्त्रीणामुच्यते पुंसश्च स्वातन्त्र्यमेतदनुपन्नम् । यतः साधारणं धनम् । कथमेकाकी मनुष्यो भार्ययाऽननुज्ञातो दानविक्रयादिन्यः प्रभवेत्" ।

अत्रोक्तम्–"स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि" इति । तथा 'कुले ज्येष्ठ' इत्युपक्रम्य 'तत्कृतं तत्कार्यजातं नास्वतन्त्रकृत' मिति च । धनसाधारण्ये हि पुरुषोऽपि स्त्रीवदस्वतन्त्रः । यच्छब्दे स्वाम्यं पारतन्त्र्यं चेति तद्विरुद्धमिव स्वामित्वस्येत्येताश्च व्यवस्थेति योज्यं भवति । पारतन्त्र्यं परविधेयता तदिच्छानुवर्तित्वम् । यदि च परतन्त्रः परेच्छामन्तरेण विनियोक्तुं न लभते कीदृशमस्य स्वाम्यम् । अथ दानाधान-विक्रये यत्र प्रकृत्वादनीशाः । स्वशरीरे परिभोगादौ यावदिच्छं स्वधनं विनियोज्यते,

परतन्त्रमहाधनानां शास्त्रनिगृहीतात्मनां द्विजानां नात्मोपभोगो भवेत् । बालस्य स्वाम्यपारतन्त्रे उपपन्ने । यदा प्राप्तव्यवहारस्तदा ईशिष्यते । एवं पुत्रादावपि । स्त्रियास्तु न कदाचिदपारतन्त्र्यम्[1]।

स्वाम्यपारतन्त्र्ये स्त्रीणामसमावेश उच्यते । न पारतन्त्र्यवचनेन स्त्रीणां स्वधन-विनियोगनिषेधः क्रियते । किं तर्ह्यस्थाने दानाधानविक्रयादि वार्यते । 'परतन्त्राः'—ताः स्थाने निरूपणीयेन हिताहितं स्वयं विवेक्तुमलम् एष पात्रमर्हति भूमिहिरण्यादि-प्रतिग्रहम्, अनेन कन्यासंबन्धं कुर्यात्, इदं द्रव्यमस्मात् क्रेतुं विक्रेतुं वाऽर्हतीत्येवमादि तया ज्ञातव्यम् । अतो लेख्यादिकाले भार्त्राद्यनुमतिरुपयुज्यते । केवलया कृते कार्ये नाहं किञ्चिज्जानामि त्वया विप्रलब्धाऽस्मीति वचनस्यावसरत्वात् । भर्त्राद्यनुमतौ तु किं वक्ष्यति । तदुक्तम्—

"एतान्यपि प्रमाणानि भर्ता यद्यनुमन्यते ।
पुत्र पत्युरभावे वा राजाऽधिपतिपुत्रयोः" ॥

अस्वातन्त्र्यमपि नियमितम्—"अनुशिष्टा विसर्गे च विक्रये विस्वरा मता" । अपि बुद्धिपूर्वे बालशिक्षिते स्वामिना पत्न्यादयो नियोज्या अनुबन्धादिना—न तु स्वाम्यवि-सर्गेऽपि ।

"सा सद्यः संनिरोद्धव्या त्यजेद्वा कुलसन्निधौ[2]" इति स्त्रीणामेव न पुंसः पारतन्त्र्यम्। पतितस्याप्या प्रायश्चित्तसमाप्तेः प्रतीक्षणोपदेशः । अतो न विक्रयोऽपि दासादीनां गरीयस्यामपदि कुत्रचिदस्ति । तेषु स्वामिन इत्येतदपेक्ष्य भार्याशिष्य-दासीनां यथास्वं पारतन्त्र्यम् । धनसाधारण्यात्तु न भर्तुरनुज्ञां विना भार्याया यागादौ क्वचिदधिकार इति स्थितम् । यच्चेदम्—"पुत्राणां भर्तरि प्रेते वशे तिष्ठेत्तु सा तथा" "जीवतोरस्वतन्त्रः स्याज्जरयाऽपि समन्वितः" । "तयोरपि पिता श्रेयानभावे जननी मता" । अनेन पुत्राणां पारतन्त्र्यम् । ननु चान्योन्यव्याहतमिति ।

नास्ति व्याघातः । अनधिकारिणि पुत्रे बाले मातृपरतन्त्रता । मातुस्तु पुत्रे पारतन्त्र्यं मातृधनरक्षणं चोरादिदोषेभ्यः । पुत्रस्याऽपि यत्पितरि पारतन्त्र्यं तदपृथक्-कृतस्य तद्गृहे निवसनः । यदा तु पितृविभक्तो धनं स्वयमर्जितवांस्तदा "ऊर्ध्वं षोडशाद्वर्षात्पुत्रं मित्रवदाचरेदि"ति स्वातन्त्र्यमेव । बालोऽप्राप्तव्यवहारः षोडश-वर्षात्प्राक् ।

स्थविरो लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः । यद्यप्ययं कस्यां चिद्वेलायां प्रकृतिस्थोऽपि भवति तथापि न प्रमाणमप्रत्ययात् । यस्य तु भर्तुः स्त्री जानाना कार्यप्रबन्धेन वर्तते तयाऽनुज्ञातमेतद्भवति । असंबद्धकृतः । परार्थमनियुक्तो यो

1. मनु. ५।१४७ ।
2. मनु. ८।८३ ।

व्यवहारयति–स भ्राता 'न पितादेवदत्ताय शतं धारयती' त्येवमादि वक्तुं न लभ्यते। ये तु भ्रातरः समानकार्याः सर्वे च तुल्यव्यवहारिणस्तेषामन्यतरेणाऽपि गोपश्वादि-विक्रयो गृहादिबन्धनप्रयोगादि च क्रियमाणं सिद्ध्यति। संबन्धित्वात्। व्यवहारशब्दः सर्वव्यवहारग्रहणार्थः। प्रकरणादृणव्यवहार एव स्यात्। प्रातिभाव्यं निरूपयितुमाह **याज्ञवल्क्यः**

**दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।**
**आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ॥ २।५३।।**
**दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।**
**न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥ २।५४ ॥**
**बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम्।**
**एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचिः ॥ २।५५ ॥**
**प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम्।**
**द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥ २।५६ ॥**

प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः; तच्च विषयभेदात्त्रिधा भिद्यते। यथा दर्शने 'दर्शनापेक्षायामेनं दर्शयामीति'। प्रत्यये विश्वासे 'मम प्रत्ययेनास्य धनं प्रयच्छ, नायं त्वां वञ्चयिष्यते, अतोऽमुकगोत्रस्य पुत्रोऽयम्, उर्वराप्रायभूरस्य ग्रामवरोऽस्तीति'। दाने 'यद्ययं न ददाति तदानीमहमेव दास्या-मीति। 'प्रतिभाव्यं विधीयते' इति प्रत्येकं संबध्यते। आद्यौ तु दर्शनप्रत्ययप्रतिभुवौ वितथे अन्यथाभावे अदर्शने विश्वासव्यभिचारे च दाप्यौ राजा प्रस्तुतं धनमुत्तमर्णस्य। इतरस्य दानप्रतिभुवः सुता अपि दाप्याः। वितथ इत्येव शाठ्येन निर्धनत्वेन वाऽधमर्णेऽप्रतिकुर्वति 'इतरस्य सुता अपि' (याज्ञ १।११९) इति वदता पूर्वयोः सुता न दाप्या इति। 'सुता' इत वदता न पौत्रा दाप्या इति।

यदा तु दर्शनप्रतिभूः प्रात्ययिको वा प्रतिभूर्दिवं गतस्तदा तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः। यस्तु दानाय स्थितः प्रतिभूर्दिवं गतस्तस्य पुत्रा दद्युः, न पौत्राः। ते च मूलमेव दद्युर्न वृद्धिम्। प्रातिभाव्यव्यतिरिक्तं पैतामहमृणं पौत्रः समं यावद्गृहीतं तावदेव दद्यान्न वृद्धिम्। तथा तत्सुतोऽपि प्रातिभाव्यागतं पित्र्यमृणं सममेव दद्यात्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रावप्रातिभाव्यायातं च ऋणं यथाक्रममगृहीतधनौ न दाप्याविति। लग्नकः प्रतिभूः, खादकोऽधमर्णः। लग्नको यदि वित्तवान्मृतस्तदा तस्य पुत्रेण मूलमेव दातव्यं न वृद्धिरिति व्याख्येयम्। यत्र दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा बन्धकं पर्याप्तं गृहीत्वा प्रतिभूर्जातस्तत्र तत्पुत्रा अपि तस्मादेव बन्धकात् प्रातिभाव्यायातमृणं दद्युरेव।

यद्येकस्मिन्प्रयोगे द्वौ बहवो वा प्रतिभुवः स्युस्तदर्णं संविभज्य स्वांशेन दद्युः। एकच्छायाश्रितेषु प्रतिभूषु एकस्याधमर्णस्य छाया सादृश्यं तामाश्रिता एकच्छायाश्रिताः। अधमर्णो यथा कृत्स्नद्रव्यदानाय स्थितस्तथा दानप्रतिभुवोऽपि प्रत्येकं कृत्स्नद्रव्यदानाय स्थिताः। एवं दर्शने प्रत्यये च। तेष्वेकच्छायाश्रितेषु प्रतिभूषु सत्सु धनिकस्योत्तमर्णस्य यथारुचि यथाकामम्। अतश्च धनिको वित्ताद्यपेक्षायां स्वार्थं यं प्रार्थयते स एव कृत्स्नं दाप्यः, नांशतः। एकच्छायाश्रितेषु यदि कश्चिद्देशान्तरं गतस्तत्पुत्रश्च सन्निहितस्तदा धनिकेच्छया स सर्वं दाप्यः। मृते तु कस्मिंश्चित्तत्सुतः स्वपित्रंशमवृद्धिकं दाप्यः।

यद्द्रव्यं प्रतिभूस्तत्पुत्रो वा धनिकेनोपपीडितः प्रकाशं सर्वजनसमक्षं राज्ञा धनिनो दापितो न पुनर्द्वैगुण्यलोभेन स्वयमुपेत्य दत्तम्। ऋषिकैरधमर्णैस्तस्य प्रतिभुवस्तद्द्रव्यं द्विगुणं प्रतिदातव्यं स्यात्। तच्च कालविशेषमनपेक्ष्य सद्य एव द्विगुणं दातव्यम्; वचनारम्भसामर्थ्यात्। एतच्च हिरण्यविषयम्।

ननु इदं प्रतिभूरितिवचनं द्वैगुण्यमात्रं प्रतिपादयति, तच्च पूर्वोक्तकालकलाक्रमाबाधेनाप्युपपद्यते। यथा जातेष्टिविधानं शुचित्वाबाधेन। अपि च सद्यः सवृद्धिकदानपक्षे पशुस्त्रीणां सद्यः संतत्यभावान्मूलदानमेव प्राप्नोतीति,–तदसत्; 'वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा' (व्य. ३९) इत्यनेनैव कालकलाक्रमेण द्वैगुण्यादिसिद्धेः द्वैगुण्यमात्रविधाने चेदं वचनमनर्थकं स्यात्। पशुस्त्रीणां तु कालक्रमपक्षेऽपि संतत्यभावे स्वरूपदानमेव। यदा प्रतिभूरपि द्रव्यदानान्तरं कियताऽपि कालेनाधमर्णेन संघटते तदा संततिरपि संभवत्येव। यद्वा पूर्वसिद्धसंतत्या सह पशुस्त्रियो दास्यन्तीति न किञ्चिदेतत्। अथ प्रातिभाव्यं प्रीतिकृतम्, अतश्च प्रतिभुवा दत्तं प्रीतिदत्तमेव। अतश्चास्य प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धिरित्यनेन वचनेनोच्यत इति; तदप्यसत्,–अस्यार्थस्यास्माद् वचनादप्रतीतेः 'द्विगुणं प्रतिदातव्यम्' इत्येतावदिह प्रतीयते। तस्मात्कालक्रममनपेक्ष्यैव द्विगुणं प्रतिदातव्यं वचनारम्भसामर्थ्यात्।

प्रतिभूदत्तस्य सर्वत्र द्वैगुण्ये प्राप्तेऽपवादमाह–

सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणस्तथा॥

('याज्ञ. २।५७)

हिरण्यद्वैगुण्यवत्कालानादरेणैव स्त्रीपश्वादयः प्रतिपादितवृद्ध्या दाप्याः। यस्य द्रव्यस्य यावती वृद्धिः पराकाष्ठोक्ता तद्द्रव्यं प्रतिभूदत्तं खादकेन तया वृद्ध्या सह कालविशेषमनपेक्ष्यैव सद्यो दातव्यमिति। यदा तु दर्शनप्रतिभूः संप्रतिपन्ने काले

अधमर्णं दर्शयितुमसमर्थस्तदा तदन्वेषणाय तस्य पक्षत्रयं दातव्यम् । तत्र यदि तं दर्शयति तदा मोक्तव्योऽन्यथा प्रस्तुतं धनं दाप्यः [1]।

अथर्णादानविधिः । तत्र बृहस्पतिः

परहस्ताद् गृहीतं यत्कुसीदविधिना ऋणम् ।
येन यत्र यथा देयमदेयं वोच्यतेऽधुना ॥
याचमानाय दातव्यमप्रकालकृतमृणम् ।
पूर्णावधौ शान्तलाभमभावे च पितुः सुतैः ॥
पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥ १०।१०२,१०३,११३ ॥
ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयं तत्सुतस्य तु ॥ १०।११४ ॥
सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः ॥
एकच्छायाकृतं सर्वं दद्यात्तु प्रोषिते सुतः ।
मृते पितरि पित्रंशं परर्णं न कदाचन ॥ १०।११०-११२ ॥
उज्जामादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥ १०।१२३ ॥
पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥ १०।१२१ ॥
ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥ १०।१२४ ॥

कात्यायनश्च

यद्दृष्टं दत्तशेषं वा देयं पैतामहं तु तत् ।
सदोषं व्याहतं पित्रा नैव देयमृणं क्वचित् ॥
पित्रा दृष्टमृणं यत्तु क्रमायातं पितामहात् ।
निर्दोषं नोद्धृतं पुत्रैर्देयं पौत्रैस्तु तद्भृगुः ॥
पैतामहं तु यत्पुत्रैर्न दत्तं रोगिभिः स्थितैः ।
तस्मादेवंविधं पौत्रैर्देयं पैतामहं समम् ॥
अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनम् ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

---

1. कात्या. ११४-११६; नारद. १६।३९; बृह. १०।७३, ७४, ७६, ७८, ८४; कात्या. ५३०-३४, ५४० ।

पुत्राभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन यदादत्तं तत्तस्माद्विनिवर्तयेत्[1] ॥ ५५४-५५६,४७३,५६० ॥
विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषितोऽपि वा ।
विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः ॥
व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत् ॥
नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
कालेन विधिना देयं वसेयुर्नरकेऽन्यथा ॥
पितॄणां सूनुभिर्जातैर्दानैनैवाधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतम् ॥
(५४८,५४९,५५२,५५१)

कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत् ॥
कन्यावैवाहिकं चैव प्रेतकार्ये तु यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतेन प्रभोः[2]॥
प्रोषितस्यामतेनाऽपि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥ ५४२,५४३,५४५ ॥
ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत्स्याद्यच्च स्यादनुवर्णितम् ॥ ५४४ ॥
लिखितं मुक्तकं वाऽपि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतमृणम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद् द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥ ५६४-५६५ ॥
भर्त्रा पुत्रेण वा सार्धं केवलं वात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥
मर्तुकामेन भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥
(५४८-५४७)

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥

---

1. स्मृ. चं. पृ. २८३; परा. मा. २०३; वि. र. पृ. ५१; वी. मि. व्य. पृ. १३२ ।
2. प्रभोः' इति कर्तरि षष्ठी, तेन प्रभुणा दातव्यमित्यर्थः (वि. र. ५९) ।

**व्यसनाभिप्लुते पुत्रे बालो वा यत्र दृश्यते ।**
**द्रव्यहृद्दाप्यते तत्र तस्याभावे पुरन्ध्रिहृत् ॥ ५५७,५७६ ॥**

दम्पत्योरविभक्तधनत्वेऽप्यभ्युपेतादिव्यतिरेकेण स्त्रिया न देयम् । यदि धनाभावे रिक्थग्राही नारिस्त तदा यो यदीयां स्त्रियं भार्यात्वेन स्वीकरोति स तदीयमृणं दद्यात् । नारदः चतस्रः स्वैरिण्यो वक्ष्यति[1] । तिस्रः पुनर्भवः[2] । एतयोरन्तिमोत्तमयोः स्वैरिणीपुनर्भ्वोः स्त्रियोर्यः सङ्गृहीता स एव तत्पूर्वपतिकृतमृणं दद्यादिति समुदायार्थः । तत्र **नारदः**

**धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।**
**पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥ ४।२३ ॥**

अत्र यस्य पुरुषस्य ऋणयुक्तस्य मृतस्य धनं दायादैराक्रम्य गृहीतम् । पत्नी च निर्धना, पुत्रमप्युत्सृज्यान्यस्य गृहे प्रविष्टा । पुत्रोऽपि धनमातृविहीनः केवलस्तिष्ठति । तदा व्यवहारकस्त्रयाणां मध्ये विधृत्य कस्य धनं गृह्णातु । केन च तद्दातव्यम् । अस्यार्थस्य नियमार्थमेतदुक्तम् । एषां मध्येऽपि ऋणभाक् यो धनं हरेत् । धनस्य प्राधान्यात् । धनग्राही ऋणं दद्यात् । तस्मिन् विद्यमाने नाऽन्यः कश्चित् । यस्य तु सऋणस्य मृतस्य पुरुषस्य धनस्याभावान्न धनहारी कश्चिज्जातः । स्त्रिया अप्यभावान्न स्त्रीहारी कश्चिदस्ति । न पुत्रो विद्यते । पत्न्येव धनपुत्रविहीनान्यस्य गृहे प्रविष्टा । तदा धनहारिपुत्रयोरसतोरविद्यमानयोः स्त्रीहारी ऋणं दद्यात् । त्रयाणामपि धनस्त्रीहारिपुत्राणां समुदितानामपि मध्ये येन ऋणं देयं तद्दर्शितं तथा । द्वयोरभावे एकैकेन येन ऋणं देयं तदपि सग्रन्थपाठं दर्शितम् । यस्य पुनः निर्धनत्वाद्धनं नास्ति । पुत्रः स्त्रीहारी च विद्यते । तदा तयोः स्त्रीहारिपुत्रयोः द्वयोर्मध्ये केन ऋणं देयमित्यत्रापि अर्थापत्तितारतम्यापेक्षया । यदि रूपयौवनसम्पन्ना काममदोद्धता प्रधानाभिमता च स्त्री, तदा तस्य स्त्रीहारी ऋणं दद्यात् । यतस्तदेव तस्य धनम् । अथवा साऽपि स्त्री निर्भोग्या कर्मकारित्वग्रासमात्रभोजना। ततः पुत्रोऽसतोः स्त्रीधनिनोरिति न्यायात् । पुत्र एव ऋणं दद्यात् ।

अत्र **याज्ञवल्क्यः**

**रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।**
**पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ २।५१ ॥**

ऋणिके सत्ययं दानक्रमः । तदभावे तु–"रिक्थग्राही ऋणमि"त्यादि । रिक्थानुसारित्वादृणानां रिक्थग्राहिण एव निर्विचिकित्सं दद्युः । निर्धनस्य नियोगाद्विना योऽस्य भार्यां सङ्गृह्णीयात्, स दद्यात् । एतच्चाब्राह्मणविषयम् । तद्योषितामेवान्य-

1. नारद. ४।२४,२२।
2. नारद. १२।४६,४९।

गामित्वसंभवात् । 'तथैव च' इति धनग्राहिवदविकल्पयन् योषिद्ग्राह्यपि दद्यात् । तदेव हि द्रव्यं द्रव्यहीनस्य । एतस्मादेव चातिदेशात् रिक्थाभाव एव योषिद्ग्राह्यादयः प्रत्येतव्याः । 'पुत्रोऽनन्याश्रितद्रव्य' इति । नान्यस्मिन्नाश्रितं द्रव्यं यस्य असौ 'अनन्याश्रितद्रव्यः' पुत्रो दद्यात् । न चेद्द्रव्यमन्येन गृहीतम् । न त्वद्रव्यस्यैव पुत्रो दद्यात् । ऋणस्य द्रव्यानुसारित्वादित्येतत् प्रागेव ज्ञापितम् । बहुपुत्रस्य यद्येकः पितृधनमितरानुमतो गृह्णीयात्, तदा धनग्राहिण इतरेषां च तुल्यं ऋणभाक्त्वम्, यतोऽन्यैरपि स्वेच्छया स्वांशोत्सङ्कलनं कृतमितीमामाशंकां निरस्यति 'पुत्रोऽनन्याश्रितद्रव्य' इति । येनैव पुत्रेण द्रव्यमाश्रितम्, स एव दद्यात् । नाऽन्योऽनुमन्ताऽपि । अत्त एव च ज्ञायते भागशः पुत्रा ऋणं दद्युरिति । यद्वा, 'अनन्याश्रितद्रव्य' इत्यस्यान्योऽर्थः–पितरि मृते, यस्य पैतृकं रिक्थं केनाऽपि परिनिक्षिप्तादिहेतुनान्यस्मिन्नाश्रितं सोऽन्याश्रितद्रव्यः, न तदप्राप्यैव पैतृकमृणं दद्यात् । 'पुत्रहीनस्य रिक्थिनः'–अन्येऽपि तु भवन्ति।

या स्त्री विधवा पुत्रवती च, क्रमागतस्त्रीधनवती च, कामान्धा पुत्रमुत्सृज्यान्यं भर्तारमाश्रयेत् । स्त्रीधनस्वकीयसहिताऽपि तस्या यत्स्त्रीधनं तत्सोऽन्य एव भर्ता गृह्णीयात्, न पुत्राः । या पुनर्निःस्वा स्त्रीधनरहिता भर्तृधनसहितान्यं याति, तद्धनमन्यो भर्ता न लभते तस्य पितृधनस्य पुत्रः स्वामीति[1] ।

**अथोग्राहणविधिः**। यो राजसभायामानीतोऽधमर्णः ऋणं देयतया प्रतिजानीते, 'सत्यमस्मै धारयामि' इति, स पञ्चकं शतमर्हति दण्डम्[2] । अनेन संकल्पितेन विंशतितमो भागो दण्ड्यते । ...यस्तु व्यतिक्रमान्तरं करोति, अपह्नुते–'नाहमस्मै धारयामि' इति, स तैः प्रतिपादितः 'तद्द्विगुणं' तस्मात्पञ्चकाद्द्विगुणं दशकं शतम् । अन्ये तु तच्छब्देन देयमेव प्रत्यवमृशन्ति । यावत्तस्मै देयं तद्द्विगुणम् । तेन यावदृणमित्यनेनैकवाक्यं भवति । अन्यथा वाक्यभेदः । विषयविशेषानिर्देशादेकविषयत्वे विकल्पः प्राप्नोति । स च न युक्तः, द्विगुणस्यात्यन्तबहुत्वात् । असत्यपि निर्देशे तस्य विषयो दर्शनम्, तस्य प्रत्यासन्नेषु पञ्चकमिति, अर्थात्, तस्यैवानुप्रत्यवमर्शो युक्तः ।

समानजातीये तूत्तमर्णस्य ग्रहणक्रमेण देयम् । विजातीयेषु तु ब्राह्मणादिवर्णक्रमेण । एकदिनकृतनानर्णसमवाये युगपद्देयम्, धनाल्पत्वबहुत्वयोस्तु तदनुसारेण भागं परिकल्प्य दापनीयम् । 'ग्रहणं' बन्धकदानम् । 'रक्षणं' बन्धकपरिपालनम् । 'लाभं' बन्धकभोगञ्च 'समं' युगपदेव कुर्यात् । अन्यथा अहर्भेदोक्तक्रमेण कुर्यात् ।

---

1. नारद. ४।२०-२१;४।२; याज्ञ. २।५०,९०,४५,४६,४८,५१; विष्णु. ८।२७-२८, ३४-३९; मनु. ८।१६६, १६७,१५९-१६० ।
2. ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥
(मनु. ८।१३९)

अनेकर्णसमवायेऽपि अधमर्णे यदुत्तमर्णाद् द्रव्यं गृहीत्वा यद् व्यवहारादिकं करोति तस्मात्प्राप्तं धनं तदुत्तमर्णायैव दद्यान्नन्येषाम् । प्राप्तार्थेन दानं भृतित्वेन न दण्डेन निरपराधित्वात् । धनिकोऽपि साधितार्थसंख्यया पारितोषिकं राज्ञे पञ्चकं शतं दद्यात् । उत्तमर्णिको धनिकः ।

धर्मादिना प्रयुक्तमर्थं साधयेत्[1] । तत्र धर्मानाह **बृहस्पतिः**

**प्रतिपन्नमृणी दाप्यः सामादिभिरुपक्रमैः ।**
**धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥ १०।८७ ॥**
**सुहृत्सम्बन्धिसंदिष्टैः सामोक्त्यानुगमेन च ।**
**प्रायेण वा ऋणी दाप्यो धर्म एव उदाहृतः ॥**
**छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।**
**अन्वाहितादि वाहृत्य दाप्यते यत्र सोपधिः ॥**
**बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।**
**ऋणिको दाप्यते यत्र बलात्कारः स कीर्तितः ॥**
**दारपुत्रपशून् रुद्ध्वा कृत्वा द्वारोपवेशनम् ।**
**यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥ १०।८८-९० ॥**

मेधातिथिस्तु निःस्वो यः स व्यवहारेण दापियतव्यः । अन्यत्कर्मोपकरणं धनं दत्वा कृषिवाणिज्यादिना व्यवहारयितव्यः । तत्रोत्पन्नं धनं तस्मात्तु गृह्णीयात् । य उत्तमर्णः संप्रतिपन्नमर्थमधमर्णात्स्वयं बलादिना साधयति स स्वीयं धनं सम्यक्साधयन्नस्मास्वनिवेद्य किमिति बलादिकं कृतवानसीति न राज्ञा निषेधव्यः । नाहमस्मै धारयामीति धनविषयेऽपह्नवानमधमर्णं करणेन लेख्यसाक्षिदिव्यादिना प्रतिपादितमर्थमुत्तमर्णस्य राजा प्रदापयेत् । उत्तमर्णस्य धनं देहीति सभायां प्राड्विवाकेनोक्तस्याधमर्णस्य नास्मै धारयामित्यपलापे सति अभियोक्तार्थी देश्यं धनप्रयोगदेशवर्तिसाक्षिणं निर्दिशेत् । प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणऋणनिर्णयात् प्राक्साक्ष्युपन्यासः । अन्यद्वा करणं पत्रादि कथयेत्[2] ।

अदेश्यं यत्र देशेऽधमर्णस्य ऋणग्रहणकाले सर्वदावस्थानं न संभवतीति । निर्दिश्य चादेशादिकं नैतन्मया निर्दिष्टमपनयति । यश्च पूर्वोक्तानर्थान् स्वार्थान् स्वोक्तान् विरुद्धान् वावगच्छति । यश्च मम हस्तात्सुवर्णस्य पलमनेन गृहीतम् इति निर्दिश्य मत्पुत्रहस्ताद् गृहीतमित्येवमादिना यः पुनरपसरति । यत्र सम्यक्प्रतिज्ञातमर्थं कस्मात्त्वया रात्रावसाक्षिकं दत्तमित्येवमादि प्राड्विवाकेन पृष्टः सन्न समाधत्ते । यश्च संभाषणानर्हनिर्जनादिदेशे साक्षिभिः सहान्योन्यं संभाषते । यश्च भाषार्थस्थिरी-

---

1. मनु. ८।४८-४९।
2. मनु. ८।४९-५२।

करणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्नं नेच्छेत् । यश्च निष्पतेत् उक्तांश्च व्यवहारान् पुराऽनाख्याय यथा स्थानात्स्थानान्तरं गच्छेत् । यश्च ब्रूहीत्युक्तो न किञ्चिद्ब्रवीति । उक्तं साध्यं न प्रमाणेन पतिपादयति । पूर्वं साधनम्, अपरं साध्यम्, तद्यो न जानाति । असाधनमेव साधनत्वेन निर्दिशति । असाध्यमेव मानेन "शशश्रृङ्गकृतं धनुर्ज्ञेयम् 'इत्यादि साध्यत्वेन निर्दिशति स तस्मात्साध्यादर्थाद्धीयते[1] ।

यः प्रत्यर्थी यत्परिमाणधनमपनयति, अर्थी वा यत्परिमाणधने मिथ्या वदति तावधार्मिकावपह्नुतमिथ्योक्तधनाद्द्विगुणं दण्डरूपं दापनीयौ । अधर्मज्ञाविति वचनाज्ज्ञानपूर्वापह्नवमिथ्योक्तिविषयमिदम् । प्रमादादिनापलापमिथ्यानियोगापह्नवे द्विगुणमिति शतदशभागं वक्ष्यति । धनार्थिनोत्तमर्णेन राजपुरुषापकर्षं कृताह्वानः प्राड्विवाकेन पृष्टः सन्यदा न धारयामीत्यपह्नवानो भवति तदा नृपत्यधिकृत-ब्राह्मणसमक्षं त्र्यवरैः साक्षिभिस्त्रयोऽवरा न्यूना येषां तैरर्थिना भावनीयः[2] ।

वृद्धिर्हानिरिति कल्पतरुः । पारिजातस्तु तस्याधमर्णस्य 'तद्दत्तम्' वृद्धिमाप्नुयात् सकलं भवेदिति । कामधेनुहलायुधयोस्तु 'नासौ वृद्धिमाप्नुयात्' । हलायुधव्याख्याने यस्तु धनी स्तोकमुद्ग्राह्योपरि न लेखयेत्, उपगतं वा न ददाति, तदासाववशिष्ट-धनहान्या न वृद्धिं न धनोपचयं लभते शेषहानेः प्रतिपादित्वात् । अत्र कल्पतरु-हलायुधयोस्तु फलं प्रत्यविशेष एव । अत्र च दत्तस्य उपागतादानं स्वयं लेखनं पुनरुद्ग्राहणाशयेन पर्यवसितं बोधव्यम् । अन्यथा व्यवहारविरोधात्[3] ।

साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः, मध्यं वा गृह्णीयुः, तद्वा द्रव्यं राजा हरेत् । साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात्, अतिरिक्तं वा ब्रूयुस्तदरिक्तं राजा हरेत् । बालिश्यादभियोक्तुर्वा दुश्श्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात् ।

'साक्षिबालिश्येष्वेव पृथगनुयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डा इत्यौशनसाः । कूटसाक्षिणो यमर्थमभूतं नाशयेयुस्तद्दशगुणं दण्डं दद्युरिति मानवाः । बालिश्याद्वा विसंवादयतां चित्रो घात इति बार्हस्पत्याः । नेति कौटल्यः । ध्रुवं हि साक्षिभिः श्रोतव्यम् । अश्रृण्वतां चतुर्विंशतिपणो दण्डः । ततोऽर्धमध्रुवाणाम् ।

---

1. मनु. ८।५३-५६।
2. मनु. ८।५७-६०; बृह. ८।४८-४९, ८७, ८८ ९०, १०५, ९९-१००; १०।५१, ५२, ५५, ९५, १०१, ९७, ९६, ९८, १३०; कात्यायन. ५८०-५८९, ५०९, ५१३-५१५; नारद. ४।१२३; १।५५; ४।१३२; ४।११४-११६; याज्ञ. २।४३; २।४०; २।११; २।४१-४३; २।९४; विष्णु. ६।१९-२५ ।
3. वि. र. ८२-८३ ।

देशकालाविदूरस्थान्साक्षिणः प्रतिपादयेत् ।
दूरस्थानप्रसारान्वा स्वामिवाक्येन साधयेत् ॥
(कौ. ३।११।५३-६६)

**औपनिधिकम्**

उपनिधिर्न्यासो निक्षेप इति पर्यायाः । उपनिधिर्विप्रतिपत्तावृणवद् व्यवहार्यम् । ऋणं यथाधमर्णेन तत्पुत्रादिना च प्रत्यर्पणीयम्, विप्रतिपत्तौ तु साक्ष्यनुयोगादिना विभावनीयम्, तथैवोपनिधिरित्यतिदेशार्थः । उपनिधिरिति च अध्यादेशान्वाधीनामप्युपलक्षणम् । प्रत्यर्पणापवादमाह कौटल्यः–

"परचक्राटविकाभ्यां दुर्गराष्ट्रविलोपे वा, प्रतिरोधकैर्वा ग्रामसार्थव्रजविलोपे, चक्रयुक्ते नाशे वा ग्राममध्याग्न्युदकबाधे वा, किञ्चिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वा, ज्वालावेगोपरुद्धे वा, नावि निमग्नायां मुषितायां वा स्वयमुपरूढो नोपनिधिमभ्याभवेत्" । ३।१२।२ ।

विना स्वाम्यनुज्ञामुपनिधिं भुञ्जानः, देशकालानुरूपं भोगवेतनम्, दद्यात् स्वामिने। द्वादशपणं च दण्डं दद्याद्राज्ञे । उपभोगनिमित्तमुपभोगाय गृहीतं द्रव्यम्, नष्टमन्यापहृतम, विनष्टं वा । चतुर्विंशतिपणश्च दण्डः नाशकस्य । अन्यथा वा निष्पतने उपभोगं विनैवोपनिधेरन्यत्र गमने च चतुर्विंशति पणो दण्डः । प्रेतम्, व्यसनगतं वा उपनिधिग्राहिणम्, उपनिधिं नाभ्यावहेत् । अस्य उपनिधेः आधानविक्रयापव्ययनेषु च चतुर्गुणपञ्चबन्धो दण्डः । उपनिहितविनिमये मूल्यसमो दण्डः । नाधिस्सोपकारः सीदेत्, न चास्य मूल्यं वर्धेत। निरुपकारः सीदेन्मूल्यं चास्य वर्धेत अन्यत्र निसर्गात्[1]।

सधनस्याधिग्रहणाय गृहमुपगतस्याधमर्णस्याधिमप्रयच्छतः धनिकस्य द्वादशपणो दण्डः । धनप्रयोक्तुर्देशान्तरगमनादिना सान्निध्याभावे, ग्रामवृद्धेषु निष्क्रयं देयं मूल्यम्, स्थापयित्वा, आधिम्, प्रतिपद्येत । आधिः, निवृत्तवृद्धिकः तत्कालकृतमूल्यः कालान्तरविनाशशङ्कायां धारणकोपस्थानकाल एव व्यवस्थापितमूल्यस्तथैवावतिष्ठेत । अनाशस्याविनाशस्य च यत् कारणं तद्युक्तो वा कार्य इति शेषः । अधमर्णस्य सन्निधाने वा, विनाशभयात्, उद्रिक्तमूल्यं यथा भवति तथा, धर्मस्थानुज्ञातो विक्रीणीत । आधिपाल आधिस्थेयः प्रत्ययः प्रमाणं यस्य तस्य स तथाभूतो वा भवेद्, आधिपालवचनानुरोधेन रक्षणं वाधेः कुर्यात्[2] ।

स्थावर आधिर्भूमिवृक्षादिः, प्रयासभोग्य आधिग्राहकेण स्वयं कर्षणादिना परिश्रमेण भोक्तव्य इत्येकः, फलभोग्यः फलमाधातृश्रमनिष्पन्नं भोग्यं यस्य स तथाभूत इत्यपरः, इत्येवं द्विप्रकारः । वाणिज्याधिगतस्यैतावतो लाभस्यैतावद् देयमिति

---

1. कौ. ३।१२।३-११ ।
2. कौ. ३।१२।१२-१७ ।

परिभाषिता वृद्धिः तस्या मूल्यतः शुद्धं विशोधितं कृत्वा आजीवं प्रत्यर्पयेत्, कथम्, अमूल्यक्षयेण मूल्यक्षयाभावेन प्रयुक्तयावन्मूल्यग्रहणेन । अननुज्ञाताधिभोक्ता मूल्य-शुद्धमाजीवं बन्धं च दद्यादाधातुर्भोगमूल्यं राज्ञो दण्डं च दद्यात् स्वप्रयुक्तं मूल्यं भोगमूल्यदण्डतष्टावशिष्टमेव लभेत न तु सर्वम्[1] ।

मुद्राङ्कितमगणितं वा यन्निधीयते स उपनिधिः। ब्राह्मणपरिव्राजकवदुपदेशभेदः । तौ निक्षेपोपनिधी निक्षेप्तर्युपनिधातरि जीवति प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरे तद्धनाधिकारिणी कदाचिन्न निक्षेपधारिणा देयौ । यतस्तस्य पुत्रादेरपि पितुरसमर्पण-विनाशे तौ निक्षेपोपनिधी नश्यतः । पित्रादेः पितुश्च पुनरविनाशे समर्पणे च कदाचिदविनाशिनौ स्याताम्, तस्मादनर्थसन्देहान्न देयौ[2] । निक्षेप्तुर्मृतस्य निक्षेप-धारी तद्धनाधिकारिणी पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति स राज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति नाक्षेप्तव्यः । तत्रस्थे धनान्तरसद्भाव-लक्षणवाक्छलादिपरिहारेणैव प्रीतिपूर्वकं निश्चिनुयान्न तु झटिति दिव्यादिदानेन । तस्य निक्षेपधारिणः शीलमवेक्ष्य धार्मिकोऽयमिति ज्ञात्वा सामप्रयोगेण निश्चिनुयात्[3] ।

सर्वेषु निक्षेपेष्वपक्रियमाणेष्वेव 'साक्ष्यभावे' (८।१८२) इत्यादि विधिर्निर्णया-सिद्धौ स्यात् । मुद्रितादौ पुनस्तस्य निक्षेपधारी यदि प्रतिमुद्रादिना न किमप्यपहरेत्तदा तस्मिन्नपि तेन किं दूषणं प्राप्नुयात् । चौरैर्मुषितमुदकेन देशान्तरं प्रापितमग्निना वा दग्धं निक्षेपं निक्षेपधारी न दद्यात् । यदि स्वयं तस्मान्न किंचिदप्यपहरति । निक्षेपस्यापह्नोतारमनिक्षिप्य याचितारं सर्वैः सामादिभिरुपायैर्वैदिकैश्च शपथैरग्नि-हरणादिभिर्नृपो निरूपयेत्[4] ।

निक्षिप्तधनं यो न समर्पयति यश्चानिक्षिप्तं प्रार्थयति तौ द्वौ सुवर्णमुक्तादौ महति विषये चौरवद्दण्ड्यौ । स्वल्पविषये ताम्रादौ तत्समं दण्डनीयौ । निक्षेपाप-हारिणं निक्षिप्तसमधनं दण्डयेत् । समशिष्टत्वादनिक्षिप्य याचितारमपि । नच पुनरुक्तिः । महत्यपराधे ब्राह्मणेतरस्य चौरवद् धनदण्डनियमाद् दापयेत् । राजा त्वयि रुष्टस्तस्मात्त्वं रक्षामि मम धनं देहि धनधान्यलोभोपकरणं वानृतमभिधाय छद्मभिर्यः परद्रव्यं गृह्णाति स छद्मधनसहकारिसहितो बहुजनसमक्षं करचरणाशिर-श्छेदादिभिर्नानाप्रकारैर्वधोपायैः राज्ञा हन्तव्यः[5] ।

द्रव्यः सुवर्णादिर्यावत्परिमितो येन साक्षिसमक्षं निक्षेपः कृतस्तत्र परिमाणादि-विप्रतिपत्तौ साक्षिवचनात्तावानेव विज्ञातव्यः । विप्रतिपत्तिं कुर्वन्नप्येतदुक्तानुसारेण

1. कौ. ३।१२।१८-१९ ।
2. मनु. ८।१८५ ।
3. मनु. ८।१८६-१८७ ।
4. मनु. ८।१८७-१९० ।
5. मनु. ८।१९१-१९३ ।

दण्डं दाप्यः । रहसि येन निक्षेपोऽर्पितो निक्षेपधारिणा च रहस्येव गृहीतः स निक्षेपो रहस्येव प्रत्यर्पणीयः न प्रत्यर्पणे साक्ष्यपेक्षया । तस्माद्येनैव प्रकारेण दानं तेनैव प्रकारेण प्रत्यर्पणं दातव्यमिति श्रवणान्निक्षेपधारिणोऽयं नियमविधिः । राज्ञा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रादियुतस्य वोपनिधिरूपस्य तथा प्रीत्या कतिचित्कालं भोगार्थमर्पितस्थानेनोक्तप्रकारेण न्यस्तधनधारिणमपीडयन्निर्णयं कुर्यात्[1] ।



1. मनु. ८।१८८-१९६ ।
नारद. ५।१, २, ९, ७-८, १४-१५; बृहस्पति. ११।२, १३, ६-९, ११, १०, १२, १३, १५, १६, २०; कात्या. ५९२, ६११, ५९९, ६००, ६०१, ५९६, ६०२-६०९; मत्स्य. २४१।४ ; याज्ञ. २।६५ ।

## अध्यायः ८
## दण्डव्यवस्था (२)

**अस्वामिविक्रयः**

अस्वामिविक्रयस्तु, नष्टापवृतमासाद्य स्वामी धर्मस्थेन ग्राहयेत् । देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत् । धर्मस्थश्च स्वामिनं सम्प्रति तद्द्रव्योपनेतारं पृच्छेत्, कुतस्ते त्वया लब्धमिति । स पृष्ठो द्रव्यहस्तः, आचारक्रमं द्रव्यागमपरिपाटीम्, विभावयेच्चेत् तस्य द्रव्यस्य अतिसर्गेण मुच्येत, न तु तस्य स्तेयदण्डः । स चेद् दृश्येत, स्तेयदण्डं च राज्ञे दद्यात् । स विक्रेता अपसारमधिगच्छेच्चेद् अपराधिपदादात्मापसरणहेतुं विभावयेच्चेदपक्रामेद् दण्डं विना । अयमुत्तरोत्तरापसाराधिगमेनोपसरणक्रमोऽप-सारक्षयावधिकः सम्भवति । क्षये चरमोपलब्धस्य विक्रेतुरपसारानधिगमे सति, मूल्यं स्तेयदण्डं च दद्यादर्थात् स एव ।

नष्टवस्तुविषयं स्वत्वसाधकं साक्ष्यलेख्यादि दर्शयित्वा नष्टप्रत्याहृतं लभेत । स्वकरणाभावे तद्द्रव्यमूल्यपञ्चभागो दण्डः । तच्च द्रव्यं राजधर्म्यं स्यात् । तद्-द्रव्यमनिवेद्य स्वयं गृह्णतः स्वामिनं पूर्वः साहसदण्डः । शुल्कस्थाने नष्टापहृतोत्पन्नं स्थापितं भवेत् । त्रिपक्षादूर्ध्वमनभिसारमभिसारोऽनुगामी तद्रहितं राजा हरेत् । स्वामी वा स्वकरणेन स्वत्वविभावनेन हरेत् । नष्टापहृतोत्पन्नस्य द्विपदादेर्मोचन-निष्क्रयं पञ्चपणकम् । द्विपदरूपस्य द्विपदो दासीदासादिः तद्व्यतिरेकस्याः, पञ्चपणिकं निष्क्रयं दद्यात् । तावन्निष्क्रयदानेन द्विपदरूपं मोचयेत् । चतुष्पणि-कमेकखुरस्याश्वखरोष्ट्रादेः । द्विपणिकं गोमहिषस्य । पादिकं क्षुद्रपशूनां । रत्न-सारफल्गुकुप्यानां पञ्चकं शतं शतस्य पञ्चभागं निष्क्रयं दद्यात् ।

परचक्रेण आटविकेन द्विपदचतुष्पदादिकं प्रत्यानीय राजा यथास्वं प्रयच्छेत् । चोरहृतं द्रव्यं स्वद्रव्येभ्यस्तज्जातीयेभ्यः स्वामिने प्रयच्छेत्, राजा चोरसकाशात् प्रत्याहर्तुमशक्तो वा अशक्तश्चेत् । स्वयं ग्राहेणात्मनिर्बन्धेन स्तेनग्रहणविषयेणाहृतं प्रत्यानीय प्रयच्छेत् । तन्निष्क्रयं वा प्रयच्छेत् पूर्वोक्तासम्भवे । शत्रुदेशात्, विक्रमेणा-नीतं सैनिकहृतं धनम्, राज्ञा यथाप्रदिष्टं भुञ्जीत । अन्यत्रार्यप्राणद्रव्येभ्यो देवब्राह्मण-तपस्विद्रव्येभ्यश्चेति । आर्यजीवितानां द्रव्याणि देवादीनां द्रव्याणि च तेभ्य एव पुनर्दापयेत्[1] ।

---

1. कौ. ३।१६।११-२९ ।

एष परस्वविक्रयी यदि स्वामिनो भ्रात्रादिरूपत्वेन सान्वयः सम्बन्धी भवति तदा षट् पणशतान्यवहार्यो दण्डनीयः । यदि पुनः स्वामिनः सम्बन्धी न भवति, अनपसरश्च स्यात्, तदा चौरसम्बन्धि पापं प्राप्नोति, तद् दण्डनीयश्च । अस्वामिना यत्कृतं यद्दत्तं विक्रीतं वा तदकृतमेव बोद्धव्यम् । व्यवहारे यथा मर्यादा तथा कृतं न भवति[1] । यथाऽऽह मनुः

**अथ मूलमनाहार्यं प्रकाशक्रयशोधितः ।**
**आदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥८।२०२॥**

कात्यायनश्च

**नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।**
**अदत्तव्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥ ६१४ ॥**
**यदि स्वं नैव कुरुते ज्ञातृभिर्नाष्टिको धनम् ।**
**प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति ॥**
**अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातृभिः स्वकम् ।**
**पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥**
**असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।**
**विशोधितक्रये राज्ञा वक्तव्यः स न किञ्चन ।**
**प्रकाशञ्च क्रयं कुर्यात् साधुभिर्ज्ञातिभिः स्वकैः ।**
**न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥ ६१३, ६१८, ६१६ ॥**

अन्येनास्वामिना विक्रीतं द्रव्यं दृष्ट्वा स्वामी गृह्णीयात् । क्रेतुश्च दोषः स्यादप्रकाशिते क्रये । प्रकाशक्रये तु मूल्यमात्रप्रकाशः न तु स्तेयदोषः । यद्यप्रकाशं हीनमूल्यं च क्रीणीयात्तदा क्रेता विक्रेता च चौरवच्छास्यौ । अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तस्य न दोषः । क्रेता मूल्यमवाप्नोति । स्वामी द्रव्यमवाप्नुयात् । प्रकाशयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयात् । निक्षेपोक्तप्रकारेण गूढचारप्रयोगं कृत्वा पुरुषाणां धर्माधर्मयोः समन्यूनाधिकभावं निश्चित्य स्वयमेव राजा निर्णयेत्[2] ।

### सम्भूयसमुत्थानम्

सम्भूयसमुत्थानं व्याख्यातम् । अत्र विधिव्यतिक्रमे दण्डव्यवस्था विवेचनीया । कृषीवला वणिजश्च, सस्यपण्यारम्भपर्यवसानान्तरे सस्यानां पण्यानाञ्चारम्भपर्यवसानयोरन्तरे मध्यकाले, सन्नस्य व्याधितस्य सङ्घिनः, यथाकृतस्य कर्मणः प्रत्यंशं

---

1. नारद. १०।१; मनु. ८।१९७-२०१; बृह. १२।२,६-७; याज्ञ. २१।६९; कात्या. ६१५, ६१७; व्यास.–वि. र. १०३ ।
2. याज्ञ. २।१७१, १६८, १७२; नारद. १०।२; ७।१३; १०।४; विष्णु. ५।१६४, १६६; बृह. १२।२, ९-१२ ।

यावत्कृतं कर्म तावतः प्रविभागं दद्युः । पुरुषोपस्थाने कर्मकरणाय व्याधितप्रति-पुरुषोपस्थितौ सम्पूर्णमंशं दद्युः । उद्धृतपण्ये संसिद्धे देशान्तरविक्रयणाय समारोपित-पण्ये शकटादौ प्रस्थानसज्जे सति, व्याधितस्य सम्भूयवाणिज्यकारिणामन्यतमस्य, तदानीमेव प्रत्यंशं तदीयं पण्यभागं दद्युः । कुतः, सामान्या हि पथि सिद्धिश्चा-सिद्धिश्चेति । मार्गे पण्यानां रक्षा चापायश्चानियतौ यतः[1] ।

प्रक्रान्ते तु कर्मणि स्वस्थस्या अपक्रामतो द्वादशपणोदण्डः । न च प्रकाम्यमपक्रमणे ।·दण्डं दत्वाऽपि नापक्रमणे स्वाच्छन्द्यम् । चोरं त्वभयपूर्वं कर्मणः प्रत्यंशेन ग्राहयेत् । चोरान्तरैः सह चौर्यकर्मकरणविषये सम्भाषितप्रत्यंशं कमपि चोरं पूर्वदत्ताभयं कृत्वा तेनैव तत्सहचराश्चोरान् ग्राहयेत् । दद्यात् प्रत्यंशमभयञ्च । तस्य ग्राहितचोरस्य प्रतिश्रुतमभयं प्रत्यंशं च यथासम्भाषितं दद्यात् । पुनः स्तेये दत्ताभयचोरेण पुनश्चौर्ये महापराधे दूष्यवदाचरेत्, महापराधं कृते, अन्यत्र गमने च देशान्तरं गत्वा चौर्यकरणे च, प्रवासनं कार्यम् । महापराधे दूष्यवदुपांशु हन्यात्[2] ।

यज्ञादिवैदिककर्मणि सङ्घशोऽन्वितानां तल्लब्धांशभागव्यवस्थाः । ऋत्विजः, स्वप्रचारद्रव्यवर्जं स्वस्वव्यापारप्रातिस्विकदक्षिणाद्रव्यमपहाय, यथासंभाषितं वेतनं सामुदायिकं तुल्यं विभजेरन् । ऋत्विजोऽग्निष्टोमादिक्रतुकर्मारम्भपर्यवसानान्तरे व्याधितस्यावान्तरतत्तत्कर्मानुष्ठानावधिभेदेनांशभेदानाह—अग्निष्टोमादिषु च क्रतुष्वि-त्यादि । तत्र याजको दीक्षणादूर्ध्वं सन्नः, स्वांशस्य पञ्चमंशं लभेत । सोमविक्रयादूर्ध्वं चतुर्थमंशं लभेत । मध्यमोपसदः प्रवर्ग्योद्वासनान्मध्योपसत्संबन्धिनः प्रवर्ग्योत्सादन-कर्मण ऊर्ध्वम्, तृतीयंशं लभेत । मध्योपसदनकर्मण ऊर्ध्वमर्धमंशं लभेत। सुत्याहे प्रातस्सवनादूर्ध्वं पादोनमंशं लभेत । सवनादूर्ध्वं समग्रमंशं लभेत । नीता हि दक्षिणा भवन्ति । माध्यन्दिनसवनकर्मणि निर्वृत्ते हि दक्षिणाः सर्वाः प्राप्ता भवन्ति । बृहस्पतिसवनवर्जं प्रतिसवनं सवने सवने दक्षिणा दीयन्ते हि । तेनाहर्गणदक्षिणा व्याख्याता ।

व्याधितानां भृतकानां कर्म, आ दशाहोरात्रादवशिष्टा भृतकाः कुर्युः । अन्ये वा स्वाभिमताः कुर्युः । यज्ञकर्मणि असमाप्ते तु, यजमानः सीदेद् व्याधितो भवेच्चेत्, ऋत्विजः कर्म समापय्य दक्षिणां तदर्थां हरेयुः । कर्मण्यसमाप्ते याज्यं त्यजतः याजकस्य, याजकं त्यजतः याज्यस्य वा पूर्वः साहसदण्डः[3] । विधिशेषं श्लोकाभ्यामुप-संहरति कौटल्यः

1. कौ. ३।१४।१७-२६ ।
2. कौ. ३।१४।२७-३१ ।
3. कौ. ३।१४।३२-४६ ।

अनाहिताग्निश्शतगुः अजज्वा च सहस्रगुः ।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ॥
असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ॥ ३।१४।४७-४८ ॥

पापिष्ठजनात् प्रतिषिद्धद्रव्यस्य वा प्रतिग्रहे युक्तः, स्तेनः, कुत्सितयाजकः निन्दितान् यो याजयति स च, त्यक्तुमदोषः संसर्गानर्हः । कस्मादन्योन्यं कर्मदोषनिश्चयात् ।

शुल्कस्थानं प्राप्तो वणिक् यथाप्राप्तं शुल्कं दद्यात् न शुल्कस्थानं प्राप्तश्चाकृत-शुल्कः, रात्र्यादावकाले प्रच्छन्नक्रयविक्रयकृत्, मिथ्योक्त्वा द्रव्याणां सारासाराणां परिमाणमूनमुक्त्वा दाप्यः शुल्कादष्टगुणं दण्डम् । अधिकवचने न दोषः । यद्यप्यधिकवचनेन मिथ्योक्तिः, तथापि राजभाव्यस्यानपहारात् । स्वार्थहानेश्च न छलं ग्राह्यम् । कश्चिद् देशान्तरादभ्यागतः स्वदेशे सञ्चरन् म्रियेत चेत् सभाण्डो वणिक्, राजा तद्भाण्डं संरक्षेद् यावत् पुत्राद्यन्यतमदायाददर्शनम् । दायाद आगते दायादत्वं विज्ञाय समर्पयेत् ।

असति दायादे पुत्रे भ्रातरि वा बन्धुभ्यो दापयेत्, तदभावे ज्ञातिभ्यः मातृ-संबन्धेभ्यस्तस्य वणिजो दापयेत् । तदभावे सुगुप्तं तद्राजा दशवर्षाणि रक्षेत् । यानि न स्थिराणि द्रव्याणि तानि विक्रीय मूल्यं स्थापयेद् दश वर्षाणि । अस्वामिकं दशवर्षस्थितं तत ऊर्ध्वं राजा तद् द्रव्यमात्मसात् कुर्यात् । एवं धर्मो न हीयते। ऊर्ध्वं यदि कश्चिदागच्छेत्, इच्छातो दानमदानं वेति[1] ।

अब्राह्मणस्य प्रणष्टस्वामिकं रिक्थं संवत्सरं परिपाल्य राजा हरेत्[2] । अत्र च प्रणष्टस्वामिकद्रव्ये एकवर्षत्रिवर्षदशवर्षधारणविकल्पानां व्यवस्था तत्परदेशवर्ति-दूरतरदूरतमदेशवर्तितदीयपुत्रादिदायादवार्तायां सत्यां नानाविधानेकगमनप्रतिबन्ध-संभवे चावगन्तव्यम् । तत्र चेदनुप्राप्ते सवने ऋत्विङ्म्रियेत तत्र किं कार्यमिति जिज्ञासा तस्य सगोत्रोऽथ शिष्यो वा तत्कार्यमनुपूरयेत् । अथ चेदबान्ध-वस्ततोऽन्यमृत्विजं वृणुयात्[3] ।

अथर्त्विजि वृत्ते पश्चादन्यं वृणुयात् । पूर्वाहूतस्यैव दक्षिणा । पश्चादाहूतः किञ्चिल्लभेत । प्रवसेच्चेत्तत्कालं निमित्तं चापेक्ष्य यक्ष्यमाणस्तत्कालमुदीक्षेत । नान्तरा यजेत । स्यादात्ययिको वा । तं क्रतुं सम्पादयेत । प्रोष्य प्रत्यागतश्च किञ्चिल्लभेत। अथ चेत् प्रतिषिद्धः प्रवसेत्कामादनुप्राप्ते सवने ऋत्विकृच्छतं दण्ड्यः। स एव चादुष्टस्तस्य ऋत्वक्कुलोपाध्यायः। एवं व्याधितपतितोन्मत्त-

---

1. नारदीय. ३।१२-१६; याज्ञ. २।२५९,२६०,२६५; कात्या. ६२४,६३१; नारद. ६।१, २, ४, ५, ६, ७, १७; बृहस्पति. १३।३; १, ५, ६-९, ११, १४-१५, १६-१७ ।
2. बौधायन. १।१८।१६; नारद. ६।८, १८; बृहस्पति. १३।१८ ।
3. शङ्खलिखितौ, व्य. प्र. ३८९; मनुबृहस्पति. ८।२१०; १३।२०, २१ । ३।२१ ।

प्रहीणप्रध्वस्तेषु संप्रसादकरणमृत्विक्षु । कामाच्चेदपतितं याज्यं त्यजेदृत्विक् प्राप्नुयाद्द्विशतं दमम् । याज्यश्चैव तदेवाप्नुयात्त्यागे ऋत्विजोऽपतितस्य। कामं पतितमश्रोत्रियं त्यजद्याज्यं चाभिशस्तमदातारम् ।

पूर्वाहूतस्य दायादानां सा दक्षिणा । पक्षमासादिकमवेक्ष्य, विवाहादि–प्रयोजनं बुद्ध्वा; तेन यदि तत्प्रतीक्षणे यज्ञात्ययो बाधः संभाव्येत तदा ऋत्विगन्तरेण तं यज्ञं निष्पादयेत्[1] ।

पूर्ववृत्तेषु ऋत्विक्षु मध्ये एकस्य मरणादौ 'वृत्ते' यदाऽन्यं वृणुते, 'पूर्वाहूतस्य दक्षिणा' तन्मरणपक्षे तद्दायादानां कर्मानुरूपा सा । पश्चादाहूतः कश्चित् किञ्चित् कर्मानुरूपं लभते । यदा तु 'कालं' मासपक्षादिकं 'निमित्तं' 'वाऽन्यदपेक्ष्य' उद्भाव्य गतः, तदा यजमानस्तं प्रतीक्षेत, 'नान्तरा यजेत' । 'आत्ययिको वा' समयातिक्रिय-प्रतिसन्धानवान् 'क्रतुं' ऋत्विगन्तरेण समापयेत् । पूर्ववृत्तस्तु ऋत्विक् 'प्रोष्य' प्रवासं कृत्वा 'प्रत्यागतः' 'किञ्चित्' पारितोषिकं यजमानाल्लभेत । यजमानप्रतिषिद्ध ऋत्विक् कामाद्व्रजन् पणशतं दण्ड्यः । अथ स्वभावत एव दुष्ट इति विज्ञायते, तदा यजमानस्य ऋत्विक् कुलपरीक्षाधिकृत उपाध्याय एव दण्ड्यः । एवं व्याधिते पतिते उन्मत्ते 'प्रहीणे' अभिशापादिना त्यक्ते 'प्रध्वस्ते' कर्माक्षमताहेतुवार्धके संप्रसादकरणं तं सन्तोष्य ऋत्विगन्तरवरणेऽप्यनुज्ञाकरणम्[2] ।

अत्र बृहस्पतिः

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥ १३।४ ॥
बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥ १३।२२ ॥
ज्ञातिसंबन्धिसुहृदामृणं देयं सबन्धकम् ।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा ॥
स्वेच्छादेयं हिरण्यं तु रसधान्यं तु सावधि ।
देशस्थित्या प्रदातव्यं गृहीतव्यं तथैव तत् ॥
समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचते च यः कश्चिल्लाभात् स परिहीयते ॥
प्रयोगः पूर्वमाख्यातः समासेनोदितोऽधुना ।
श्रूयतां कर्षकादीनां विधानमिदमुच्यते ॥
वाह्यकर्षकबीजाद्यैः क्षेत्रापकरणे च ।

---

1. शङ्खलिखितौ, वि. र. १२१-१२२ ।
2. मनु. ८।३८८; नारद. ६।९-११; बृह. १३।४, २२-२४ ।

ये समानास्तु तैः सार्धं कृषिः कार्या विजानता ॥
विवीतनगराभ्यासे तथा राजपथस्य च ।
ऊषरं मूषिकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥
गर्तानूपं सुसेकञ्च समन्तात्क्षेत्रसंयुतम् ।
प्रकृष्टञ्च कृतं काले वापयन् फलमश्नुते ॥
कृशाऽतिवृद्धं क्षुद्रञ्च रोगिणं प्रपलायिनम् ।
काणं खञ्जञ्च नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥
वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥
एष धर्मः समाख्यातः कीनाशानां सनातनः ।
हिरण्यरूप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता च कलाभिज्ञः शिल्पी चोक्तो मनीषिभिः ॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्तु यथांशतः ॥ १३।२३-२७, २९-३१, २७, ३२-३४ ॥
हर्म्यं देवगृहं वाऽपि धार्मिकोपस्कराणि च ।
संभूय कुर्वताञ्चैषां प्रमुखो द्व्यंशमर्हति ॥
नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥
स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम् ।
राज्ञे दत्वा तु षड्भागं भजेयुस्ते यथांशतः ।
चतुरोंऽशान् तथा मुख्यः शूरस्त्र्यंशमाप्नुयात् ॥
समर्थस्तु हरेद् द्व्यंशं शेषास्त्वन्ये समांशिनः ॥ १३।३६-३९ ॥

कात्यायनश्च

परराष्ट्राद्धनं यत्स्याच्चोरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमाहृत्य विभजेरन् यथाविधि ॥
चोराणां मुख्यभूतस्तु चतुरोंऽशास्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शिष्टास्त्वेकैकमेव च ॥
तेषां च प्रसृतानां यो ग्रहणं समाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं तस्य कार्या समक्रिया ॥
वणिजां कर्षकाणाञ्च चोराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥ ६३३-६३५; ६३७ ।

**दत्ताप्रदानिकम्**

'तुभ्यमहं सम्प्रददे' इति प्रतिज्ञादिपूर्वं वाचा दत्तस्य अप्रदानम्। क्रयविक्रयविषय-स्तावदनुशय उक्तः, धर्मादिदानविषयस्त्वधुनाभिधीयते। दत्तमनपाकृतमृणमिव साक्ष्यादिभिर्विभाव्य ग्राह्यम्।

वाग्दत्तं व्यवहारायोग्यं चेत्, एकत्र अनुशये वर्तेत अनुशये एव केवले वर्तेत। न त्वनुशयात्कदापि मुच्येत। सर्वस्वं पुत्रदारमात्मानं प्रदाय, अनुशयिनः प्रयच्छेत् पुनर्दद्यात् सर्वस्वादिकम्। साधव इति बुद्ध्या धर्मदानं तेषु प्रतिज्ञातमसाधुत्व-ज्ञानानन्तरमनुशये वर्तेत। कर्मसु चौपघातिकेषु वेति। गोरक्षादिप्रशस्तकर्मार्थं धार्मिकत्वबुद्ध्या चोरपरदारकादिषु कृतं धर्मदानम्, अनुशये वर्तेत। अर्थदान-मुपकारिष्वपकारिषु, वेति, उपकारित्वबुद्ध्यानुपकारिषु अपकारिषु वा कृतमर्थदानम्, अनुशये वर्तेत। काममनिमित्तं दानमनर्हेष्वर्हत्वबुद्ध्या कृतमनुशये वर्तेत।

ताडनभयादाक्रोशभयान्निन्दनभयादनर्थभयाद्वा रोगोन्मादाद्युत्पत्तिभयाद्वा, क्रिय-माणं भयदानम्, प्रतिगृह्णतः कृत्याभिचारादिवृत्तेः, प्रयच्छतश्च भीरोः स्तेयदण्डः। कोपदानं परमारणार्थम्, प्रतिगृह्णतः स्तेयदण्डः। नृत्तगीतादिकलाकुशलेभ्यो राजभिः कृतात् पारितोषिकदानादधिकतरं पारितोषिकदानञ्च कश्चित् कुर्यात्। तत्र विषये उत्तमसाहसो दण्डः। प्रातिभाव्यं वृथादानोपलक्षणं तद्, दण्डशुल्कशेषं अक्षदेवन-कृतमृणम्, सुरापानकृतमृणम्, कामदानं च नटनर्त्तकादिदत्तञ्च, रिक्थहरः पुत्रो दायादो वा, अकामा न दद्यात्[1]।

पण्यमूल्यं पण्यार्थं सवृद्धिकं गृहीत्वा प्रतिदत्तमन्याययुक्तमपि यथागृहीतं तथा दत्तम्, भृतिर्भृत्येभ्यः, तुष्ट्या तुष्टेन च यद्दत्तं भृत्यादेः, स्नेहाच्च यद्दत्तं भार्यादेः, उपकारिणे प्रत्युपकारार्थं चातिबहु यद्यपि दत्तम्, स्त्रीशुल्कं चाननुरूपमपि, परलोकार्थमात्मानुग्रहार्थञ्च। सर्वत्रानुपहत्य पुत्रादीननुमान्यञ्चेति दत्तं सप्तविधम्। अदत्तमुच्यते–भयेन दत्तमदाने मारयतीति कालकाङ्क्षिणा प्रभवते यद्दत्तम्[2]। क्रोधवेगेन तस्मिन्नेव काले यद्दत्तम्, शोकेन वा पुत्रादिव्यापारनिमित्तेन, वेदनया वा शिरोरोगादिजनितया निर्विण्णेन। उत्कोचो राजवल्लभेभ्यो लेखकादिभ्यः कार्यार्थम-करणे। परिहासेन यद्यप्यन्यतरो राजकुलं गच्छेत् साक्षिण आहत्य। व्यत्यासं वस्त्रादित्सया हिरण्यं दत्तं समर्पितमदत्तमेव। छलेन दत्तं यथा दशरथेन। यथा 'तवेदं गृहमित्युदारेणोक्ते 'निर्गच्छेत्'। बालोऽप्राप्तव्यवहारः। प्रमूढो व्याधिनिद्रामति-विभ्रमादिना। अस्वतन्त्रः पितृमात्रादिना। मत्तः शीध्वादि उपयोगेन। उन्मत्तः।

---

1. कौ. ३।१६।१-९।
2. नारदीय. ४।७।

**"पञ्चोन्मादाः समाख्याता वातपित्तकफोद्भवाः।**
**चतुर्थो धननाशेन सन्निपातेन पञ्चमः" ॥**

एतैर्दत्तमदत्तम् । अदेयादत्तयोर्दाता प्रतिग्रहीता च लोभाद्दण्ड्यःस्यात् प्रमाणस्यावचनाद् दातृप्रतिग्रहीतृदेयानुरूपो दण्डः[1] ।

**कात्यायनः**

**सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम् ।**
**यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥ ६४० ॥**
**स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।**
**न दद्यादृणवद्दाप्यः प्राप्नुयात् पूर्वसाहसम् ॥ ६४२ ॥**

प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्[2] । यद्दत्तमसौ गृहीत्वा लोभादहङ्काराद् वा न त्यजति, प्रतिश्रुतं वा धनं बलेन गृह्णाति तदा तस्य चौर्यपापस्य संशुद्ध्यर्थं राज्ञा स्वर्णं दण्डं दापनीयो भवति[3] ।

**अभ्युपेत्याशुश्रूषा**

गृहीत्वा वेतनं कर्म अकुर्वतो भृतकस्य द्वादशपणो दण्डः, संरोधश्चाऽऽकारणात्। यत्कर्मकरणाय वेतनं गृहीतं तत्कर्मकरणासामर्थ्ये, कुत्सिते वा सति तस्मिन् कर्मणि व्याध्युद्भवे वा पुत्रविपत्यादिव्यसनसम्भवे वा कर्मकर्त्तव्यं त्यजन् परेण वा कारयन् कर्मकरो न दुष्यति । तस्य व्ययकर्मणा अनुशयिहस्ताद् भृतिव्ययक्रियया, भर्ता वा कारयितुं लभेत परेण तत्कर्मानुष्ठापयितुमर्हेत् । मदन्यस्त्वया कर्म न कारयितव्यः त्वदन्यस्य च मया कर्म न कर्त्तव्यम्' इति भर्तृभृतकयोः समयनिर्बन्धे सति भर्तुः कर्माकारयतो भृतकस्य चाकुर्वती द्वादशपणो दण्डः । गृहीतवेतनः, भर्तुः कर्मानिष्ठापने कर्मणोऽपरिसमापनेऽसकामोऽन्यत्र न कुर्याद् भर्त्रनिच्छयान्यत्र कर्म नानुतिष्ठेत्[4] ।

कृतस्य वेतनमस्ति, नास्ति अकृतस्य । सः भर्ता, अल्पमपि किञ्चिदपि कर्म कारयित्वा, न कारयेच्चेदर्थाच्छेषम्, अस्य भर्तुःकर्मेति शेषः, कृतमेव विद्यात् । क्लृप्तदेशकालातिक्रामणेन करणे, कर्मणामन्यथाकरणे वा, असकामः अनिच्छन्, कृतं नानुमन्येत । सम्भाषितादधिकक्रियायाम्, प्रयासं तद्विषयं श्रमं मोघं वन्ध्यम्, न कुर्याद् यत्किञ्चिदधिकं तदर्थे वेतनं दद्यात्[5] ।

---

1. नारदीय. ४।८-११; याज्ञ. २।१७५; कात्या. ६३८-६३९; वसिष्ठ. १५।१-५; बृह. १४।३-१९; कात्या. ६५४, ६५०, ६५१; नारद. ४।१२; "प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः"मत्स्य. २२७।४ ।
2. गौ. ५।२४ ।
3. मनु. ८।२१३ ।
4. कौ. ३।१४।१-५ ।
5. कौ. ३।१४।६-१० ।

अन्ये शास्त्रकाराः[1]

गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद् दमं दाप्यो द्विगुणं तच्च वेतनम् ॥ बृहस्पतिः ॥
भाण्डं व्यसनमागच्छेद्यदि वाहकदोषनः।
स दाप्यो यत्प्रणष्टं स्याद्दैवराज्ञकृतादृते ॥ नारदः ॥
प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ॥ वृद्धमनुः ॥

तद्दोषेण यद्विनश्येत् तत्स्वामिने । अन्यत्र दैवोपघातात् (वि. ध. सू ५।१५५-५६)।

विघ्नयन्वाहको दाप्यः प्रस्थाने द्विगुणं दमम्।
(कात्या. ६५८)
कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात्।
स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात् ॥
(नारद. वि. र. पृ. १६१)
त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥
(कात्या. ६६०)
यदा च पथि तद्भाण्डमसिध्येत ह्रियेत वा।
यावानध्वा गतस्तेन प्राप्नुयात्तावतीं भृतिम् ॥
(कात्या. ६६१)
कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥
(बृह., स्मृ. चं. २ पृ. २०४)
प्रभुणा विनियुक्तः सन् भृतको विदधाति यत्।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥ बृहस्पतिः ॥
मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति।
दण्ड्यः स समूलं सकलं धर्मज्ञेन महीभृता ॥
(मत्स्य. २२७।६)

आर्याणां दासीकरणे दण्डाः, तदपवादाश्च । दासाः गर्भदासाः कर्मकराः कर्षक-गोपालादयः तेषां कल्पः आधानविक्रयादिविधानमुच्यते । उदरदासवर्जमशन-निरुपायोऽन्नाच्छादनदानेन रक्ष्यमाण उदरदासस्तद्वर्जम्, आर्यप्राणमप्राप्तव्यवहारं

---

1. बृह. स्मृ. चं. ३ पृ. २०२; वि. र. पृ. १५९; कात्या. ६५७; बृद्धमनुः, स्मृ. चं. २ पृ. २०३; परा. मा. ३ पृ. ३२५; व्य. पृ. ३२५; नारद. ९।९; कात्या. ६५९; स. वि. पृ. ३००।

शूद्रं विक्रयाधानं नयतः विक्रीणानस्यादधानस्य च, स्वजनस्य द्वादशपणो दण्डः । वैश्यं द्विगुणः वैश्यं विक्रयाधानं नयतः स्वजनस्य चतुर्विंशतिपणः । क्षत्रियं त्रिगुणः क्षत्रियं विक्रयाधानं नयतः षट्त्रिंशत्पणः । ब्राह्मणं चतुर्गुणः विक्रयाधानं नयतोऽष्टचत्वारिंशत्पणः । परजनस्य यथोक्तं कुर्वतः, पूर्वमध्यमोत्तमवधाः यथाक्रमं प्रथमसाहसो मध्यमसाहस उत्तमसाहसो घातश्च दण्डाः । क्रेतृश्रोतृणाञ्च शूद्रादिं मूल्यदानेन स्वीकुर्वतां तत्साक्षिणां च पूर्वमध्यमोत्तमवधा दण्डाः[1] ।

म्लेच्छा अनार्याः कृषिशस्त्रजीविनो तेषां वन्याः विषये, अदोषः प्रजां विक्रेतुमाधातुं वा स्वीयप्रजाविक्रयाधानं न दोषाय । आर्यस्य जनस्य दासभावः नैवापादनीयः[2] । कुलबन्धने आर्याणामापदि आर्यमाधायापन्निवृत्त्यपेक्षितधनग्रहणेन धनिके आहितं कृत्वा न तु विक्रीय, निष्क्रयं चाधिगम्य धनिकप्रत्यर्पणीये धने हस्तप्राप्ते सति, आहितपूर्वं कुमारं स्वयमाधीभावेन कृतोपकारकमबालमपि वा, पूर्वं निष्क्रीणीरन् प्रथमं धनं दत्वा प्रत्यानयेयुः शान्तविपदां तन्निष्क्रयणमेव प्रथमानुष्ठेयं कृत्यम्[3] ।

धनग्रहणेन स्वयमेवात्मानमाधिं कृत्वा धनिकसकाशात् सकृदपकृतश्चेत् पुनर्धनिकमुपगन्तुं नार्हेत्, सद्य एव तदृणं निर्यातयेच्च । अन्येनाहितकः, द्विः, निष्पतितः सीदेत् । उभौ आत्माघातान्याहितकश्च, सकृत् परविषयाभिमुखौ सीदेतामिति विपरिणतसम्बन्धः । स्वामिवित्तमपहरतो, गर्भदासस्य, आर्यभावमपहरतोऽर्धण्डः । निष्पतितप्रेतव्यसनिनामाधिग्राहकदोषान्निपतितस्य देशान्तरगतस्य प्रेतस्य व्यसनिनो मद्यद्यूतादिव्यसनप्राप्तस्य च दासस्य, मूल्यमाधाता भजेत । आहितस्य प्रेतादिग्राहणं स्त्रीणामाहितानाम्, नग्नस्नापनं दण्डप्रेषणमतिक्रमणञ्चोपभोगश्च मूल्यनाशकरम्[4] ।

उपमाता शुश्रूषिका कर्षकस्त्री आस्तरणबीजनाद्युपचारकर्त्री एतासामाहितानाञ्च मोक्षकरम्[5] । तामकामां स्ववशामधिगच्छतः पूर्वः साहसदण्डः । परवशां मध्यमः । सिद्धमुपचारकस्याभिप्रजातस्य अपक्रमणम्[6] । आत्मविक्रयिणः प्रजाम् आर्यां विद्यात् । आत्माधिगतं स्वामिकर्माविरुद्धं लभेत, पित्र्यं च दायम् । मूल्येन चार्यत्वं गच्छेत् ।

गृहजातो दायागतो लब्धः क्रीत इति चतुर्णामन्यतमं दासम् । अपूर्णाष्टवयसम्, बन्धुहीनम्, अकामम्, नीचे कर्मणि, नयतो विदेशे विक्रयाधानं नयतश्च दासीं वा सगर्भाम्, अप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वसाहसदण्डः, क्रेतृश्रोतृणाञ्च।

---

1. कौ. ३।१३।१-५ ।
2. कौ. ३।१३।६-७ ।
3. कौ. ३।१३।८ ।
4. कौ. ३।१३।९-१४ ।
5. कौ. ३।१३।१५ ।
6. कौ. ३।१३।१९ ।

तं निष्क्रयेणार्यमकुर्वतः दास्यादमोचयतः, द्वादशपणो दण्डः । अंकारणमाह्वानं कृत्वा बन्धुभिस्तस्य सम्भूयरोधनेनोपलम्भश्च कार्यः । दासद्रव्यस्य ज्ञातयो दायादाः । तेषामभावे स्वामी दायहरः । स्वामी यदि स्वीयायां दास्यां पुत्रं जनयेत्, तर्हि स पुत्रो दासो न भवति, सा च दासी दास्यान्मुच्येत । गृह्या चेत्, कुटुम्बार्थचिन्तनीति । सा दासी गृहासक्ता कुटुम्बमर्थं च यदि चिन्तयेत्, अस्याः माता भ्राता भगिनी चादासाः स्युः । सकृद् विक्रीतमाहितं वा दासं तथाविधां दासीं वा निष्क्रयदानेन प्रत्यापद्य पुनस्तौ विक्रीणानस्यादधानस्य च द्वादशपणो दण्डः । यदि निष्क्रीताः स्वात्मानं पुनर्विक्रितव्यमाधातव्यं च स्वयं वदेयुस्तदा तद्विक्रयाधानयोर्न दोषः[1] ।

दास्याधिकारिविषये कात्यायनः

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञे तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यश्च दासीं कुर्यात्कुलस्त्रियम् ।
संक्रामयेत्तेथान्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥
बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकयत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥
विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयाद्द्विशतं दमम् ॥ ७२६-२९ ॥

**वेतनादानम्**

अराजदैविकं भाण्डं यदि प्रज्ञाहीनतया वाहकेन नाशितं तदा नाशानुसारेणासौ तद्भाण्डं दापनीयः । यः पुनर्विवाहाद्यर्थं मङ्गलवति वासरे प्रतिष्ठमानस्य तत्प्रस्थानौपयिकं कर्म प्राङ्गणीकृत्य तदानीं 'न करिष्यामि' इति प्रस्थानविघ्नमाचरति तदासौ द्विगुणां भृतिं दाप्यः । अत्यन्तोत्कर्षहेतुकर्मनिरोधात् । किंच, अध्यवसिते प्रस्थाने स्वाङ्गीकृतं कर्म यस्त्यजति, असौ भृतेः सप्तमं भागं दाप्यः । नन्वत्रैव विषये 'प्रस्थानविघ्नकृत्' (व्य. १९७) इत्यादिना द्विगुणभृतिदानमुक्तम्, इदानीं सप्तमो भाग, इति विरोधः । उच्यते–भृत्यन्तरोपादानावसरसंभवे स्वाङ्गीकृतं कर्म यस्त्यजति तस्य सप्तमो विभागः । यस्तु प्रस्थानलग्नसमय एव त्यजति, तस्य द्विगुणभृतिदानमित्यविरोधः । यः पुनः पथि प्रकान्ते कर्म त्यजति, स भृतेश्चतुर्थं भागं दाप्यः ।

---

1. कौ. ३।१३।२७-३५; नारद. ८।५, ७, २३, २५, २६-२९, ३१, ३६, ३८, ४०, ३०-३६, ४१-४३; बृह. १५।८-१४; कात्या. ७१३, ७२०, ७२३-७२५; मनु. ८।४१४; याज्ञ. २।१८२; दक्ष. ७।३३ ।

अर्धपथे पुनःसर्वां भृतिं दाप्यः । यस्तु कर्मात्यजन्तं त्याजयति स्वामी पूर्वोक्तप्रदेशे वसावपि पूर्वोक्तसप्तमभागादिकं भृत्याय दापनीयः, एतच्चाव्याधितादिविषयम्[1] । अत्र मनुः

भृतोऽनार्त्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥
आर्तस्तु कुर्यात् स्वस्थः सन्यथाभाषितमादितः ।
स दीर्घस्यापि कालस्य तल्लभेतैव वेतनम्
यथोक्तमार्तः सुस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥ ८।२१५-२१७ ॥

वेतनस्याप्रदाने, दशबन्धः न्याय्यवेतनदशभागः, षट्पणो वा दण्डः । अपव्ययमाने गृहीत्वा वेतनं गृहीतं वदति कर्मकरे, द्वादशपणो दण्डः, पञ्चबन्धो वा वेतनपञ्चभागो वा, दण्डः[2] । उद्वसतः कीनाशस्य कर्मन्यासे दण्डताडनम् । तथा पशुप्रस्य । अवरोधनञ्चास्य पशूनाम्[3] । मत्स्यपुराणे

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ।
दण्ड्यः समूल्यं सकलं धर्मज्ञेन महीक्षिता ॥ २२७।६ ॥

**पण्यस्त्रीविधिः**

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात् ॥
(बृह. १९।१३)

**मत्स्यपुराणे**

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
भाटं न दद्याद्दाप्या स्यादनूढस्याऽपि भाटकम् ॥ २२७।१४५ ॥
अन्यमुद्दिश्य यो वेश्यां नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥
नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमम् ।
तस्यै दद्युः पृथग्राज्ञे दण्डं च द्विगुणं परम् ॥ २२७।१४६-१४८ ॥

---

1. याज्ञ. २।१९७-१९८ ।
2. कौ. ३।१३।१३९; नारद. ९।६-८; कात्या. ६६१ ।
3. आप. २।२८।२-४; कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥ १६।११ ॥

**ग्रहादिभाटकविधिः**[1] अत्र कात्यायनः

गृहवार्यापणादिनि गृहीत्वा भाटकेन यः।
स्वामिने नार्पयेद्यावत्तावद्दाप्यः स भाटकम् ॥
हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
नार्पयेत्कृतकृत्यः सन् तावद्दाप्यः स भाटकम् ॥ ६६३, ६६२ ॥

**बृद्धमनुः**[2]

यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति।
भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम् ॥

**नारदः**

स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्।
गृहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥ ९।२२ ॥

**स्वामिपालविवादः**

शम्या यष्टिस्तस्याः पातः प्रेक्षेपो ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि, त्रीन्वा यष्टिप्रक्षेपान्यावत्पशुप्रचारार्थं सस्यवपनादिसंरोधपरिहारःकार्यः। नगरसमीपे पुनरयं त्रिगुणं कर्त्तव्यः। तस्मिन्परिहारस्थाने यदि केनचिददत्तावृतिकं धान्यमुप्यते तच्चेत्पशवो भक्षेयुस्तत्र पशुपालानां नृपो दण्डं न कुर्यात्। तत्र परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमर्यीं तथाविधामुच्छ्रितां कुर्यात्। यामपरपार्श्वे उष्ट्रो न विलोकयेत्, तस्यां च यत्किञ्चिच्छिद्रं श्वसूकरमुखप्रवेशयोग्यं तत्सर्वमावृणुयात्। वर्त्मसमीपग्रामसमीपवर्तिनि वा परिहारस्थे क्षेत्रे दत्तवृतौ सपालः पशुः पालानिवारितो द्वारादिना कथंचित् प्रविष्टो यदा भक्षयति तदा पणशतं दण्ड्यः। पशोश्च दण्डासंभवात् पाल एव दण्ड्यः। विपालान्पुनर्भक्षणप्रवृत्तान्क्षेत्ररक्षको निवारयेत्। वर्त्मग्रामान्तव्यतिरेकेषु पशुर्भक्षयन्सपादं पणं दण्डमर्हति। अत्राऽपि पाल एव दण्ड्यः। सर्वत्र क्षेत्रे पशुभक्षितं फलं स्वामिने पालेन स्वामिना वा यथापराधं दातव्यमिति निश्चयः। प्रसूतां गामनिर्गतदशाहां तथा च चक्रशूलाङ्कितोत्सष्टवृषान्हरिहरादिप्रतिमासंबन्धिपशून्पालसहितान् पालरहितान्वा सस्यभक्षणप्रवृत्तान्मनुरदण्ड्यानाह। उत्सृष्टवृषाणामपि गर्भार्थं गोकुले पालैर्धारणात्सपालत्वसंभवः[3]। क्षेत्रकर्षकस्यात्मपशुसस्यभक्षणेऽयथाकालं वपनादौ वापराधे सति यावतो राजभागस्य तेन हानिः कृता ततो दशगुणदण्डः स्यात्। क्षेत्रिकाविदिते भृत्यानामुक्तापराधे क्षेत्रिकस्यैव दशगुणार्धदण्डः।

---

1. स्मृ. च. पृ. ४७६-४८०; ना. स्मृ. ९; २०-२; वि. र. १६८-१९।
2. परिशिष्टे पृ. २९।
3. मनु. ८।२३७-२४४।

स्वामिनां पालानां चारक्षणादपराधे पशूनां च सस्यभक्षणरूपे व्यतिक्रमे धर्मप्रधानो भूपतिरेतत्पूर्वोक्तं कर्त्तव्यमनुतिष्ठेत् ।

परसस्यविनाशकारिणी महिषी अष्टौ माषान्दण्डनीया । गौस्तदर्धं चतुरो माषान्। अजा मेषाश्च माषद्वयं दण्डनीयाः । महिष्यादीनां धनसम्बन्धिभावात्तत्स्वामी पुरुषो लक्ष्यते । माषश्चात्र ताम्रिकपणस्य विंशतितमो भागः । एतच्चाज्ञानविषयम्. ज्ञानपूर्वे तु पणस्य द्वौ पादौ गां तु द्विगुणां महिषीं तथा । यदि पशवः परक्षेत्रे सस्यं भक्षयित्वा तत्रैवानिवारिताः शेरते तदा यथोक्ताद्दण्डाद्द्विगुणोदण्डः । सवत्सानां पुनर्भक्षयित्वोपविष्टानां यथोक्तदण्डाच्चतुर्गुणो दण्डो वेदितव्यः । प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः, तदुपघातेऽपीतरक्षेत्रदण्डेन समं दण्डमेषां महिष्यादीनां विद्यात् । महिषी यत्र यादृशेन दण्डेन दण्ड्यते तत्र तादृशेनैव दण्डेन खरोष्ट्रमपि प्रत्येकं दण्डनीयम् ।

यस्मिन्क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्विनाशितं तावत् क्षेत्रफलं सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः । गोपस्तु ताडनीय एव न फलं दापनीयः । गोमी पुनःस्वापराधेन सस्यनाशे पूर्वोक्तं दण्डमेवार्हति, न ताडनम् । फलदानं पुनः सर्वत्र गोस्वामिन एव, तत्फलपुष्टमहिष्यादिक्षीरेणोपभोगद्वारेण तत्क्षेत्रफलभागित्वात् । गवादिभक्षितावशिष्टं पलालादिकं गोमिनैव ग्रहीतव्यम् । मध्यस्थकल्पितमूल्यदानेन क्रीतप्रायत्वात् । ग्रामविवीतसमीपवर्तिनि क्षेत्रे अकामतो गोभिर्भक्षिते गोपगोमिनोर्द्वयोरप्यदोषः । कामतश्चारणे चौरस्य यादृशो दण्डस्तादृशं दण्डमर्हति[1] । पशुविशेषेऽपि दण्डाभावमाह–

**महोक्षोत्सृष्टपशवःसूतिकागन्तुकादयः।**
**पालो येषां न ते मोच्या दैवराजपरिप्लुताः ॥**

(याज्ञ. २।१६३)

इदानीं गोपं प्रत्युपदिश्यते–

**यथार्पितान्पशून्गोपःसायं प्रत्यर्पयेत्तथा ।**
**प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ॥**
**पालदोषविनाशे तु पाले दण्डो विधीयते ।**
**अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥**
**ग्रामेच्छया गोप्रचारो भूमिराजवशेन वा ।**
**द्विजस्तृणैधः पुष्पाणि सर्वतः सर्वदा हरेत् ॥**
**धनुः शतं परीणाहो ग्रामे क्षेत्रान्तरं भवेत् ।**
**द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥** (याज्ञ. २।१६४-१६५)

---

1. याज्ञ. २।१५९-१६२ ।

पशुसञ्चारखादनार्थं तृणस्तम्बजलयुक्तं मालमुन्नभूतलं वनं प्रसिद्धमैतैर्विसृष्टै-रुपजीवयेयुर्ग्रामजनान् । तद्भक्षयित्वा उष्ट्रमहिषाणाम्, पादपणं गृह्णीयुः विवीताध्यक्षाः । गवाश्वखराणाञ्चार्धपादिकं रूपं पणाष्टांशं गृह्णीयुः । क्षुद्रपशूनां षोडशभागिकं रूपं पणषोडशभागं गृह्णीयुः । अनपसृत्य विवीत एवोपविष्टा-नामुष्ट्रादीनामेत एव द्विगुणा दण्डाः भवन्ति । रात्रौ तत्रैव सविंशतां चतुर्गुणा दण्डाः । ग्रामवृषभाः देववृषभाश्च, अनिर्दशाहा धेनुर्वा अनतिक्रान्तदशाहा प्रसूता गौश्च वृद्धवृषभाः, गोवृषाश्च सेक्तारश्चादण्ड्याः ।

उष्ट्रमहिषादिभिः सस्ये भक्षिते सति, सस्योपघातं परिसङ्ख्याय द्विगुणं दण्डं दापयेत् स्वामिने । विवीताध्यक्षमविज्ञाप्य पशून् विवीते चार्यतः तत्स्वामिनो द्वादशपणो दण्डः । अथवा अविज्ञाप्यैव स्वामिने प्रचारणं पशूनुपक्षेत्रं नियन्त्र्य चारयतः, द्वादशपणो दण्डः नाशितसस्य तद्विगुणदण्डातिरेकेण । प्रमुञ्चतः निर्यन्त्रणं पशून् विसृज्य चारयतः, चतुर्विंशतिपणः दण्डः भक्षितद्विगुणातिरेकेण । क्षेत्रपालका-नामर्धदण्डः प्रमोक्तृदण्डस्यार्धदण्डो भवति । तदेव षण्डभक्षणे कुर्यात् । वाटभेदे द्विगुणः । वेश्मखलवलयगतानां च धान्यानां भक्षणे हिंसाप्रतीकारं कुर्यात् । अभयवनमृगाः परिगृहीताः भक्षयन्तः स्वामिनो निवेद्य यथाऽवध्यास्तथा प्रतिषेध्याः । पशवो रश्मिप्रतोदाभ्यां वारयितव्याः । तेषामन्यथा हिंसायां दण्डपारुष्यदण्डाः । प्रार्थयमाना दृष्टापराधा वा सर्वोपायैर्नियन्तव्याः[1] । अवरुध्य पशून् मारणे नाशने वा स्वामिभ्योऽवसृजेत्[2] । दिवापशूनां वृकाद्युपघाते पाले त्वनापदि पालकदोषः । विनष्टपशुमूल्यं च स्वामिने दद्यात् । अननुज्ञातां दुहन् पञ्चविंशति कार्षापणान्[3] । एवमेवान्यत्रापि[4] ।

**संविद्व्यतिक्रमः**

अनुबन्धं कृत्वा तन्मध्ये यो नरो लोभादिना निष्क्रामेत्तं राजा राष्ट्रान्निर्वासयेत् । अथ चैनं संविद्व्यतिक्रमकारिणं निबोध्य चतुरः सुवर्णान् पणिनिष्कान् प्रत्येकं चतुः सुवर्णपरिमितान् राजतं च शतमानं विंशत्यधिकरक्तिकाशतत्रयपरिमाणं त्रयमेतद्-विषयलाघवगौरवापेक्षया समन्वितं व्यस्तं वा राजा दण्डं दापयेत् । ग्रामेषु ब्राह्मण-जातिसमूहेषु संविद्व्यतिक्रमकारिणामेतद्दण्डविधिं धर्मप्रधानो राजानुतिष्ठेत्[5] ।

---

1. कौ. ३।१०।३१-४८ ।
2. आप. ध. सू. २।२।२८।६ ।
3. विष्णु. ५।१३७-१३९ ।
4. बृह. १६।१४, १६; नारद. ९।११-१३, १७; वि. र. १७५; ना. म. सं. १२।३० ।
5. मनु. ८।२१९-२२१ ।

यः पुनर्गणस्य सम्बन्धि साधारणं द्रव्यमपहरति, संवित् समयस्तां समूहकृतां वा यो लङ्घयेत्तदीयं सर्वं धनमपहृत्य स्वराष्ट्राद्विप्रवासयेत् । गणिनां यो समूहहितवादन-शीलास्तद्वचनमितरैर्गणानामन्तर्गतैरनुसरणीयम् । यस्तु गणिनां मध्ये समूहहित-वादिवचनप्रतिबन्धकारी स राज्ञा प्रथमसाहसं दण्डनीयः । समूहकार्यनिर्वृत्यर्थं स्वपार्श्वं प्राप्तान् गणिनो निर्वर्तितात्मीयप्रयोजनान् दानमानसत्कारैः स राजा परितोष्य विसर्जयेत् । समूहकार्यार्थं महाजनैः प्रेरितो राजपार्श्वे यवसहिरण्यादिकं लभते तदप्रार्थित एव महाजनेभ्यो निवेदयेत् । अन्यथा लब्धादेकादशगुणं दण्डं दापनीयः । श्रौतस्मार्तधर्मज्ञाः बाह्याभ्यन्तरशौचयुक्ता अर्थेष्वलुब्धाः कार्यविचारकाः कर्त्तव्याः । श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः । एतेषां श्रेण्यादीनां भेदं धर्मव्यवधानं नृपो रक्षेत् । पूर्वोपात्तां वृत्तिं च पालयेत्[1] ।

अत्र बृहस्पतिः

यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव च ।
संवित्क्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ।
अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणीपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः ॥
कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दमं परित्यागं प्रकुर्युः पापकर्मणाम् ।
तैः कृतं यत्स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥
बाधां कुर्युर्यदेकस्य संभूता द्वेषसंयुताः ।
राज्ञा तु विनिवार्यास्ते शास्याश्चैवानुबन्धिनः ॥
मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तथा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥ १७।१५-२० ॥
संभूयैकमतिं कृत्वा राजभाव्यं हरन्ति ये ।
ते तदष्टगुणं दाप्या वणिजश्च पलायिनः ॥ १७।२२ ॥

## विक्रीयासंप्रदानम्

दशाहादूर्ध्वं क्रीतं न त्यजेत् । नाऽपि विक्रीतं विक्रयिको बलेन दापयेत् । विक्रीतं बलेन गृह्णन्परित्यजन्राज्ञा शतानि पणानि दण्ड्यः । उन्मादादिदोषानकथयित्वा दोषवतीं कन्यां वराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिं पणान्दण्डं कुर्यात् । नेयं कन्या क्षतयोनिरियमिति यो मनुष्यो द्वेषेण ब्रूयात्तस्या उक्तदोषभ-

1. याज्ञ. २।१८५-१९२; नारद. १३।२२; कात्या. ६६८-६७२; बृह. १७।११-१४; नारद. १३।६ ।

विभावयन्पणशतं राजा दण्डं प्रकल्पयेत्[1] । गृहीतमूल्यं यःक्रेतुर्नैव दद्यात्तस्यासौ सोदयं दाप्यः । राज्ञा च पणशतं दण्ड्यः[2] । निर्दोषं दर्शयित्वा य सदोषं प्रयच्छति, द्विगुणं मूल्यं दाप्यो तावदेव विनयं तु[3] । अत्र बृहस्पतिः

ज्ञात्वा सदोषं यः पण्यं विक्रीणीताऽविचक्षणः ।
तदेवं द्विगुणं दाप्यस्तत्समं विनयं तथा ॥
मत्तोन्मत्तेन विक्रीतं हीनमूल्यं तु यद्भवेत् ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥ १८।३-४ ॥

**क्रीत्वानुशयः**

**नारदः**

द्वितीयेऽह्नि ददत्क्रेता मूल्य त्रिंशांशमावहेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥ १२।३ ॥
क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥ १२।४ ।
त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियः ।
दशाहः सर्वबीजानामेकाहो लोहवाससाम् ॥ १२।५-६ ॥
परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥ १२।७ ॥

चन्द्रगत्यादिवशेन पण्यानर्धहानिवृद्धिर्वा भवति । तच्चैवं विजानता वणिजा क्षयं वृद्धिं वा निरूप्याविरोधे सति 'क्रीत्वा' विक्रीय वा नानुशयः कार्यः । कुर्वतो वा पण्यमूल्यषड्भागो राजदण्डः[4] ।

**सीमाविवादः**

द्वयोर्ग्रामयोः सीमाव्यतिक्रमविवादे प्रसक्ते, सामन्ता समीपवर्तिनी, पञ्चग्रामी, दशग्रामी वा अर्थात् तत्स्था व्यवहारज्ञाः समुदेत्य गिरिनदीविपिनादिभिः स्थावरैः सेतुभिस्तुषाङ्गारभस्मादिभिश्च कृत्रिमैः निर्णयेत् । सीमान्तग्रामाभावे कृषिकर्मणो वृद्धगोपालकाः पूर्वभोक्तारो वा सीमानं निर्णयेयुः । अवाह्यास्तदन्तदेशवासिनः नष्ट-सीमासेतुविषयाविसंवादिज्ञानशालिनो बहवो लुब्धकादयस्तेष्वेक एव वा, सीमासेतून्

1. मनु. ८।२२२-२२८; याज्ञ. २।२५६-२५७ ।
2. विष्णु. ५।१२७-१२८ ।
3. नारद. ११।७, ८, ९, १०-१२ ।
4. याज्ञ. २।२५८; बृहस्पति. १८।९; व्यास. वि. र. १८६; कात्या. ६८८; मनु. ८।२०८ ।

निर्दिश्यामुकप्रदेशः पूर्वं सीमेत्यङ्गुल्यापदिश्य सीमानं नयेयुः। विपरीतवेषाः, सीमानयनकाले रक्तवस्त्रमाल्यादिधारणरूपं स्त्र्यादिवेषं ते धारयेयुः। निर्दिष्टानां सेतूनां प्रदर्शनाभावे सहस्रपणो दण्डः निर्देष्टुः। नीते सेतौ यथानिर्दिष्टे प्रदर्शने निर्णीते सति, सीमापहारिणां सेतुच्छिदां च सीमास्थितवृक्षभञ्जकानाञ्च तदेव दण्डविधानं सहस्रलक्षणं कुर्यात्। अत्यन्ताविज्ञानसेतुञ्च क्षेत्रादिप्रदेशं राजा उपकारानुगुण्येन विभजेत्[1]।

क्षेत्रविवादं सामन्तग्रामवृद्धाः कुर्युः। तेषां पक्षभेदे सति, यतो बहवः शुचयोऽनुमता वा यस्मिन्पक्षे बहवः प्रविष्टास्ते च बाह्याभ्यन्तरशौचसम्पन्नाः लोकसम्मताश्च, ततो नियच्छेयुः। मध्यमं वा गृह्णीयुः समं पक्षं वा गृहीत्वा विभज्य निर्णयेयुः। चेदित्यध्याहर्तव्यं बहुपक्षानुसारनिर्णयः समपक्षानुसारनिर्णयश्चेत्युभयं विवादिभ्यां प्रतिषिद्धं चेत्, वास्तुविवादविषयभूतं क्षेत्रं राजा हरेत्। अपगतस्वामिदायग्रहणार्हेभ्यो विभज्य वा दद्यात्। बलाद् गृहीते सति वास्तुनि चौर्यविहितो दण्डो ग्रहीतुः[2]। ऋणादिकारणवशात् गृहीते वास्तुनि क्षेत्रसंस्कारार्थे प्रयुक्तं कायाद्यायासं क्षेत्रसमुत्थं फलञ्च मूलतः परिगणय्य, बन्धं दद्यात् तद्धने ऋणधनादुद्रिच्यमाने दृष्टे तमधिकमंशं भूस्वामिने प्रयच्छेत्। मर्यादापहरणे उभयभूम्योः सीमापहारे पूर्वः साहसदण्डः। मर्यादाभेदे सीमाया एकदेशापहारेण भेदकरणे चतुर्विंशतिपणः। उक्तं गृहादिसीमाविवादविधानं तपोवनादिसप्तकविषयेष्वपि विवादेषु योजनीयम्।

सर्व एव विवादाः सामन्तप्रत्ययाः अनन्तरवास्तुनिमित्ताः। तत्त्वं च वास्तुषु परस्परेण यदा पीडोत्पादस्तदैव तन्निवारणाय विवादानां प्रवर्तनात्। तत्र द्वयोरन्यतरस्यावश्यपीडनीयत्वप्राप्तौ नियममाह–विवीतं प्रवृद्धतृणस्तम्बो गवादिप्रचारदेशः स्थलं लूनापनीततृणस्तम्बा परिष्कृता भूमिः केदारः क्षेत्रं षण्डः कदल्यादिवनं धान्यपवनस्थानं वेश्म प्रसिद्धं वाहनकोष्ठ एषां सप्तानां मध्ये, पूर्वं पूर्वं कर्त्तृ, आबाधमुत्तरोत्तरनिमित्तां पीडां सहेत।

ब्रह्मसोमारण्यं देवस्थानं यजनस्थानं पुण्यस्थानं च वर्जयित्वा सर्वे भूभागाः क्षेत्रयोग्याः प्रदेशा वेदितव्याः। जलाधारखातेन जलपरिवहनदीर्घिकारचनया स्थलीकेदारीकरणेन च परकीयकेदारोप्तधान्यबीजोपघाते उपघातानुसारेण धान्यमूल्यं दद्युः। केदारारामसेतुबन्धानां परस्परहिंसायाम्, हिंसादिद्विगुणो दण्डः। उत्तरकालोत्पन्नमधरतटाकमुपरितटाकस्य पूर्वोत्पन्नस्य केदारमुदकेन नापूरयेत्। उपरितटाकं पश्चान्निविष्टमधरतटाकस्य पूर्वसिद्धस्य प्रवाहस्रुतिं न वारयेत्। तच्चेदधरतटाकं वर्षत्रयपरित्यक्तजलपायनसाध्यकृषिकर्म भवेत्, तदा पूरास्रावववारणे न दोषः।

1. कौ. ३।९।११-१५।
2. कौ. ३।९।१६-२१।

उक्तविधेर्लङ्घने पूर्वः साहसदण्डः । तटाकवामनं च जलनिर्गमनेन तटांकशून्य-करणञ्च दण्डः[1] ।

पञ्चवर्षोपेक्षितस्य सेतुबन्धस्य स्वामित्वं स्वामिनो नश्येत्, अन्यत्रापद्भ्यः । परचक्राद्यापत्सु तूपेक्षितस्य स्वामित्वं न हीयेत । तेषां नूतननिर्माणे पञ्चवर्षव्यापी करमोक्षः कार्यः[2] ।

अत्र मनुः

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ।
सर्वे ते च पृथग्दण्ड्याः राज्ञा मध्यमसाहसम् ॥ ८।२५७, २६३ ॥

कात्यायनः[3]

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥ ७५० ॥
नाज्ञानेन हि मुच्यन्ते सामन्ता निर्णयं प्रति ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ॥
कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् । ७४१ ॥

बृहस्पतिः, व्यासश्च प्रथमे (बृ १९।४०)

अन्यग्रामात्समाश्रित्य दत्ताऽन्यस्य यदा मही ॥ १ ॥
महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥ २ ॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ॥ ३ ॥
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥ ४ ॥
क्षयोदयौ जीवनं च दैवराजवशान्नृणाम् ॥ ५ ॥
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥ ६ ॥
ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ॥ ७ ॥
क्षयोदयेन चाल्पा सा चालयन्दण्डमर्हति ॥ ८ ॥
कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् ॥ ९ ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ॥ १० ॥

---

1. कौ. ३।९।२२-३५ ।
2. कौ. ३।९।३६; मनु. ८।२४६-२४८, २५२, २५४-२५८; बृहस्पति. १९।२, ८-९, २०-२१, ३१; याज्ञ. २।१५२; कात्या. ७३७, ७३४, ७३८, ७३९, ७४०, ७४२, ७४६; नारद. १४।२-५ ।
3. नारद., मिता., अपरार्कश्च (२।१५३); स्मृ. चं. ५४७; कात्या. ७३६, ७३८, ७४३, ७४४, ७४५; बृह. १९।३८-३९ ।

नदी तीरे प्रकुरुते तस्य तां न विचालयेत् ॥ ११ ॥
क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत् ॥ १२ ॥
नदीस्रोतः प्रवाहेण पूर्वस्वामी लभेत ताम् ॥ १३ ॥
या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता ॥ १४ ॥
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥ १५ ॥
प्रमाणरहितां भूमिं भुञ्जतो यस्य या हृता ॥ १६ ॥
गुणाधिकाय या दत्ता तस्य तां न विचालयेत्[1] ॥ १७ ॥

**अथातिदेशाः**

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रसादावसथेष्वेवं देवगृहेषु च[2] ॥

(कात्या. ७४९)

**शङ्खलिखितौ**–मार्गक्षेत्रे पथि विसर्गो, राजमार्गे रथपरिवर्तनं पूर्वमर्यादास्थापनं तोरणगृहरथ्यान्तरेषु त्रिपदं देवराजायतनेषु यथेष्टम् । मार्गे यत्क्षेत्रं तत्र स्थिते त्यागः पथिकानां गच्छताम् । तेन सः पन्था नाऽवरोद्धव्यः । यावता देशेन रथप्रवृत्तिः स्यात्तावान् देशो राजमार्गे त्याज्यः । यावती पौरैः पूर्वसीमा कृता तस्याः स्थापनम् । तोरणगृहरथ्यासमीपे पदत्रयपरिमितो देशस्त्याज्यः[3] ।

**कात्यायनः**

विण्मूत्रोदकचक्रं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥
सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥
न तत्र रोपयेत्किञ्चिन्नोपहन्यात्तु केनचित् ।
गुर्वाचार्यनृपादीनां मार्गदानात्तु दण्डभाक् ॥
यस्तत्र सङ्करश्वभ्रान्वृक्षारोपणमेव च ।
कामात् पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः[4] ॥ ७५४-७५७ ॥

**याज्ञवल्क्यः**

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥ २।१५५ ॥

---

1. अपरार्कः पृ. ७६१-७६२; स्मृ. चं. ५४८-५५०; वि. र. २१५; वि. नि. ३६९-३७०; माधवः ३९८-३९९ ।
2. मनु. ८।२६२; याज्ञ. २।१५४ ।
3. शङ्खलिखितौ, वि. र. २१९; कात्या. ७५२-७५४; बृह. १९।४९; १९।४५-४६; कात्या. ७६०-७६१ ।
4. वि. र. २२० ।

गृहतडागोद्यानक्षेत्राणामन्यतमं मारणबन्धनादिभयकथनपूर्वकमाक्रम्य हरणे पञ्चपणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरतो द्विशतो दमः[1] । अनार्तः सन्यो राजपथेषु पुरीषं कुर्यात्स कार्षापणद्वयं दण्डं दद्यात्स चामेध्यं शीघ्रमेवावसारयेत् । व्याधितवृद्धगर्भिणीबाला न दण्डनीयाः किन्तु ते पुनः किं कृतमिति परिभाषणीयाः । तच्चामेध्यं शोधनीया इति शास्त्रमर्यादा[2] ।

**अथ सेतुः** । अन्यक्षेत्रेऽन्येन क्रियमाणः सेतुर्यदि बहूपकारकः क्षेत्रस्वामिनश्चाल्प-बाधाकरस्तदा नाऽसौ निवर्त्यः । यतोऽल्पोपक्षये सत्यपि वृद्धिः सस्याद्युपचयलक्षणा सर्वस्येष्टा भवति[3] ।

यः पुनः परक्षेत्रे सेतुकूपादिकं प्रार्थनयार्थदानेन वा लब्धानुज्ञो निर्मातुमिच्छति तन्निषेधतः क्षेत्रस्वामिन एव दण्डः । कूपश्चाल्पक्षेत्रव्यापित्वेनाल्पबाधो बहूदकत्वेन कल्याणकारकश्चेतो बहूदको नैव निवारणीयः । कूपग्रहणञ्च वापीपुष्करिण्याद्युप-लक्षणार्थम् । यदा पुनरसौ सर्वक्षेत्रवर्तितया बहुबाधो नद्यादिसमीपक्षेत्रवर्तितया वाऽल्पोपकारकंस्तदासौ निषेध्यः[4] । सेतोश्च द्वैविध्यः–खेयो बन्ध्यश्च । तोय-प्रवर्तनात्खेयः, तन्निवर्तनाद्बन्ध्यः[5] । यदा त्वन्यनिर्मितं सेतुं भेदनादिना नष्टं स्वयं संस्करोति तदा पूर्वस्वामिनं तद्वंश्यं नृपं वा पृष्ट्वैव संस्कुर्यात्[6] ।

क्षेत्रस्वामिनमनभ्युपगम्य तदभावे राजानं वा यः परक्षेत्रे सेतुं प्रवर्तयत्यसौ फलभाङ् न भवति, अपि तु तदुत्पन्ने फले क्षेत्रस्वामिनो भोगस्तदभावे राज्ञः । तस्मात्प्रार्थनया अर्थदानेन वा क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्यैव परक्षेत्रे सेतुः प्रवर्तनीयः । यथाऽऽह **याज्ञवल्क्यः**

फालाहतमपि क्षेत्रं न कुर्याद्यो न कारयेत् ।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत् ॥ २।१५८ ॥

भूमिं कर्षणार्थं गृहीत्वा यः स्वयं न कर्षति परद्वारा वा न कर्षयेत्, स स्वामिने सदं दाप्यः दण्डं राज्ञश्च तत्समम् । तच्च क्षेत्रं पूर्वकर्षकादाच्छिद्यान्येन कारयेत् । तत्र च चिरावसन्नायां भूमौ दशमम्, कृष्यमाणायामष्टमम्, अकृष्टायाञ्च षष्ठभागमिति **व्यासः**[7]

"क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न कारयेत् ।
स्वामिने स सदं दाप्यो राज्ञा दण्ड्यश्च तत्समम् ॥

1. मनु. ८।२६४ ।
2. मनु. ९।२८२-२८३ ।
3. नारद. १४।१७ ।
4. याज्ञ. २।१५६।
5. नारद. १५।१८ ।
6. नारद. ११।२०-२१ ।
7. वि. र. २२७ ।

चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम् ।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य यथास्थिति" ॥

**अथ सस्यरक्षा** । पथिग्रामे विवीतान्ते न दोषोऽनावृते चाल्यकालकम्[1] । ग्रामजनेच्छया भूम्यल्पत्वमहत्त्वापेक्षया राजेच्छया वा गोप्रचाराणार्थभूभागः कर्त्तव्यः । गवादीनां चरणं कियानपि भूभागोऽकृष्टः परिकल्पनीयः[2] । विपालाः पशवो वारयितव्या दण्डादिना । विपालाश्चोत्सृष्टवृषादयः । अन्येषां तु विपालानां स्वामिनो दण्डः[3] । यथाऽऽह **नारदः**

**उत्क्रम्य तु वृतिं यः स्यात्सस्यघातो गवादिभिः ।**
**पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेत् ॥ १४।२८ ॥**
**पथिक्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।**
**न लङ्घयेत् पशुर्नाश्वो न भिन्द्याद्यां तु सूकरः ॥ १४।४१ ॥**

**कात्यायनः**

**अजातेष्वपि सस्येषु कुर्यादावरणं महत् ।**
**दुःखेन हि निवार्यन्ते लब्धस्वादुरसा मृगाः ॥ ६६६ ॥**

**अथ सस्यघातदण्डः** । क्षेत्रेष्वन्येषु तु पशुः सपादं दण्डमर्हति[4] । रात्रौ चरन्ती गौः पञ्चमाषान् । दिवा त्रीन् । मुहूर्ते माषम् । ग्रासे त्वदण्ड्यः[5] । **कात्यायनः**–सर्वेषामेव वत्सो माषम्, महिषी दश, खरोष्ट्रं षोडश, अजाविकं चतुरो दण्डं प्राप्नुयात् । सर्वत्र स्वामिने विनष्टसस्यमूल्यञ्च दाप्यते[6] । नारदः

**समूलसस्यनाशे तु स्वामी सदमवाप्नुयात् ।**
**वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥ १४।२९ ॥**

**कात्यायनः**

**दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा ।**
**अथाजाविकवत्सानां पादो दण्डः प्रकीर्तितः ॥ ६६७ ॥**

पञ्च माषा गवि । षडुष्ट्रखरे । अश्वमहिष्योर्दश । अजाविषु द्वौ द्वावेति गौतमः (१२।१९-२२) । महिषी चेत्सस्यनाशं कुर्यात्पालकस्त्वष्टौ माषान् दण्ड्यः । अपालकायाः स्वामी । अश्वस्तूष्ट्रो गर्दभो वा । गौश्चेत्तदर्धम् । तदधर्ममजाविकं चेत् । भक्षयित्वोपविष्टेषु द्विगुणम्[7] । अश्वस्तूष्ट्र इत्यादौ सस्यनाशं कुर्यादित्यषज्यते[8]।

---

1. विष्णु. ५।१४७-१४९ ।
2. याज्ञ. २।१६६ ।
3. मनु. ८।२४० ।
4. मनु. ८।२४१ ।
5. शङ्खलिखितौ, वि. र. २३२ ।
6. विष्णु. ५।१४६ ।
7. विष्णु. ५।१४०-४५ ।
8. वी. मि. २३५ ।

नारदः

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥
गवत्रं गोभिना देयं धान्यं वै कर्षकाय च ।
एवं हि विनयः प्रोक्तो गवां सस्यावमर्दने ॥ १४।३८-३९ ॥

**अदण्ड्याः** । छागवृषभा अनिर्दशाहा गावः सस्यापराधे न दण्डमाप्नुयुः । वृषभशब्देन बीजसेक्तृपित्रर्थोत्सृष्टवृषभयोर्ग्रहणम् । छागशब्दोऽपि तादृशछागपरः[1] । क्षुद्रपशवः सर्वथानिवार्याः । अश्वतरगजवाजिनश्चादण्ड्याः । अवश्याश्च शनैरपवार्या इति शङ्खलिखितौ[2] । यथाऽऽह उशना[3]

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
अदण्ड्याः काणकूटाश्च वृषश्च कृतलक्षणः ॥
अदण्ड्यागन्तुका गौश्च सूतिका चाभिसारिणी ।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ॥

कात्यायनः

अधमोत्तममध्यानां पशूनाञ्चैव ताडने ।
स्वामी तु विवदेद्यत्र तत्र दण्डं प्रकल्पयेत् ॥ ६६५ ॥
क्षेत्रारामविवीतेषु गृहेषु पशुकादिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं च बृहस्पतिः ॥ ६६४ ॥

## द्यूतसमाह्वयम्

असम्मतौ दानग्रहणं नान्यं द्यूतमण्डलमाश्रयेद्, अन्य सभिकमण्डले न दीव्येत् । न च सभिको दापयन्तं रोधनादिना प्रतिहन्यात् । न किञ्चित्कुर्यात्, यथेष्टं दापयितुं लभेत । कूटाक्षैर्देवनशीलानधर्मपुरुषान् कण्ठे मालामक्षैर्ग्रथितामसज्ज्य द्यूतमण्डलाद् देवनस्थानान्निर्वासयेत्[4] । बृहस्पतिराह[5]–

कूटाक्षदेविनः क्षुद्रा राजभागहराश्च ये ।
गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥

कूटाक्षोपधिदेविनः राज्ञा सचिह्नं निर्वास्याः[6] । द्यूते कूटा कूटाक्षदेविनं करच्छेदः । उपधिदेविनां संदंशच्छेदः[7] ।

●

1. वि. र. २३८ ।
2. वि. र. २३९ ।
3. वि. र. २३८ ।
4. ना. म. सं. १७।५-६ ।
5. बृह. २७।७ ।
6. याज्ञ. २।२०२ ।
7. विष्णु. ५।१३४-१३५ ॥

# अध्यायः ९

## साहसम्

साधारणस्य यथेष्टविनियोगानर्हत्वाविशेषेण परकीयस्य द्रव्यस्यापहरणं साहसम् । वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्या । साहसं पञ्चधा स्मृतम्—मनुष्यमारणं चौर्यं परदाराभिमर्शनं पारुष्यमुभयञ्चेति । सहो बलं साहसमित्यस्यैव भेदः स्तेयम् । साहसं पुनस्त्रिविधं प्रोक्तम्—प्रथमं मध्यममुत्तमञ्चेति[1] । गृहकुड्याद्युपभेत्ता मध्यमसाहसम् । तच्च योजयेत् । गृहे पीडाकरं द्रव्यं प्रक्षिपन् पणशतम् । साधारण्यापलापी च । प्रेषितस्याप्रदाता च । पितृपुत्राचार्ययाज्यर्त्विजामन्योन्यापतितत्यागी च । न च तान् जह्यात् । शूद्रप्रव्रजितानां दैवे पित्र्ये भोजकस्य । अयोग्यकर्मकारी च । समुद्रगृहभेदकश्च । अनियुक्तः शपथकारी । पशूनां पुंस्त्वोपघातकारी च प्रति संस्कुर्यात् ।

पूर्वं याज्ञवल्क्येन कुड्यमात्रसंबन्धिनि भेदमात्रे दशपणात्मको दण्ड उक्तः । इह च गृहसहितकुड्यादिगते प्रौढविदारणे मध्यमसाहसमित्यविरोधः । पीडाकरद्रव्यस्य गृहे क्षेपं कुर्वतः षोडशपणदण्डाभिधानं याज्ञवल्क्यस्य, विष्णोश्च तत्रैव पणशतदण्डाभिधानम् तदत्र पीडातिशयहेतुत्वाहेतुत्वाभ्यां व्यवस्था ।

यस्तु 'साहसं कुरु' इत्येवमुक्त्वा कारयत्यसौ साहसिकाद्दण्डाद्द्विगुणं दण्ड दाप्यः । यः पुनः 'अहं तुभ्यं धनं दास्यामि, त्वं कुरु' इत्येवमुक्त्वा साहसं कारयति स चतुर्गुणं दण्डं दाप्योऽनुबन्धातिशयात् । साहसिकविशेषं प्रत्याह याज्ञवल्क्यः[2]

अर्घ्याक्षेपातिक्रमकृद्भ्रातृभार्याप्रहारकः ।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत् ॥
सामन्तकुलिकादीनामपकारस्य कारकः ।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥

न मातापित्रोरन्तरं गच्छेत पुत्रः । कामं मातुरेवानुयायात् । सा हि धारणा पोषणी च । न पुत्रः प्रतिमुच्यतान्यत्र सौत्रामणीयागाज्जीवन्नृणान्मातुः । एवमत्याज्या माता । तथा पिता । सपिण्डा गुणवन्तः सर्व एवात्याज्याः । यस्त्यजेत्कामादपतितान्

---

1. नारद. १७।१-६; ना. म. सं. १४।१-५, ११; मनु. ८।२८८-२८९; ३३२; बृहस्पति. २३।३-८; याज्ञ. २।२३०, २२३; कात्या. ८०७ ।
2. याज्ञ. २।२३२-२३७ ।

स दण्डं प्राप्नुयाद्द्विशतम् । न मातापितरावतिक्रमेत् । न गुरुम् । त्रयाणामतिक्रमणेऽङ्गच्छेदः[1] ।

येषां देयः पन्थास्तेषामपथदायी कार्षापणपञ्चविंशतिं दण्ड्यः । आसनार्हस्यासनमददच्च । पूजार्हमपूजयंश्च । प्रातिवेश्यब्राह्मणे निमन्त्रणातिक्रमे च । निमन्त्रयित्वा भोजनादायिनश्च । निमन्त्रितस्तथेत्युक्त्वा चाभुञ्जानः सुवर्णमाषकम् । निकेतयितुश्च द्विगुणमन्नम्[2] ।

पितापुत्रविरोधे तु साक्षिणां दशपणो दण्डः । यस्तयोश्चान्तरे स्यात्तस्योत्तमसाहसम्[3] । अभक्ष्येण ब्राह्मणं दूषयित्वा षोडशसुवर्णान् जात्यपहारिणा शतम् । सुरया वध्यः । क्षत्रियं दूषयितुस्तदर्धम् । वैश्यं दूषयितुस्तदर्धमपि । शूद्रं दूषयितुः प्रथमसाहसम्[4] । जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः[5] । विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः[6] ।

**कात्यायनः**

**हरेद्भिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि ।**
**तद्गृहं चैव यो भिन्द्यात्प्राप्नुयात्पूर्वसाहसम् ॥**

अभक्ष्यस्याविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः[7] । प्रतिमारामकूपसङ्क्रमध्वजसेतुनिपातनद्विजायतनमङ्गेषु तत्समुपस्थानं प्रतिसंस्कारोऽष्टशतं दमं च[8] । वापीतडागोदपानभेदमार्गरसद्रव्यदूषणे। अदासीदाससंप्रदानकरणे । विषाग्निदां पतिगुरुनिजापत्यप्रमापणीं विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् । 'पुरुषघ्नीमगर्भिणीं' पुरुषमारिणीं या स्त्री भवेत् सा यदि गर्भरहिता भवति तदा तां जले प्रवेशयेत् (याज्ञ. २।२७८) ।

बन्धनगृहाणि सर्वजनदृश्ये राजमार्गे कुर्याद् यत्र निगडबन्धनाद्युपेताः क्षुत्तृष्णाभिभूता दीर्घकेशनखश्मश्रवः कृशाः पापकारिणोऽन्यैरकार्यकारिभिरकार्यनिवृत्त्यर्थं दृश्येरन् राजगृहपुरादिसंबन्धिनः प्राकारस्य भेदकं तदीयानामेव परिखाणां पूरयितारं तद्गतानां द्वाराणां भञ्जकं शीघ्रमेव देशान्निर्वासयेत् । अभिचारहोमादिषु शास्त्रीयेषु मारणोपायेषु लौकिकेषु च मूलनिखननपदपांशुग्रहणादिषु कृतेष्वनुत्पन्नमरणफलेषु द्विशतपणग्रहणरूपो दण्डः कर्त्तव्यः । मरणे तु मानुषमारणदण्डः । एवं मातृपितृभार्या-

---

1. शङ्खलिखितौ, वि. र. ३५६ ।
2. विष्णु. ५।९१-९७; मनु. ८।३९२-३९३; मत्स्यपु. २२७।८ ।
3. विष्णु. ५।१२०-१२१ ।
4. विष्णु. ५।९८-१०३; याज्ञ. २।२३९, २९६; वि. र. ३६० ।
5. विष्णु. ५।१७३; याज्ञ. २।३०१, ३०३; मनु. ९।२९०, २८६ ।
6. याज्ञ. २।३०४ ।
7. विष्णु. ५।१७४; नारद. ४।६७ ।
8. मनु. ९।२८१, २७९ ।

दिव्यतिरिक्तैरसत्यैर्व्यामोह्य धनग्रहणाद्यर्थं वशीकरणे तथा कृत्यासूच्चाटनापाटवादिहेतुषु क्रियमाणासु नानाप्रकारासु द्विशतपणदण्ड एव कर्त्तव्यः ।

अबीजं बीजप्ररोराहासमर्थं व्रीह्यादि प्ररोहसमर्थमिति कृत्वा यो विक्रीणीते, तथापकृष्टमेव कतिपयोत्कृष्टप्रक्षेपेण सर्वमिदं सोत्कर्षमिति कृत्वा यो विक्रीणीते यश्च ग्रामनगरादिसीमां विनाशयति स विकृतनासाकरचरणकर्णादिरूपं वधं प्राप्नुयात् । सर्वकण्टकानां मध्येऽतिशयेन पापतमं सुवर्णकारं तुलाच्छद्मकषपरिवर्तापद्रव्य प्रक्षेपादिना हेमादिचौर्ये प्रवर्तमानमनुबन्धापेक्षयाङ्गविशेषेण सर्वदेहं वा खण्डशश्छेदयेत् । कृष्यमाणभूमिद्रव्याणां हलकुद्दालादीनामपहरणे, खड्गादीनां च शस्त्राणामौषधस्य च कल्याणघृतादेश्चौर्ये सत्युपयोगकालेतरकालापेक्षया प्रयोजनापेक्षया च राजा दण्डं कुर्यात्[1] ।

**विष्णुः**

**दण्ड्यमुन्मोचयन् दण्ड्याद्द्विगुणं दण्डमावहेत् ।**
**नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः । ५।१९५ ।**

**कात्यायनः**

**राजक्रीडासु ये शक्ता राजवृत्त्युपजीविनः ।**
**अप्रियस्य तु यो वक्ता वधं तेषां प्रकल्पयेत् ॥**
**प्रतिरूपस्य कर्त्तारः प्रेक्षणाः प्रकराश्च ये ।**
**राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ॥ ९५५-९५६ ।**

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा[2] । स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः । तद्दूषकांश्च हन्यात् । स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुस्स्यात् । दुष्टांश्च हन्यात् । कूटशासनकर्तॄंश्च राजा हन्यात्[3] । कूटलेख्यकरांश्च । गरदाग्निदप्रसह्य तस्करान् स्त्रीबालपुरुषघातिनश्च[4] । शस्त्रावपाते गर्भस्य घातने चोत्तमो दण्डः (याज्ञ. २।२७७) ।

क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणम् । तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपदण्डं प्रकल्पयेत् । क्षत्रियवधे गोसहस्रं वृषभैकाधिकं राज्ञः उत्सृजेद्वैरनिर्यातनार्थम् । शतं वैश्ये दशशूद्रे वृषभश्चात्राधिकः । शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातः । अन्यत्राऽऽत्रेय्या वधात् । धेन्वनडुहोश्च । वधे धेन्वनडुहोरन्ते चान्द्रायणं चरेत् ।

---

1. मनु. ९।२८८-२९३, २७२, २७५; याज्ञ. १।३३८-३३९, १९५ ।
2. मनु. ९।२९२; कात्या. ९५४ ।
3. विष्णु. ३।३३-३५, ३७ ।
4. विष्णु. ५।९-११; बृह. २३।९-१२ ।

आत्रेय्या वधः क्षत्रियवधेन व्याख्यातः । हंसभासबर्हिणचक्रवाकबलाकाकोलूक-मण्डूकडिड्डिकडेरिकाश्वबभ्रुनकुलादीनां वधे शूद्रवत्[1] ।

**बृहस्पतिकात्यायनौ**[2]

मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभाजस्तदर्धतः ॥
क्षतस्याल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबन्धं च ज्ञात्वा चिह्नैः प्रसाधयेत् ॥

**साहसचौर्ययोर्यमः**

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बध्वा राजा भक्तं प्रदापयेत् ॥
अथवा बधनं रज्वा कर्म वा कारयेन्नृपः ।
मासार्धमासं कुर्वीत कार्यं विज्ञाय तत्त्वतः ॥
यथापराधं विप्रं तु विकर्माण्यपि कारयेत् ।
राजदुष्टानि भाषेत दण्डो निर्विषयः स्मृतः ।
अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकी श्रुतीः ॥

साहसकार्येऽपि अन्यायसाहसं कृत्वा यदि प्रायश्चित्तं भजते, स्वयमेव वा साहसकर्त्तृत्वं निवेद्य 'दण्डो मे क्रियतामिति' वदेत्, तस्य यथोक्तदण्डादर्धदण्डः । यस्तु दौःशील्यं गूहमानः तस्मादेव जीवति, तस्य तु इङ्गितादिभिः साहसकारित्वं निश्चित्य स्वरूपेऽपि साहसे तीव्रो दण्डः ।

**घातकान्वेषणम्**

हतः संदृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रातिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेन वा नरैः ।
एषोदिता घातकानां तस्कराणां च भावना ॥
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथैः स विशोद्धव्यः सर्ववादेष्वयं विधिः[3] ॥

---

1. बौधायन. १।१८।१९-२०; १।१९।१-८ ।
2. बृह., व्यव. २३।१४-१५, २० ।
3. बृह. २३।२१, २३-२८०; याज्ञ. २।२८०-२८१ ।

**वाक्पारुष्यम्**

सत्यासत्यान्यथास्तोत्रैर्यो निर्भर्त्सनं करोत्यसौ अर्धाधिकत्रयोदशपणान् दण्डनीयः[1] । यदा पुनः पुत्रादयो मात्रादीन् शपन्ति तदा शतं दण्डनीया[2] इति । 'त्वदीयां भगिनीं मातरं वा अभिगन्तास्मि' इति शपन्तमन्यां वा 'त्वज्जायामभिगन्ताऽस्मि' इत्येवं शपन्तं राजा पञ्चविंशतिकं पणानां पञ्चाधिका विंशतिर्यस्मिन् दण्डे स तथोक्तस्तं दमं दापयेत्[3] । अधमेष्वाक्षेप्त्रापेक्षयान्यूनवृत्तादिगुणेष्वर्धो दण्डः । परभार्यासु पुनरविशेषेण द्विगुणः पञ्चविंशत्यपेक्षयैव पञ्चाशत्पणात्मको वेदितव्यः । तथोत्तमेषु च स्वापेक्षयाधिकश्रुतवृत्तेषु दण्डः पञ्चशत्पणात्मक एव । वर्णा ब्राह्मणादयः, जातयो मूर्धावासिक्ताद्याः । वर्णजात्युत्तराधरैः परस्परमाक्षेपे क्रियमाणे दण्डस्य प्रणयनम् । यथा मूर्धावसिक्तं ब्राह्मणाद्धीनं क्षत्रियादुत्कृष्टं चाक्रुश्य ब्राह्मणः क्षत्रियाक्षेपनिमित्ताच्छतदण्डादूनं पञ्चसप्ततिमेव दण्डमर्हति । मूर्धावसिक्तोऽपि तावाक्रुश्य तमेव दण्डमर्हति । मूर्धावसिक्ताम्बष्ठयोः परस्पराक्षेपे ब्राह्मणक्षत्रिययोः परस्पराक्रोशनिमित्तकौ यथाक्रमेण दण्डौ वेदितव्यौ ।

ब्राह्मणाक्रोशकारिणोः क्षत्रियवैश्ययोर्यथाक्रमेण पूर्ववाक्याद्द्विगुणपदोपात्तपञ्चाशत्पणापेक्षया द्विगुणाः शतपणाः, त्रिगुणाः सार्धशतपणा दण्डा वेदितव्याः । शूद्रस्य ब्राह्मणाक्रोशे ताडनं जिह्वाच्छेदनं वा भवति[4] । बाह्वादीनां प्रत्येकं विनाशे वाचिके वाचा प्रतिपादिते 'तव बाहू छिनद्मि' इत्येवंरूपे शत्यः दण्डः । पादनासाकर्णकरादिषु वाचिके विनाशे शत्यस्तदर्धिक । दमः किं च, यः पुनर्ज्वरादिना क्षीणशक्तिः 'त्वद्वाह्वाद्यङ्गभङ्गं करोमि' इत्येवं शपत्यसौ दश पणान् दण्डनीयः । य पुनः समर्थः क्षीणशक्तिं पूर्ववदाक्षिपत्यसौ पूर्वोक्तशतादिदण्डोत्तरकालं तस्याशक्तस्य क्षेमार्थं प्रतिभुवं दापनीयः । ब्रह्महत्यादिभिर्वर्णिनामाक्षेपे कृते मध्यमसाहसो दण्डः । ये पुनर्ब्राह्मणमूर्धावसिक्तादिजातीनां पूगाः संघास्तेषामाक्षेपे मध्यमसाहसो दण्डः । उपपातकसंयुक्ते पुनः 'गोघ्नस्त्वमसि' इत्येवमादिरूपे क्षेपे प्रथमसाहसं दण्डनीयः । वेदत्रयसम्पन्नास्तेषां राज्ञां देवानां च उत्तमसाहसो दण्डः । ग्रामदेशयोः प्रत्येकमाक्षेपे प्रथमसाहसो दण्ड[5] इति याज्ञवल्क्यः ।

ब्राह्मणः क्षत्रियस्योक्तरूपाक्षेपे कृते पञ्चाशत्पणान्दण्ड्यः । वैश्ये शूद्रे च यथोक्ताक्रोशे कृते पञ्चविंशतिर्द्वादशपणाः क्रमेण ब्राह्मणस्य दण्डः स्यात् । द्विजस्य चौरेत्याक्षेपरूपं परुषमुक्त्वा क्षत्रियः पणशतं दण्डमर्हति । एवं सार्धशतं द्वे वा शते

---

1. याज्ञ. २।२०४; मनु. ८।२७४ ।
2. मनु. ८।२७५ ।
3. याज्ञ. २।२०५ ।
4. याज्ञ. २।२०६-२०७ ।
5. याज्ञ. २।२०८-२११ ।

लाघवगौरवापेक्षया वैश्यः। शूद्रोऽप्येवं ब्राह्मणाक्रोशे ताडनादिरूपं वधमर्हति। द्विजातीनां समानजातिविषये यथोक्ताक्रोशे कृते द्वादशपणो दण्डः। अवचनीयेषु पुनराक्रोशवादेषु मातृभगिन्याद्यश्लीलरूपेषु द्विगुणं दण्डरूपं भवेत्। शूद्रो द्विजातीन् पातकाभियोगिन्या वाचाक्रुश्य जिह्वाच्छेदं लभेत्। यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जातः।

ब्राह्मणादीनामाक्रोशेन नामजात्यादिग्रहणं कुर्वतो लोहकीलोऽग्निना प्रदीप्तो दशाङ्गुलो मुखेषु क्षेप्तव्यः। कथंचिद्धर्मलेशमवगम्यायं ते धर्मोऽनुष्ठेय इति ब्राह्मणस्याहङ्कारादुपदिशतोऽस्य शूद्रस्य मुखे कर्णयोश्चज्वलत्तैलं राजा प्रक्षेपयेत्। समानजातिविषयमिदं दण्डलाघवान्न तु शूद्रस्य द्विजात्याक्षेपविषयम्। न त्वयैतच्छ्रुतम्, न भवान् तद्देशजातो न तवेयं जातिर्न तव शरीरसंस्कारमुपनयनादिकर्मकृतमित्यहङ्कारेण मिथ्या ब्रुवन्द्विशतं दण्डं दाप्यः स्यात्। एकाक्षिविकलं पादविकलमन्यमपि वा तथाविधं हस्ताद्यङ्गविकलं सत्येनापि कारादिशब्देन ब्रुवन्नत्यन्ताल्पं तदा कार्षापणं दण्डं दाप्यः। ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यः। ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः। वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवद्वैश्ये शूद्राक्रोशिनि प्रथमसाहसः। शूद्रे वैश्याक्रोशिनि मध्यमसाहसः[1]।

शरीरं प्रकृतिः स्त्रीपुरुषादिलक्षणा श्रुतं वृत्तिर्जनपद इति पञ्च विषया वाक्पारुष्यस्य, तेषां शरीरादीनां मध्ये, काणखञ्जादिभिः शब्दैः शरीरोपवादेन, सत्ये काणत्वादौ यथार्थे सति त्रिपणो दण्डः। मिथ्योपवादे षट्पणो दण्डः। शोभनाक्षः शोभनदन्त इति रीत्या, काणखञ्जादीनां स्तुतिनिन्दायां स्तुतिव्याजेन निन्दायां कृतायाम् द्वादशपणो दण्डः। कुष्ठी उन्मत्तः क्लीब इत्यादिप्रकारेण कुत्सने च, द्वादशपणो दण्डः। सत्यमिथ्यास्तुतिनिन्दासु कुष्ठादिसत्यत्वे तन्मिथ्यात्वे कुष्ठ्यादीन् प्रति कल्य इत्यादिरीत्या स्तुतिनिन्दायां च, उत्तरोत्तरद्वादशपणाधिकाः द्वादशपणश्चतुर्विंशतिपणः षट्त्रिंशत्पण इत्येवंरूपाः दण्डाः भवन्ति, तुल्येषु समानेषु विषये विशिष्टेषु गुणाधिकेषु विषये, द्विगुणः दण्डः। हीनेषु अर्धदण्डः। परस्त्रीषु विषये द्विगुणः। प्रमादमदमोहादिभिः कुत्सायामर्धदण्डा उक्ताः सर्वे दण्डा अर्धं हीनाः[2]।

कुत्सनस्य सत्यासत्यविषयत्वनिर्णयप्रमाणापेक्षायामाह—कुष्ठोन्मादयोश्चिकित्सकाः सन्निकृष्टाः पुमांसश्च प्रमाणम्[3]। क्लीबभावे स्त्रियः, अनुलभ्यमानो मूत्रे फेनः, अप्सु विष्ठानिमज्जनञ्च प्रमाणम्। प्रकृत्युपवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्य त्रिपणोत्तराः दण्डाः[4]। उक्तेन प्रकृत्युपवादेन, वाग्जीवनानां श्रुतोपवादः

1. मनु. ८।२६८-२७७।
2. कौ. ३।१८।२-१०।
3. कौ. ३।१८।११।
4. कौ. ३।१८।१३।

विद्याकुत्सनम्, कारुकुशीलवानां वृत्त्युपवादः जीविकाकुत्सनम्, प्राग्घूणकगान्धारादीनां हूणका नाम जनपदविशेषः कामगिर्युत्तरतोवृत्तिरुदीच्यः तस्य पूर्वावयवः प्राग्घूणकाः भाषायां तु चण्डालराष्ट्रमित्युक्तम् । गान्धाराः प्रसिद्धास्तदादीनां जनपदोपवादाश्च जनपददोषोद्भावनेन कुत्सनानि च, व्याख्याताः[1] ।

यः परमन्यम्, 'एवं त्वां करिष्यामि' इति 'तव पादं भङ्क्ष्यामि भुजं भङ्क्ष्यामी' त्येवम्, करणेन शरीरावयवेन, अभिभर्त्सयेत्, अकरेण उक्तस्याक्रियायां तस्याभिभर्त्सकस्य, करणे यो दण्डस्तत्तु दण्डपारुष्ये वक्ष्यमाणः, ततोऽर्धदण्डं दद्यात् । उक्तपादभङ्गादिकरणाशक्तः, कोपं मदं मोहं वा, अपदिशेत् पादभङ्गादेरुक्तिकारणं वदेच्चेद्, द्वादशपणं दण्डं स दद्यात् । शक्तस्य कोपाद्यपदेशो न स्वीकार्यः । अपकर्तुरशक्तश्च जनः, उक्तविधमभिभर्त्सनं कुर्वन्, यावज्जीविकावस्थमास्वमरणप्रतिभुवं दद्याद् धर्मस्थेभ्यः । तथा च–

**स्वदेशग्रामयोः पूर्वं मध्यमं जातिसंघयोः ।**
**आक्रोशाद्देवचैत्यानामुत्तमं दण्डमर्हति[2] ॥**

दण्ड्यः काणखञ्जादीनां तथावाद्यपि कार्षापणद्वयम्[3] । समवर्णाक्रोशने द्वादशपणान् दण्ड्यः । हीनवर्णाक्रोशने षट्[4] । यथाकालमुत्तमवर्णाक्षेपे तत्प्रमादो दण्ड्यस्त्रयो वा कार्षपणाः । शुक्तवाक्याभिधानेऽप्येवमेव । सवर्णव्यतिक्रमे द्वादश कार्षपणाः । यथारूपविशिष्टाक्षेपेऽविशिष्टस्य चतुर्विंशतिः । अविशिष्टस्यातिक्रमे विशिष्टस्य ततोऽर्धम् । तथाऽधिकृतान् विप्रान् गुरूंश्च निर्भर्त्सनं मुण्डनं ताडनम्, गोमयानुलेपनं खरारोहणं दर्पहरो दण्डो वा[5] । गुरूनाक्षारयन् कार्षापणशतं दण्ड्यः[6] । स्वस्रादिकं क्षिपन् पञ्चाशत्पणिकं दमं दद्यात्[7] । अधोवर्णानामुत्तमवर्णाक्रोशाक्षेपाभिभवे ह्यष्टौ पुराणाः[8] । आक्रोशे ब्राह्मणस्य क्षत्रियः शतं दण्ड्यः । शतार्धं वैश्यस्य । पञ्चविंशतिं शूद्रस्य[9] । आक्रोशे मातृयुक्ते तूत्तमसाहसं दण्डनीयः[10] ।

शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपह-

---

1. कौ. ३।१८।१४-१६ ।
2. कौ. ३।१८।१७-२० ।
3. विष्णु. ५।२७; नारद. १८।१८; बृह. २०।५; कात्यायनोशनसौ ७७५ ।
4. विष्णु. ५।३५-३६ ।
5. शङ्खलिखितौ, वि. र. २४६ ।
6. विष्णुः ५।२८ ।
7. बृह. २०।९ ।
8. हारीतः , वि. र. २४९ ।
9. शङ्खलिखितौ; नारदीयमनु. १६।१५; नार. स्मृ. १४।१५ ।
10. विष्णु. ५।३४ ।

न्यात्[1] । जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः[2] । अनृतभिशंसने तदङ्गच्छेदः पञ्चशतं वा । आद्येषु पादो न वा । स्वामित्वादिवर्णत्वाच्चोत्तमानाम्[3] । श्रुतदेश-जातिकर्मणामन्यथावादी कार्षापणशतद्वयं दण्ड्यः[4] । परस्य पतनीये क्षेपे कृते तूत्तमसाहसम् । उपपातकयुक्ते मध्यमम् । त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च । ग्रामदेशयोः प्रथमम्[5] । त्रैविद्यवृद्धानामित्यत्रोत्तमसाहसमित्यनुषङ्गः । जातिपूगाना-मित्यत्र मध्यममित्यनुषङ्गः । महापातकान्न्यूनमुपपातकम् । ततो न्यूनं पापम् । तत्र पापेऽधमो दण्डः । उपपापे मध्यमः, महापातके तूत्तमः ।

**बृहस्पतिः**

देशादिकं क्षिपन् दाप्यः वर्णानर्धत्रयोदश ।
पापेन योजयन्दर्पाद्दाप्यः प्रथमसाहसम् ॥
एष दण्डः समाख्यातः पुरुषापेक्षया मया ।
समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिः ॥ १०।१७,१९ ॥

**नारदः**

लोकेऽस्मिन् द्वाववक्तव्याववध्यौ च प्रकीर्तितौ ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभ्रतो जगत् ॥ १८।२० ॥
अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वा ॥ १८।३० ॥

**कात्यायनः**

यत्र स्यात्परिहारार्थं पतितस्तेन कीर्तितः ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥
अन्यथा तुल्यदोषः स्यान्मिथ्योक्तौ तूत्तमो दमः ।
महता तु प्रयत्नेन वाग्दुष्टं साधयेन्नरम् ॥
अतथ्यं श्रावितं राजा प्रयत्नेन विचारयेत् ।
अनृताख्यानशीलानां जिह्वाच्छेदनाद्विशोधनम् ॥ ७७६-७७८ ॥

**उशना**

यत्र नोक्तो दमः पूर्वैरानन्त्यात्तु महात्मभिः ।
तत्र कार्यं परिज्ञाय कर्त्तव्यं दण्डधारणम् ॥

1. गौ. १२।१ ।
2. आपस्तम्बः २।२७।१४ ।
3. हारीतः, वि. र. २५१ ।
4. विष्णु. ५।२६; नारद. १८।१९ ।
5. विष्णु. ५।२९-३२ ।

**दण्डपारुष्यम्**

प्रथममात्मरक्षणसिद्धान्तविवेचनम् । प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत[1] । अत्र बौधायनः

**गवार्थे ब्राह्मणार्थे वा वर्णानां वापि सङ्करे ।**
**गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥ २।२।८० ।**

ब्राह्मणादिभिस्त्रिभिर्वर्णैः खड्गाद्यायुधं ग्रहीतव्यम् । यस्मिन्काले वर्णानामाश्रमिणां च साहसकारादिभिर्धर्मः कर्त्तुं न दीयते । तथा त्रैवर्णिकानामराजकेषु राष्ट्रेषु परचक्रागमनादिकालजनिते स्त्रीसङ्करादौ प्राप्ते तथा आत्मरक्षार्थं दक्षिणाधनगवाद्यपहारनिमित्ते च संग्रामे स्त्रीब्राह्मणरक्षार्थञ्च धर्मयुद्धेनानन्यगतिकतया परान् हिंसन्न दोषभाग्भवति । परमारणेऽप्यत्र साहसदण्डो न कार्यः ।

गुरुबालवृद्धबहुश्रुतब्राह्मणानामन्यतमं वधोद्यतमागच्छन्तं विद्यावित्तादिभिरुत्कृष्टं पलायनादिभिरपि स्वनिस्तरणाशक्तौ निर्विचारं हन्यात् । अत एवोशनाः– "गृहीतशस्त्रमाततायिनं हत्वा न दोषः" । गुर्वादिकमपि हन्यात् किमुतान्यमपि । कात्यायनश्च भृगुशब्दोल्लेखेन मनूक्तश्लोकमेव व्यक्तं व्याख्यातवान्–

**"आततायिनि चोत्कृष्टे तपः स्वाध्यायजन्मनः ।**
**वधस्तत्र तु नैव स्यात्पापं हीनो वधो भृगुः" ॥**

जनसमक्षं रहसि वा वधोद्यतस्य मारणे हन्तुर्न कश्चिदप्यधर्मदण्डः प्रायश्चित्ताख्यो दोषो भवति । यस्माद्धन्तृगतो मन्युः क्रोधाभिमानिनी देवता हन्यमानगतं क्रोधं विवर्धयति । साहसे चापराधगौरवापेक्षया मारणाङ्गच्छेदनधनग्रहणादयो दण्डाः कार्याः[2] ।

धर्मस्तटाकादिरूपो यत्र देशे काले वा भेदनछेदनादिनोपरुध्यते तत्र । तथा दक्षिणानां सङ्करे गोग्रहणनिमित्तके युद्धे । स्त्रीविप्राभ्युपत्तौ दुर्बलहिंसानिवारणे धर्माद्धेतोर्घ्नन् न दुष्यति । यदा तु राज्ञो निवेदनेन कालविलम्बनेन कार्यातिपाताशङ्का तदा स्वयमेव जारादीन्हन्यात्। शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते[3] । अतश्च ब्राह्मणादय आततायिनश्चात्मत्राणार्थं हिंसानभिसन्धिना निवार्यमाणाः प्रमादाद्यदि विपद्येरंस्तत्र लघुप्रायश्चित्तं राजदण्डाभावश्चेति निश्चयः[4] ।

प्रातिलोम्याद्यपराधे साधनविशेषेण दण्डविशेषं विवेचनीयम् । भस्मना पङ्केन रेणुना वा यः परं स्पर्शयत्यसौ दशपणं दण्डं दाप्यः । अश्रुश्लेष्मनखकेशकर्णविट्दूषिकाभुक्तोच्छिष्टादिकं च गृह्यते । पादस्य पश्चिमोभागः, मुखनिःसारितं जलम्,

1. गौ. ७।२५ ।
2. मनु. ८।३४५-३५० ।
3. याज्ञ. २।२८६ ।
4. याज्ञ. २।२१ ।

तैः स्पर्शने ततः पूर्वाद्दशपणाद्द्विगुणो विंशतिपणो दण्डः । स्वापेक्षयाऽधिकश्रुतवृत्तेषु पूर्वोक्ताद्दशपणाद्विंशतिपणाच्च दण्डाद्द्विगुणो दण्डो वेदितव्यः । स्वापेक्षया न्यूनवृत्तश्रुतादिषु पूर्वोक्तस्यार्धदमः, पञ्चपणो दशपणश्च[1] ।

ब्राह्मणानां पीडाकरं क्षत्रियादेर्यदङ्गं करचरणादिकं तच्छेत्तव्यम् । क्षत्रियवैश्ययोरपि पीडां कुर्वतः शूद्रस्याङ्गच्छेदनमेव । द्विजातिमात्रस्यापराधे शूद्रस्याङ्गच्छेदविधानाद् वैश्यस्याऽपि क्षत्रियापकारिणोऽयमेव दण्डः, तुल्यन्यायात् । वधार्थमुद्यते शस्त्रादिके प्रथमसाहसो दण्डः । शूद्रस्य पुनरुद्गूर्णेऽपि हस्तादिच्छेदनमेव । उद्गूरणार्थं शस्त्रादिस्पर्शने तु तदर्धिकः प्रथमसाहसादर्धदण्डः । भस्मादिस्पर्शे पुनः क्षत्रियवैश्ययोः 'प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमा' इति वाक्पारुष्योक्तन्यायेन कल्प्यम् । शूद्रस्य तत्राऽपि हस्तच्छेद एव[2] ।

हस्ते पादे वा ताडनार्थमुद्गूर्णे यथाक्रमं दशपणो विंशतिपणश्च दण्डः । परस्परवधार्थं शस्त्रे उद्गूर्णे सर्वेषां वर्णिनां मध्यमसाहसो दण्डः । पादकेशवस्त्रकराणामन्यतमं गृहीत्वा यो झटित्याकर्षयति असौ दशपणान्दण्ड्यः । पीडाकर्षश्चांशुकावेष्टपादाध्यासं तस्मिन्समुच्चिते शतं दण्ड्यः । यदा पुनर्गाढताडनेन लोहितं दृश्यते तदा द्वात्रिंशतो द्विगुणं चतुः षष्टि पणान्दण्डनीयः । करपाददन्तस्य प्रत्येकं भङ्गे कर्णनासस्य च प्रत्येकं छेदने रूढव्रणस्योद्भेदने मृतकल्पो यथा भवति तथा हते ताडिते मध्यमसाहसो वेदितव्यः[3] ।

**याज्ञवल्क्यः**

**चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।**
**कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ॥**
**एकं घ्नन्तां बहूनां च यथोक्ताद्द्विगुणो दमः ।**
**कलहापहृतं देयं दण्डश्च द्विगुणस्ततः ॥**
**दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।**
**दाप्यो दण्डं च यो यस्मिन्कलहे समुदाहृतः ॥**
**अभिघाते तथा छेदे भेदे कुड्यावपातने ।**
**पणान्दाप्यः पञ्च दश विंशतिं तद्व्ययं तथा ॥**
**दुःखोत्पादि गृहे द्रव्यं क्षिपन्प्राणहरं तथा ।**
**षोडशाद्यः पणान्दाप्यो द्वितीयो मध्यमं दमम् ॥**

1. याज्ञ. २।२१५ ।
2. याज्ञ. २।२१५ ।
3. याज्ञ. २।२१६-२१९ ।

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥
प्ररोहिशाखिनां शाखास्कन्धविदारणे ।
उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः ॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्धदण्डः स्थानेषूक्तेषु कर्तने ॥ २।२१९-२२९ ॥

अत्र कौटल्यव्यवस्था। नाभेरधःकायं हस्तपङ्कभस्मपांसुभिः तत्प्रकारैश्च स्पृशतस्त्रिपणो दण्डः । हस्तादिभिरेवाशुद्धैः स्पृशतः पादष्ठीविकाभ्यां च पादेन मुखकफादिनिरसनेन च स्पृशतः षट्पणः । पादादीनां ग्रहणेषु षट्पणोत्तराः यथोत्तरं षट्पणाधिकाः पादग्रहणे षट् वस्त्रग्रहणे द्वादश हस्तग्रहणेऽष्टादश केशग्रहणे चतुर्विंशतिरिति रीत्या दण्डाः । अवमर्दने परिवेष्टने कज्जलादिलेपने भूप्रकर्षणे देहोपर्यारुह्योपवेशने च पूर्वः साहसदण्डः । पातयित्वाऽपक्रमतः भूमौ निपात्यापक्रमणादर्धदण्डोऽर्धप्रथमसाहसदण्डः। शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात्तदस्य छेदयेत्[1] ।

करेणावगूर्णे त्रिपणावरो द्वादशपणपरो दण्डः। पादेनावगूर्णे द्विगुणः चतुर्विंशतिपणः । दुःखोत्पादकेन द्रव्येण कण्टकादिनाऽवगूर्णे पूर्वः साहसदण्डः । प्राणाबाधिकेन सर्पादिनाऽवगूर्णे मध्यमः साहसः[2] । काष्ठादीनां षण्णामन्यतमेन दुःखमरक्तमुत्पादयतश्चतुर्विंशतिपणो दण्डः । शोणितोत्पादने द्विगुणोऽष्टाचत्वारिंशत्पणः । अन्यत्र दुष्टशोणितातिरिक्ते विषये कुष्ठादिदुष्टशोणितोत्पादने तु न द्विगुणः, किन्तु अर्धमौचित्यात् । मृततुल्यत्वं यथा भवेत्तथाऽरक्तं घ्नतः, हस्तपादपराञ्चिकां हस्तस्य पादस्य वा पराञ्चनमन्यथाभावं सन्धिविषतनमिति यावत् । तां वाकुर्वतः पूर्वः साहसदण्डः । पाण्यादिभङ्गे : कर्णनासाच्छेदने दुष्टव्रणव्यतिरेकेण च पूर्वः साहसदण्डः[3] ।

उरुकण्ठभङ्गे नेत्रभेदने वा वचनसञ्चरणाभ्यवहरणशक्तिप्रतिबन्धेषु च मध्यमः साहसदण्डः । समुत्थानव्ययश्च यथावत्क्रियाकार्यपाटवं समुत्थानं तत्प्रत्यापत्त्यर्थो व्ययश्च, अपराधिना देयः । मरणे कण्टकशोधनाय नीयेत । जनसमूहस्यैकं जनं घ्नतः प्रत्येकं द्विगुणो दण्डः, एकस्यैकं घ्नतो यो दण्डस्तद्द्विगुणो दण्डः[4] ।

---

1. कौ. ३।१९।२-१३ ।
2. कौ. ३।१९।१४-१९ ।
3. कौ. ३।१९।२०-२५ ।
4. कौ. ३।१९।२६ ।

चिरातीतः कलहोऽनुप्रवेशो वा हृतद्रव्यायत्तीकरणं वा, नाभियोज्योऽभियोक्तुमर्हो न भवतीत्याचार्याः। 'नास्त्यपकारिणो मोक्षः' इति कौटल्यः। 'कलहे पूर्वागतो जयति, अक्षममाणो हि प्रधावति' इत्याचार्याः, नेति कौटल्यः। साक्ष्यभावे घातदर्शनेन तत्त्वनिर्णयो घातादर्शने लिङ्गैः कलहस्याभ्यूहनम्। घातविषयमभियोगं तदहरेवा-प्रतिब्रुवतः पराजयः[1]।

कलहायमानयोर्द्वयोर्द्रव्यमपहरतोऽन्यस्य दशपणो दण्डः। अपहृतद्रव्यप्रत्यानयनं तु सिद्धमेव। क्षुद्रकद्रव्यहिंसायां कलहकारिभिरुपहनने, तच्च हिंसितं क्षुद्रद्रव्यं च स्वामिने देयम्। तावच्च तत्परिमाणं द्रव्यं च दण्डो भवति। कालायसादि-स्थूलकद्रव्यहिंसायां तच्च, द्विगुणस्तद्द्रव्यद्विगुणो दण्डश्च। गवादीनामेतेष्वेव स्थानेषु दुःखोत्पादनादिषु क्षुद्रपशूक्तेषु विषयेषु द्विगुणो दण्डः। समुत्थानव्ययश्च तत्स्वस्थी-करणार्थो व्ययश्च देयः। पल्लवच्छेदने षट्पणः। क्षुद्रशाखाच्छेदने द्वादशपणः। पीनशाखाच्छेदने चतुर्विंशतिपणः। स्कन्धवधे पूर्वसाहसदण्डः। समुच्छितौ मध्यमः। पुष्पफलच्छायावद्गुल्मलतास्वर्धदण्डः। पुण्यस्थानतपोवनश्मशानद्रुमेषु च।

**सीमबृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च।**
**त एव द्विगुणा दण्डाः कार्या राजवनेषु च[2]।**

गजाश्वोष्ट्रगोघाती ह्येककरपादः कार्यः। विमांसविक्रयी च। ग्राम्यपशुघाती च कार्षापणशतं दण्ड्यः। पशुस्वामिने च तन्मूल्यं दद्यात्। आरण्यपशुघाती पञ्चाशत् कार्षापणान्। पक्षिघाती मत्स्यघाती च दशकार्षापणान्[3]।

## स्तेयम्

प्रकाशतस्करदण्डाः। देशप्रसिद्धपरिमाणादन्यथा न्यूनत्वमाधिक्यं वा द्रम्मादेर-व्यवहारिकमुद्रात्वं ताम्रादिगर्भत्वं वा करोति, यश्च तैः कूटैर्जानन्नपि व्यवहरति, तावुभौ प्रत्येकमुत्तसाहसं दण्डनीयौ। यः पुनर्नाणकपरीक्षी ताम्रादिगर्भमेव द्रम्मादिकं सम्यगिति ब्रूते, सम्यक् च कूटकमिति असावुत्तसाहसं दण्ड्यः। यः पुनर्भिषक् मिथ्या आयुर्वेदानभिज्ञ एव जीवनार्थं 'चिकित्सितज्ञोऽहम्' इति तिर्यङ्मनुष्यराजपुरुषेषु चिकित्सामाचरत्यसौ यथाक्रमेण प्रथममध्यमोत्तमसाहसान्दण्डनीयः[4]। ये उत्कोच-जीविनस्तान् द्रव्यरहितान्कृत्वा स्वराष्ट्रात्प्रवासयेत्[5]। कटकादिनिर्माणार्थं यावत्स्वर्ण-

1. कौ. ३।१९।२७-३४।
2. कौ. ३।१९।३५-५०।
3. विष्णु. ५।४८-५४; नारद. १८।११-१४; बृह. २१।२०; कात्या. ७८३, ७९०, ७९२; वसिष्ठ. १९।११-१३।
4. याज्ञ. २।२४०-२४२।
5. याज्ञ. २।२३९।

कारहस्ते प्रक्षिप्तं तावत्तुलितं तैः प्रत्यर्पणीयम्, इतरथा क्षयं दाप्या दण्ड्याश्च[1]। शाणक्षौमादौ द्रव्ये नष्टे ह्रासमुपगते द्रव्याणां कुशलाः द्रव्यवृद्धिक्षयाभिज्ञाः देशं कालमुपभोगं तथा नष्टद्रव्यस्य बलाबलं सारासारतां च परीक्ष्य यत्कल्पयन्ति तदसंशयं शिल्पिनो दाप्यः[2]। यः वणिक् व्रीहिकार्पासादेः पण्यस्याष्टममंशं कूटमानेन अन्यथा वा परिहरति असौ पणानां द्विशतं दण्डनीयः[3]। यच्च राजयोग्यं मणिमाणिक्याद्यप्रतिषिद्धमपि तद्राज्ञेऽनिवेद्य लाभलोभेन विक्रीतं चेद्राजगामि मूल्यदाननिरपेक्षं तत्सर्वं पण्यं राजाऽपहरेत्[4]। यः पुनर्वणिक् शुल्कवञ्चनार्थं पण्यपरिमाणं निह्नुते, यश्च 'अस्येदं वा' इत्येवं विवादास्पदीभूतं पण्यं क्रीणाति विक्रीणीते वा ते सर्वे पण्यादष्टगुणं दण्डनीयाः[5]। अपहृतद्रव्याष्टमांशादाधिक्ये न्यूनत्वे वा कल्पितं न्याससिद्धाधिकन्यूनभावकल्पनानुसारिदण्डं दाप्यः। हलायुधस्तु विनिमयवृत्तयोरेकतरस्यार्थित्वं ज्ञात्वा अल्पमूल्यं वस्तु बहुमूल्येन विक्रीणीते, स धनापेक्षया प्रथमं साहसं मध्यमसाहसं वा दण्ड्यः[6]।

ब्राह्मणार्हौ भोजनार्हावभोजयन्ब्राह्मण उत्तरत्र हैरण्यादिग्रहणादिह रौप्यमाषं दण्डमर्हति। रजकास्तन्तुवायाश्च दण्ड्याः यदा तेऽनुबन्धवञ्चकाः[7]। दुर्भिक्षे धान्यं देशान्तरं न नेयमिति लोभाद्देशान्तरं न यतो वणिजः सर्वहरणं राजा कुर्यात्[8]। कितवाः, कुशीलवाः, वेदविद्विषः, श्रुतिस्मृतिबाह्यव्रतधारिणः, आपदिपरकर्मजीविनः, शौण्डिकाः प्रच्छन्नतस्कराः। एतान् क्षिप्रं राजा राष्ट्रान्निर्वासयेत्[9]। सममूल्यं द्रव्यं दत्त्वा यः कस्यचिद्बहुमूल्यं कस्यचिद्विषमं मूल्यमिति विषमं मूल्यं गृह्णाति सः प्रथमसाहसं मध्यमसाहसं वा दण्डं प्राप्नुयात्[10]। योऽपकृष्टं बीजं कतिपयोत्कृष्ट-प्रक्षेपेण सर्वमिहं सोत्कर्षमिति कृत्वा यो विक्रीणीते यश्च ग्रामनगरादिसीमां विनाशयति स विकृतनासाकरचरणकर्णादिरूपं वधं प्राप्नुयात्[11]। सुवर्णकारस्तु पश्यतोहरः। सर्वकण्टकानां मध्येऽतिशयेन पापतमं सुवर्णकारं तुलाच्छद्मकष-परिवर्तावद्रव्यप्रक्षेपादिना हेमादिचौर्ये प्रवर्तमानमनुबन्धापेक्षयाज्ञाविशेषेण सर्वदेहं वा खण्डशश्छेदयेत्[1]। यावन्तः केचन कण्टकास्तेषां पापतमः सुवर्णकारः।

---

1. याज्ञ. २।१७८।
2. याज्ञ. २।१८१।
3. याज्ञ. २।२४४।
4. याज्ञ. २।२६१।
5. याज्ञ. २।२६२।
6. मनु. ८।३९२।
7. मनु. ८।३९६-३९७।
8. मनु. ८।३९९।
9. मनु. ९।२२५।
10. मनु. ९।२८७।
11. मनु. ९।२९०।

कात्यायनः

तुलामानप्रतीमानप्रतिरूपकलक्षितैः।
चरन्नलक्षितैर्वाऽपि प्राप्नुयात्पूर्वसाहसम् ॥ ८१२ ॥

तुलामानकूटकर्तुश्च । तदकूटे कूटवादिनश्च । द्रव्याणां प्रतिरूपविक्रयिकस्य च । सम्भूयवणिजां पण्यमनर्घेणावरुन्धताम्। प्रतिरूपकञ्च कृतकमुक्तादि। मिलित्वा वणिजामधिकमूल्यं पण्यमल्पमूल्येन क्रीणतामल्पमूल्यञ्च वस्त्वधिकेन विक्रीणताञ्चैकैकस्योत्तमसाहसं दण्डः[2] । पशवो वर्णापशदाश्च तिर्यञ्चः । विट्छूद्राः मानुषम् । क्षत्रिया ब्राह्मणाश्च राजमानुषम् । एवं मिथ्याचरतो वैद्यस्य प्रथमसाहसादयो दण्डाः । सर्वथा चिकित्सास्वरूपं पीडाविशेषं च वैद्यकृतमालोच्य यथार्हं दण्डकल्पना–

अज्ञातौषधिमन्त्रस्तु यस्य व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक्[3] ॥

एवं ज्योतिः शास्त्रद्वाराऽर्थसङ्ग्रहणे प्रकाशतस्काराणां दण्डाः–

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विनेयास्ते प्रयत्नतः ॥
दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्ति छद्मना नृणां वध्यास्ते राजपूरुषैः ॥
(बृह. २२।१५-१६)

अन्येषां प्रकाशतस्कराणां विषये बृहस्पतिः

अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान् वञ्चयन्ति दण्ड्यास्तेऽर्थानुरूपतः ॥
हेममुक्ताप्रवालाद्यं कृत्रिमं कुर्वते तु ये ।
क्रेत्रे मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम् ॥ २२।१७-१८ ॥
मध्यस्था वञ्चयत्येकं स्नेहलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥
मन्त्रौषधिबलात्किञ्चित्संप्राप्तिं दर्शयन्ति ये ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभुजा ॥ २२।१९-२० ॥

---

1. मनु. ९।२९२ ।
2. वि. र. २९७ ।
3. बृह. २२।१० ।

शुल्कस्थानादपाक्रामन् सर्वापहारमाप्नुयात्[1] । कूटतुलामानप्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा । एवमेव प्रतिषिद्धभाण्डनिर्हारे । तुलामानप्रतीमानव्यवहारार्घसंस्थापनं देशद्रव्यानुरूपं प्रत्ययितपुरुषाधिष्ठितमिति शङ्खलिखितौ । अधिष्ठानान्निर्हारः सार्थानाम् । अर्धमानमूल्यमात्रं नैर्हारिकं स्यात् । महामहयोस्त्वनत्यः स्यात् । अभयञ्च[2] । शुल्के चाऽपि मानवं श्लोकमुदाहरन्ति–

**न भिन्नकार्षापणमस्ति शुल्कं**
**न शिल्पवृत्तौ न शिशौ न दूते ।**
**न भैक्ष्यलब्धे न कृतावशेषे**
**न श्रोत्रिये प्रव्रजिते न यज्ञे ॥**

(वसिष्ठ. १९।३७)

विंशतिभागः शुल्कः पण्ये । मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षाष्टः । तद्रक्षणधर्मित्वात् । 'तेषु च नित्ययुक्तः स्यात्' । सामुद्रः शुल्कः । वरं रूपमुद्धृत्य दशपणं शतम् । अन्येषामपि साराऽरूपेणाऽनुपहत्य धर्मं प्रकल्पयेत्[3] । अन्येषामपि लाभभूयस्त्वप्रयोजकदेशान्तरागतानां सारानुरूपेण श्रेष्ठं वस्तूद्धृत्य गृहीत्वा धर्मादनपेतं शुल्कं गृह्णीयात् । वणिजो द्रव्योपघातो न कार्यः । उत्तमसाहसं दण्डनीयो-भिषङ्मिथ्याचरन्नुत्तमेषु पुरुषेषु । मध्यमं मध्यमेषु । तिर्यक्षु प्रथमम्[4] ।

द्यूते च कूटाक्षदेविनां करच्छेदः । उपधिदेविनां संदंशच्छेदः, अङ्गुष्ठतर्जनीच्छेदः (विष्णु. ५।१३४-१३५) । तथा च–

**ग्लहः प्रकाशः कर्त्तव्यो निर्यास्याः कूटदेविनः ।**
**कूटाक्षदेविनः क्षुद्रा राजभागहराश्च ये ।**
**गणानां वञ्चकाश्चैव दण्ड्यास्ते कितवास्स्मृताः ॥**

(बृह. २२।११,१२)

**राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः । याज्ञ. २।२०८ ।**

उत्कोचजीविनः सर्वथा दण्ड्याः–

**न्यायस्थाने येऽधिकृता गृहीत्वार्थं विनिर्णयम् ।**
**कुर्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः[5] ॥**

---

1. विष्णु. ३।३१ ।
2. वसिष्ठ. १९।१४-१६ ।
3. गौ. १०।२५-२७; बौधा. १।१८।१३-१५ ।
4. विष्णु. ५।१७५-१७७ ।
5. व्यासः, वि. र. ३०५ ।

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः।
गृह्णन्ति छद्मना चार्थमनार्याश्चार्यलिङ्गिनः[1] ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्[2]।
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥

(बृह. २२।१४)

तत्र नारदः

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः।
द्विः पादस्त्रिस्त्रिभागस्तु चतुः कृत्वोऽर्धमेव तु ॥
अर्धक्षयात्तु परतः पादशोऽपचयः क्रमात्।
यावत्क्षीणदशं वस्त्रं जीर्णस्यानियमः क्षये ॥ १२।८-९।

व्यासः

"नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः।
यथा ते नातिवर्तन्ते तिष्ठन्ति समये यथा" ॥

**अप्रकाशतस्करदण्डाः**

चौर्यञ्चोत्तसाहसदण्डप्राप्तियोग्योत्तमद्रव्यविषयम्, न पुनः पुष्पवस्त्रादिक्षुद्रमध्यमद्रव्यापहारविषयम्। बन्दीग्राहादीन्बलावष्टम्भेन घातकांश्च नरान् शूलानारोपयेत्। उत्क्षेपकग्रन्थिभेदकयोरेकमेकं कारं पदं च छिन्द्यात्। एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम्[3]। जातिद्रव्यपरिमाणपरिग्रहविनियोगवयः शक्तिगुणदेशकालादीनां दण्डगुरुलघुभावकारणानामानन्त्यात्प्रतिद्रव्यं वक्तुमशक्तेः सामान्येन दण्डकल्पनोपायमाह–

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः।
देशकालवयः शक्ति संचित्यं दण्डकर्मणि ॥

(याज्ञ. २।२७५)

सुवर्णचौरेण ब्राह्मणसुवर्णहार्यहमतोऽनेन मुसलादिना मां व्यापदयेत्येवं राज्ञे वक्तव्यम्। सकृन्मुसलादिप्रहारेण प्राणपरित्याजनान्मृतककल्पस्य जीवतोऽपि परित्यागद्वा स चौरस्तस्मात्पापात्प्रमुच्यते। तं पुनस्तेन करुणादिभिरहत्वा स्तेनस्य यत्पापं तद्राजा प्राप्नोति[4]। कूपसमीपे रज्जुघटयोर्जलोद्धारणाय धृतयो रज्जुं घटं वा हरेत्। यो वा

1. व्यासः, वि. र. ३०६।
2. याज्ञ. १।३३९।
3. याज्ञ. २।२७०-२७४।
4. मनु. ८।३१५-३१६।

पानीयदानगृहं विदारयेत्स सौवर्णं माषं दण्डं प्राप्नुयात्[1] । दशसङ्ख्येभ्यः कुम्भेभ्योऽधिकं धान्यं हरतो वधः[2] । तुलापरिच्छेद्यानां सुवर्णरजतादीनामुत्कृष्टानाञ्च वाससां पट्टादीनां पलशताधिकेऽपहृते वधः कर्त्तव्यः । महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां श्रेष्ठानां च रत्नानां वज्रवैदूर्यादीनामपहारे वधमर्हति[3] । महतां पशूनां हस्त्यश्वादिगोमहिष्यादीनां तथा खड्गादीनां शस्त्राणां कल्याणघृतादेश्चौषधस्य च दुर्भिक्षादिरूपं कालं कार्यं प्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदवधरूपं दण्डं प्रकल्पयेत्[4] ।

ब्राह्मणसंबन्धिनीनां गवामपहारे वन्धायाश्च गोर्वाहनार्थं नासाच्छेदने पशूनां चाजैडकानां दण्डभूयस्त्वाद्यागाद्यर्थानां हरणेऽनन्तरमेव छिन्नार्धपादिकः कार्यः[5] । समर्थपुरुषभारहार्येषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णलमाषपरिमाणो दण्डः स्यात्[6] । यः पुनरेतानि सूत्रादिद्रव्याण्युपभोगार्थं कृतसंस्काराणि मनुष्यश्चोरयेत्, यश्च त्रेताग्निं गृह्याग्निं वाग्निगृहाच्चोरयेत्तं राजा प्रथमं साहसं दण्डयेत्[7] । क्षेत्रकर्षकस्यात्मपशुसस्यभक्षणेऽयथाकालं वपनादौ वापराधे सति यावतो राजभागस्य तेन हानिः कृता ततो दशगुणदण्डः स्यात् । क्षेत्रिकाविदिते भृत्यानामुक्तापराधे क्षेत्रिकस्यैव दशगुणार्धदण्डः[8] । ये रात्रौ सन्धिच्छेदं कृत्वा परधनं तस्करा मुष्णन्ति तेषां राजा हस्तद्वयं तीक्ष्णे शूले तानारोपयेत्[9] । राजसंबन्धिधान्यादिषु धनागारायुधगृहयोर्देवप्रतिमागृहस्य च बहुधनव्ययसाध्यस्य विनाशकान् हस्त्यश्वरथस्य चापहर्तॄञ्शीघ्रमेव हन्यात् । यत्तु संक्रमध्वजयष्टिदेवताप्रतिमाभेदिनः पञ्चशतदण्डं सोऽस्मादेव देवतागारभेदकस्य वधविधानान्मृन्मयपूजितोज्झितदेवताप्रतिमाविषयोऽत्र विशेषः[10] ।

चौरादिकं त्रिभिरुपायैः प्रयत्नेन नियमयेत्—कारागारप्रवेशनेन, निगडादिबन्धनेन, करचरणच्छेदनादिनानाप्रकारहिंसनेन । सन्धिं कृत्वा ये तस्कराः रात्रौ चौर्यं कुर्वन्ति, नृपस्तेषां हस्तौ छित्वा तीक्ष्णे शूले निवेशयेत्[11] । ये स्वदेशघातिनो मार्गावरोधिनश्च

---

1. मनु. ८।३१९ ।
2. मनु. ८।३२० ।
3. मनु. ८।३२१-२३ ।
4. मनु. ८।३२४ ।
5. मनु. ८।३२५ ।
6. मनु. ८।३३० ।
7. मनु. ८।३३३ ।
8. मनु. ८।२४३ ।
9. मनु. ९।२७६ ।
10. मनु. ९।२८० ।
11. मनु. ९।२७६; व्यासः, वि. र. ३१४; बृह., वि. र. ३१३ ।

तेषां सर्वस्वमादाय राजा शूले निवेशयेत्[1] । मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना[2] । राजपुत्रापहारेषु सहस्रं शारीरो वा दण्डः । तत्कुलीनेष्वर्धम् । स्त्रीपुरुषयोश्च । हस्त्यश्वगोरथवृषयानेषु राजपुत्रापहरणदण्डः । अजाविकेऽर्धत्रयोदशम् । नकुलविडालापहरणे त्रयः कार्षापणाः, इति शङ्खलिखितौ । गोषु ब्राह्मणसंस्थासु स्थूरायाश्छेदनं भवेत् । दासीं च हरतो मध्यस्तथा पादस्य छेदनमिति नारदः (२१।३३) । गोऽश्वखरोष्ट्रगजापहार्येककरपादिकः कार्यः[3] । अत्र पूर्वं व्यासेन अजाविहरणेऽर्धत्रयोदशपणा इत्यभिधानात् । अनेनाजाविहरणे एककरस्योक्तेः विरोधस्य प्रसङ्गे, धनशून्यचौरत्वे यज्ञोपयुक्ताजाविहरणे वा विष्णुरिति परिहारः । अश्वहर्त्ता हस्तपादौ कटिं छित्वा प्रमाप्यते । पशुहर्तुश्चार्धपादं तीक्ष्णशस्त्रेण कर्तयेदिति व्यासः । महापशूंस्तेनयत उत्तमसाहसदण्डः । मध्यमपशून् क्षुद्रपशौ च हृते पूर्वं साहसं दण्डः[4] । उत्क्षेपकग्रन्थिभेदौ संदंशेन वियोजयेत् । प्रथमे ग्रन्थिभेदश्चाङ्गुल्यङ्गुष्ठयोर्वधः, द्वितीये चैव तज्ज्ञेयं तृतीये वधमर्हति[5] ।

धान्यापहार्येकादशगुणं दण्ड्यः । सस्यापहारी च[6] । कृषीवलभागहरणे धान्यापहारी एकादशगुणं दण्ड्यः, शस्यापहारी च । मनूक्तधान्यापहारे एकादशगुणदण्डाभिधानं स्वामिने च हृतधान्यदानाच्च प्रथमधान्यचौर्यविषयमित्यविरोधः । हलायुधस्तु द्वितीये श्लोके (मनु. ८।२४३) क्षेत्रस्वामिनोऽत्ययेन दोषेण यदा शस्यनाशो भवति, तदा राज्ञा स्वग्राह्यभागाद्दशगुणं दण्डनीयः । एतज्ज्ञानाच्च । भृत्यदोषेण शस्यनाशे भृत्य एव तदर्धेन दण्ड्यः ।

सुवर्णरत्नापहरणे । रत्नापहार्युत्तमसाहसम् । यत्किञ्चित्स्वरूपं सुवर्णरजतं नापहरन्नभ्यर्हितः ताडनीयः । तद्रूपे छिन्नकर्णः कार्यः । मुख्यानां रथानां हरणे वधमर्हति[7] । अष्टशतं सीताद्रव्यापहारे चेति शङ्खलिखितौ[8] । शाकमूलफलेषु परिपूरितेषु धान्येषु च निरन्वये शतं सान्वयेऽर्धशतं दण्ड्यः । पञ्चकृष्णलमिति **गौतमः, व्यासः, यमः, मनुश्च**[9] । सूत्रकार्पासगोमयदधिक्षीरतक्रगुडतृणलवणमृद्भस्ममत्स्यपक्षिघृततैलमांसमधुवैदलवेणुमृन्मयलोहभाण्डानामपहर्ता मूल्यात्त्रिगुणं दण्ड्यः । पक्वान्नानाञ्च । कृतकाष्ठाश्मकौलालचर्मवेत्रविदलभाण्डेषु मूल्यात्पञ्चगुणः । त्रयो वा

---

1. बृह., वि. र. ३१३; कात्यायनः २०; नारद. २१।७ ।
2. बृह. २२।२२; व्यासः, परा. मा. ४४०; नारद. २१।२५ ।
3. विष्णु. ५।७६-७७ ।
4. नारद. २१।२९ ।
5. मनु. ९।२७७; नारद. २१।३२ ।
6. मनु. ८।२४३, ३२०; बृह. २२।२४; विष्णु. ५।७९-८० ।
7. नारद. २१।२७; वि. र. ३२२; विष्णु. ५।८७; मनु. ८।३२३ ।
8. वि. र. ३२२ ।
9. मनुयमौ. ८।३३१; मनु. ८।३३०; गौ. १२।१५ ।

कार्षापणाः । एकचक्रापहरणे चत्वारिंशत् । शकटे तु अशीतितमः[1] । द्रव्येषु त्रिष्वनुक्रमात् साहसमिव स्तेयेऽपि दण्डविधानम् । अनुक्तद्रव्याणामपहर्त्ता मूल्यसमम्[2] ।

तृणच्छेद्येकमिति विष्णुः (५।५७) । तृणं कुशदूर्वादि । गवाद्यर्थं विना तच्छेद्येकं कार्षापणं दण्ड्यः । यत्तु "द्विजास्तृणैधपुष्पाणि सर्वतः स्ववदाहरेत्" इति योगिवचनं तद्गवाद्यर्थतृणादिविषयम् । "गोऽग्न्यर्थं तृणमेघान् वीरुद्वनस्पतीनां च पुष्पाणि स्ववदाददीत फलानि च परिवृत्तानाम्" इति गौतमस्मरणात् । एतच्च परिगृहीतविषयम् । अपरिगृहीते द्विजव्यतिरिक्तस्याऽपि परिग्रहादेव स्वत्वसिद्धिः । यथाह स एव "स्वामी रिक्थक्रयसंविक्रयपरिग्रहाधिगमेषु" इति । यत्पुनर्बार्हस्पत्ये "तृणं वा यदि वा काष्ठं पुष्पं यदि वा फलम् । अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हति" ॥ इति, तद्ब्राह्मणस्वामिकापहर्तृद्विजव्यतिरिक्तविषयमनापद्विषयं वा, गवादिव्यतिरिक्तविषयं वा, राजादिरक्षितविषयं वा, ब्राह्मणस्यापि बलाद्ब्राह्मणस्वामिकापहारविषयं वा । तथा च शङ्खलिखितौ–

"ब्राह्मणो ब्राह्मणस्य समिदाज्येध्माग्निकाष्ठतृणोलपपुष्पफलमूलान्यपहरन् बलादविज्ञातो वा हस्तच्छेदमवाप्नुयात् । कुशकरकाग्निहोत्रद्रव्याण्यपहरतः प्रत्यक्षतोऽङ्गच्छेदः स्यात् । अप्रत्यक्षं यदा विदितोऽयं किल्विषीति ब्राह्मणः खरयानमाप्नुयात् । मूत्रमौण्ड्यमितरेषां खरयानमेव तु" ।

चौर्याधिकारे गौतमः । न शारीरो ब्राह्मणदण्डः । कर्मवियोगविख्यापनविवासनाङ्ककरणानि । अवृत्तौ प्रायश्चित्ती सः[3] । एतानि च यागादिपरब्राह्मणे । लक्ष्मीधरेण तु शङ्खलिखितवाक्यं "ब्राह्मणोऽब्राह्मणस्य" इति पठितम् । तन्मते ब्राह्मणस्याब्राह्मणेन समिदादिहरणे हस्तादिच्छेद एव । ब्राह्मणस्य ब्राह्मणेन हरणे तु न शारीरो दण्ड इत्यादिकमुन्नेयम् । "अवृत्तौ प्रायश्चित्ती हि स इति"–अन्येन प्रकारेण जीवनानुपपत्तौ चोरयन् ब्राह्मणो न दण्ड्यः, किन्तु प्रायश्चित्तं कुर्यात्[4] ।

पुरुषवधे स्तेये स्वाम्यादान इति स्वान्यादाय वध्यः । चक्षुर्निरोधश्चैतेषु ब्राह्मणस्य[5] । सर्व एवापहृतं धनिकस्य दाप्याः । ततस्तेषामभिहितदण्डप्रयोगः[6] ।

**कात्यायनः**

---

1. मनु. ८।३२६-३२९, ३३३; विष्णु. ५।८३-८४; नारद. २१।२२-२४; व्यासः, वि. र. ३२६ ।
2. विष्णु. ५।८८; याज्ञ. २।२७५, नारद. १७।२१; कात्या. ८२२; नारद. २१।३४; बृह. २२।२५ ।
3. गौ. १२।४३-४५ ।
4. वि. र. ३२८ ।
5. आप. २।२७।१६।१७ ।
6. विष्णु. ५।८९-९०; याज्ञ. २।२७०; बृह. २२।२६; नारद. २१।६; वृद्ध. २।२७०; वि. र. ३३०; वी. मि. २।२७३; वि. चि. १४२ ।

**मानवाः सद्य एवाहुः सहोढानां प्रवासनम् ।**
**गौतमानामनिष्टं तत्प्राणच्छेदाद्विगर्हितम् ॥**
**सहोढमसहोढं वा तत्त्वागमितसाहसम् ।**
**प्रगृह्य चिह्नमावेद्य सर्वस्वैर्विप्रयोजयेत् ॥ ८२३-८२६ ॥**

अत्र कात्यायनवाक्ये वृत्तस्वाध्यायवतः प्रवासनम्, तच्छून्यस्य धनवतः सर्वस्वहरणम्, निर्धनस्य तु तथाविधस्य बन्धनादिकमभिप्रेतम्, ब्राह्मणविषयञ्चैतत् । 'तत्त्वागमितसाहसम्' तत्त्वेन आगमितं ज्ञापितं साहसं चौर्यम् । पूर्वं बलान्विताः सन्तः अयःसन्दानगुप्ताः लौहनिगडबद्धाः मन्दभक्ताः कर्ममात्रौपयिकबलजनभोजनभाजः कर्माणि कुर्युरामृत्योरिति योजना ।

स्तेनोऽनुप्रवेशान्न दुष्यति। शस्त्रधारी सहोढो व्रणसम्पनश्च व्यपदिष्टस्तेकेषामिति वसिष्ठः (१९।३८-३९) । अस्यार्थः—नानुप्रवेशमात्रेण स्तेनो भवति । किन्तु शस्त्रधारणनिमित्तमन्तरेण शस्त्रधारी सहोढः कृतव्रणश्च दुष्यति ।

**चोरान्वेषणम्**

तत्र नारदः[1]—

**सहोढग्रहणात्स्तेयं होढेऽसत्युपभोगतः ।**
**शङ्का त्वसज्जनैकार्थ्यादनायव्ययतस्तथा ॥**
**सहोढान् विमृशेच्चौरान् गृहीतपरिशङ्कया ।**
**नयोपधाभिश्चित्राभिर्ब्रूयुस्तथ्यं यथा हि ते ॥**
**देशं ग्रामं दिशं नाम जातिं वासं प्रतिश्रयम् ।**
**कृतकार्यसहायाश्च प्रष्टव्याः स्युर्निगृह्य ते ॥**
**वर्णस्वराकारभेदात् ससन्दिग्धनिवेदनात् ।**
**अदेशकालदृष्टत्वान्निवासस्य विशोधनात् ॥**
**असद्व्ययात् पूर्वचौर्यादसंसर्गकारणात् ।**
**लेशैरप्यनुगन्तव्या न होढेनैव केवलम् ॥**

सभा, प्रपा, अपूपविक्रयवेश्य, पण्यस्त्रीगृहम्, मद्यान्नविक्रयस्थानानि, चतुष्पथाः, प्रख्यातवृक्षमूलानि, जनसमूहस्थानानि, जीर्णवाटिका, अटव्यः, शिल्पगृहाणि, शून्यगृहाणि, आम्रादिवनानि, कृत्रिमोद्यानानि । एवंप्रकारान् देशान् सैन्यैः पदातिसमूहैः स्थावरजङ्गमैरेकस्थानस्थितैः प्रचारिभिश्चान्यैश्चारैस्तस्करनिवारणार्थं चारयेत् । प्रायेणैवंविधे देशेऽन्नपानस्त्रीसंभोगस्वप्रहर्त्राद्यन्वेषणार्थं तस्करा अवतिष्ठन्ते । तेषां

---

1. नारद. १७।१८; २१।८-११; नारदीय मनु. १५।१७; प्रमी. ६८-७१; ना. स्मृ. २०६, २२४; वि. र. ३३१, ३३२ ।

साहाय्यं प्रतिपद्यमानैस्तच्चरितानुवृत्तिभिः सन्धिच्छेदादिकर्मानुष्ठानवेदिभिः पूर्वचौरैश्चाररूपैश्चारमायानिपुणैस्तस्कराञ्जानीयादुत्सादयेच्च[1] । यथाऽऽह **याज्ञवल्क्यः**

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निराया व्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ २।२६६-२६८ ॥

तत्र नारदः

गवादिषु प्रणष्टेषु द्रव्येषूपहतेषु च ।
पादेनान्वेषणं कुर्युरामूलात्तद्विदो जनाः ॥
ग्रामे व्रजे विवीते वा यत्र तन्निपतेत्पदम् ।
वोढव्यं तद्भवेत्तेन न चेतनोऽन्यत्र तन्नयेत् ॥
पादे प्रमूढे भग्ने वा विषमत्वाज्जनान्तिके ।
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् ॥
समेऽध्वनि द्वयोर्यत्र स्तेनप्रायोऽशुचिर्जनः ।
पूर्वापराधैर्दुष्टो वा संसृष्टो वा दुरात्मभिः ॥
नैवान्तरिक्षान्न दिवो न समुद्रान्न चान्यतः ।
दस्यवः सम्प्रवर्तन्ते तस्मादेवं प्रकल्पयेत् ॥
ग्रामेष्वन्वेषणं कुर्युश्चण्डालवधकादयः ।
रात्रि सञ्चारिणो ये च बहिः कुर्युर्बहिश्चराः ॥ १७।२२-२६ ॥
चारैर्विचेयान्येतानि चोरग्रहणतत्परैः ।
तथा चान्ये प्रणिहिताः श्रद्धेयाश्चित्रकादिनः ॥
चोरा ह्युत्साहयेयुस्तान् तस्करान् पूर्वतस्कराः ।
अन्नपानमहादानैः समाजोत्सवदर्शनैः ॥
तथा चौर्यापदेशैश्च कुर्युस्तेषां प्रसर्पणम् ।
ते तत्र नोपसर्पन्ति सृताः प्रणिहिता अपि ॥
तेऽभिसृत्य ग्रहीतव्याः सपुत्रज्ञातिबान्धवाः ।
अचोरा अपि दृश्यन्ते चोरैः सह समागताः ॥
यादृच्छिकान् नैव तु तान् नृपो दण्डेन शासयेत्[2] ।

(नार. म. सं., प्रकी. १८।६०-६५)

---

1. मनु. ९।२६४-२६७ ।
2. कात्या. ८११, ८२१; याज्ञ. २।२६९; वि. र. ३३५।३३६ ।

**स्तेनातिदेशाः**। ग्रामादिष्वपि ये केचिच्चौराणां चौरत्वं ज्ञात्वा भक्तदाः, चौर्योपयुक्तभाण्डादि गृहावस्थं ये ददति तानपि नैरन्तर्याद्यपराधगोचरापेक्षया घातयेत्। ये राष्ट्रेषु रक्षानियुक्ताः, ये च सीमान्तवासिनः क्रूराः सन्तश्चौर्योपदेशे मध्यस्था भवन्ति तांश्चौरवत्क्षिप्रं दण्डयेत्। ग्रन्थिभेदादिकारिणो विज्ञायाग्निभक्तशस्त्रावस्थानप्रदानमनुष्यत इति मोषश्चौरधनं तस्यावस्थापकांश्चौरवद्राजा निगृह्णीयात्[1]। यथाऽऽह **याज्ञवल्क्यः नारदश्च**[2]

> भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।
> दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः॥ २।२७६।

**वर्णतःस्तेयविशेषः**। तत्र मनुः

> अष्टापाद्यं हि शूद्रस्य स्तेये भवति किल्बिषम्।
> षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च॥
> ब्राह्मणस्य चतुःषष्टिः पूर्वं वापि शतं भवेत्।
> द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः॥ ८।३३७-३३८।

'तद्दोषगुणविद्धि सः' इति हेत्वभिधानात् विदुषां दण्डोऽयम्। यत्र खलजन एकं कार्षापणं दाप्यते तत्र विद्वान् शूद्रोऽष्टगुणम्। एवं तदेव द्विगुणं वैश्यस्य–स हि साक्षादध्ययनज्ञानयोरधिकृतः; शूद्रस्तु कथञ्चिद् ब्राह्मणापाश्रिततत्संगत्या कियदपि ज्ञास्यति। क्षत्रियस्तु रक्षाधिकारदोषेण समाने विद्वत्वे ततोऽपि द्विगुणं दण्ड्यते। ब्राह्मणोऽपि दण्डविधौ न तृप्यति। चतुःषष्टिशतमष्टविंशं वा शतमिति। तस्य हि प्रवचनमुपदेष्टृत्वं वाऽधिकं च–यतो रक्षा ततो भवेत्। प्राकृतजनस्य तिर्यक्प्रख्यस्य कोऽपराधः। अविद्वांसो गुणदोषानभिज्ञा अकार्ये प्रवर्तन्ते। विद्वानपि चेत्तथैव वर्तेत हन्त हतं जगत्, तृतीयस्य शिक्षितुरभावात्। तदुक्तं "द्वौ लोकविश्रुतौ राजा ब्राह्मणश्च बहुश्रुतः" (गौ. ८।१)।

**कात्यायनश्च**

> येन दोषेण शूद्रस्य दण्डो भवति धर्मतः।
> तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत्॥ ४८५॥

**स्तेनालाभे हृतदानम्**। ग्रामेषु नगरेषु चाऽऽर्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात्। तेषां पुरुषास्तथागुणा एव स्युः। सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम्, क्रोशो ग्रामेभ्यः। तत्र यन्मुष्यते तैस्तत् प्रतिदाप्यम्[3]।

**कात्यायननारदौ**

---

1. मनु. ९।२७१-२७२, २७८।
2. नारद. १७।१९; २१।१४; कात्यायन. ८२७; मनु. ८।३४०, ९।२७२-२७४।
3. आप. २।२६; ४।८।

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत् ।
आरक्षकांस्तु दिक्पालान् यदि चौरो न लभ्यते ॥
( का. ८१३; ना. २१।१८ )

चौरापहृतं द्रव्यमादाय सर्वमेव सर्ववर्णेभ्यो दद्यात् । अनवाप्य स्वकोशादेव दद्यात्[1] । प्रणष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्याप्य संवत्सरं राज्ञा रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषम्[2] । प्रमादादरण्ये पशूनुत्सृष्टान् ग्राममानीय स्वामिभ्यो विसृजेत् । पुनः प्रमादे सकृदवरुध्य । तदूर्ध्वं न सूर्क्षेत् । कर्षण-प्रदेशादन्यत्र यदपहृतं तत्पञ्चग्राममिलिता दद्युः । सन्निधानापेक्षया दशग्रामीति विकल्पः[3] ।

नारदकात्यायनौ[4]

चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।
तदभावे तु मूल्यं स्यादन्यथा किल्बिषी नृपः ॥
( ना. २१।२१; का. ८१६ )

लब्धे तु चौरे यदि वा मोषस्तस्मान्न लभ्यते ।
दद्यात्तमथवा चौरं दापयेत्तु यथेष्टतः ॥
( का. ८१७ )

अत्र मनुः

ममेदमिति यो ब्रूयात् सोऽनुयोज्यो यथाविधि ।
संवाद्य रूपसङ्ख्यादीन् स्वामी तद्द्रव्यमर्हति ॥
अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ।
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥
आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥
प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् ।
यांस्तत्र चौरान् गृह्णीयात्तान् राजेभेन घातयेत् ॥ ८।३१-३४ ।

**स्त्रीसङ्ग्रहणम्**

स्त्री पतिपित्रादिभिः संभाषणादिनिषेधे कृते सति प्रवर्तते यदि, तदा पणशतं दण्ड्या । पुरुषः पुनरेवं निषिद्धे प्रवर्तमानो द्विशतं दण्ड्यः । द्वयोस्तु स्त्रीपुंसयोः

---

1. विष्णु. ३।६६-६७ ।
2. गौ. १०।३५-३७ ।
3. याज्ञ. २।२७१-२७२; नारद. २१।१६-१७; कात्या. ८१४, ८१५ ।
4. बृद्ध मनु., वि. र. ३४५; अपरार्कः ८४४; याज्ञ. २।१७३-१७४ ।

प्रतिषिद्धे प्रवर्तमानयोः संग्रहणे वर्णानुसारेण यो दण्डः स एव दण्डः । यथाऽऽह **याज्ञवल्क्यः**

**स्त्रीनिषेधे शतं दण्ड्यो द्विशतं तु दमं पुमान् ।**
**प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा ॥ २।२८५ ॥**

सर्वेषां स्वदारनियमः स्वकर्मप्रतिपत्तिश्च धर्मः । येन येनाङ्गेनापराधं कुर्यात् तदेवास्य च्छेत्तव्यम् । अष्टसहस्रं वा दण्डः । अन्यत्र ब्राह्मणात् । अदण्ड्यो हि ब्राह्मणाः, इति शङ्खलिखितौ[1] ।

सहसा यः कामयते तस्याखिलं धनं हरेत् । लिङ्गवृषणौ उत्कृत्य गर्दभेन तु भ्रामयेत्[2] । सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्य[3] । यस्तु बलच्छले विहाय दूतादिप्रेषणद्वारा समानजातीयां परस्त्रियं गच्छति, तस्यान्तिम उत्तमो दण्डः । हीनायान्तु बलच्छले विहाय मध्यमो दण्डः । उत्कृष्टजातीयान्तु दूतादिप्रेषणद्वारा बलच्छलाभ्यां वा गच्छतो मारणमेव । यथाऽऽह **बृहस्पतिः**

**छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।**
**अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥**
**दमोऽन्तिमः समायां तु हीनायामर्धिकस्ततः ।**
**पुंसः कार्योऽधिकायां तु गमने संप्रमापणम् ॥ २४।१४-१५ ॥**

**कात्यायनश्च**

**स्त्रीषु वृत्तोपभोगः स्यात् प्रसह्य पुरुषो यदा ।**
**वधस्तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥ ८३० ॥**

पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः । हीनवर्णागमने मध्यमम् । गोगमने च । अन्त्यागमने च वध्यः । उत्तमागमने च[4] । अनिवेदितप्रवेशे स्त्रीगृहेषु तत्रोत्तममुत्तमायाम् । विपर्यये मध्यमसाहम् । प्रतिलोमैकान्तरावस्कन्दने सर्वस्वं वधो वा । विपर्यये सन्निरोधः सर्वस्वं वेति शङ्खलिखितौ ।

अस्यार्थः—अनिवेद्य स्त्रीगृहं प्रविश्योत्तमां ब्राह्मणदिस्त्रियमभिगच्छतो ब्राह्मणस्योत्तमसाहसो दण्डः । 'विपर्यये' तु ब्राह्मणस्य क्षत्रियादिस्त्रीगमने मध्यमसाहसो दण्डः । प्रतिलोमस्य शूद्रादेरेकान्तरितद्विजातिस्त्रीगमने वधः सर्वस्वापहारसहितो दण्डः । 'वा' शब्दः समुच्चये । "आर्यस्त्री अभिगमने लिङ्गोद्धारः स्वहरणं च । गोप्ता चेद्वधोऽधिकः", इति गौतमवचनात्[5] । "विपर्यये सन्निरोधः", ब्राह्मणस्यागुप्त-

---

1. वि. चि. १७५; वि. र. ३८७ ।
2. बृह. २४।१३ ।
3. आप. २।२६।२० ।
4. विष्णु. ५।४०-४३ ।
5. गौ. ध. सू. १२।२-३ ।

पत्नीगमने वैश्यस्य संवत्सरं बन्धनागारे तिरोहितस्य सर्वस्वापहारो दण्डः—"वैश्यः सर्वस्वदण्डः स्यात् संवत्सरनिरोधतः" इति मनुवचनात्[1] ।

हलायुधस्तु यो हीनजातिरुत्तमजातीयस्त्रीगृहमनिवेद्य प्रविशति, तदासौ दुष्टत्वमुन्नीयोत्तमसाहसं दण्ड्यः । यदि तूत्तमजातीय एव हीनजातीयायाः पूर्ववद्गृहं प्रविशति, तदासौ मध्यमसाहसं दण्ड्यः । यदि तु प्रतिलोमो हीन एकान्तरितामुत्तमजातीयां स्त्रियमभिगच्छति, यथा ब्राह्मणो वैश्याम्, क्षत्रियः शूद्राम्, तदा तस्य सन्निरोधे बन्धनं सर्वस्वहरणं वा, अपराधमहत्त्वामहत्त्वाभ्यां व्यवस्था कार्या । संवत्सरनिरोधितस्य सर्वस्वापहरणं दण्डो वैश्ये । "वैश्ये सर्वस्वदण्डः" स्यादिति मनुवचनात्[2] ।

**याज्ञवल्क्यः**

> सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
> प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥ २।२८६ ॥

निर्जनदेशे चारणात्मोपजीविभिः स्त्रीभिः संभाषणं कुर्वन् स्वल्पदण्डलेशं राज्ञा दाप्यः, तासामपि परदारत्वात् । तथा दासीभिरवरुद्धाभिर्बौद्धाभिर्ब्रह्मचारिणीभिः संभाषां कुर्वन्किञ्चिद्दण्डमानं दाप्यः स्यात् । यस्तुल्यजातेरनिच्छतीं कन्यां गच्छति स तत्क्षणादेव ब्राह्मेणेतरो लिङ्गच्छेदनादिकं वधमर्हति । इच्छन्तीं पुनर्गच्छन्वधार्हो मनुष्यो न भवति । कन्यां संभोगार्थमुत्कृष्टजातिपुरुषं सेवमानां स्वल्पमपि दण्डं न दापयेत् । हीनजातिं पुनः सेवमानां यत्नात्स्थापयेत् । यथा वा निवृत्तकामा स्यात् । हीनजातिरुत्कृष्टामिच्छन्तीमनिच्छन्तीं वा गच्छत्यपेक्षयाङ्गच्छेदनमारणात्मकं वधमर्हति। समानजातीयां पुनरिच्छन्तीं गच्छन्यदि पिता मन्यते तदा पितुः शुल्कानुरूपमर्थं वा दद्यान्न च दण्ड्यः । सा च कन्या तेनैव वोढव्या[3] ।

यो मनुष्यः प्रसह्य बलात्कारेण समानजातीयां गमनवर्जमहङ्कारेणाङ्गुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य शीघ्रमेवाङ्गुलिद्वयच्छेदः कर्त्तव्यः । षट्पणशतानि चायं दण्ड्यः स्यात् । समानजातिरिच्छन्तीं कन्यामङ्गुलिप्रक्षेपमात्रेण नाशयन्नाङ्गुलिप्रच्छेदमाप्नोति । किन्त्वतिप्रसक्तिनिवारणाय द्विशतं दण्डं दाप्यः । या कन्यैव परामङ्गुलिप्रक्षेपेण नाशयेत्तस्य द्विशतो दण्डः । या पुनः कन्यामङ्गुलिप्रक्षेपेण स्त्री नाशयेत्सा तत्क्षणादेव शिरोमुण्डनम्, अनुबन्धापेक्षयाङ्गुल्योरेव छेदनम्, गर्दभेण च राजमार्गे वहनमर्हति । या स्त्री प्रबलधनिकपित्रादिबान्धवदर्पेण सौन्दर्यादिगुणदर्पेण च पतिं पुरुषान्तरोपगमनाल्लङ्घयेत्तां राजा बहुजनाकीर्णे देशे श्वभिर्भक्षयेत्[4] ।

---

1. मनु. ८।३७५ ।
2. वि. र. ३९०-३९१ ।
3. मनु. ८।३६३-३६६ ।
4. मनु. ८।३६७-३७१ ।

अनन्तरोक्तं जारं पापकारिणं पुरुषमयोमयशयने प्रज्वलिते राजा दाहयेत् । तत्र शयने वध्यघातिनः काष्ठानि निःक्षिपेयुर्यावत्पापकारी दग्धः स्यात् । परस्त्रीगमने दुष्टस्य पुंसोऽदण्डितस्य च संवत्सरातिक्रमेणाभिशप्तस्य पूर्वदण्डाद्द्विगुणो दमः कार्यः । तथा व्रात्यजायागमने यो दण्डः परिकल्पितः चाण्डाल्या सह निर्देशाच्चाण्डालीगमनरूपः, तथा चाण्डालीगमने यो दण्डः "सहस्रं त्वन्त्यजस्त्रियम्" (मनु. ८।३८५) इति, संवत्सरे त्वतीते यदि तामेव व्रात्यजायां तामेव चाण्डालीं पुनर्गच्छति तदा द्विगुणः कर्त्तव्यः । एतत्पूर्वस्यैवोदाहरणद्वयं व्रात्यजायागमनेऽपि चाण्डाली गमनदण्डप्रदर्शनार्थम् । सर्वस्यैव तु पूर्वाभिशस्तदण्डितस्य संवत्सरातिक्रमे पुनस्तामेव गच्छतः पूर्वाद्द्विगुणो दण्डः[1] ।

भर्त्रादिभी रक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रो गच्छेत्तदा रक्षितां रक्षारहितां गच्छंल्लिङ्गसर्वस्वाभ्यां वियोजनीयः। अत्राङ्गविशेषाश्रवणेऽपि आर्यस्त्र्यभिगमने लिङ्गोद्धारः, इति गौतमः । रक्षितां तु गच्छञ्छरीरधनहीनः कर्त्तव्यः । वैश्यस्य गुप्तब्राह्मणीगमने संवत्सरबन्धादनन्तरं सर्वस्वग्रहणरूपो दण्डः कार्यः । क्षत्रियो गुप्तब्राह्मणी गमने सहस्रं दण्डनीयः । खरमूत्रेण मुण्डनं कर्त्तव्यम् । अरक्षितां तु ब्राह्मणीं यदि वैश्यक्षत्रियौ गच्छतस्तदा वैश्यं पञ्चशतदण्डयुक्तं कुर्यात् । क्षत्रियं पुनः सहस्रदण्डोपतम् । वैश्ये चायं पञ्चशतदण्डः शूद्राभ्रमादिना निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः । तदितरब्राह्मणीगमने वैश्यस्याऽपि सहस्रं दण्ड एव[2] ।

तावेवोभावपि क्षत्रियवैश्यौ ब्राह्मण्या रक्षितया सह कृतमैथुनौ शूद्रवत्सर्वेण हीयेते इति दण्ड्यौ ; यद्वा कटेनावेष्ट्य दग्धव्यौ । रक्षितां विप्रां ब्राह्मणो बलेनोपगच्छन्सहस्रं दण्ड्यःस्यात् । इच्छन्त्या पुनः सकृन्मैथुने पञ्चशतानि दण्डनीयो भवेत् । ब्राह्मणस्य वधदण्डस्थाने शिरोमुण्डनं दण्डः शास्त्रेणोपदिश्यते । क्षत्रियादीनां पुनरुक्तेन घातेन दण्डो भवति । ब्राह्मणं सर्वपापकारिणमपि कदाचिन्न हन्यादपि तु सर्वस्वयुक्तमक्षतशरीरं राष्ट्रान्निर्वासयेत् । रक्षितां क्षत्रियां यदि वैश्यौ गच्छेत्क्षत्रियो वा यदि रक्षितां वैश्यां तदा तयोर्ब्राह्मण्यामगुप्तायां गमने यौ दण्डावुक्तौ द्वावेव दण्डौ क्षत्रियवैश्ययोर्भवतः । अयञ्च वैश्यस्य रक्षितक्षत्रियागमने पञ्चशतरूपो दण्डो लघुत्वाद्गुणवद्वैश्यस्य निर्गुणजातिमात्रोपजीविक्षत्रियायाः शूद्राभ्रान्त्यादिगमनविषयो बोद्धव्यः । क्षत्रियस्य रक्षितवैश्यायां ज्ञानतो युक्तः सहस्रं दण्डः[3] ।

क्षत्रियावैश्ये रक्षिते ब्राह्मणो व्रजन्सहस्रं दण्डं दापनीयः । शूद्रायां रक्षितायां क्षत्रियवैश्ययोर्गमेन सहस्रमेव दण्डः स्यात् । अरक्षितक्षत्रियागमने वैश्यस्य पञ्च-

---

1. मनु. ८।३७२-३७३ ।
2. मनु. ८।३७४-३७५ ।
3. मनु. ८।३७६-३८२ ।

शतानि दण्डः स्यात् । क्षत्रियस्य त्वरक्षितागमने गर्दभमूत्रेण मुण्डनं पञ्चशतरूपं वा दण्डमाप्नुयात् । अरक्षितां क्षत्रियां वैश्यां शूद्रां वा ब्राह्मणो गच्छन्पञ्चशतानि दण्ड्यः स्यात् । अन्त्यजस्त्रियं स्यात्सहस्रम् ।

धर्मभ्रष्टाचारा अवसन्नकर्मधर्माश्च व्रात्या इति हारीतोक्तेः । हलायुधस्तु व्रात्या अतिक्रान्तविवाहकालकन्या इत्याह[1] । मेधातिथिस्तु 'व्रातः' पूगः संघः तेन चरन्ती पुंश्चली । अथवा व्रात्मर्हतीति व्रात्या । याऽनेकपुरुषोपभोग्या पुंश्चली सा हि पुरुषव्रातमर्हति । अथवाऽनेकपुरुषस्वामिका ग्रामस्य दास्यश्च 'व्रात्याः' । ये तु उद्वाहहीनां व्रात्यां मन्यन्ते तेषां मते न मुख्यः शब्दार्थः । अयं हि व्रात्यशब्दः स्मृतिकारैः सावित्रीपतितेषु प्रयुक्तः । न च स्त्रीणां तत्संभवः । अथ स्त्रीणां विवाहस्य तदापत्तिवचनादुपनयनं तद्धीनपुरुषवत् व्रात्या–गौणस्तर्हि न मुख्यः।...न विवाहकालः स्त्रीणां नियतो यत्कालाद्भ्रष्टाः व्रात्याः स्युः । यदपि प्रागृतोः विवाह्याः तदपि स्वयंवरस्य ऋतुमत्या विना तत्परेणानुज्ञात एव काममामरणं तिष्ठेद्गृहे कन्या ।

वध्यः शूद्र आर्यायाम् । दारं चास्य कर्शयेत्[2] । श्रेयसः शयनशायिनं राजा बध्द। श्वभिः खादयेत् । काष्ठश्चैनां दाहयेदिति हारीतः । श्वभिः खादयेद्राजा निहीनवर्णगमने स्त्रियं प्रकाशम् । पुमासं घातयेत् । यथोक्तं वा[3] । शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणपत्रैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् । पूता भवतीति विज्ञायते । वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत । ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाऽभ्युक्ष्य नग्नां खरमारोप्य महापथमनुव्राजयेत् । पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यायां मैथुनमाचरन् । शूद्रस्तु राजन्यावैश्ययाः[4] ।

अत्र बृहस्पतिः

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥
छिन्ननासौष्ठकर्णां तु परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥ २४।१६-१७ ॥

मत्स्यपुराणे

बलात्संदूषयेद्यस्तु परभार्यां नरः क्वचित् ।
वधदण्डो भवेत्तस्य नापराधो भवेत् स्त्रियाः ॥

---

1. वि. र. ३९३ ।
2. आप. २।२७।९-१० ।
3. गौ. २३।१४-१६ ।
4. वसिष्ठ. २१।१-५ ।

अद्रव्यां मृतपत्नीं तु संगृह्णन्नापराध्नुयात् ।
स तां परिगृह्णानस्तु सर्वस्वं दण्डमर्हति ॥ २२७।१२७-१२९ ॥

**कन्यादूषणम्**

यस्तुल्यजातिरनिच्छतीं कन्यां गच्छति स तत्क्षणादेव ब्राह्मणेतरो लिङ्गच्छेदनादिकं वधमर्हति । इच्छन्तीं पुनर्गच्छन्वधार्हो मनुष्यो न भवति ।

यथाऽऽह मनुः

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामं दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥ ८।३६४ ॥
उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।
शुल्कं दद्यात्सेवमानः समामिच्छेत् पिता यदि ॥ ८।३६६ ॥

अकामायाः कन्याया दूषणे ब्राह्मणवर्जविशेषेण हीनोत्तमानां वध्य एव दण्ड इत्युक्तम् । सकामाया दूषणे त्विदमाहुः । "उत्तमां" रूपयौवनसम्पन्नजात्यादिभिः । 'जघन्यो'ऽत्यन्तनिकृष्टः । नातिसाम्येऽपि गुणैर्वध्यः । 'समां तु' गच्छन् सकामां स 'शुल्कं' आसुरविवाह इव पित्रे 'दद्यात्' । न चेदिच्छति पिता तदा राज्ञे दण्डं दद्यात् । 'ननु च गान्धर्वोऽयं विवाहः 'इच्छयाऽन्योन्यसंसर्ग' इति तत्र न युक्तो दण्डः' । केनोक्तं गान्धर्वे नास्ति दण्डः? अत एव नायं सतीधर्मः, नायं विवाहोऽग्निसंस्काराभावात् । यदपि शाकुन्तले व्यासवचनममन्त्रकमनग्निकामिति तद्दुष्यन्तेन कामपीडितेनैव कृतम् । न चेच्छासंयोगमात्रं विवाहः । स्वीकरणोपायभेदादष्टौ विवाहाः, न पुनर्विवाहभेदात् । वृत्तवरणं तत्र पुनः कर्त्तव्यमेवेति । अथवा ऋतुदर्शनोत्तरकालं गान्धर्वः । प्रागृतोः शुल्को दण्डो वा । 'अत्र कन्यायाः का प्रतिपत्तिः'? तस्मा एव देया । निवृत्ताभिलाषा चेत् काममन्यत्र प्रतिपाद्या । शुल्कग्रहणं चाऽत्रापि सकृदुपभोगनिष्कृत्यर्थमस्त्येव । वरश्चेत् निवृत्ताभिलाषो हठाद् ग्राहयितव्यः[1] ।

कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डश्च उत्तमायां तु वधो जघन्यस्य । समानायां शुल्कमाभरणं द्विगुणञ्च स्त्रीधनं दत्वा प्रतिपद्येदिति शङ्खलिखितौ । सकामायां दण्डो षट्शतरूपो मनूक्तो द्व्यङ्गुलच्छेदसहकारी आसुरविवाहोक्तदानवत् । द्विगुणं स्त्रीधनं शुल्कं च कन्यायै तद्बन्धुभ्यश्च दत्वा तां गृह्णीयात् । 'समाया'-मिच्छन्तीमिति शेषः । इदमप्यङ्गुलीसाधनमैथुनविषयम्' । हरिहरस्तु द्व्यङ्गुलीपरिमाणलिङ्गच्छेदः इत्याह[2] ।

---

1. मेधातिथिः; मत्स्य. २२७।१२४-१२५; नारदः १५।७१-७२ ।
2. वि. र. ४०२ ।

याज्ञवल्क्यः

अलङ्कृतां हरन्कन्यामुत्तमां ह्यन्यथाधमम् ।
दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः ॥
सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः ।
दूषणे तु करच्छेद उत्तमायां वधस्तथा ॥ २।२८७-२८८ ॥

'अलङ्कृता उपक्लृप्तविवाहा ।' इच्छन्तीषु कन्यासु सवर्णासु अनुलोमासु वा प्रदूष्यापहृतासु न दोषः, गान्धर्वविवाहविषयत्वात् ।

यस्तु अनलङ्कृतापहरणेऽधमो दण्डः, सोऽन्यथा निष्कामास्वित्यर्थः । दूषणे तु कन्याभिगमने करच्छेदः, अनिच्छायामेव । अन्यथा तु अङ्गुलीविच्छेदः स्मृत्यन्तरानुसारात् । प्रातिलोम्ये तु कन्यादूषणे वध एव । 'तथा' शब्दः स्मृत्यन्तरोक्तशूलारोहणादिप्रकारार्थः, इति विश्वरूपः[1] ।

बन्धक्यभिगमनम्

तत्र यमः[2]

परदारे सवर्णासु दण्ड्याः स्युः पञ्चकृष्णलान् ।
असवर्णास्वानुलोम्ये दण्डो द्वादशको मतः ॥

कात्यायनः

कामार्ता स्वैरिणी या तु स्वयमेव प्रकामयेत् ।
राजादेशेन भोक्तव्या विख्याप्य जनसंनिधौ ॥ ८३१ ॥

नारदः

पशुयोनावतिक्रामन् विनेयः स दमम् शतम् ।
मध्यमं साहसं गोषु तदेवान्त्यावसायिषु ॥ १५।७६ ॥

मत्स्यपुराणे[3]

तिर्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते ।
स पणं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥
सुवर्णं तु भवेद्दण्डो गां व्रजन् मनुजोत्तमः ।
वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कसमं पणम् ॥ २२७।१४३-१४४ ॥

एवं दण्डव्यवस्थायां राज्योद्देश्यप्राप्तिविषये मनुः

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥

---

1. मनु. ८।३६५-३७० ।
2. वि. र. ४०५ ।
3. नारद. १५।७८-७९; याज्ञ. २।२९१, २९३ ।

एतेषां निग्रहो राज्ञः पञ्चानां विषये स्वके ।
साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः ॥ ८।३८६-३८७ ॥

नारदः[1]

अगम्यागामिनः शास्ति दण्डो राज्ञा प्रकीर्तितः ।
प्रायश्चित्तविधानं तु पापानां स्याद्विशोधनम् ॥ १५।७७ ॥

●

---

1. यमः–

दुष्टाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा ।
यस्य राष्ट्रे न सन्तीह स राजा शक्रलोकभाक् ॥

# अध्यायः १०

## दण्डः समाजः राज्यञ्च

**दण्डः**

सप्ताङ्गं राज्यमुच्यते। एवंविधं राज्यं प्राप्य वञ्चकशठधूर्तपरदारपरद्रव्यापहारिहिंसकादिषु नृपो दण्डं प्रयोजयेत्, यस्माद्धर्म एव दण्डरूपेण पूर्वं ब्रह्मणा निर्मितः। तस्य च दण्ड इति यौगिकी संज्ञा–"दण्डो दमनादित्याहुस्तेनादान्तान्दमयेत् (११।१२८) इति गौतमस्मरणात्। स दण्डः कृपणेन चञ्चलबुद्धिना न्यायानुसारेण प्रयोक्तुं शक्यो न भवति। सत्यसन्धेन, जितारिषड्वर्गेण, सुसहायेन, नयानयकुशलेन स दण्डो धर्मानुसारेण नेतुं शक्यः।

स दण्डः शास्त्रोक्तमार्गेण प्रयुज्यमानः सन् देवासुरमानवैः सहितमिदं सर्वं जगदानन्दयेत्। अन्यथा शास्त्रातिक्रमेण प्रयुक्तश्चेज्जगत्प्रकोपयेत्। यः पुनः शास्त्रातिक्रमेण लोभादिना दण्डः कृतः स पापहेतुत्वात्स्वर्गं कीर्तिं लोकांश्च विनाशयति। शास्त्रोक्तमार्गेण तु कृतो धर्महेतुत्वात्स्वर्गकीर्तिजयानां हेतुर्भवति। एते भ्रातासुतादयोऽपि स्वधर्माच्चलिता दण्ड्याः, किमुतान्ये। यतः स्वधर्माच्चलितोऽदण्ड्यो नाम राज्ञः कोऽपि नास्ति। एतच्च मातापित्रादिव्यतिरेकेण। किञ्च, यस्तु राजा दण्ड्यान् स्वधर्मचलनादिना दण्डयोग्यान् सम्यक् शास्त्रदृष्टेन मार्गेण धिग्धनदण्डादिना दण्डयति, वधार्हान् घातयति तेन राज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति। बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः[1]।

नच फलश्रवणाद्दण्डप्रणयनं काम्यमिति मन्तव्यमम्; अकरणे प्रायश्चित्तस्मरणात्। यथाह वसिष्ठः (१९।४०-४४) 'दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्', 'त्रिरात्रं पुरोहितः' 'कृच्छ्रमदण्ड्यदण्डने पुरोहितः' 'त्रिरात्रं राजा' इति। 'दुष्टे सम्यग्दण्डः प्रयोक्तव्यः' (आ. ३५४), दुष्टपरिज्ञानं च व्यवहारदर्शनमन्तरेण न भवतीति तत्परिज्ञानाय व्यवहारदर्शनमहरहः स्वयं कर्त्तव्यम्। एवम्, शरीरपीडाधनग्रहणादिना शूद्रमिच्छातो ब्राह्मणान् बाधमानं छेदादिभिरुद्वेगकरैः वधोपायैर्नृपो हन्यात्[2]।

अत एव पित्राचार्यमित्रभ्रातृमातृपत्नीपुत्रपुरोहितानां मध्यात्स्वधर्मे यो नावतिष्ठते स राज्ञोऽदण्डनीयो नास्ति, अपि तु दण्डनीय एव। यत्रापराधे राजव्यतिरिक्तो जनः कार्षापणं दण्डनीयो भवेत्तस्मिन्नपराधे राजा पणसहस्रं दण्डनीयः।[3]

---

1. याज्ञ. १।३४५-३५९।
2. मनु. ९।२४८।
3. मनु. ८।३३५-३३६।

कस्मिन्नपि समाजे व्यक्तेः पारस्परिक्याः क्षतेर्विधिना सम्बन्धः। व्यक्तिः स्वस्वत्व-रक्षणाय जीवनं स्वातन्त्र्यञ्चेच्छति, यतते च यथासम्भवं द्वयमपि एतल्लब्धुम्। एतदर्थं व्यक्त्या समाजेन सम्बन्धः स्थापनीयः। अत्रैव व्यक्तेः समाजस्य राज्यस्य च संबन्ध-स्थापनं मर्यादानिर्धारणञ्चावश्यकम्। राज्यस्याधिकारमूलं समाज एव। समाज-विधिमतिक्रम्य राज्यस्यास्तित्वलोपमपि संभवति। फलतः दण्डस्य प्रयोगः समाज-कल्याणार्थमेव राज्येनापक्षेते।

प्रारम्भिकेषु समाजेषु अधिकाराणां तदुल्लंघनस्य च भवति स्तरभेदः। मानवो येषां समुदायानामर्थात् समाजानां सदस्यस्त एव तस्योत्तरदायिनः। असौ तदानीं भवति नियमानां वशीभूतः येन व्यक्तिगतान् महतोऽप्युद्देश्यान् साधयितुं न क्षमते। तदानींतनैर्जनैस्तत्र परिवर्तनकल्पनं दुष्करम्। अत एव कीदृश्यपि क्षतिः भवति प्रवृत्तिमूला। ऋग्वेदे प्रवृत्तिरेषा क्रोध इति संकीर्तिता, इयमेव च द्रोहमुद्भावयति। क्रोधेनैव मनुष्यसमाजेऽपराधमाचरति; क्रोध एव पुरुषं समाजेऽपराधितया उपस्थापयति। 'गच्छत्यनालोकग्रहं हिनस्ति परात् वा", अस्यां स्थितौ अपराधो राज्यस्थाने समाजेन सम्बध्यते। अत एव ऋग्वेदे उल्लिखितस्य वैरदेयस्य क्षतिपूर्त्तेः प्रतिदानस्य वा राज्यापेक्षया समाजेनैव अधिकं सम्बन्धः। परं यत्र क्षतिपूर्त्ति-रनिवार्या तत्रापराधिना तदकरणे तस्या अनिवार्यतां साधयितुमर्थादनिच्छतापि अपराधिना बलाच्क्षतेः पूर्त्तिं कारयितुं शक्तिशालिनी राज्यसंस्था अपेक्षणीयैव। फलतोऽपराधदण्डौ राज्यक्षेत्रमायातो येन समाजसम्बद्धयोरपि तयो राज्येन सम्बन्धो व्यवतिष्ठते। सम्बन्धेऽस्मिन् स्थाप्यमाने भारतीयदण्डसंहितायां राज्येन दण्डेन च शक्तेः कः सम्बन्ध इत्येषा मीमांसा अपेक्ष्यते।

**दण्डः शक्तिश्च**

शक्तिदण्डयोः सम्बन्धस्थापनार्थं प्रथमं विधेराधारेण सहैव विधिशक्त्योः सम्बन्धस्य समीक्षा अपेक्षिता। विधिविषये द्वे विचारे समुल्लसतः अपौरुषेयः कल्याणमूलकसमृद्धिश्च। विधिमीमांसमानैविभिन्नैर्विचारकैः विषयोऽयं विमृष्टः स्वीकृतञ्चैतदाधारद्वयम[1]। तत्र मानवीयव्यवहाराणां नियन्त्रको विधिः श्रुतिस्मृति-सापेक्षः। परञ्च दैवाश्रित्य विधिप्रकाशनपाश्चात्त्याथवा वैदिकेतरपक्षस्य प्रामाणिकता अस्थिरैस्तर्कैरशक्या साधयितुम्। एतद्विषये सिद्धं साध्यञ्च इत्यंशद्वयं विशेषतो ध्येयम्, तत्र साध्यनिश्चया भौतिकानि ज्ञानानि अपूर्णानि। औचित्यानौचित्यपरिज्ञाने नैतानि साक्षात् अतो न प्रामाणिकता पदवीमारोढुं प्रभवन्ति। पक्षेऽस्मिन्नधिकं अविमृश्येयदेव इह कथनीयं यद् दार्शनिकदृष्ट्या विचारधारेयं केवलं कारयेन्नाम

---

1. विस्तरेण 'नीतिविधिविमर्शस्य प्रथमभागे द्वितीयभागस्य प्रथमाध्याये द्रष्टव्यम्।

बौद्धिकं व्यायामपरन्नास्या राज्येन कश्चित् सम्बन्धः। अस्यास्तावानेवांश उपादेयो यावतो मूलं समाजे प्रतिष्ठितम्। एवंविधो विधिरेव असति अपि राज्ये दुर्बलं परिरक्षितुं प्रभवति[1]। विधिरेष सामाजिकानि संघटनान्याश्रित्य प्रतितिष्ठति। एष एव च धर्मः। स विश्वस्य प्रतिष्ठापकः, मानवीयसम्बन्धानामाधारश्च– "धर्मो विश्वस्य जगतः प्रतिष्ठा"। अत्र शक्तिर्निधारतां याति।

विधिना सह व्यक्तिविशेषीयसंप्रभुतायां तदीयाया इच्छायाः शक्तेश्च समावेशः। किं बहुना आधुनिकविधिशास्त्रानुसारेणाधिकाराः कर्त्तव्यानि "व्यक्तिविशेषप्रदत्त-मवसर"मपेक्षन्ते। शास्त्रमेतद् विधेर्मानवीयतया सवैयक्तिकतामपि अभ्युपगच्छति। ऑस्टिन महोदस्य संप्रभुः न केवलं विधौ संशोधनपरिवर्तनमेव वा कर्तुं क्षमते अपि तु तस्येच्छैव विधिः। परं भारतीयानां विचारधारा अतो विपरीतैव, एतदनुसारं हि विधिः क्षत्रस्यापि क्षत्रम्, अर्थाद् संप्रभोरपि संप्रभुः।

"स नैव व्यभवत्तच्छ्रेयोरूपमसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांसमाशंसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुधर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवतिः" (बृ. आ. उ. १।४।१५)। अत्र शाङ्करभाष्यम्–"स चतुरः सृष्ट्वापि वर्णान्नैव व्यभवदुग्रत्वात्क्षत्रस्यानियताशङ्कया। तच्छ्रेयोरूपमसृजत किं तत्? धर्मम्, तदेतच्छ्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ। तेन हि नियम्यन्ते सर्वे। तत्कथमित्युच्यते– अथोऽप्यबलीयान् दुर्बलतरो बलीयांसमात्मनो बलवत्तरमप्याशंसते कामयते जेतुं धर्मेण बलेन। यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिक एवम्, तत्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात् सर्वनियन्तृत्वम्। यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्। सत्यमिति यथा शास्त्रार्थता। स एवानुष्ठीयमानो धर्मनामा भवति। शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति। यस्मादेवं तस्मात् सत्यं यथाशास्त्रं वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञा, धर्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति। तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः, सत्यं वदति शास्त्रादनपेतं वदतीति। एतद्यदुक्तमुभयं ज्ञायमानमनुष्ठीयमानं चैतद्धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति। तस्मात्स क्षत्रस्यापि क्षत्रम्। अतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभि-मन्यते। तानि च निसर्गत एव कर्माधिकारनिमित्तानि"।

---

1. अथातः पुरुषनिःश्रेयसार्थं धर्मजिज्ञासा। ज्ञात्वा चानुतिष्ठन् धार्मिकः प्रशस्यतमो भवति। लोके प्रेत्य वा विहितो धर्मः (बसिष्ठ १।१-२); यतोऽभ्युदयानिःश्रेयससिद्धिःस धर्मः (कणाद १।१-२); चोदना लक्षणोऽर्थो धर्मः (जै. १।२)।

एवं व्यक्तिविशेषस्य शक्तिर्न विधिमतिवर्तितुमलम् । वामदेवव्याख्यानुसारमृतमेतादृशी व्यवस्थाया विश्वं व्यवस्थापयति। आत्मकल्याणमुपयोगिता चापि तदाधारः । परमेषोपयोगिता न भौतिकी, ऐकान्तिकी उपोयगिता, अपि तु उद्देश्यव्यवस्थायां समेता आत्मकल्याणमूलिकोपयोगिता । एवंविधायामुपयोगितायां व्यक्तेर्व्यक्तित्वं विकाशमायाति परं न शक्तेर्निर्बाधः प्रयोगः ।

भारतीया दार्शनिका विधिं न दैवीमिच्छा अपितु दैवज्ञानमातिष्ठन्ते । देवताद्वारा ऋषिद्वारा वा प्रकाशमायान् विधिः तदिच्छाप्रयोज्य एवेति नानिवार्यम् । देवान् ऋषीन् वा द्वारीकृत्य प्रतितिष्ठतुनाम विधिः, परं तस्य स्रोतोऽन्यदेव, देवा ऋषयो वा तत्प्रकाशनस्य माध्यममात्रम् । न्यायस्याधारः स्वरूपञ्च इत्थमेव व्यवतिष्ठेते । दैवप्रकाशनेन विधेः सम्बन्धात् तत्र मानवीयानां मानसिकीनां दुर्बलतानां महत्त्वाकांक्षादीनाञ्च न प्रभावोऽर्थान्नैतै कारणैर्विधौ कीदृशोऽपि विक्षेपः सम्भवति । फलतः स व्यक्तेः समाजाच्च परोऽवातिष्ठत । कीदृशैरपि प्रभावैरन्धविश्वासैश्च अस्पृश्यमानः स ऋतम्भराप्रज्ञाद्वारा जीवनेन समबद्धत । इयं दार्शनिकी व्याख्या विधेः सार्वभौमं स्वरूपं व्यनक्ति । एतद् विचारधारानुसारं समाजेन सम्बद्धोऽप्यसौ समाजात् परः, अथ च समाजोत्पत्तेः पूर्वत एव अवस्थितः । अतः भारतीयविधिविकाशे राजतन्त्रमूलिकायां व्यवस्थायामपि सत्यामप्यपौरुषेयविधेः सम्प्रभुता न क्वचिदपि व्याहता ।

भारतीया विचारका न आपातरमणीयां समतामपि तु कल्याणमुपयोगिताञ्च विधेराधारमातिष्ठन्ते । शक्तिर्दैवेच्छा चेत्यनयोरन्यतर आर्थिकवर्गो वा कोऽपि भवेन्नाम विधेराधारः, परमुभयत्र प्रयुज्यमानायाः शक्तेः प्रत्यक्षीकरणं दृश्यते । यदा दार्शनिकाः न्यायं पवित्रकर्त्तव्यं वास्योद्देश्यं मूलं वा आतिष्ठन्ते तदा नैतस्य दिशा तावन्तं सम्मानमर्हति । न्याय उच्चस्तरीय आदर्श इति सत्यमेतत्, परं व्यावहारिकदशाया अन्येषामपि तत्त्वानां तत्र भवति सम्मिश्रणं येभ्यस्तस्य पृथक्कृतिरसम्भवा । फलतोऽस्यां दशायां न्यायस्य विशुद्धता दुर्लभैव। कदाकदाचिदुच्चधारणा अस्मदीयाया निर्णयशक्तेर्बहिर्याता । तत्र न किमपीदृशं परिदृश्यते यत्र आत्यन्तिकी पवित्रता विशुद्धिर्वा स्यात् ।

पास्कलो लिखति "न्यायो विवादविषयः शक्तिश्च निर्विवादा । अतो न्यायो न शक्तेः सहचारी भवितुमर्हति । एवंस्थिते अनयोः साहचर्ये स्थाप्यमाने शक्तिर्न्यायमनादरिष्यते आत्मानमेव चोद्घोषयिष्यति न्यायम् । अन्ततश्च न्यायशक्तेः स्थाने शक्तिन्यायः अर्थाच्छक्तिरेव न्यायतया प्रतिष्ठास्यति" । प्रोफेसर कॉन महोदयो लिखति "द्वादशशताब्द्यां दार्शनिकदृष्ट्या विधिं मीमांसकैः पूजाकर्मकाण्डादेः पुरः शिरोऽवनमितम्, अर्थात् पूजा कर्मकाण्डादिषु नेत्रे निमील्य विश्वसितम् । धार्मिकन्यायक्षेत्रे

तर्कं जिज्ञासाञ्च पराभूय श्रद्धा एवाधारतया अवतिष्ठत । अत एव तार्किक-नास्तिकप्रभृतीनि विशेषणानि प्रादुर्भूतानि । फलतो न्यायस्य अभिप्रेतं स्वरूपं विलयमेव यातम् । अस्यामेव स्थितौ अनुत्तरदायिशक्तिः संरक्षकाणां स्थानं गृहीता ।

वैदिकविधिः सृष्टेराधारो विकाशस्य च मूलं मतः । चैतन्यसत्तायामभ्युपगतायां सृष्टिःसोद्देश्या नियमबद्धा चास्थेया । एषैव च भारतीयानां विचारकाणां दृष्टिः । एवं स्थिते सृष्टेर्विकाशात् प्रागपि विधेरस्तित्वं आस्थीयते, स एव च विधिर्दण्डस्य मूलम् । विधिसमन्वितो दण्डो नारायणः, त्यक्तविधिमर्यादस्तु स दास्यवी वृत्तिः ।

दण्ड एव स्वयं सार्वभौमशक्तेराधार उद्देश्यश्च । समाजानुमोदितस्य विधेः परिपालनं व्यक्त्या समाजेन चापेक्षणीयम् । तस्मिन् सत्येव द्वयोरप्यनयोरधिकाराः पारस्परिकाः सम्बन्धाश्च व्यवतिष्ठन्ते । जनकल्याणार्थ एव दण्डस्योद्भवः । राजशक्तेः केन्द्रीकरणात् प्राग् दण्डः समाजमपेक्षते स्म । कालक्रमेण परिस्थितिषु परिवर्तितासु दण्डो भयमधिष्ठितः । उत्तरवैदिककाले ऋतस्य, धर्मस्य, नैतिकताया वा परिरक्षणं दण्डस्य प्रयोजनमास्थितं परं मनुकाले धर्मशास्त्रस्य तत्प्रतिपाद्यस्योद्देश्यस्य च संरक्षणं दण्डस्योद्देश्यतां ययौ ।

धर्मशास्त्रैः जीवनीयनैतिकपक्षसम्बद्धैः विधिनिषेधैः सहैव व्यक्तेः कर्त्तव्यानि अधिकाराश्चापि निर्धार्यन्त व्यवस्थाप्यत चैषां शाश्वतं नित्यं स्वरूपम् । तत्र मनागपि शंकायामुद्भूतायां दण्डस्य विराट्स्वरूपं पुरः स्फुरति । व्यक्तेः तदीयानां नियतकर्मणां परिपालने एव स्वातन्त्र्यम् । स्थितेरस्या अनुच्छेदो दण्डस्यार्थो मतः उद्देश्यमिमं लक्ष्यीकृत्य क्रियमाणायां दण्डस्थापनायां वैदिककालतो मनुकालं यावद् अवैदिक-जातीनां सम्मिश्रणम्, स्थानीयसंघटनानां राजनीतिक्याः शक्तेर्ह्रासः, आर्थिकी-विषमता, समाजेन विधेः सञ्चालनस्य स्थाने नियतेन विधिना समाजस्य सञ्चालन-ञ्चेत्यादीनि आसन् क्रियाशीलानि । एवंस्थिते जनकल्याणजनहितजनेच्छादिभिर्न समग्रः समाजः संग्रहीतुं शक्यः । अत एवोभयं दण्डस्य मुख्यं वैशिष्ट्यमभूत् ।

एतस्य च नायमर्थो यद्दण्डो दमनात्मना परिणत इति । सामान्यतो मनोभावा यथासामाजिकाः स्युस्तथा यतितं दण्डविधायकैः । मनोभावानां समाजानुकूलत्व-सम्पादनं हि आसीत् दण्डस्य लक्ष्यम् । अन्यच्च मानसिकस्य दौर्बल्यस्य कीदृश्या अपि विधायाः लोभस्य, ईर्ष्याया महत्त्वाकांक्षादेर्वा नियन्त्रणं दण्डस्य मुख्यमुद्देश्यं मतम् । दण्डस्तत्प्रयोगस्य मुख्या संस्था, राज्यं वा न कीदृशमप्यधिकारं सृजति अपि तु अवस्थितानेवाधिकारान् चरितार्थयति । सामान्यतः सामाजिकहितविषयिणी धारणा दण्डमाश्रित्य कार्यात्मना परिणमति । शक्तिरपि दण्डस्य सहचारिणी परमेषा ता धारणा उद्भावयति यदाश्रयणेन सामाजिकं हितं शक्यं स्थापयितुम् । अनुशासनमर्यादायाः आज्ञाया वा अनुवर्तने दमनं साधनं न त्विदं साध्यम् । न

तत्कस्या अपि संस्थायाः संघटनस्य वा आधारतां यातुं शक्नोति[1] । दण्डसम्बद्धायाः शक्तेर्न केवलमपराधिनो निग्रह एव अपि तु ईदृशस्य वातावरणस्य उपस्थापनमपि कार्यम्, येनापराधस्थितिरेव मा भूदिति मतं बोसांके महोदयस्य । ग्रीनमहोदयस्यापि एष एव पक्षो यच्छक्त्या न कस्यापि अधिकारस्य स्थापना शक्या[2] ।

शक्त्या दण्डस्य कीदृशः सम्बन्धो व्यवस्थापनीयः नैष प्रश्नः सुकरसमाधानः । अत्र विषये सामाजिकसंघटनस्यालोचनं तदीयं धार्मिकविवेचनं चापेक्ष्येते । शक्तेःऋते समाजस्यास्तित्वमपि भवति संकटग्रस्तम् । परन्तु शक्तिरपि नियमितैव स्यान्मा भूदुच्छृंखला । पाश्चात्त्यदेशेषु ईसाईमतस्य प्रचारेण सहैव उपदेशस्य साधुवृत्या विरोधोऽपि अभूत् । यद्येवं न स्यात् तदा न जायेत स यूरोपदेशो येन स्वशक्त्या विश्वं स्वायत्तीकृतम् । शक्तिदण्डयोः समन्वयेन सहायमपि अंशोऽवधेयः ।

या 'मन्त्रद्रष्टृत्वं' कॉनमहोदयेन द्वादशशताब्द्यां साक्षात्कृता सा पुराकालत एव अनुवर्तमानासीत् । गौतमोक्तम् अवरदौर्बल्यं "दृष्टो हि धर्मव्यक्तिक्रमः साहसञ्च महताम्" "इन्द्राय स प्रणमते नमते यो बलीयसे" इत्येषा भीष्मोक्तिश्च शक्तिवादि-सिद्धान्तं स्फुटं प्रतिपादयत इति पाश्चात्त्या अमन्यन्त । एकोनविंशतितमशताब्दीयस्य नीत्से महोदयस्यैतद्विषयिका विचारा अवधेयाः । तेन मनुविषयेऽपि विचारितम् ।

नीत्शेमतानुसारं[3] सर्वविधानामपि नैतिकतानां मूलम् शक्तिः । किं बहुना घृणायामपि शक्तितत्त्वानि निहितानि । शक्तेर्विना तर्कः , प्रतिज्ञा, नैतिकता चासहाया एव । तानि हि शक्तेरस्त्राणि । शक्तिं प्रत्युत्सुका अस्मदीया कामना अस्मदीयान् विचारान् निर्धारयति । बौद्धिकानां व्यवहाराणमधिकोंऽशेऽवचेतनया विकाशमायाति । अननुभूताश्चेतनविचारा (Conscious Thinking) दुर्बला यतः प्रवृत्तिशक्तेरिच्छायाः साक्षात्कार्यान्वयनमेव संशोधनमुच्यते । यद् विक्षोभयितुन्नालं चेतना । अद्य यावद् दृष्टायां स्थितौ प्रवृत्तिरेव सर्वाधिकशक्तिशालिनी । चेतनायाः व्यापारो यन्महदाद्रियते सोऽविवेकः । चेतनाया हि द्वितीयं स्थानम् । तदपि चोदासीनं सच्च । शक्तिमतः पुरुषस्येच्छा न मनागपि विवेकपूर्णैरपि तर्कैरभिभवितुम् आवरितुं वा शक्या । तस्य हि अयमेव महान् तर्कः "अहमेवमिच्छामीति" । अत्र तस्येच्छैव न्यायो न तत्र दयाचेतनाकरुणादेः किमपि स्थानं महत्त्वं वा ।

अभिताजवर्गीयविशेषतानां यन्नाशौन्मुख्यं तन्महद्दुःखाकरोति नीत्शे महोदयम् । समग्रयोरोपखण्डीया नैतिकता "येन मनस्तोषः यद्वा प्रियं प्रतीयेत" इत्येतां धारणा-माश्रिता । शक्तिमन्तः स्वशक्तेरप्रयोगेण अशक्तवर्गम् आयाताः । यथा नैतिकता

1. J. S. Makenzee, Outlines of Social Philosophy, p. 133.
2. T. H. Green, Principles of Political Obligations, p. 140.'.
3. Prof. Will Durent, The Story of Philosophy, Freidrick Nietzshe, pp. 421-432.

शक्तिमधितिष्ठति तथा तथाविधानामादर्शानां प्राप्तौ न सर्वे एव समर्था अपि तु केचनोच्चतमा एव । आदर्शा हि न मनुष्यमात्रे अपित्वसाधारणे व्यक्तिविशेषे एव । संघटनं समुदायो वा स्वयमादर्शभूतः शक्तिमतोऽस्त्रम् । सर्वेषां स्वेच्छानुकूलं कार्याचरणे स्वातन्त्र्यप्रदानं जनतन्त्रमित्यस्य अर्थः । परमस्मिन् स्वातन्त्र्ये उच्छृङ्खलता सम्भाव्यते । विकशति च परस्परासम्बद्धता । महापुरुषाणामनुद्भव एवास्य स्फुटो हेतुः । दलीयप्रतिबन्धादिवशेन यदि शक्तिमन्तोऽवसरं न लभेयुस्तदा राष्ट्रस्यापि शक्तिशालित्वमसम्भवम् । अस्याञ्च अवस्थायां न उच्चतम एवापि तु बहुसंख्याका जनाः भवन्त्यादर्शभूताः । ततश्च पुरुषाः स्त्रीयन्ते नार्यश्च पुरुषायन्ते । नीत्शे महोदयस्य विचारमिममनुवर्तते आधुनिको विचारकः डीन पाऊण्ड । अस्यापि विचारेषु लक्ष्यते तद्विचारच्छाया । एतन्मतानुसारं हि आधुनिकेन जनतन्त्रेण अक्षमता विकाश्यन्ते क्षमताश्च उपेक्ष्यन्ते[1] ।

जनतंत्रेण श्रमिका अनैतिकताम्, निम्नवर्गीया दुश्चरित्रताम्, वैयक्तिक्या राजनीतिक्यश्च स्वतन्त्रता नाशं नीता इति दर्शनमन्येषां विचारकाणाम्[2] । वस्तुतो जनतन्त्रमिदं स्वोद्देश्यसम्पादनेऽसफलमेव लक्ष्यते । इदानीं हि एतदपेक्ष्यते यन्मानवीयानां क्षमतां वास्तवं स्वरूपं प्रतिष्ठापयितुं नूतनं सामाजिकं प्राग्रूपमास्थेयम् । जनतन्त्रस्य यानि साम्प्रतिकानि दौर्बल्यानि न तानि सोढुं द्रष्टुं वा शक्नुम इत्येषा नूतना मान्या भावना । अस्याञ्च नैतिका दोषाः निहिताः[3] । पूजायाः प्राथमिकानि प्रतीकानि वैज्ञानिकेन विवेचनेन ध्वंसितानि, परमाधुनिके युगे आधुनिकविधानि नूतनानि प्रतीकानि कल्पितानि येषां सम्मानः प्राक्कालिकेभ्यः प्रतीकादिभ्यो न मनागपि न्यूनः[4] । अद्यतनानि प्रतीकानि त्रेधा विभाजयितुं शक्यन्ते-प्राविधिकानि, राजनीतकानि, नैतिकानि च । तत्राद्यं अर्थात् प्राविधिकं भौतिकविषयकम् । धनवादिषु (पूँजीवादिषु) देशेषु एष पूजनप्रकारः परश्शतेषु पत्रेषु पत्रिकासु च वर्ण्यते गीयते चास्य महत्त्वम् । इयं प्राविधिकीप्रतिभा आधुनिकयुगीयाया समग्राया अपि श्रद्धाया विषयतां गता । तेन अधिकाधिकस्य महत्त्वस्य आसादनमेव अभूत्, इदानींतनानाम् उद्देश्यम् । यच्च राजनीतिकं पूजनम्, सामाजिकान्यार्थिकानि च संघटनान्येव तस्य "तीर्थस्थानानि" । एवंविधानां पूजनानां प्रविधिज्ञैरपि संबन्धः ।

---

1. Dean Pound, Harvard Law Review, Vol. 54, p. 1105, N. 2.
2. Hammond and Hammond, The Rise of Modern Industry, XXIII XII, p. 3.
   Schelsinger, The Politics of Freedom, Ch. XI, pp. 235, ff.
   Aldus Haxley, The Perennial Philosophy, p. 285.
   Prof. Mannheim, Diognosis of Our Time, p. 19.
3. Radha Vinod Pal, The History of Hindu Law, p. 263.
   Aldous Huxley, Op. cit. p. 289.
4. तदेव, पृ. २८७ ।

मनुष्यः स्वस्य सुखं प्रसन्नताञ्च कामयते, यो प्रविधिं संघटनानि च निर्मीते। एतदर्थञ्च नैतिकता विषयिणी विचारणोदेति। नैतिकपूजकेन अर्थात्तृतीयविधं यन्नैतिकं पूजनं तदुपासकेन ईश्वरस्थाने आत्मैव स्थाप्यते, स्वयमेवासौ ईश्वर-स्थानमधितिष्ठति, आत्मानमेव ईश्वरत्वेन पश्यतीति यावत्। स हि चिकीषत आत्मप्रचारं तिष्ठापयिषति च सदाचारम्। अत्र च ज्ञानम्, प्रेम, ईश्वरश्चेत्यादीनां स्थाने स्वीय व्यक्तित्वेनैव समाजे प्रभावं प्रसारयितुमीहते। अस्यामेव स्थितौ नीत्शेसम्मतः शक्तिवादो भवत्युपयुक्तः।

किन्त्वेष (नीत्शे) सभ्यतायाः पक्षद्वयं विस्मरति। अद्यतन्याः सभ्यतायाः गाम्भीर्यं विस्तारश्च उभयमपि विकशद्दृश्यते। एषा सभ्यता मानवकल्याणं पुरस्कृत्य मानवमात्रस्य विस्तारं कर्तुं यत्किमपि अस्माभिर्दृश्यते तदस्मदीयाया भावनाया प्रतिविम्बनमित्येषा दृष्टिर्दार्शनिकानाम्। नीत्शेमहोदयस्य नैतिकपक्षापेक्षया राजनीतिकपक्षोऽधिकं परिष्कृतः। सोऽभिजातवर्गीयं प्रशासनमादर्शभूतं प्रशासनं मन्यते। स हि समस्तायामपि भुवि क्रियाशीलानां बुद्धिमतां महदस्तित्वमातिष्ठते। तानेव च प्रशासकान् मनुते। ते हि सामाजिकात् सांकर्यात् परिरक्षणीयाः।

नीत्शे स्वसिद्धान्ते मनुमतस्य छायां स्वीकुरुते। अमेरिकादेशीयः शक्तिमानूवर्गः सम्मन्यते एतस्य (नीत्शे) विचारान्। एतन्मतानुसारं मानवतायाः पुनरुद्धारार्थं लोकेन मनुरनुसरणीयः। तदीय (मनु) दर्शने जातेः धर्मविशेषस्य च सर्वोच्चं स्थानं साधयति। भारतीयाया नैतिकतायाः सदाचारस्य च स्थापना एतस्य स्फुटं प्रमाणम्। वर्णव्यवस्थया योग्यान् जनान् संरक्ष्य ईसाईसिद्धान्तीयं विनम्रता विषयकं दौर्गन्ध्यमपनीयम्। खीष्टीयधर्मो हि दासानाम्, मनूक्तो धर्मः पुनः शक्तिमतां प्रतिभाशालिनाञ्च। मनोर्राजनीतिकं दर्शनमात्मबलं क्षमतां पूर्णताञ्चाश्रयति। दण्ड एव एवंविधं शस्त्रं यद् भीत्या शान्तेः स्थापना शक्या। राष्ट्रान्तरीयनीतिविषयेऽपि मनुं प्रशंसन् नीत्शे लिखति यत् "मनुः सत्यस्य निकटवर्त्ती"। मण्डलसिद्धान्तानुसारं शत्रुराज्यस्य सीमावर्त्तिराज्यं विजिगीषोर्भवति मित्रम्। इति हि दर्शनं मनोः। एवं-विधा घोषणा शक्तिमता विचारकेणैव कर्तुं शक्या। मनुना मानवजीवनस्य सर्वाधिक-कल्याणसम्पन्नत्वसम्पादने प्रयतितम्। पतनस्य कातर्यस्य चोद्भावनमेव पापः उत्थानं शक्तिं च प्रत्यनुधावनमेव पुण्यम्।

नीत्शे महोदयेन खीष्टीयमतं वास्तविकतातो बहिर्भूतमतथ्याश्रितञ्च आतिष्ठ-मानेन मनूक्ता सामाजिकी व्यवस्था महादादृता। तन्मतानुसारं खीष्टीयधर्मो यानि तत्त्वानि उपेक्षते मनुस्तेषामुच्चतां व्यावहारिकतां च सम्मन्यते। नीत्शे महोदयेन हि इयल्लिखितं यद् ःबायबिलग्रन्थेनः मनुस्मृतेस्तुलना अपि पापम्, यतो मनौ नान्धविश्वासः, पाखण्डिता वा, अपि तु जीवनस्य प्रत्येकमंशस्य दार्शनिक-

मालोचनम् । मनुर्हि जीवनस्य प्रत्येकमंशं दार्शनिकेच्छया निरीक्षते । एतन्मतानुसारं शक्तिशाली उच्चतमक्षमतासम्पन्नश्च वर्गः समाजस्य संचालकः । सामान्या जना अपि तस्माद् वर्गादादर्शान् शक्तिश्च लभन्ते । खीष्टीयमतप्रवर्तकैर्विवाहः, नारी एवंविधा अन्ये वा ये जीवनस्यांशास्तान् उपेक्ष्य जीवनमपूर्णतां नीतम्, मनोः पुनः नारी शक्तिरूपिणी, जीवनस्य अनिवार्यमङ्गमग्निरिव पवित्रा चेति दर्शनम् । नार्याः श्वासोऽग्निसूर्यजलेभ्यो पवित्रतमो मतः । एशियाखण्डीयोऽयं महान् धर्मः शक्तेः पराणां शक्तिमतां ब्राह्मणानां प्रतिभायाः परिणामः । अद्यतनाः "पशुजनाः" वर्गचेतना-विहीनाः सांकर्याहतबुद्धयश्चाण्डालाः कथङ्कारं मनोदर्शनं (परिज्ञातुं) शक्ष्यन्ते ।

नीत्शे यया रीत्या भारतीयानां विचारः उपस्थापितः तत्रातिरेकोऽपि । स खीष्टीयधर्मस्य सामाजिकतामधिक्षिपन् अतिवादी प्रतिक्रियावादी चाभूत् । भारतीय-समाजसमर्थने अभिजातवर्गीयानां केषाञ्चिदंशानामुपस्थापने तस्य एषैव दृष्टिरासीत् । वस्तुतो भारतीयैः शक्तिदण्डयोरुचितः समन्वयो व्यवस्थापितः । ते हि अनुशासनं दण्डस्याधारमभ्युपगच्छन्ति । अनुशासनसमन्वितेन दण्डेनैव जीवमात्रस्य सुरक्षा विद्यानां स्थापना च शक्या । कौटल्येन विनय एवानुशासनमुक्तः । तस्य च यादृशं व्याख्यानं कृतं तत्र बौद्धिकावुभावपि पक्षौ संगृहीतौ[1] । बौद्धिकीभिः नैतिकीभिश्च उभयविधाभिरपि क्षमताभिः राज्यशक्तेः परिवेष्टनम् इष्टं कौटल्यस्य । मनुना राज्ञः कृते वृद्धसेवादिकं यद् विहितं तेन राज्ञि समाजिकनियन्त्रणेन सदैव विनयस्य स्थापनायां प्रयतितम्[2] ।

शक्तिर्दण्डस्याधार आस्थिता, परं तस्याः शक्तेरपि आधारः उद्देश्यश्च । द्वयमेत न्निर्धारितम् । राज्ञा दण्डव्यवस्थायाः सञ्चालनेऽपि न तत्र तस्य यथेच्छदण्ड-प्रयोगोऽधिकारः । यदि च स एवमाचरति तदा याति समूलो विनाशम् । अत एव दण्डप्रयोगे राज्ञा सममन्येषामपि सामाजिकानां प्रतिनिधीनां हस्तक्षेपोऽनुमतः ।

---

1. सुखस्य मूलं धर्मः । धर्मस्य मूलमर्थः । अर्थस्य मूलं राज्यम् । राज्यस्य मूलमिन्द्रियजयः । इन्द्रियजयस्य मूलं विनयः– चाणक्य. १-५; तस्माद्दण्डमूलास्तिस्रो विद्याः । विनयमूलो दण्डःप्राणभृतं योगक्षेमावहः । कृतकः स्वाभाविकश्च विनयः-कौ. १।५।१-३ ।

2. स्वराष्ट्रे न्यायवृतः स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥
(मनु. ७।३२)।
ज्ञात्वाऽपराधं देशं च कालं बलमथाऽपि वा ।
वयःकर्मवित्तं च दण्डं दण्ड्येषु वा नयेत् ॥
(याज्ञ. १।३६८)
यथार्हः दण्डः पूज्यः-कौ. १।४।१३ ।
स च दण्डो वधबन्धपरिक्लेशार्थहरणलक्षणस्तीक्ष्णमृदुमध्यमभेदेन त्रिविधः – (कामन्दकः २।३) जयमङ्गला ।

कौटल्यात् प्राग्वर्त्तिनि समाजे बौद्धक्रान्त्यापदं निहितम् । अतः केचन विचारकाः शक्तेर्दण्डश्च पृथक्करणं समर्थयन्ते स्म तदानीम् । अपरे विचारकाः पुनः प्रतिकुर्वाणास्तीक्ष्णदण्डं व्यवस्थापयितुं यतन्ते स्म । कौटल्येन तु एतद्विचारद्वयमपि सङ्गमतया उचितदण्डो व्यवस्थापितः । कौटलीयैव च व्यवस्था परिवर्तीभिराचार्यैः समर्थिता । दण्डव्यवस्थापनं पक्षपातग्रस्तं माभूदिति प्रयतितम्, स्वार्थपक्षपातशक्ति-लोभादिकं दुष्प्रणीतदण्डस्य मूलं मतं कौटल्यस्य ।

उग्रदण्डः भूतानामुद्वेगजनः। यथार्हदण्डो देशकालापराधानुगुण्यप्रयुज्यमानदण्डः, पूज्यः, लोकबहुमान्यः । सा पूज्यता युक्तस्य दण्डस्य लोकाभ्युदयहेतुत्वात्– सुविज्ञातप्रणीतत्वात् । अयथावत्, प्रणीतस्याप्रणीतस्य वा दण्डस्य सर्वानर्थहेतुत्वम् । कामक्रोधाभ्यामज्ञानाद् दुष्प्रणीतः कामात् क्रोधादज्ञानाच्चाऽयमयथावत् प्रयुक्तः । किं पुनर्गृहस्थान्, संयतेन्द्रियानपि यः कोपयति सोऽसंयतेन्द्रियान् कोपयतीति किमु वक्तव्यम् ।

भारतीयराजनीतिः यथा शास्त्रानुमतस्थले दण्डप्रणयनं नानुमोदते तथा शास्त्रानुमतत्वेऽपि लोकानुमतत्वाभावे वा इति । धर्मसमृद्धचर्थकामसमृद्धयोरुक्तरीत्या प्रजा राजनि अनुरज्यते । लोकशास्त्रयोरनुमतिमन्तरा स्वार्थकल्पनया दण्डस्य प्रणयने उद्वेजनीयत्वम् । रागः अज्ञानं क्रोधश्चेति त्रयं दण्डस्य अन्याय्यत्वे बीजम् भवति । एभिः शिष्टस्यापरिपालानाद्दुष्टस्य चानिग्रहाल्लोकेऽपरागो भवति । इदमेव राज्ञः पतनकारणम् । एवंविधदण्डप्रयोगः सामाजिकीं क्रान्तिमुद्भावयति । ततश्च तपोनिरता परिव्राजका अपि क्षोभं यान्ति, का कथा गृहस्थानाम् । यथाविधि-प्रयुज्यमानो दण्ड एव त्रिवर्गस्य लम्भकः । शक्त्या मत्ता राजानो दण्डस्य दुष्प्रयोगेण यान्ति पतनमिति ध्रुवम् । ईदृशानां शक्तिमदेन दण्डं दुष्प्रयुञ्जानां राज्ञां दृश्यन्ते भूयांसि उदाहरणानि ।

दण्डस्य शक्त्या सह सम्बन्धाभिव्यक्तये बलशक्तिशब्दौ प्रयुक्तौ । तथा च श्रुतिः– "बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनांतरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतंगपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ।

"स यो बलं ब्रह्मेत्युपासते यावद्बलस्य गतं तत्रास्य यथाकामाचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति" (छान्दो ७।७।१-२)।

कौटल्येन सेनायां शक्तौ च बलशब्दः प्रयुज्यते । महाभारतेऽपि एतदर्थद्वयपरो बलशब्दो दृश्यते । अपरिमितस्य बलप्राप्त्या बुद्धिर्भवत्यसन्तुलिता । शक्तिस्त्रिविधा मता-मन्त्रः, प्रभुः, उत्साहसश्च । दैवी शक्तिः स्वर्गस्थितिसंहाराणां हेतुः । कौटल्येन शक्तिबले समन्वयमानीते । बलेन संबन्धे दण्डस्य क्षेत्रं स्वरूपं वा विस्तारं याति । अस्यामवस्थायां दण्डो न केवलं न्यायालयेऽपराधिनं निगृह्णीयात्येवापि तु समाज-राजनीत्योः समन्वयस्य भूमिकामारचयति । देवलोकादारभ्याखिलानि स्थावराणि जङ्गमानि सामाजिकानि सङ्घटनानि, राज्यराज्यप्रकृतयश्चेत्यादीनि यावत्तस्य भवति व्यावहारिकः सम्बन्धः । सैन्यशक्तेरारभ्यादैवशक्तेः समासामपि शक्तीनां समन्वयं व्यवस्थापयन्नसौ जनकल्याणाय कल्पते ।

चतुर्विंशतिरकेनवति प्रथमसाहसः द्विशतं पञ्चशतं चैव मध्यमसाहसः षट्शतं सहस्रं चोत्तमः । त्रिविधः साहसेष्वेवं दण्ड उक्त स्वयम्भुवा । दण्डस्य मानसंज्ञायां मनुः

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका च परिमाणतः ।
ता राजसर्षपास्तिस्रस्ते त्रयो गौरसर्षपः ॥
सर्षपाः षट् यवो मध्यः त्रियवं त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥
ते षोडश स्याद्धरणं पुराणश्चैव राजतः ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः[1] ॥ ८।१३१-१३७ ॥

**नैगमादिसंज्ञा**

नानापौरसमूहस्तु नैगमस्तु प्रकीर्तितः ।
नानायुधधरव्राताः समवेताः प्रकीर्तिताः ॥
समूहो वणिगादीनां पूगः संपरिकीर्तितः ।
ब्राह्मणानां समूहस्तु गण इत्युच्यते बुधैः ॥

---

1. याज्ञ. १।३६४; विष्णु. ४।८९; बृह. ८।८, १०; नारद. २१।५८-६०; ना. म. सं. १९। ११७-११८; कात्या. ४९१-४९२; वि. र. ६६६-६६८; स्मृ. चं. ९९।

प्रव्रज्यावसिता ये तु पाषण्डाः परिकीर्तिताः ।
शिल्पोपजीविनो ये तु शिल्पिनः परिकीर्तिताः ॥
आर्हतसौगतानां तु समूहः सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म संज्ञितः ॥
गणपाषण्डपूगाश्च व्रताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चाऽन्ये वर्गाख्यास्ते बृहस्पतिः ।
चातुर्वर्ण्यस्य या सूतिरसजात्यादिसंभवा ।
तस्या धर्माः समुद्दिष्टा जातिः सा परिकीर्तिता ॥

(बृ.कात्या, ६७८-६८८)

**समाजः**

नीतिविधिविमर्शस्य प्रथमभागे समाजस्य विकाशधारां स्पष्टयद्भिरस्माभिर्दर्शितः यद् भारतीयसमाजे कियन्तो घटकाः समावेशमलभन्त । अस्यामवस्थायां तत्र वैषम्यमपि उद्भूतम् । मूलतः सामाजिको न्यायः प्रत्यष्ठाप्यत । एकवर्गीयसाम्यविषयकः सिद्धान्तो यद्यप्यासीत् क्रियाशीलः परं वर्गान्तरैर्वैषम्यं समावतिष्ठतैव। एवंविधे वैषम्ये सामाजिकविकाशधारैव प्रमुखा प्रयोजिका परं तया सहान्यान्यपि तथ्यानि प्रस्तूयन्ते । समाजे विकाशमायाते यद्बभूत् तदीया सामान्या स्थितिस्तदा भारतीयसमाजस्य प्रारम्भिकी रूपरेखा केत्यपि परिज्ञातुं नापार्यत । फलतो वैषम्यस्थापनायां दृढं प्रयतितं किन्तु स आधार उपेक्षितो विस्मृतो वा यमाश्रित्य वैषम्यमुदभूत् । तेषामाधाराणां विनाशे सामाजिकन्यायमप्यासीत् परिवर्तनीयं परं नैवमभूत् । अत एव समाजे शैथिल्यमपि पदं निदधे ।

सामाजिकविषमताया विवरणेन परिज्ञायते यद् वैषम्यसमर्थका वैयक्तिकीक्षमतामेवास्याधारम् तांश्चैतज्जन्मीयां जन्मान्तरीयाञ्च आतिष्ठन्ते । दृश्यते तु सामाजिकः समुदायो वा वैषम्यो व्यवहारः । व्यक्तिविशेषस्य गुणकर्मणां न किमपि महत्त्वमत्र विषये । उत्तरवर्तिस्मृतिषु विशेषतो मनुस्मृतौ धारणेयं महान्तं विकाशमायाता । बौद्धजैनक्रान्तिभिः सह विदेशीयजातिसम्मिश्रणस्यापि समस्यासीद्धर्मशास्त्रकाराणां पुरः । ते हि एताभिर्जातिभिः सम्बन्धे मौलकीयानां भारतीयानां जातीनां गुरुत्वमुच्चत्वं वा समर्थयन्ते । तेषामेतत्समर्थनं वेदमूलकम् । अतस्तैः स्वोक्तानां विधीनामपि वेदैस्सम्बन्ध आस्थितः[1] ।

---

1. यः कश्चिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥
(मनु. २।७)

वैदिककालेऽपि सामाजिकं सम्मिश्रणं परिदृश्यते । तत्रापि उत्तरवर्त्तिवैदिक-समाजे नीचोच्चताविषयकः प्रश्न उत्थितः, स्वीकृते च नीचोच्चते । अतः स्वीयविचारसमर्थने अनायासत एव लब्धा मनुना वैदिका आधाराः । तदीयविचारेषु बौद्धजैनक्रान्तीनां प्रतीकारभावनां स्फुटं परिलक्ष्यते । एतदर्थञ्च ब्राह्मणानां वेदानाञ्च प्रतिष्ठापनमवश्यमपेक्ष्यत । वेदविषयिण्यामास्थायां प्रतिष्ठापितायां वेदानुयायिनां ब्राह्मणानामादरः, वेदनिन्दकानाञ्च बौद्धानां सामाजिकमवहेलनं द्वयमप्येतच्छक्यम् । मनुना महता कौशलेन कार्यमेतत् सम्पादितम्[1] । अतश्च व्यक्तिविशेषीयान् मानवीयानाचारान् सामाजिककोटौ समावेशयितुं महच्चेष्टितम् । मानवीया व्यवहाराः सामाजिकविधानसापेक्षतां याताः । ते च व्यक्तिविशेषीय-क्षमतातो बहिरभूवन् । अतो व्यक्तिविशेषे सत्यामपि क्षमतायां यस्मात् समाजात् स आयातः यत्समाजीयो वा स तदनुरूप एव दण्डस्तस्मिन् प्रयुज्यते स्म । अस्यां स्थितौ क्षमताविहीनोऽपि व्यक्तिविशेषा सामाजिकस्य गौरवस्य हेतोर्दण्डविषयकानि समान्य-पिसौविध्यान्यासादयत् यान्यासन् तदीयसमाजानुरूपाणि । परं व्यक्तित्वातिशय-शाल्यपि जनो यदि निम्नसमाजीयस्तदा स समाजानुरूपाणि समान्यपि दण्ड-विषयकाणि क्रौर्याणि तेन भोक्तव्यानि ।

वेबरमतानुसारं विधीयनियमानां विधीयशासनञ्च सम्बन्धेऽन्योन्यापेक्ष्यत्वे वा स्वीक्रियमाणे न्यायविधीयदृष्टिकोणस्य समाजशास्त्रीयदृष्टिकोणस्य च भेदोऽभ्युप-गन्तव्यः[2] । न्यायशास्त्रे आदर्शभूतं वैधानिकं लक्ष्यमपेक्ष्यते, समाजशास्त्रे च सामाजिकव्यवहारो मानवीयानां शक्तीनां समन्वयः द्वयमेतदावश्यकम् । मनुरासीद् यथैव न्यायवित्तथैव समाजशास्त्रविदपि । तेन एकतो न्यायस्य मान्यता प्रतिष्ठापिता अपरतश्च सामाजिकैः संघटनैः समं तस्याः सम्बन्धः । अत्र न कोऽप्यन्य उपायस्तेनाश्रितः । तद्दृष्ट्या सामाजिकस्य न्यायस्य यत्किमपि स्वरूपमासीत् तस्य वैधानिकत्वसम्पादने न काठिन्यम् । अत एव तदीयायाः सामाजिक्याः स्थापनाया भारतीयविधिशास्त्रेण न विरोधः कस्मिन्नप्यंशे । यादृशं सामाजिकं वैषम्यं मनुना स्थापितं तद्यदि औदार्यवादिना बौद्धेनान्येन वा केनचिद् विधिशास्त्रिणा समस्यत तदावश्यमेव मनोः सामाजिकेषु विचारेषु संशोधनमपेक्षिष्यत । परं स स्वयं विधायकः स्रष्टा चेति नेदृशं काठिन्यमुपस्थितं तस्य पुरः । एतेन सहैव मनोरासीद् वैदिकसमाजं प्रति महदौदार्यम् । देशस्य प्रमुखा महान्तो नायका वा वैदिकाः

1. योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः ।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥
(मनु. २।११)

2. Max Weber, Essays in Sociology, New York, 1946.

समर्पयन्ते स्म तम् । अतो मनोर्व्यवस्था भारतीयसमाजे निर्बाधं प्रवृत्ता । एतद्विषये यानि दार्शनिकानि तथ्यानि प्रस्तूयन्ते तान्यवधेयानि ।

मनुष्यस्य पूर्णता समाजापेक्षैव नहि समाजमुत्सृज्य मानवः स्वतः परिपूर्णतामायातुं प्रभवतीति दर्शनं प्राचीनानां विचारकाणाम् । ते हि व्यक्तेरस्तित्वं तदीयसामाजिकं संघटनापेक्ष्यमेव आतिष्ठन्ते । न हि व्यक्तेस्तत्तद्व्यक्तित्वमादाय विधिदण्डो वा प्रवर्ततेऽपि तु तत्तत्सामाजिकसंघटनघटकत्वमाश्रित्यैव । सामाजिकसंघटनानामैतिहासिकस्य स्वरूपस्य ।विधिसिद्धान्तीयबौदिधिकस्वरूपस्य। च भेद आस्थेयः सामाजिक्या नैतिकतायाश्च पारस्परिकोऽस्ति सम्बन्धः[1] । अतः सामाजिकीभिश्चेतनाभिः शक्तिभिश्च विधेर्लक्ष्यं निर्धार्यते[2] । यदानीं मनुना सामाजिकस्य वैषम्यस्य नूतनं स्वरूपमुपस्थापितस्तदानीं नैतद् विधेर्लक्ष्यमकस्माद् आपतितमपि तु लक्ष्यस्यास्य निर्धारणे आसीत् सामाजिकीनां शक्तीनीं प्रयोगः । तस्मिन्युगे हि ईदृशेन वैषम्येणैव सामाजिकस्य कल्याणस्य आसीत् सम्भवः । स्थापितञ्चापि वैषम्येणानेन सामाजिकं कल्याणम् । अतः एवंधिा विषमता तेनापि समाजेनाहता येनास्याः सर्वाधिकं फलमासादितम् । तदानीं नोदतिष्ठत कीदृश्यपि क्रान्तिः, कीदृशोऽपि विरोधः ।

विषयोऽयं प्रकारान्तरेण शक्य उपस्थापयितुम् । व्यक्तौ या विषमता तस्या आधारे सूक्ष्मेक्षिकया पर्यालोच्यमाने ज्ञायते यद् व्यक्तौ विभिन्नता विशिष्टता विषयिणी च भावना प्रतिष्ठिता । इयञ्च भावना प्रभुत्वभावनामुद्भावयति । पुरुषो मदीयान् व्यवहारान् विचारान् भावान् वा अन्योऽनुसरेदित्यपेक्षते । तत्र च कदाचित्तदीया विशुद्धाः कदाचिच्च स्वार्थभावनाविष्टाः कुत्सिता मनोभावस्तमेवमपेक्षणे प्रेरयन्ति । कदाचित्तु केवलः शक्तेर्विस्तार एव पुरुषं कार्येऽस्मिन् प्रोत्साहयति । एतैः सहैव व्यक्तेः शारीरिकी बौद्धिकी च क्षमतापि विषमतां प्रयोजयति ।

पुरुषः किमालोच्य क्रियासु प्रवर्तते, प्रश्नश्चास्येदं साधारणमुत्तरं यत् स आनन्देन, कष्टेन, उद्देश्येन च निर्दिश्यते, अर्थादेतत्त्रयं तस्य प्रवर्त्तकम् । बाह्याभिप्रेतप्रभावः । साम्प्रतिकस्य भाविनो वा हितस्येह चेत्यादिकं मानवीयव्यवहाराणां दिशां निर्दिशन्ति । स्थितिवैषम्यधारणा इमा अधिकं दृढयति । क्षमता विषयकम्, गुणविषयकम्, प्रतिभाविषयकं वा वैषम्यं न शक्यतेऽपलपितुम् । मानवीयसमाजे हि शक्तिसम्पत्तिप्रतिभाकृता विशेषा अवस्थिताः । स्त्रीपुरुषयोः, सबल-दुर्बलयोः, प्रतिभामौर्ख्ययोः, अनुभवाननुभवयोः, गुणदोषतयोः, सम्पत्तिदारिद्र्ययोः, संयोगवियोग-

---

1. Neibuhr, Human Destiny, p. 266.
2. Pulzky, Theory of law and Civil Society, pp. 21-25.

योश्च भेद आस्थेय एव । एतद्भेदमूलिकायाः स्थितेः सम्भवेन्नाम संशोधनम्, परमशक्यः सर्वथा उच्छेदः । अतः समाजाद् विषमता निस्सारयितुमशक्या ।

सामाजिकीषु स्थितिषु सामाजिकविकाशे च व्यक्तेर्व्यवहाराः स्थाप्यन्ते । सामाजिकचेतनया सह आत्मनः समन्वये ईहते व्यक्तिः । मानवीया विकाशास्त-दीयैर्लाभप्रदैर्व्यवहारैरुपलब्धिभिश्च सममेव अग्रेसरन्ति । वैयक्तिकानां सामाजिका-नाञ्च व्यवहाराणां पारस्परिको भेदः, वैयक्तिका हि भवन्ति व्यक्तिविशेषं प्रत्युन्मुखाः, सामाजिकाः पुनः व्यक्तेर्व्यवहाराणां व्यक्त्यन्तरीयव्यवहारैः समन्वयं स्थापयन्ति । एते हि व्यक्तेस्तादृशान् व्यवहारान् येषां व्यक्त्यन्तरीयव्यवहारैस्समन्वयं नेच्छति व्यक्तिः, कुर्वन्ति केन्द्रताम् । फलतः पुरुषः स्वीया इच्छा समाजानुकूल्येन प्रयोक्तुं भवति विवशः, यतो न स सामाजिकां विधिनिषेधान्नुल्लंघयितुमलम् ।

आवश्यकतानां पूर्त्तिर्मानवमात्रस्याभीष्टा, परन्तु लक्ष्यं भिद्यते । लक्ष्ये व्यक्तेर्व्यक्तित्वस्य प्रतिविम्बनमनिवार्यम् । व्यक्तित्वञ्च प्रतिव्यक्तिभिन्नम् । प्रारम्भिके समाजे व्यक्तित्वानां छाया• अति स्फुटा अतस्तदानीं विषमतामूलक उत्पीडने सत्यपि नाभूत् समानतार्थं संघर्षः । मनुकाले च समानतां स्थापयितुं स्पर्धन्ते स्म जनाः । सहैव वर्णानां स्वत्वमपि प्रत्यतिष्ठत । अत एव आधुनिकयुगीयायाः समानताया यल्लक्ष्यं न तत्तदानीं आसीत् स्वीकारार्हम् । मनुना ह्यावश्यकतानां :समानतानुभूता, व्यवस्थापिता परं तेन वर्गाणां सामाजिकं साम्यं नाभ्युपगतम् ।

इदमत्रावधेयम्, एतावत् पर्यन्तं सामाजिकीं व्यवस्थां साधयितुं यावत्यो युक्तयोऽस्माभिरुपन्यस्तास्तासां समासामपि व्यक्तेस्तत्तद् व्यक्तित्वेन सम्बन्धः । व्यक्तौ हि व्यक्तीयतया हि एवंविधा विषमता प्रतिष्ठातुं शक्नोति परं न तामाश्रित्य सामाजिकी असमानता शक्या प्रतिष्ठापयितुम् । व्यक्तौ यावदंशे यावती वा न्यूनता महत्ता वा स्यात् । तदनुपातेन व्यक्तिः सामाजिकं दण्डं पुरस्कारं वा भजेत नाम । किन्तु तत्तद्व्यक्तित्वाश्रिता विषमतेयं यदि सामान्यतोऽर्थात् समाजीयतया समाजे प्रतिष्ठाप्यते तदा समाजिकतामाप्तेयं दोषमेवावहेत् यन्न कोऽपि जागरूकः समाज उररीकरिष्यति ।

मनुना सामाजिककार्यक्षेत्रेषु व्यक्तित्वानि प्रतिष्ठापितानि । अतः समानतायाः यादृशं स्वरूपं समाजेन आस्थितम्, तस्य संरक्षणमासीदावश्यकं मनोः । एवं तेन यथास्थितिपक्षो विचारपदवीं नीतः । स हि मानवस्यान्तर्निहितां समाजे प्रतिष्ठिताञ्च क्षमतां संरक्षितुं प्रयासमेव मानवीयां सभ्यतां मन्यते । तेन व्यक्तेरान्तरिकीणां बाह्यानाञ्च क्षमतानां विषमताया दार्शनिकं मूलमास्थितम्, तदेव चाश्रित्य संरक्षिता सा । वर्णानामानुवंशिकतायां वातावरणीयसमानतायाञ्च समानगुणानां क्षमतानाञ्च यो विकाशस्तेन समाजविशेषे वर्गीयतया स्थितानां जनानां साम्यमास्थीयत । एवं

परस्परेण समानेषु वर्गेषु विधेरसाम्यं समभूत्। वर्गान्तरैस्तेषां ये सम्बन्धा आसन् तान् परिरक्षितुं समता आदृता। न व्यक्तेर्व्यक्तित्वस्यैव अपि तु तदीयसामाजिकस्य अस्तित्वस्यापि अनुसारेण एतैर्विचारकैर्विधिविवेचितः। वर्णविषयिणी मनोवृत्तिरत्र हेतुः, एतस्यायमर्थः यद् यथायथा सामाजिकता व्यकसत् तथातथा वैयक्तिकता अह्रसत्।

जनसंख्यायाः साधनानानां नगरादीनां यातायातोपायानाञ्च विकाशस्याभूत् प्रभवः श्रमविभागे। बौद्धक्रान्तिं प्रतिकुर्वाणेन मनुना श्रमो वंशानुगततां नीतः। विधिना तं सम्बध्य तस्य वैधानिकीकरणं मनोर्वैशिष्ट्यम्। एवं विभिन्नानां वर्गाणां तत्तद्वर्गीया समतावश्यं प्रत्यतिष्ठत् परं जन्मवर्गविशेषीयता द्वयमेवैतद् आसीत्तस्या आधारः। अतः सामाजिकस्य वैषम्यस्य पूर्णरूपं परिलक्ष्यते। अद्यत्वे सामाजिकानि आर्थिकानि जातीयानि वा संघटनानि अनपेक्ष्य तत्तद्व्यक्तितया व्यक्तिरुपतिष्ठते। उक्तेभ्यः संघटनेभ्यः पृथक्कृत्वा अर्थात् संघटनीयत्वबुद्धिमपनीय व्यक्तेर्दर्शने मानवमात्रस्य समता स्वत एव याति सिद्धिम्—यतः सामाजिकसंघटनीयत्वादन्यन्न किमपि व्यक्तेर्वैषम्यस्य मूलम्। अन्यत्रोक्तानां संघटनीयसम्बन्धनामुच्छेदे स्त्रीपुत्रकुल-भृत्यादयस्तत्तद्व्यक्तित्वेन अर्थात् व्यक्तिशोऽतिष्ठन्ते। अत एवाद्यत्वे तेषां समता विषयिणी चर्चोदेति परं तदानीं नैदृश्याश्चर्चाया आसीदवसरः, यतो नासन् ते स्वयमेव स्वस्योत्तरदायिनोऽपि तु अन्यस्मिन् निर्भराः, तेषां वैधानिकमुत्तरदायित्व-मन्येनैव निरुह्यते स्म। अद्यत्वे हि ईदृशास्ते वैधानिकाधिकारहीना उच्यन्ते तेषां समानतां प्रतिष्ठापयितुं क्रियमाणः प्रयासः सामाजिकी प्रगतिर्मन्यते।

मानवानां पारस्परिकमसाम्यं दुरपनेयमिति दर्शनं मनोः। यद्यपि मानवमात्रे इच्छा, विचारः, आवश्यकता त्रयमेतदवतिष्ठते तथापि नैतेषु साम्यं नहि समेषा-मुक्तत्रितयवतामपि एकविधा विचारा इच्छा आवश्यकता वा। मनुना मूलभूतमिदं तथ्यं वर्गीयतामाश्रित्य अनुसंहितम्। बौद्धानां समतावादो मनुमाकर्षयदिति अन्ये। तेनापि समता अभ्युपगता परं तदभिमतायाः समतायाः मूलं मानवस्यान्तर्निहिता क्षमता एव, या सामाजिके परिवेशे निरधार्यत। प्रतिमानवमन्तर्निहितायाः क्षमतायाः संरक्षणविषयिणीसमतामेव समानतामातिष्ठते सः। सामाजिकतया भवति मानवीयानां क्रियाणां साम्यम्। अतः मनुः सामाजिके दार्ढ्ये प्रयस्यति स्म। वर्णानामुदये उपनिषद्भिरित्थमेवाचरितम्। मनुर्यादृशं श्रमविभागं प्रत्यपादयत् स तस्य सामाजिकदृढतायां वैयक्तिकीकरणे च प्रयासं व्यनक्ति। एवंविधे समाज-शास्त्रीयविवेचने जन्मानुसारिण्या वर्णव्यवस्थया समं व्यक्तेरन्तर्निहितायाः क्षमतायाः विकाशो नालमवस्थातुम्, यतो द्वयमेतत् विप्रतिषिद्धम्। अत एकस्य वर्णस्यैक-वर्णीयानां वा पारस्परिकी समतैव समानता पदेन विवक्षणीया न तु एकवर्णीयानां

वर्णान्तरीयैः समता। समाजिक्याः समताया आधुनिकं स्वरूपं न तदानीन्तन्यां तस्यां शक्यमुपलब्धुम्।

वस्तुतः भारतीया विचारका विधेः समतां न विधेर्मूलं मन्वतेऽपि तु एतद्दृष्ट्योपयोगिता कल्याणम्, द्वयमेतत् तस्य मूलम्। यद्यपि शब्दाविमौ पर्यायाविति इत्यापाततः प्रतीयते परं नैषा वस्तुस्थितिः। उपयोगितापेक्षया ह्यधिकं कल्याणस्य महत्त्वम्। कल्याणपक्षमाश्रित्य विधिः शक्यते सारल्येन व्याख्यातुम्। उपयोगितायाः पुनः आधारः स्वरूपञ्च द्वयमप्येतद् दुर्निवचम्। कल्याणवादिनो दृष्टिः अध्यात्मं यावद् यथा व्याप्नोति न तथा उपयोगितावादिनो दृष्टमात्रविषयिणी मतिः प्रसरति। कल्याणपक्षो हि दृष्टमिवाध्यात्मिकमपि संगृह्णाति। उपयोगितापक्षस्तु दृष्टसीमायामेव आबद्धः। मानवः सांसारिकेभ्यः सुखसौविध्येभ्यो दूरेऽपि शक्यते स्थापयितुम्। एतद् विषये उपयोगितायास्तदेव स्वरूपं भवितुमर्हति परं कल्याणपक्षः न सांसारिकसंदर्भे द्रष्टुं शक्यः। सूत्रकारैः सम्मन्यमानः कल्याणपक्षः धर्मस्यैव पर्यायान्तरम्। तस्य च न केवलेन वर्तमानेनैव अपि तु भाविना जीवनेन सम्बन्धः। तत्रैन्द्रियिकं भौतिकं वा सुखं गौणीकृत्य आध्यात्मिक आनन्दः प्राधान्येनावतिष्ठते। एवं स्थिते श्रेयः प्रयोजनकं भवति प्रेयः। श्रेयस्तावदुपेयतां प्रेयश्च श्रेयस्साधनतां यातीत्याशयः। व्याख्येयं यदा सामाजिकैः सम्बन्धैर्युज्यते तदा श्रेयसि उन्मुखः समाजो लभते महत्त्वम्। परमादर्शानामेतेषां समाजेनानेन अपरिपालने एतानादर्शान् आश्रित्यैव समाजाय अस्मै दीयमानं सौविध्यं सामाजिकी विषमतां प्रयोजयति। समाजशास्त्रीयदृष्ट्या विषमताया अस्या उन्मूलनमपेक्ष्यते। ईदृशान्येव सौविध्यानि विरुन्धन्ति स्म बौद्धा जैनाश्च।

प्रजानाम् आकाङ्क्षाया अधिकाधिकांशे पूरणमेव राज्यस्य भवेल्लक्ष्यम्। एथेन्सदेशे दासैरवश्यमेतदीहीतं भवेत् यत् तेषां परिवर्तनमायात् परमेथेन्सराज्यस्यैषा धारणासीद् यद् दासताया अनपनयनमेव तदवस्थता एव वा स्वलक्ष्यसिद्धेः परम उपायः प्रशस्तो वा मार्गः। अतो दास्यपरम्पराया यथा मा भूदुच्छेदः तथा प्रयतितं राज्येनानेन। दासानामिच्छां व्याचक्षाणैःकैश्चिद् दार्शा केर्व्यवस्थापितं यत् समानाधिकाराणाम् अनासादने एव दासानां हितम्। दासानामिच्छाया दास्येनैव सर्वाधिकां सन्तुष्टिं मन्यते अरस्तुः[1]। एतन्मतानुसार दास्याचरण एव दासाः सन्तुष्टिमनुभवन्ति। कार्यकारणविषयकमन्तरङ्गं विचार उपेक्षमाणोऽयं पूर्वाग्रहग्रस्तः दुराग्रहग्रस्तो वा प्रतिभाति। विश्वासोत्पादिक्या अनागतविषयिण्या वाण्या सत्यासत्य-विचारणां पिधातुं ईहतेऽसौ[2]। विंशतितमशताब्द्यां ब्रिटेनदेशीयोऽप्येकः समाजस्य

1. Politics, I, IV. V.
2. तुलनीयः, Hobhouse, Metaphysical Theory of State, p. 15.

नेतासीदनेनाग्रहेण भावेन वा ग्रस्तः। मेकाले अनेन लोकसभायां कथितं यत् सर्वेषां मताधिकारप्रदानेन समाजस्याधारशिला विकम्पेत[1]। विधिना श्रमसमयस्य नियन्त्रणं ब्रिटेनदेशस्योन्नतेर्बाधकं मन्यते स्म नसाउ सीनियरः। एवंविधा विचारका ग्रीन, रुसो इत्यादीनां नावदधते। तन्मतानुसारं मनुष्यो नैतिकः प्राणी। प्रत्येकं मनुष्यः स्वीयानधिकारानुपभोक्तुमर्हति क्षमते वा। अधिकाराणामुपयोगे तारतम्यं वैषम्यं वा कर्तुमशक्यं राज्येन[2]। हीगलोऽपि पूर्वाग्रहग्रस्त एव। अत एवासौ राज्यमात्म-निश्चितपरं मानसं मेने। स स्वीयाधिकारेभ्योऽन्यां कामपि सत्तां नाद्रियते। नापि पापपुण्यापमानक्षुद्रताधूर्तताप्रवञ्चनादिविषयकान् नियमान् सम्मन्यते[3]। हीगलेन स्वीयराज्यस्य आदर्शपूर्णेनाभिजातवर्गेण सम्बन्धः स्थापितः, यस्य पर्यवसानं यहूदीय-विषयिण्यां हिटलरस्य नैतिकतायामभूत्।

वस्तुतो राज्यमेकं सार्वभौमं संघटनम्। तस्य चैकता अखण्डता तावदसम्भवा यावद् राज्यस्य घटकः महान् जनसमूहो न भजते तत्कल्याणं यदर्था राज्यस्योत्पत्तिः। राज्यस्य बलप्रयोगेण यो लाभो लभ्येत तत्र समेषामपि नागरिकाणां समानोऽधिकार आवश्यकः। परमादिकालत एव सभ्यतोद्गमकालत एव वा जातिदेशधर्मसम्पत्तिप्रभृति यत्किमपि आश्रित्य लाभोऽसमानस्वामित्वविषयकः सिद्धान्तः प्रतिष्ठितः। वर्गविशेषीयाः दार्शनिकाः स्वस्वपक्षानुसारमित्थं व्याचक्षते स्म यत् केचन समूहविशेषा व्यक्तिविशेषा वा नार्हन्ति नागरिकता विषयकान् विशेषानधिकारान्। वस्तुतस्तेषां शक्तेः क्षणिकस्य सन्तुलनस्य औचित्यमासीत् सिसाधयिषितं यस्य शाश्वततां प्रतिष्ठापयितुं कामयन्ते स्म ते। अरस्तुना यद् दास्यपरम्परा समर्थिता, यच्च लॉकेन रोमनकैथोलिक एतेषाम् हिटलरेण च यहूदीयानां नागरिकता अनभ्युपगता अपवर्जिता वा तस्यैतदेव मूलम्। एवंविधा विचारकाः स्वयुगीयपरिस्थित्या प्रतिबद्धाः, अत एवाधिकारविषयकाः शाश्वता अपि सिद्धान्ताः युगानुसारेण परिवर्तनमायाताः। वर्णव्यवस्थायाः समर्थनमपि एवंविध एव एकः प्रयास आसीत्। मानवीयस्वभावेन, सार्वजनिककल्याणेन, राज्यस्य सार्वभौमतया च न तस्य सम्बन्धः, अर्थाद् अस्या व्यवस्थाया समर्थनस्य नैतत्त्रयमुद्देश्यम्। इंग्लैण्डदेशे पियरवर्गीयैरेवंविधा एव सौविध्यानि भुज्यन्ते[4]। येषां निर्णयः सामान्यन्यायालयेऽशक्यः। परं ब्राह्मणानां कृते नासीदित्थं विशेषन्यायाल-यव्यवस्था। तैरपि सामान्यन्यायालये एवोपस्थातव्यम्। तेषामपि विवादाः सामान्य-न्यायालये एव निर्णीयन्ते स्म। स्थानीयन्यायालयेभ्योऽन्यत्र न्यायालयेषु ब्राह्मण एव

---

1. Speech in House of Commons, May 3, 1842.
2. T. H. Green, Principles of Political Obligations, P. 443.
3. Quoted by Laski, State in Theory and Practice, p. 39.
4. Hulsbury, Laws of England, Vol. 25, p. 46.

न्यायाधीशपदमध्यतिष्ठत् परं नैतावता ते न्यायालया जातीयाः शक्याः वक्तुम् । परिस्थितिविशेषे राजा पुरोहितैरेव ब्राह्मणंसम्बद्धान् विवादान् निर्णाययति स्म[1] ।

न्यायस्य वैषम्यं पावित्र्यञ्च सम्मन्यमानानामपि भारतीयानां न्यायव्यवस्था वर्गकृतं लिङ्गकृतञ्च वैषम्यमागता । एवंविधाया विषमतायाः प्रभावो न्यायिक-प्रशासनेऽपि परिलक्ष्यते । स्मृतिकालात् पूर्वं सूत्रकाल एव एवंविधवैषम्यमूलकन्याय-व्यवस्था दृढं प्रत्यतिष्ठत् । तस्माद्यम इव राजा वशीकृतक्रोधो जितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य यमस्य चेष्टया सर्वत्र साम्यरूपया वर्तेत । लब्धसौविध्यै वर्गैरेवंविधा वैषम्यमूलकं न्यायव्यवस्था जगति प्रसारिता व्यवहृता च[2] । एवंविधा न्यायिकी विषमता हिंसामूलकेषु धनमूलकेषु चोभयविधेष्वपि व्यवहारेषु आसीत्[3] । अपराधदण्डयोराधारेषु प्रयोगेषु चापि वैषम्यं परिदृश्यते[4] । अस्याञ्च स्थितौ एषा न्यायव्यवस्था थ्रेसीमेकसेन उक्तां न्यायस्य व्याख्यां न्यायः शक्तिमतामिच्छा इति व्याख्यामनुवर्तते यत्र चोपेक्ष्यते राज्यस्य वास्तविकमुद्देश्यम् । एतदवश्यं यद् राज्यं समाजे व्यक्तेर्नियतं स्थानं यथा स्यात् सुरक्षितं तथा यतते । एतदर्थञ्च कठोरतां स्पष्टतां चापि आवश्यकतानुसारमाश्रयति । यथा-यथा वैषम्यं सामाजिकोऽसन्तोषश्च विकशतस्तथा-तथा राज्यस्य शक्तिः परिणमति दण्डात्मना । अस्यामवस्थायां राजधर्मस्य स्थानमधितिष्ठति राज्यशक्तिः[5] ।

वैदिककालस्य प्रथमचरणे, यदासीदृतमवस्थितम्, नावतिष्ठत कीदृशमपि वैषम्यम् । तस्य वैदिकपरम्परीयैः समाजैस्सम्बन्ध आसीत् । अतस्तदानीं वैरदेये प्रायश्चित्ते वा न कीदृश्यपि भेदः । वैदिकसमाजैः समाजान्तराणां सम्बन्धो यदा प्रारब्धास्तदा व्यवस्थेयं वर्गीयतामाससाद । विश्वस्य विभिन्नानां समाजानामेवंविधा पारस्परिकाः सम्बन्धा विकशिताः । भारतीयसमाजेऽपि यथा-यथा समाजान्तराणि पदं न्यदधु, तथा-तथा न्यायव्यवस्थायां वैषम्यमवर्धत् । स्थितिमिमां परिरक्षितुं दण्ड-शक्तिरपि दृढीक्रियते स्म । स्मृतिकालं यावत्, दण्डक्षेत्रे न्यायक्षेत्रे च वर्गीयैर्व्यवहारैः पदं विन्यस्तम्[6] ।

---

1. **तस्य चेच्छास्त्रमतिप्रवर्तेरन् राजानं गमयेत् । राजा पुरोहितं धर्मार्थकुशलम् । स ब्राह्मणान्नियुंज्यात् । बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत्** । आप. ध. सू. २।५।१०।१५-१६ ।
2. **तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये ।**
**वर्तेत याम्यया वृत्या जितक्रोधो जितेन्द्रियः ॥**
(मनु. ८।१७३) ।
3. आप. १।११।२४।१०४; गौ. २२।१४-१६; बौधा १।१०।१९।३।
4. E. Westermarck, The Origin and Development of the Moral Ideas, Vol I. p. 431.
5. तै. सं. २।२५।११; मनु. ८।१४२; याज्ञ. २।३७, ४१ ।
6. नारद. २१।१५-१६; मनु. ८।२१२-२६७, २७९-२८१, ३२३; बृह. २२।१८; महा. शां. १२१।६०।

दण्डन्यायराज्यानां मुख्यमुद्देश्यमभिलक्ष्य यदि समाजकल्याणं चर्च्यते तर्हि समाजस्य मूलभूते स्वरूपेऽपि देया दृष्टिः । सामाजिकी विषमता न्यायिकीं दाण्डिकीञ्च विषमतां प्रयोजयति । परमेषा विषमता तथैव भवति तथा वैदिकसमाजो विकाशमायातः । आदिमेन वैदिकसमाजेन तानि सर्वाण्यपि सौविध्यान्युपालभ्यन्त यानि कस्यापि विकाशमायातस्य राज्यस्योद्देश्यवर्गे समाविशन्ति । समाजेनानेन सम्बद्धैः समाजान्तरैर्नैतत्समता लब्धमशक्यत । दासशूद्रप्रभृतयोऽन्त्यजैः सह वर्गीयामसुविधामभजन्त । यत एते वैदिकसमाजस्य न तादृशान्यङ्गानि यादृशानि द्विजातयः । अत एव राज्यस्य समाजस्य च सार्वभौमं संघटनं वैदिकसमाजमेवाधिष्ठितम्, न शूद्रानन्त्यजान् वा । एतद् दृष्ट्या दण्डव्यवस्थायाः वर्गव्यवस्थायाश्च पारस्परिकेषु सम्बन्धेष्वालोच्यमानेषु वैषम्यमूलिका स्थितिर्याति प्रकाशम् । केचन मनीषिणो वर्णव्यवस्थां सार्वभौमीमिमातिष्ठमाना अस्या औचित्यं समर्थयन्ते । परं तैरिदमवधेयं यत्ते स्वसंकलितसामग्रीभिरेव स्वीयमुद्देश्यम् आहनन्ति । यतो विश्वस्य समेष्वपि प्राचीनसमाजेषु वर्गीयानि संघटनानि संघर्षजातीयविजयसम्पदपहरणयुद्धविजयादिकमाश्रित्यैव अवातिष्ठन्त । यदि च तेषु संघटनेषु वर्णव्यवस्थाया अपि संघर्षः स्वीक्रियते तदा ता विशेषता अप्यङ्गीकार्याः ; यद्वैषम्यं तेषु संघटनेषु यच्चापि वर्णव्यवस्थायां तद्देशकालपरिस्थितिकृतमेव । एवञ्च चत्वारो वर्णाः एकस्य विराट्पुरुषस्य अङ्गानि इत्येष प्रवादो नोपपद्येत ।

पाश्चात्त्यैर्व्यवस्थेयं यथा पर्यालोचिता तत्र दोषदर्शिभिरपि दृश्यन्ते तथ्यानि । वर्णव्यवस्थामीश्वरीयमनादिञ्चाभ्युपगच्छन्तो भारतीयाः पाश्चात्त्यैः प्रकल्पितां पद्धतिमवश्यं अवजानन्ति परं न कामपि तत्स्थानीयामन्यां पद्धतिं प्रस्तोतुं प्रभवन्ति । जातिवर्णशब्दयोरेकार्थवाचिता इत्येषो भ्रमः । नहि वर्णशब्दो जातिपर्यायः ऋग्वेदे शब्दोऽयं दृश्यते परं रूपे रूपविशेषविशिष्टेषु संघटनेषु च न जातौ । संघटनानां द्वे विधे लभ्येते तयोश्च परस्पराद् भेदः, तत्रैका विधा शत्रुरिति अपरा—दास इति कीर्त्यते[1] । ऋग्वेदे ब्राह्मणक्षत्रियशूद्राणां त्रयाणामुल्लेखो न वैश्यस्य । यद्यपि पुरुषसूक्ते ऋच्येकस्यां वैश्योऽप्युल्लिखितः परं ऋचेयं पश्चाद् ऋग्वेदे पदं न्यदधात्, प्रक्षिप्ता इति यावत् । यत इमां विहाय ऋग्वेदे क्वापि नोल्लेखो वैश्यस्य । वैश्यशब्दो विश् मूलकः, विशशब्देन च जन उच्यते । ब्राह्मणक्षत्रियाभ्यामन्ये शूद्रातिरिक्ताः समेऽपि विश् इति व्यवहृताः कालान्तरे च, त एवाभूवन् वैश्याः इत्त्थं मूलसमाजस्य

1. ऋ. १।३७।७; २।३।५; ९।९७।१५; ९।१०४।४; ९।१०५।४; १०।२४-७; २।१२।४; १।१७।६; ९।७१।२; १।१०३।८; ३।३४।९; ४।१६।; १३।९।४१।१; १।१५८।५। यो दासं वर्णमधरं गुहाकः ऋ. २।१४।४; १।१७६।६; ब्राह्मणाश्च शूद्रश्च चर्मकर्ते व्यायच्छेते । दैव्यो वै वर्णो ब्राह्मणः असूर्यः शूद्रः । तै. ब्रा. १।२।६ ।

मुख्याः घटकाः ब्राह्मणाः क्षत्रियाश्च यैर्वैदिकमर्यादायां प्रथमं स्थानमासादितम् । तदीयपरम्परायां विकशद्भिर्जनैः संघटनद्वयेनानेन सम्बन्धं स्थापयिद्भस्तृतीयं स्थानं लब्धं ये वैश्या इत्याख्याताः । तेऽग्रजा अभूवन् । अवैदिकसमाजेन संघर्षः प्रचन्नेवासीत् । इत्त्थं वर्तमानः समाजः न विशुद्धवैदिकः, यस्य समष्टिः धर्मसूत्रेभ्यः स्मृतिर्यावद् विशेषतः स्पष्टतां याता । तत्र मूलजातिभिरन्यासां जातीनां सम्बन्धोऽभूत् । तदानीं वर्णव्यवस्थया इयदवश्यमुपकृता यदनया विकीर्णः समाजः चतुष्पञ्चेषु वा वर्गेषु व्यवस्थापितः । अत्र विषये विस्तरेण मया भारतीयविचारदर्शने नीतिविधिविमर्शस्य प्रथमभागे च विवेचितम् ।

दण्डो न नोपेयोऽपि तु सामाजिकस्य कल्याणस्योपायः । यत्रैकतो वैदिकसमाजो विकाशमायतः तत्रापरतः दण्डःस्वरूपमपि परिवर्तनं ययौ । वैदिकसमाजेन समाजान्तराणां सम्बन्धेषु व्यवस्थितेषु दण्डो हि वर्गीयतां दधे । सामाजिकविकाश-दशायामुद्देश्यद्वयमभिलक्ष्य दण्डः प्रायुज्यत । एकतो मूलवैदिकसमाजस्य प्रभुत्वं समाजान्तराणाञ्च राज्यशक्त्या सह सम्बन्धञ्च स्थापयितुं प्रायस्यत। अपरतश्च वैदिकमर्यादायां व्यवस्थायां विकाशे वा बाधामुद्भावयतां कठोरदण्डो व्यवस्थाप्यत् । इत्थञ्च यद्यपि मूलवैदिकसमाजीयानां कृते दण्डव्यवस्थाया एकरूपता आसीच्छक्या परं न समेषां समाजानां कृते । स्थितिरियं शकहूणकिरातदासखसपुलिन्दप्रभृतीनां जातीनां सम्मिश्रणेन बौद्धजैनक्रान्त्या च विशेषतः स्पष्टतां यातः । तदीयानां समस्यानां समाधानार्थं दण्डस्य वर्गीयं स्वरूपं पुर आयातम् । यत्रैकतो न्यायस्य पक्षपातराहित्यं पावित्र्यञ्च तत्रैवापरतो जातिकृतं लिङ्गकृतञ्च विषमता क्षेत्रेऽस्मिन् पदं निदधे[1] । एषा च स्थितिः स्मृतिभ्यः पूर्ववर्त्तिषु धर्मसूत्रेषु स्फुटं परिदृश्येते[2] । एवंविधं वैषम्यं धनमूलेषु हिंसामूलेषु च व्यवहारेषु अवातिष्ठत[3] । सामाजिकम-सन्तोषं शमयितुं समाजस्य तदवस्थतां परिरक्षितुं च दण्डस्य देवोद्भावितता व्यवस्थापिता[4] ।

न्यायिकसंघटनस्य प्रत्येकमङ्गे परिलक्ष्यते वर्णव्यवस्थायाः प्रभावः । न्यायाधीश-पदमारोढुमर्हन्ति परं "शूद्रं यत्नेन वर्जयेत्"[5] । वणिक्षु श्रेष्ठाः सदस्याः न्यायसभायां

1. मनु. ८।१७३ ।
2. आप. ध. सू. २।११।२४। १-४; गौ. २२।१४-१६; बौधा. १।१०।१९।३ । तुलनीयम्– Westermarck, op. cit, Vol I, p. 420.
3. तै. सं. २।५।११ ।
4. मनु. ८।२६७-२७२, २७९-२८१, ३२३; बृह. २२।१८ ।
5. जातिमात्रोपजीवी वा कामं स्याद् ब्राह्मणब्रुवः।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चनः॥
यस्य शूद्रस्तु कुरुते राज्ञो धर्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः॥

प्रवेशमार्हन्[1] । साक्षिष्वपि स्वजातीयाः साक्षिणो विशेषत आदृताः[2] । परं दासा भृतकाश्च नेदृशान् अधिकारानभजन्त । विभिन्नजातीयानां शपथाः दिव्य-साक्षिणश्चापि विभिन्नविधा व्यवस्थापिताः[3] । इत्थमेवापराधदण्डेष्वपि जातिकृतं वैषम्यं परिकल्पितम् । एकविधस्यैवापराधस्य जातिभेदकृतो दण्डभेदो दृश्यते, न हि समेषां एकविधस्यापराधस्य एकविध एव दण्डोऽपि तु जातिगततारतम्यानुसारेण दण्डेऽपि तारतम्यम् । क्षत्रियवधे तावदपराधिना एको वृषभो गवां सहस्रञ्च दण्डतया देयम्, वैश्यवधे पुनः एकवृषयुतं गवां शतम्, शूद्रवधे तु एकवृषयुतं गवां दशकमेव[4] । शूद्रवधे श्ववधे च समानो दण्डः[5] । निम्नजातीयो जनः येनाङ्गेनोच्च-जातीयं पीडयेत् तत्तस्याङ्गं छेत्तव्यम्[6] । एवंविध एव वर्गभेदः दण्डभेदः पारुष्यस्तेयोत्तराधिकारादिष्वपि दृश्यते[7] । राजनीतिकः, सामाजिक आर्थिको वा न कोऽपि तादृशः पक्षः यत्र न न्यायवैषम्यम् ।

चौर्येऽपराधे ब्राह्मणक्षत्रियवैश्यानां द्विगुणः शूद्राणां तु चतुर्गुणोऽष्टगुणो वा दण्डो विहितः[8] । व्यासकात्यायनाभ्यामनुपातोऽयं स्तेयादन्यत्र सर्वेष्वपि अपराधेषु स्वीकृतः[9]। ब्राह्मणस्य गालिदानेऽवमानने वा क्षत्रियवैश्यशूद्राणां शतपणेनार्थदण्डेन सह शारीरिकोऽपि दण्डो निर्दिष्टः । ब्राह्मणेन क्षत्रियवैश्यशूद्राणां गालिदानेऽवमानने वा

---

यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम् ।
विनश्यत्याशु तत्कृत्स्नं दुर्भिक्षव्याधिपीडितम् ॥
(मनु. ८।२०-२२)

याज्ञ. २।३। कात्यायनः—
ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।
वैश्यं वा शास्त्रज्ञं शूद्रं यत्नेन परिवर्जयेत् ॥ ६७ ॥

1. कात्या ५८ ।
2. मनु. ८।७०-७१ ।
3. गौ. ८।२०२३; मनु. ८।८८-८९; याज्ञ. २।९८ ।
4. बौ. १।१०।१९।१; आप. १।९।२५।१३; मनु. ११।१३१ ।
5. मनु. ८।२७९; याज्ञ. २।२१५; गौ. १२।१ ।
6. गौ. १२।११-३ ।
7. विष्णु. ९।११-४; बौधा. २।२।३।१०; वसिष्ठ. १७।४८-५०; विष्णु. ३।३२; गौ. १०।३१; मनु. ९।१५१; याज्ञ. २।१२५ ।
8. गौ. १२।१५-१६, ८।३३८-३३९ ।
येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन चेच्छत्रियाणां द्विगुणो भवेत् ॥ कात्या. ४०५ ॥
प्रायश्चित्तं च दण्डञ्च शौचं चातो यथाक्रमम् ।
कल्प्यमुत्कृष्टे मध्यं मध्यमेऽधमम् ॥ याज्ञ. १।१७ ॥
9. न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
अवध्या ब्राह्मणा गावो लोकोऽस्मिन्वैदिकीश्रुतिः ॥ यम, स्मृ. चं. ३१७ ॥

पुनः यथाक्रमं पञ्चाशत पणाः, पञ्चविंशतिपणाः, द्वादशपणाश्च तस्य दण्डः[1]। गौतमस्तु शूद्रस्य गालिदानेऽवमानने वा ब्राह्मणस्य न कमपि दण्डमिच्छति[2]। उच्चजातीयया स्त्रिया सह व्यभिचारे शूद्रस्य मृत्युदण्डः, स्त्रियश्च करणच्छेदः[3]। दण्डप्रयोगार्थं दशनिर्दिष्टानि, तानि च उपस्थः, उदरम्, जिह्वा, हस्तः, पादः, चक्षुः, नासा, कर्णः, धनम्, देहश्च[4]। बृहस्पतिस्तु चतुर्दशदण्डस्थानान्याह। तत्र ब्राह्मणादन्येषां त्रयाणां वर्णानामेतेष्वङ्गेषु व्यवस्थानुसारमन्यतमस्य छेदः, ब्राह्मणस्य तु अक्षताङ्गस्यैव देशान्निष्कासनदण्डः[5]। कस्मिन्निप्यपराधे ब्राह्मणो नार्हति मृत्युदण्डम्, अधिकाधिकमियदेव कर्तुं शक्यते यदसौ शिरोमुण्डनपूर्वकं देशान्निष्कासयितुं शक्यः[6]। नारदेन तु देशनिष्कासनस्थाने नगरनिष्कासनमेव निर्दिष्टम्। निष्कासनस्य चैष प्रकारः शिरो मुण्डयित्वा गर्दभे उपवेश्य, ललाटे च अङ्कयित्वा पापचिह्नं विधेयं निष्कासनम्[7]। यमो नानुमन्यते ब्राह्मणस्य शारीरिकं दण्डम्[8]। कस्मिन्नपराधे कीदृशं पापचिह्नमपराधिनो ललाटेंऽकनीयं व्यवस्थेयमित्येषा व्यवस्था मनुवचनान्याश्रयता मिताक्षराकृता प्रतिपालिता। तन्मतानुसारेण हि गुरुपत्नीगमने भगचिह्नं सुरापाने सुराध्वजं चौर्ये च कुक्कुरचरणचिह्नम् अङ्कयेत्[9]।

परन्नास्यायमर्थः यद् ब्राह्मणस्य दण्ड एव न। प्रायश्चित्ताचरणे—न ललाटे चिह्नाङ्कनम्। अनिच्छापूर्वकं पापाचरणे ब्राह्मणस्य मध्यमसाहसदण्डः देशान्निष्कासनं वा[10]। तस्मिन्नेवापराधे पुनराचर्यमाणे ब्राह्मणस्य सर्वस्वं गृहीत्वा अङ्कयित्वा च ललाटे चिह्नं कृत्वा चायं चौर्य इति नगरे घोषणां प्रसार्य देशान्निष्कासनमाह गौतमः[11]। शंखलिखितस्य कात्यायनस्य च वचनान्युद्धरन् स्मृतिचन्द्रिकाकारो ब्राह्मणदण्डविषये लिखति यन्मातुः, पितुः, स्नातकस्य, पुरोहितस्य, परिव्राजकस्य,

1. व्यास. २।२७०; मनु. ९।२३७; राजतरंगिणी ४।९६-९०६।
2. गौ. १२।१३।
3. याज्ञ. २।२८६।
4. बृह. ९।१०।
5. मनु. ८।१२४-१२५।
6. गौ. १२।४३; मनु. ८।१२५, ३८०, ३८१; याज्ञ. २।२७०; विष्णु ५।१-८; बृह. ७।१९१; कौ. ४।८।८।
7. वधावृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति।
   शिरोमुण्डनं दण्डस्तस्य निर्वासनं पुरात्॥
   ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च।
   नारद. साहस ९-१०; राजतरंगिणी ४।८२-१०५।
8. यमः, स्मृ. चं. २ पृ. ३१७।
9. याज्ञ. २।२७०; मनु. ९।२३७; राजतर. ४।९६-१०६।
   Barn, The Story of Punishment, p. 63.
10. मनु. ९।२४०-४१।
11. गौ. १२।४४।

वानप्रस्थस्य, जन्मकर्मश्रुतिशीलसदाचारसम्पन्नस्य च दण्डो न प्रयोज्य इति यन्मतं तत्र दण्ड इति शारीरिक एव दण्डो विविक्षितः नैतावतैतेषां सर्वथैव अदण्डता, अन्यविधा दण्डास्तु शक्या एव प्रयोक्तुम्[1] । विषयोऽयं मेधातिथिना इतोऽप्यधिकं स्पष्टीकृतः[2] । मनुवचनमाश्रयन् स्मृतिचन्द्रिकाकारः विप्रस्य शारीरिकदण्डस्थाने कारावास आह[3] । ब्राह्मणो हि पवित्रः आदर्शश्च, तच्छरीरमवश्यं परिरक्षणीयम् । सामान्येष्वपि अपराधेषु जातिलिङ्गादिकमनपेक्ष्य अपराध एवालोचनीयः । न्यायाधीशानां नियुक्तौ, शारीरिकेषु दण्डेषु, वाक्पारुष्ये, धिग्दण्डे, दण्डपारुष्ये, व्यभिचारऋणादानस्तेयादि च नैकविधा व्यवस्था दृश्यतेऽपि तु जात्यादिकृतं वैषम्यमुपलभामहे ।

यत्रैकतः ब्राह्मणानां सौविध्यानि दत्तानि तत्रैवापरतः जात्यन्तरापेक्षया कठोर-दण्डोऽप्येषां व्यवस्थापितः । यद्यप्येतेन अद्यत्वे विधेस्समतायाः यत्स्वरूपमभिलषते न तत्तच्छक्यं संग्रहीतुं तथापि इयत्स्वीकार्यमेव न विधेः बहिः कश्चिद् अर्थाद् सर्वोऽपि विधिसीमायामेवाबद्धः[4] । शंखलिखितौ राजपरिवारम्, पुरोहिताध्यापकवानप्रस्थयति-प्रभृतींश्च अदण्ड्यानाह । परमेतस्यायमेवार्थः यदेतेषां तादृशो दण्डो न प्रयोज्यः यस्मिन् दण्डे इमे अक्षमाः यथा वानप्रस्थस्य धनदण्डः । सर्वथा दण्डाभावस्तु न भ्रमितव्यः[5] । गर्भपाते, स्तेये, ब्राह्मण्यां शस्त्रप्रहारे, राजावरोधप्रवेशे क्वीदृशेऽपि च वा राजद्रोहे विप्रस्यापि मृत्युदण्डः[6] । मृच्छकटिके विभिन्नासु जातककथासु च ब्राह्मणस्य मृत्युदण्डो दृश्यते ।

ब्राह्मणवधो महान् अतिक्रान्तप्रायश्चित्तसीमश्च अर्थात् प्रायश्चित्तेनापि अपरिहार्योऽपराधः[7] । परमाततायिनो वधे न दोषो भवेत्[8], स ब्राह्मणो वा गुरुदेवो वा अन्योऽपि कश्चित् । वेदान्तपारगस्यापि रणे उपस्थितस्य अन्यायमवलम्बमानस्य च वधे न दोषः[9] । क्षत्रियस्येव युध्यमानस्य विप्रस्य वधो न दोषावहो

---

1. स्मृ. चं. २ पृ. १२६ ।
2. मनु. ८।१२५ ।
3. स्मृ. चं. २. पृ. १२४ ।
4. मनु. ८।३३५; याज्ञ. १।३५८ ।
5. स्मृ. चं. २ पृ. १२६ ।
6. **गर्भस्य पातने स्तेये ब्राह्मण्यां शस्त्रपातने ।**
   **अदुष्टां योषितां हत्वा हन्तव्यो ब्राह्मणोऽपि स हि ॥**
   **( कात्या. उद्‌घृतः—याज्ञ. २।२८१ विश्वरूपेण )**
7. तै. सं. ५।३।१२।१-२; शत. ब्रा. १३।३।१११; गौ. २१।१ ।
8. मनु. ८।३५०-३५१; वि. ध. सू. ५।१८९-९०; मत्स्य. २२७।११५-११७ ।
9. **प्रगृह्यशस्त्रमायान्तमपि वेदान्तगं रणे ।**
   **जिघासन्तं जिघासीयान्न ते न ब्रह्महा भवेत् ॥**
   (शान्ति. ३४।१७)

नाप्यवैधः[1] । यशोजीविनो ब्राह्मणंस्य सम्मानमानादर्य देशानिष्कासने न तेनान्यत्र भिक्षापि शक्या लब्धुम् । समाजाद् बहिष्कारो मृत्युदण्डादपि महान् दण्डस्तस्य । सामाजिकबहिष्कारे विप्रो मुण्डितशिराः, चिह्नितललाटः सर्वधर्मबहिष्कृतश्च दीन इव इतस्ततो मेदिन्यां भ्रमति, बान्धवा अपि च परित्यजन्ति इमम्, न कश्चिदपि नमस्करोति एतम्[2] । स्थित्यानया यशोजीविनस्तस्य तावदवमाननं यावत्कारावासेन मृत्युदण्डेन वाप्यशक्यम् ।

ब्राह्मणः अवध्यः, अदण्डयः, अवन्ध्यः, अबहिष्कार्यः, अपरिवाद्यः, अपरिहार्यश्चेति[3] यद् दृश्यते तच्छ्रुतिशास्त्रसम्पन्नस्य सदाचाररतस्य विप्रस्यैव कृते, न तु ब्राह्मणमात्रस्य[4] । असकृदपराधाचरणे अर्थादपराधस्य पुनः पुनरावर्तने सामान्य-नागरिक इव सोऽर्प्यहति दण्डम्[5] ।असत्साक्ष्यव्यभिचारबलात्कारादिषु साधारण-जनापेक्षयाधिकोऽस्य अर्थदण्डः[6] । इंग्लैण्डदेशेऽन्येषु च पाश्चात्त्यदेशेषु 'क्लर्जी' एतस्य अन्येषाञ्च धार्मिकाणां पुरुषाणां ब्राह्मणानामिव सौविध्यान्यासन्[7] । इंग्लैण्डदेशीयः क्लर्जी न जन्मना एव अर्थान्नैतदत्पदं जन्मगतम् स हि कठोरं परीक्ष्यते, कठोराश्च दण्डास्तस्य प्रयुज्यन्ते परं न राजकीये न्यायालयेऽपि तु पुरोहितीये । तेषाञ्च न्यायालयानां प्रक्रियासीत् विलक्षणा । प्रकृतायां विंशतितम-शताब्द्यामेव अमेरिकीयाः इंग्लैण्डीयाश्च भारते ततोऽप्यधिकानि सौविध्यानि आसादयितुं यतन्ते स्म, यादृशानि सौविध्यानि तु वर्षाणां सहस्रद्वयात् प्रागपि नासन् ब्राह्मणानाम् । अपराधविषयकास्तदीया व्यवहाराः विवादा आसन् भरतीय-न्यायाधीशस्याधिकारक्षेत्राद् बहिः । भारतीयन्यायाधीशेन तेषामेकवर्षीयादधिकः कारावासो व्यवस्थापयितुमशक्यः ।

केचन भारतीयो मनीषिणो जात्यनुसारेण दण्डव्यवस्थां वैषम्यमाहुः परं वैषम्यस्यास्य मूलं चिन्त्यम् । यस्मिन् या क्षमता ततश्च्युतौ तदनुसारेणैव दण्डः

---

1. उद्योग. १७८।५१-५२; शान्ति. २२।५-६ ।
2. **असंभोज्या हि असंयाज्या असंपाठ्याविवाहिनः ।**
   **चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥**
   **ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।**
   **निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥ ९।२३८-२३९ ॥**
3. **यत्तु षड्भिः परिहार्यो राज्ञा**-मनु. ९।२३३-२३९; **अवध्यश्चावध्यश्चादण्ड्यश्चाबहिष्कार्य- श्चा-परिवाद्यश्चापरिहार्यश्चेति**– गौ. ८।१२-१३ ।
4. **प्रातिपादितबहुश्रुतविषयं ब्राह्मणमात्रविषयम्**-याज्ञ. २।४; गौ. ८।४-११ ॥
5. याज्ञ. २।२८१ ।
6. मनु. ८।१२३; ३७८ ।
7. Pollok and Maitland, History of English Law, Vol. I. pp. 424-440.
   Holdsworth, History of English Law.
   Halsbury, The laws of England, Vol. 25, p. 46.

प्रयोज्यः । यदि श्रमजीविनो धनजीविनो यशोजीविनो वर्णस्य यश आघ्नन्ति तदावश्यं ते, आपेक्षिकोऽधिको दण्डः[1] । बुद्धिजीविसमाजनायकश्च बौद्धिकेभ्यश्च्यवृते चेत् सर्वाधिकं दण्डमर्हति[2] । यदि च राजा स्वयमेवअपराध्यति तदस्य सामान्यनागरिकापेक्षया सहस्रगुणाधिकोऽर्थदण्डः[3] । दण्डप्रकारेषु भवेन्नाम वैषम्यं न्यायव्यवस्थापने न्यायालये च नासीदेत्, स दण्डो दास एव अनार्य एव वा किन्न भवेत्[4] । इदमवधेयं यदाधुनिकविधिशास्त्रानुसारं व्यक्तिः स्वीयं व्यक्तित्वं दूरे कृत्वा न्यायक्षेत्रे विधिक्षेत्रे वा सामान्यमनुष्यतयोपतिष्ठते यतोऽद्यतनविधिशास्त्रं न सामाजिको विधिः, अपि तु वैधानिको नियमः । न तत्सामाजिकान् सम्पर्काननुमन्यते । प्राचीनन्यायव्यवस्थायां पुनः न सामाजिकस्य वातावरणस्योपेक्षा शक्या । सामाजिकानां विभिन्नानां घटकानां सम्बन्धा अपि विधिक्षेत्रान्तर्गता आसन् । तत्तद्घटकीयनियमानां प्रभावस्तदीयसम्बन्धेषु । व्यक्तिर्न्यायालये स्वकीयं व्यक्तित्वं सामाजिकं सम्पर्कं स्वीयस्वभावादिकञ्चापेक्ष्यैवोपतिष्ठते स्म । अस्यां स्थितौ प्रतिव्यक्तिव्यक्ति त्वादीनां भवेद्वैषम्यं स्वाभाविकमेव[5] । सर्वेषामेव वर्णानामन्योन्यस्यापराधिनां शारीरं धनसंयुक्तं धर्म्यदण्डं प्रकल्पयेदिति यमः । परञ्च, ब्राह्मणस्य वधं राजा मनसाऽपि न चिन्तयेत् यतः 'सर्वपापेष्ववस्थितान् ब्राह्मणान् अवध्यान्' आहुः । ते तपसा चेज्यया पूयन्ते । ब्राह्मणवधाद् भूयो नाधर्मो भुवि विद्यते[6] । स एव बहुश्रुतो भवति । लोकवेदवेदाङ्गवित् । वाको वाक्येतिहासपुराणकुशलः । तदपेक्षस्तद्वृत्तिः । चत्वारिंशता संस्कारैः संस्कृतः । त्रिषु कर्मस्वभिरतः । षट्सु वा । सामयाचारिकेष्वभिविनीतः । षड्भिःपरिहार्यो राज्ञा अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्चेति[7] ।

---

1. P.N. Sen, Hindu Jurisprudence, p. 346.
2. अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशच्छत्रियस्य ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥
(मनु. ८।३३७-३३८)
3. कार्षापणं भवेद्दण्ड्यो यत्रान्यो प्रकृतो जनः ।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति "धारणा" ॥
(मनु. ८।३३६)
4. P.N. Benerji, Public Administration in Ancient India, P. 170.
5. P.N. Sen, op. cit. p. 358.
6. मनु. ८।३८०-३८१ ।
7. गौ. ४।४-१२ ।

ब्राह्मणो वेदमाद्यं करोति । ब्राह्मण आपदुद्धरति । तस्माद्ब्राह्मणोऽनाद्यः सोमो राजा भवतीति ह प्रेत्य चाभ्युदयिकमितीह विज्ञापते[1] । सर्वत्र त्रयाणां वर्णानां धनहारकारावधबन्धाः क्रियासु चोपरोधो. महत्स्वपि पातकेषु विवासोऽहङ्करणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनम् । अपीड्यो हि ब्राह्मण इति शङ्खलिखितौ । महापातकयुक्तोऽपि न विप्रो वधमर्हति[2] । ब्रह्महा नराः महापातकिनो ज्ञेयाः[3] । परञ्च, ब्राह्मणस्य भ्रूणहत्यागुरुतल्पगमनस्वर्णस्तेयसुरापानेषु कबन्धभगश्वपदध्वजांस्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्वासनम्[4] । नियमातिक्रमिणमन्यं वा रहसि बन्धयेत् । असमापत्तौ नाश्यः । आचार्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात्[5] ।

इन्धनोदकाग्निकाष्ठतृणोपलपुष्पमूलफलपर्णादानेषु अग्रापचयम्, दैवतीर्थाभिगमनम्, गृहकोष्ठप्रवेशनम्, पथिशस्त्रधारणम्, असंबद्धमासनम्, प्रस्तुतेष्वनिवारणम्, असद्वासश्चेति, शिलोञ्छपदयोर्धान्यराशिग्रहणम्, अग्रोत्सर्गप्रसववृद्धिकार्षापणशुल्कनदीतरेष्वनुपरोधनम्, परस्त्रीसंभाषणम्, राजस्त्रीदर्शनम्, राज्ञा समासनम्, व्यक्तिक्रमणञ्च कोपान्सर्वमर्हति ब्राह्मण इति शङ्खलिखितौ । अन्यत्र, न वैष्टिकं जाङ्घिकं क्षेत्रद्रव्यापहरणं पुष्पमूलप्रचयनं स्वयमर्जितप्रवेशनं निष्क्रमणप्रवेशनेष्वनिवेदनं स्कन्धबाह्येषु शुल्को गणसमयश्रेणिपूगचरणव्यवहारनिष्ठा स्वामिनः परिज्ञातारोऽन्यत्र राजाभिद्रोहात् नगरनिवासिनां विप्रेतराणामपि परिग्रहा अनपराधाः ।

सेनमहोदयेनान्यैश्च विचारकैर्वर्णव्यवस्थायाः अन्यविधानानाञ्च वैषम्याणां समन्वये प्रयस्यद्भिरभ्युपगतं यद्व्यक्तौ सन्तिं जन्मगतानि वैशिष्ट्यानि व्यवहरणीयञ्च तान्याश्रित्य । सहैव मनुष्यः समाजस्य सदस्योऽपि, परं स यस्य सङ्घटनस्य सदस्यः तत्स्वयं विषमतायां प्रतिष्ठितः । तानि च संघटनानि प्रागुक्तान् जातीयसम्बन्धानाश्रित्य स्थापितानि । फलतस्तदाश्रयणेनैव विषमता विकाशमायाता । व्यक्तौ योग्यता क्षमता च स्वाभाविक्यावेव इत्येष सिद्धान्तोऽपि समाजशास्त्रापेक्षया विषमतायाः सार्थकता प्रतिपादयन्त्या व्यवस्थयैव सम्बद्धः । परं मनुष्यो नैतिकः प्राणी । नागरिकान्तरमिव सोऽपि स्वीयानधिकारान् प्रयोक्तुं क्षमः । व्यक्तेरधिकाराणामुपभोगे राज्येन हस्तक्षेपो वा कर्त्तुं न शक्यते ।

भारतीयन्यायपालिकागं दण्डसिद्धान्ते महान् कटाक्षः कृत आलोचकैः । तन्मतानुसारं भारतीयसमाजशास्त्रिभिः मानवीयलोभद्वेषघृणेर्ष्यादियुतोऽभ्युपगतः। अतो

1. वसिष्ठ. १|४५-४६ ।
2. बृहस्पति. ९|१० ।
3. मनु. ९|२३५ ।
4. मनु. ९|२३७; बौधा. १|८|१८; नारद. स्मृ. २१|४३-४५; ना. म. सं. १९|१०१-१०३ ।
5. आप. २|२७|१८-२१८; यम. वि. र. ६२५; मनु. ९|२४३-२४७ ।

मनुष्यो भयेनैव स्वधर्मं परिपालयते, स्वीयं सामान्यहितं साधयितुं पुनः स्वभावेनैव यतते, अर्थादस्य स्वीयहितस्थापनायां यः प्रयत्नः सः स्वाभाविक एव । या च स्वधर्मपरिपालनेहा सा पुनः भयकृता । व्यक्तित्वस्य व्याख्याया अपि य प्रकारः सोऽपि दोषपूर्ण एव । व्यक्तिराज्यसमाजानां पारस्परिकसम्बन्धस्थापनायामपि नैतिक-क्षमतायाः स्थाने भयस्यैव प्रधानता स्वीकृता । दण्डशक्तेरपरिमितक्षमताया विकाशोऽ-भूदावश्यकः । समाजस्य व्यक्तेर्वा स्थाने धर्मशास्त्रस्थापना एव दण्डविधेरुद्देश्यतां ययौ । अर्थात् समाजस्य व्यक्तेर्वा स्थापनामनपेक्ष्य धर्मस्थापनामेवोद्दिश्य दण्डः प्रत्यतिष्ठद् यो धर्मः पूर्वतः प्रतिष्ठितः । समाजो व्यक्तिर्वा कोऽपि तत्र परिवर्तनं कर्तुं नालम् । एतस्यैष परिणामः यत्पुरुषः प्राकृतिकक्षमतानुसारेणात्मानं विकाशयन् निश्चितायां रूपरेखायामाबद्धः । नैतिकता स्थापनाया अपि दण्डशक्तिर्भयञ्च द्वय-मेतदाधारः मतम् । मात्स्यन्यायेन दण्डशक्त्या च व्यक्तेर्नैतिकी क्षमता समापिता । व्यक्तित्वस्य यादृशं चित्रणं लभ्यते तत्र नास्ति स्थानं व्यक्तेरान्तरिक्याः क्षमताया आन्तरिक्या प्रेरणाया वा । व्यक्तौ केचन पवित्रतमा भावा अपि, ये व्यक्तित्वं संघटयन्ति परं तेषु न अवहितं विचारकैः । मनुष्यस्वभावस्य भयमूलकत्वेऽभ्युप-गम्यमाने सहकारिताभावस्य उच्छेद एव यो न मनुष्यस्वभावस्यैव योऽखिलाया अपि भारतीयसंस्कृतेराधारः ।

एतास्वापत्तिषु कानिचित् तथ्यान्यपि निहितानि परमेकदेशीयानि । मानव-स्वभावो मूलतः सत्यपि पवित्रे वातावरणादिवशेन उद्‌भवन्तीनामत एवासहजानां दुष्प्रवृत्तीनां नियमनमेव दण्डस्योद्देश्यम् । व्यक्तिविशेषे सहजाः सात्विकाश्च गुणाः सम्भवन्ति परं नाखिले समाजे । समाजो हि गुणयुतानां दोषयुतानाञ्च व्यक्तीनां समूहः नहि अस्य समेऽपि घटकाः निर्दोषा लभ्याः । समाजे शिष्टानां परिरक्षणं दुष्टानां दुष्टप्रवृत्तीनां वां दमनञ्च अपेक्ष्येते । द्वयमपि एतद् दण्डेन सम्पाद्यते । इत्थं व्यक्तेरात्मप्रेरणा सहजा विशुद्धा च प्रवृत्तिर्वा नोपेक्षिता । सत्यमेतद् यदुत्तर-काले व्यक्तित्वस्य समाजिकी स्थापना अवश्यमभूद् दोषयुता । अस्य च प्रभावः दण्डस्योद्देश्येऽपि परिलक्ष्यते । वर्गीयया विषमतया दण्ड एकांगीयतां नीतः । जन्मानुसारेण समाजो विविधेषु वर्गेषु विभागं व्यवस्थापितः । एतेन समाजस्य राज्यस्य चाखण्डता उदद्दिद्यत । सामान्येच्छाप्रभृतीनि तथ्यानि वर्गीयतां ययुर्व्याख्या-तानि वा वर्गीयदृष्ट्या । एवं स्थिते केषाञ्चित् कृते विनयः केषाञ्चिच्च भयं दण्डस्याधारः, परमेतस्य तात्कालिक्या सामाजिक्या सम्बन्धः । दण्डः साधनं स हि समाजेन अभ्युपगतानां विधीनां परिरक्षार्थं प्रयुज्यते, न त्वसौ विधीनेतान् संशोधयितुमलम्, यथास्थित एव विधयो दण्डेन संरक्ष्यन्ते न तु परिवर्त्यन्त इति

यावत् । अतो दण्डस्य मुख्यमुद्देश्यं सामाजिकं कल्याणमेव अभ्युपगन्तव्यम् । दण्ड-व्यवस्थायां परिलक्ष्यमाणाया वर्गीयविषमतायाः समाज एवोत्तरदायी ।

वस्तुतः दुष्प्रवृत्तीनां दमनम्, शिक्षणम्, सहजानां सात्त्विकानां गुणानां स्थापनञ्च त्रयमेद् दण्डस्य वास्तविकमुद्देश्यम् । प्रायश्चित्ताचरणम्, स्वयं पापस्य कथनञ्च न मानवीयस्वभावस्य भयद्वेषेर्ष्यायुक्ततायां साधकम् । यदि प्रतिशोधभावना दमनञ्च द्वयमेवेदं दण्डस्य मूलमभविष्यत्तदा उक्ता आक्षेपा औचित्यमयास्यन् । परं दण्डस्य सार्वाङ्गिकविवेचनस्य तदेकमङ्गम्, यथा समाजस्यैकमङ्गं जडमतयः, अतो न तत्रैव दण्डः प्रतिष्ठितः ।

गौतमीयेन सूत्रेण विषयोऽयं प्रकाशमायाति । शास्त्रेषु निष्णाते पुरुषे इन्द्रिय-दौर्बल्यवशेन स्वमार्गाच्च्युतौ निर्वेद उद्भवति । आचार्यस्तस्मै प्रायश्चित्तमुपदिशति । यदि च स आचार्योक्तं प्रायश्चित्तं नानुतिष्ठति तदा राज्येन व्यवस्थाप्यते तस्य दण्डः । अत्र निर्वेदः, प्रायश्चित्तम्, राजसभीयो न्यायः, त्रयमिदमवधेयमस्ति । स्वाभाविकानां कर्मणां संस्काराणाञ्च प्रतिकूलमाचरणे एव निर्वेदो जायते । अतो द्वेषेर्ष्याप्रभृतयो भावा न स्वाभाविका अभ्युपगन्तुं शक्याः । अत एव सर्वप्रथमं प्रायश्चित्तं विहितम्, यस्य सम्बन्ध आन्तरिक्या वृत्या सह । यदि य नानुतिष्ठेत् स्वकर्माणि तदा राजदण्डभयमावश्यकम् । अतो भयं न दण्डस्य मूलभूतमाधारोऽपि तु परिस्थितिविशेषे आवश्यकं साधनतया अपेक्ष्यते तदपि च व्यक्तिविशेष-स्वभावानुसारेण । जातिदण्डयोः सम्बन्धस्य विवेचने इदं ध्येयं समाजे जातेर्य आधारोऽभ्युपगतो दण्डस्तस्य कार्यान्वयनं करोति, न तत्र स्वीया काचिच्छक्तिरर्थान्न स स्वयं प्रवर्तितुमलमपि तु स्वप्रतिष्ठार्थं दण्डमपेक्षते ।

## राज्यम्

मनुष्यो यस्य समाजस्य सामाजिकसंघटनस्य वा सदस्यस्तदीयनियमान् परिपालयन्नेवासौ स्वीयं स्वातन्त्र्यं स्वकीयानधिकारान् आत्मानं च रक्षितुं प्रभवति । सामाजिकानां नियमानां परिपालने ईदृशाऽप्यवसराः समायन्ति यदा काचन विशिष्टा शक्तिरपेक्ष्यते या नियमानामेतेषां सुरक्षायां स्यात् समर्था । राज्यं दण्डश्चेदृश्यौ शक्ती ये समाजस्य व्यक्तेश्च कल्याणायैव । वंशानुगतानां कारणान्तरवशेन वा दास्यं यातानां दासानामपि भवन्ति सामाजिका नियमाः यानतिवर्तितुं न क्षमन्ते ते । राज्यस्य दण्डशक्तिर्हि न तेषां नियमानामौचित्यं विवेचयति नापि तत्र तस्या अधिकारोऽपि तु तेषां परिपालनस्यैवोत्तरदायिनी । अस्यामवस्थायां राज्यशक्तेरव-हेलनं द्रोहः । अतः सामाजिकानां विधीनां पालनार्थं दण्डशक्तेः प्रयोगे राज्यमधिकारि मतम् ।

व्यक्तिराज्यसमाजानामेवंविधेऽन्योन्याश्रयेऽभ्युपगम्यमाने एषोऽपि प्रश्न उदेति यद् व्यक्तिः किमिति स्वीयं वैयक्तिकं स्वातन्त्र्यमाहत्य राजकीयान् दण्डशक्तिमाद्रियेत। अस्योत्तरमपि स्फुटमेव यदसौ स्वकीयान् कर्तव्यानुगतान् कर्तव्यनिष्ठान् वाधिकारानुपलब्धुं यस्य समाजस्य संघटनस्य वा सदस्यतामाससाद, अनिवार्यस्तदीयानां नियमानानां स्वीकारः। अत्र यदीदं विचार्येति यद् व्यक्तिः, समाजस्य सामाजिकसंघटनस्य वा सदस्यतामेव किमर्थं यातीति तदा समस्याया अस्या समाहितिरनायासत एव शक्या। स्पष्टं यत्कर्त्तव्यानुरोधेनैव मनुष्यस्याधिकारा भवन्ति सुरक्षिताः। एतदर्थमेव स सामाजिकसंघटनविशेषस्य सदस्यो भवति। व्यक्तेः समाजस्य पारस्परिकस्य सम्बन्धस्य विकाशः न केवलं सम्प्रभुतायाः प्रशासनस्यैव वोद्भावकः अपि तु नैतिकताया आधारशिलामपि दृढयति। परं दण्डशक्तिर्न नैतिकतात्मके आवरणे विलयं याति। राज्यमात्मप्रभावप्रभृतीन् सामान्यान् नियमान् अनाहत्य व्यक्तेः कर्त्तव्यपरिपालने दण्डशक्तिमावश्यकीं मन्यते। समाजे मद्यपानस्य निषेधे कस्यचित् तान्त्रिकविशेषस्य आत्मप्रेरणानुसारेण न मद्यपानमनुमन्यते राज्येनापि तु तत्रापि दण्डः प्रयुज्यते। राज्यस्य हि एषोऽधिकारः तावदवतिष्ठते यावत् समाजः तान्त्रिकस्य मद्यपानमपवादतया वैधं नोद्घोषयति। समाजेन तांत्रिकीयस्य मद्यपानस्य वैधतायामभ्युपगतायामपि राज्येन एतन्निरीक्षणीयं प्रयतनीयं वा यत्तान्त्रिकभूमिकामाश्रित्य सामान्यो नागरिको मा पात् मद्यम्।

**व्यक्तिः समाजश्च**

वेदेभ्यः स्मृतिर्यावद् या स्थितिर्विकशिता तत्र वर्णव्यवस्थानुसारेण दण्डव्यवस्था प्रकल्पिता। परं साऽपि सामाजिकीं वैयक्तिकीं च सुरक्षामुद्दिश्यैव। व्यक्तिसमाजयोः समन्वये एष संरक्षणसिद्धान्तोऽभूत समाजाश्रितः सामाजिके संरक्षणे एव व्यक्तेः संरक्षणं मतम्। मनुना कालिदासेन चैष सुरक्षामूलको दण्डोऽभ्युपगतः[1]। तौ हि आमयव्यभिचाराभ्यां समाजस्य सुरक्षामावश्यकीं मन्वाते। तन्मतानुसारं समाजत एव वैयक्तिको विकाशः सम्भवति। मनुष्यं न्याय्ये मार्गे प्रतिष्ठापयितुं दण्डः प्रयुज्यत इति महाभारते। सामाजिककल्याणसम्पादनार्थं व्यक्तेर्वैयक्तिकानि हितानि शक्यन्ते नियमयितुम्। सामाजिकीं सुरक्षामभिसंधायैव मृत्युदण्डोऽन्यविधः, शारीरिको दण्डो वा व्यवस्थापितः; अन्यथा एकस्य व्यक्तिविशेषस्य दुर्वृत्तेः प्रभावः समग्रं समाजं दूषयति अर्थात्समाजस्य सदस्यान्तराण्यपि दुराचारे प्रवर्तयति। यस्य सदस्यस्य नात्र विश्वासः स समाजाद् बहिष्क्रियते। आवश्यकतानुसारेण कठोरं दण्डमपि भजते। एवंविधान् सामाजिकीं सुरक्षामुद्दिश्य प्रयुज्यमाने दण्डे उपेक्ष्यते अपराधी व्यक्ति-

---

1. मनु. ८।१२२; रघु. १।२५।

विशेषस्य सुरक्षामविगणय्य दण्डः सामाजिकसुरक्षानुरोधेनैव प्रवर्तते । यो विधिमतिक्रम्य प्रजायां संप्रवर्तते, नृपः सामभेदाद्यैरुपायैरेतानि शमयेत्[1] । कुलानि जातीः श्रेणीः गणान् जानपदान् स्वधर्माच्चलितान् राजा पथि विनीय स्थापयेत्[2] । अत्र शङ्खलिखितौ[3]–

"राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम् ।
स्थिते राजनि तद्धर्मे दुराचारान्न कुर्वते ॥"

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः । तयोश्चतुर्विधस्य मनुष्यजातस्यान्तः संज्ञानां चलनपतनसर्पिणामायत्तं जीवनम् । प्रसूतिरक्षणमसंस्करो धर्मः[4] । त्रयो वर्णा ब्राह्मणस्य निदेशे वर्तेरन् । ब्राह्मणो धर्मान् प्रब्रूयात् । राजा चानुशिष्यात्[5] । यथा यमः[6]

यत्किञ्चित्कुरुते राजा शुभं वा यदि वाऽशुभम् ।
भृत्यास्तदनुकुर्वन्ति नर्तक्यो नर्तनं यथा ॥
तस्मात् पौराणिकान् धर्मान् निपुणैर्मन्त्रिभिः सह ।
प्रशिष्याद् भूपतिः सम्यग् ब्रह्मक्षत्रविवृद्धये ॥

निग्रहानुग्रहपालनेषु सर्वेषामुन्मया।दनां मर्यादाभेदिनां परदारपरद्रव्यापहारिणां राजा शास्ता भवति, इति हारीतः । शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विपन्नानां शास्ता निर्वेशमुपदिशेद्यथाकर्म यथोक्तम् । तस्य चेच्छास्त्रमतिवर्तेरन् राजानं गमयेत् । राजापुरोहितं धर्मार्थकुशलम् । स ब्राह्मणान् नियुञ्ज्यात् । बलविशेषेण परदास्यवर्जं नियमैरुपशोधयेत् । इतरेषां वर्णानामाप्राणवियोगात् समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत्[7] । पुरुषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः । अनुज्ञानं वा वेदवित् समवायवचनात्[8] । अपराधानुरूपं च दण्डं दण्ड्येषु च पातयेत् । सम्यग्दण्डप्रणयनं कुर्यात् । द्वितीयेऽपराधे न स कस्यचित् क्षमेत ।-स्वधर्ममपालयन् नादण्ड्यो नामास्ति राज्ञः[9] । यथैवापराधं ज्ञात्वा तदपेक्षया दण्डप्रकल्पनं तथैव च देशकालाद्यपेक्षदायीत्यभिप्रायः[10] ।

---

1. बृह. २९।१५ ।
2. याज्ञ. १।३६१; नारद. २०।५-६; ना. म. सं. १९।५-६ ।
3. कृत्यकल्पतरुः, व्यवहारकाण्डम्, प्रकीर्णकम् पृ. ७७६; मनु. ९।२७३; ८।४१०, ४१८ ।
4. गौ. ८।१-३ ।
5. वसिष्ठ. १।४८-४२ ।
6. कृत्यकल्पतरुः, व्य. का. ७७६; वि. र. ६२५ ।
7. आप. २।१०, १३-१६; २।११।१ ।
8. गौ. १२।४८-४९ ।
9. विष्णु. ३।९१-९४; याज्ञ. ५।१९०; मनु. ७।१६; वसिष्ठ. १९।६ ।
10. मनु. ७।१२३, १३०; बृह. २९।२; ९।१२-१३ ।

अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतिशील-शौचाचारवन्तश्च । एते हि धर्मप्रतिकरा राज्ञः । स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं नियच्छेत्[1] इति शङ्खलिखितौ ।

शिल्पिनः कारव शूद्रास्तेषां व्यभिचारेष्वपि शिल्पोपकरणानि रक्षेद्राजा । तुलमानप्रतिमानसमुत्थानि वणिक्पथानाम् । क्षेत्रबीजभक्तगोशकटकर्षणद्रव्याणि कर्ष-काणाम् । वाद्यभाण्डालङ्कारवासांसि रङ्गोपजीविनाम् । गृहशयनालङ्कारवासांसि वेश्यानाम् । शस्त्राणि चायुधोपजीविनाम् । सर्वेषां कारणद्रव्याणि नाऽहार्याणि राज्ञा धार्मिकेण । अस्वा हि पुरुषाः पापबहुलाश्चाऽविधेयाश्च भवन्ति । तेषां पापांश-भाग्राजा । तस्मान्नाऽधनान्नाऽनुपकरणान् कुर्यात् । तन्मूला हि वृत्तिः । वृत्तिमूलो निवासः । तैर्निवसद्भि स्फीतं राष्ट्रमित्युच्यते[2] । एवं प्रतिफलदानेन शुल्कान्तरप्रदान-मात्रेण वा नापराधिनो मुक्तिः शक्या । तदीय प्रवृत्तेरुच्छेद एव मुख्य उद्देश्यः । तस्मिन् सत्येव सामाजिकस्य कल्याणस्य सम्भवः । एवं स्थिते व्यक्तेः समाजस्य सुरक्षार्थं राज्यमावश्यकम् । अत एव व्यक्तेः कुटुम्बस्य वा परित्यागेनापि राज्यं परिरक्षणीयमिति महाभारते उक्तम् । अस्यां स्थितौ व्यक्तेः समाजस्य च संरक्षायै राज्येन दण्डः शक्यते प्रयोक्तुम् । राज्यस्य घटकान्तरेषु शिथिलतायाः केन्द्रियतावादि-स्थितिश्च विकासेन सह राज्यस्य सार्वभौमशक्तेरपि भवति विकाशः । अशोकस्य धर्मविजयेन राज्यस्य सार्वभौमशक्तिः हर्षकालं यावद् विकशन्त्यासीत् । कौटल्यतो नीतिग्रन्थान् यावद् "राजा राज्यमिति प्रकृतिसंक्षेपः" इत्येतस्य सिद्धान्तस्यापि अभविष्यद् विकाशो यदि तेन विधायिकायाः शक्तेः साहाय्यमलप्स्यत । अधिनायकवादोऽपि जनकल्याणोद्देशेनैव विकशति परं प्राचीनकाले राज्यस्य दण्डशक्तिरासीत् सामाजिकविधेः परा ।

**राज्यस्य "यद्भाव्यं" नीतिः**

व्यक्तेः स्वीयस्य स्वभावस्य, गुणानां रुचेर्वा अभिव्यञ्जने तावदेव राज्येनाधिकारं प्रदेयः यावदन्येषां नागरिकाणां राज्यस्य वा क्षतिर्माभूदित्येषैव राज्यस्य यद्भाव्यं नीतिरुच्यते । परं राज्यस्य दण्डसिद्धान्तेनास्याः विरोधः[3] । भारतीयया अहिंसानीत्या नीतेरस्या एकवाक्यता शक्यतां नाम परं न दण्डसिद्धान्तेन । महाभारते मानव-सम्प्रदायविचारप्रसंगे लिखितं न कश्चिदपि परस्परस्य अर्थादिकोऽन्यस्य स्वतन्त्रतायां हस्तक्षेपे प्रभवति । परमेष सिद्धान्तोऽग्रे एव अव्यवहार्य उक्तः । न हि एवं रीत्या विश्वस्य व्यवस्था सम्भवति । यद्यपि कदाचिदनपराधोऽपि दण्डं भजते परमेतावता

---

1. बृह. ९।१७ ।
2. शङ्खलिखितौ, वि. र. पृ. ६५६ ।
3. Brown, Underlying Principles of Legislation, pp. 178-179.

नोक्तः सामान्यः सिद्धान्तः शक्यो व्यवस्थापयितुम् । यद्यपि दण्डस्य यानि साधनानि न तान्यतीवो विश्वसनीयानीति दण्डो न सवर्था निर्दोषः पवित्रो वा परं स यथा स्यात् पवित्रो निर्दोषश्च तथा प्रयस्यते ।

दययोद्भावितैर्गुणैः समन्वयः शक्यः परं व्यवहारदशायां राजा कथङ्कारमेवं कर्तुं शक्नोतीति प्रश्न उत्थापितः शुक्रेण । महाभारते एतद्विषये यत्किमपि उल्लिखितं तदहिंसां यद्भाव्यं नीतिञ्चाभिप्रेत्य सामान्येन रूपेण । एवंस्थिते राज्यसंरक्षणं "यद्भाव्यं नीतिश्च" समन्वयं यातः । परमस्या धारणायास्स्थाने राज्यमासीत् सक्रियं साधनम्, अपैक्षत च व्यवहारकाले समाजीयं साहाय्यम् । सार्वजनिकानां स्थानानां सुरक्षायै राजपुरुषाः समाजस्यापि सहयोगोऽपेक्षन्ते । अपराधीव अपराधाचरणे तत्सहायकोऽपि समानं दण्ड्यते स्म । वातावरणशोधनार्थं राज्यं कूटनीतिमपि आश्रयितुं शक्नोति । मनुरेतद्विषये कण्टकेन कण्टकस्य शोधनं समर्थयते । अपराधी यस्य संघटनस्य, कुटुम्बस्य जातेर्वा सदस्यस्तेषां समेषामपि नियन्त्रणं राज्येन विधीयते । धर्मं यथोचितमपरिपालयन् तेन (धर्मेण) अनुचितं लाभमासादयन् वा शक्यते राज्येन दण्डयितुम्[1] । हस्तरेखापेक्षकाः, चिकित्सिकाः, शिल्पिनः, तान्त्रिकाः, अमंगलानागतविषयकवाण्या अर्थमर्जयन्तो ज्यौतिषकाश्च उत्कोचशीलमद्यपद्यूत-शीलादिवर्गे गणिता । तत्र तन्त्रादिकमतिवैयक्तिकं कथितम् । परं सामाजिक-कल्याणाय तत्रापि हस्तक्षेपे राज्यं प्रभवति । इत्थं राज्यस्य विधिनियन्त्रितं कल्याण-कारिस्वरूपमुल्लसति ।

राज्यं सामाजिकीनामावश्यकतानां पूर्त्तेः साधनं दण्डश्च राज्यस्य । अतो राज्यं दण्डप्रयोगे समाजमप्यपेक्षते । सार्वजनिकानां स्थानानां सुरक्षायै राज्येन राज-पुरुषाश्चराश्चापि नियुज्यन्ते । अपराधिनो मनागपि प्रोत्साहको राज्ये दण्डनीयः यतो विशुद्धवातावरणनिर्माणमेतस्य कर्त्तव्यम् । अत्र चावश्यकतानुसारं कूटनीते-रप्यवलम्बनं वैधम् । प्राचीनभारते पुरुषः तत्तत्कुलजातिसंघटनादिसदस्यत्वेन दण्डक्षेत्रे उपतिष्ठते, न व्यक्तिगततया । अपराधिनोऽपराधस्य न केवलस्य एवोत्तरदायी अपि तु ते सर्व एव तत्रोत्तरदायिनो मता यैर्यैस्तस्य सम्बन्धः । अत एवापराधिना समं तत्सम्बद्धोऽपि शक्यते दण्डयितुम् । यद्यपि धार्मिकेषु विषयेषु हस्तक्षेपे नाधिकारो राज्यस्य तथा धर्मं यथोचितमपरिपालयन्तस्ततोऽन्याय्यं लाभ-मासादयन्तो वा राजकीयया दण्डशक्त्या आबद्ध्यन्त एव ।

अपराधानां गवेषणं हि राज्यस्य कर्त्तव्यम् । एतद्धि गुप्तचरद्वारा प्रत्यक्षान-प्रत्यक्षांश्च चोरानुन्मूलयति स्म । मनुना प्रत्यक्षाप्रत्यक्षयोः या व्याख्या प्रस्तुता तत्र धार्मिकाः, राजनीतिकाः, सामाजिकाश्च अपराधिनः संगृह्यन्ते । उत्कोचद्यूतपुरार्थ-

1. मनु. ९।२६४-२७४; याज्ञ. २।२८०-२८१; कौ. ४।४ ।

शालैस्समं लोककण्टकेष्वपि राज्येण विशेषतः सावहितेन भवितव्यम् । धर्मं जीविका-साधनत्वेनैव प्रयुञ्जानां दण्डनं राज्यस्य प्रथमं कर्तव्यं मतम् । यतो हि एतेन धार्मिकी अवस्था सामाजिकी वञ्चना च विकशतः । हस्तरेखाप्रेक्षणेन, चिकित्सया, तान्त्रिकचमत्कारेण वा वञ्चयन्तः प्रकाशवञ्चकाः कथिताः । ब्राह्मणविशधारणादिना भाविनोऽमंगलादेर्भयोद्भावनेन वा धनमर्जयन्तो दण्डनीयाः । अत्र तन्त्रादिका विषया मनोः पूर्वं पूर्णतया व्यक्तिगता आसन्, न तत्र हस्तक्षेपे राज्यस्याधिकारः । परं राज्यस्य कल्याणकारिस्वरूपेण समं तदीया दण्डशक्तिरपि विकाशमायाता । अस्यां स्थितौ समाजस्य सदस्यान्तराणां स्वतन्त्रतां सुरक्षाञ्चानुरुध्यैव व्यक्तेः स्वतन्त्रता प्रत्यतिष्ठत् । अतो राज्येन व्यक्तिरसामाजिकानि कार्याणि, तान्यतिवैयक्तिकान्येव किन्न स्युः, दण्डशक्त्या शक्यानि नियन्त्रयितुम् । तेषां समाजद्वारा नियतकर्मसु योजनं राज्यस्य कर्त्तव्यम् । तच्च दण्डेनैव स्म्भवतीति मतं मनोः ।

शान्तेः सुव्यवस्थायाश्च स्थापनं राज्यस्योद्देश्यम् । तत्र व्यक्तेः समाजस्य चोभयोरपि साहाय्यमपेक्ष्यते । यद्यपि व्यक्तिसमाजावपि अत्रोत्तरदायिनौ तथापि मुख्यमुत्तरदायि राज्यम् । अतस्तद्यथासम्भवोक्तोद्देश्यस्य सम्पालने प्रयतेत । प्रकाशा-प्रकाशयोः उभयविधयोरपि स्तेनयोर्गवेषणं दण्डनञ्च राज्यस्य प्रमुखं कार्यम् । राजा हि चारचक्षुरुक्तः । अतोऽसौ विभिन्नेषु सामजिकेषु वैयक्तिकेषु च स्थानेषु चारान् नियुज्य सामाजिकानि शल्यान्युद्धरेत् । अत्र कार्ये प्रागाचरतिचौर्याणामर्थात् प्राक्तनानां चोराणामपि साहाय्यं ग्राह्यम् । अत्र विषये कण्टकेन कण्टकशोधन-मित्येतां नीतिमाद्रियते मनुः । आवश्यकतानुसारं चोरेष्वाक्रमणं तत्सम्बन्धिनां वधश्चापि कर्त्तुं शक्येते । कार्येऽस्मिन् राज्यस्य साहाय्यमनाचरन्तः सामाजिकाः सदस्यापि शक्याः दण्डयितुम् । विचारानिमान् याज्ञवल्क्यादयोऽपि समर्थयन्ते । चोरस्य गवेषणदण्डनाद्यपेक्षया हिंसकस्य अन्वेषणं दण्डनञ्च राज्यस्य महत्त्वपूर्ण-कर्त्तव्यं मतम् । अर्थाच्चोरापेक्षया हिंसके राज्येनाधिकं सावहितेन भवितव्यम् । एतद्विषये कौटल्येन आशुमृतकपरीक्षादेर्व्यवस्था विस्तरेण वर्णिता ।

पाश्चात्त्येषु देशेषु व्यक्तिवादिविचारधारायामुदितायां "यद्भाव्यं नीतेः" प्रसार आरब्धः । तत्र च राज्यं एका तटस्था संस्थाभ्युपगतम् । यद्भाव्यं नीतेरेषोऽर्थः यद् व्यक्तिः तावत् स्वीयं स्वभावम्, गुणम्, रुचिं वाभिव्यङ्क्तुं पूर्णतया स्वतन्त्रा यावत् परहितं न बाध्येत । सिद्धान्तोऽयं राज्यस्य संरक्षणविषयकसिद्धान्तस्य विरोधी । नियन्त्रणे प्रवृत्तेन राज्येन "यद्भाव्यं नीते" राश्रयणमशक्यम् । दण्डव्यवस्थया समं सिद्धान्तस्यास्य सम्बन्धे स्वीक्रियमाणे एष प्रश्न उदेति यत् किं दण्डप्रयोग उचितः? यतो दण्डसिद्धान्तस्य "यद्भाव्यं नीत्या" सार्वांशिको विरोधः । यथा हि उक्तं

भारतीयेऽहिंसासिद्धान्ते "यद्भाव्यं नीतेः" समावेशो भवतु नाम परं दण्डव्यवस्थायां न तस्या आदर इति।

महाभारते वैयक्तिकः स्वतन्त्रता समर्थनावसर उक्तं यदि यत्कश्चिदपि कस्यापि स्वातन्त्र्ये हस्तक्षेपे न प्रभवति। परं मनुमतत्वेनोपस्थाप्यमानोऽयं पक्षः अव्यवहार्यो मतो यत एतत् सिद्धान्तानुसरणे विश्वस्य व्यवस्थैव भज्येत। बहव ईदृशा येऽसत्यपि अपराधे दण्ड्यन्ते, म्रियन्ते चापि, परमेतेन सहैतदपि सत्यं यदधिकतमा यथापराध-मुचितं दण्ड्यन्ते। दण्डस्य हि साधनानि न सर्वथा विश्वसनीयानि अत एतस्य दण्डस्य न कदापि सर्वथा निर्दोषता, पवित्रता, पूर्णता वा सम्भवति।

यथैष पूर्णः निर्दोषश्च स्यात् तथा यथासम्भवं प्रयस्यत इति तु सत्यम्। अत एव अन्याय्यो दण्डो महन्निन्द्यते। कदाचिदनागसः, पवित्राश्चापि पुरुषा अपराधिनः सिध्यन्ति। शुक्रेण प्रश्न एष उत्थापितः। स हि लिखति दयोद्भावितैर्गुणैः समं दण्डसिद्धान्तस्य समन्वयः शक्यते कर्तुम् परं व्यवहारदशायां कथमेवं कर्तुं शक्नोति राजा। समस्याया एतस्याः समाहितिः तदैव शक्या यदि धर्मेणाहिंसया च समं दण्डसंहिता विधीयेत। विषयमिमं स्फुटीकुर्वन् महाभारतकारो लिखति यद्यहिंसा-श्रयणेन दण्डो व्यवस्थाप्येत न तदा कदापि अनागसा स्यादेष भोक्तव्यः। अस्यां स्थितावेव राज्यसंरक्षणस्य यद्भाव्यं नीतेश्च परस्परेण समन्वयः शक्यः। भरतीयदण्डव्यवस्थायां राज्यं न तटस्थः परन्तु क्रियाशीलं सकारात्मकं साधनम्।

राज्यस्य संरक्षणसिद्धान्तस्य सममेतदप्यावश्यकं यद् राज्यं केवलं शुल्कसंग्राहिका संस्था मा भूत्। यथा नियमाः परिपाल्येरन् तथा सर्वतो यतितव्यं तेन। आर्थिकेन शुल्केन अन्यविधेन वा प्रतिफलेनापराधिनो मुक्तिर्न सम्भवति, यो नियमानतिवर्तते। यत आर्थिकादिशुल्कप्रदानेऽपि तदीया सामाजिकहितध्वंसिका दुष्प्रवृत्तिस्तु तदवस्था तिष्ठत्येव। अतस्सामाजिककल्याणार्थं महत्तमं दण्डं प्रयुज्य तस्य एषा प्रवृत्ति-रुच्छेद्या। एवं स्थिते राज्यं संरक्षणद्वारा व्यक्तिसमाजयोरुभयोरपि दण्डनस्याधिकार-मासादयति। राज्यस्य घटकान्तरेषु यथा-यथा शिथिलतायाः केन्द्रीयवादिविचारधारा-याश्च विकासः तथा-तथा राज्यस्य दण्डशक्तिरपि एवं विकासमायाति येन समाजस्य व्यक्तेश्च स्वतन्त्रमस्तित्वं तिरोधाप्यते।

अपराधस्य विभिन्नैः पक्षैः राज्यस्य सम्बन्धाः। अपराधानां तादृशानां कार्याणां च, यैस्ततो विच्युतिः शक्या, घोषणा अपराधैस्ततो विमुक्तिभिश्च दण्डस्य तुलना अपराधिनो दण्डव्यवस्था च सर्वमेतद् राज्यस्यैव कार्यम्। तत्राद्ययोर्द्वयोर्विधि-निर्माणेन विधिघोषणया वा सम्बन्धः, अन्तिमस्य कार्यस्य क्षेत्रेण। अपराधविषयक-न्याये प्रशासने च या आधुनिकानां जिज्ञासाः तासां समाधानं प्राचीनभारतेऽ-परिपश्यन्तः। आधुनिका विद्वान्सः प्राचीनभारते दण्डसंहिता नासीदेवेति प्रायेण

विश्वसन्ति । परम् एडवर्डतृतीयकाले इंग्लैण्डदेशे एवंविधा व्यवस्थासीत् यद् व्यवहारस्य दण्डविधेश्च सीमाविभाजनं अशक्यमासीत् । अद्यापि तन्न दृश्यते । बहव एवंविधा विषया एषां द्वाभ्यामपि सम्बन्धः । एतस्य विषयस्य पर्यालोचनार्थं भारतीया नैतिकता, समाजरचना, अथ च राज्येन तयोः सम्बन्धश्चेत्यादेरालोचन-मावश्यकम् । इत्थं राज्यमपराधनिवृत्तेः, अपराधिनो दुष्प्रवृत्तीनां शोधनस्य, तत्र कार्यक्षमतासम्पादनस्य आवश्यकतानुसारं दमनद्वारा समाजे नैतिकताया विकाशस्य च साधनमासीत् । एतेन नैतद् वक्तुं शक्यं यन्नागरिकजीवनध्वंसे राज्येन न दृष्टिर्दत्ता ।

भारतीयैरपराधशास्त्रिभिर्व्यवहारापराधविध्योः भेदः आस्थितमिति मतं डा. पी. के सेनस्य । अपराधः कियल्लोकोद्वेजक इति लोकोद्वेजकृतमेवापराधस्य तारतम्यं तैरभ्युपगम्यते स्म । राजा दण्डद्वारा सामाजिकानि कल्याणि स्थापयेत् कुर्याच्च विधेः कार्यान्वयनमिति तेषां दर्शनमासीत् । तत्र नासीत् प्रतिशोधभावना । अद्यतनेन दण्डविधानेन भारतीयशास्त्राणां सार्वाङ्गिकी तुलना शक्यते कर्तुम् । परमङ्गच्छेद-प्रभृतिव्यवस्थानामद्यतनदण्डविधानानुसारेण समर्थनं दुष्करमिति सत्यम्, वस्तुतोऽ-द्यापि नैतासां व्यवस्थानां लोपः । अष्टादशशताब्दीं यावत्तु आसीदेव एतासां प्रचुरः प्रयोगः । भारते ईदृशा दण्डाः क्लेशदण्डाः कथितास्तेषामपि चोद्देश्यं सामाजिक-कल्याणमेव ।

केवलो राज्यशक्तिभङ्ग एव दण्डापराधविधेर्नाधारः । विवादारम्भे स राज्य-कर्मचारी वा स्यात् पीडितो वा स्यात् स्वयं नैतद् व्यवहारविधिदण्डापराध-विध्योर्विभाजने मूलम् । राजा जनेभ्यः पीडिताद्वा अपराधं परिजानीयात् । दण्डापराधविधिर्मनुष्यस्य प्रतिशोधभावनामाश्रित्य व्यवतिष्ठते । यदि न्यायः क्रियते तदा पीडितो यथा-कथञ्चित् तं पश्यत्येव । अद्यत्वे यादृशी राजपुरुषव्यवस्था तस्या अभावे एतदावश्यकमासीत् । मेधातिथिमतानुसारमृणदानादिविषयकेषु विवादेषु उभौ पक्षौ स्वयं निर्णेतुं शक्नुतः, न तत्र राज्यस्य हस्तक्षेप उचितः । परं यद्येकः पक्षोऽपराध्यति तदा अपरपक्षेण कीदृश्यामपि व्यवस्थायां कृतायामपि अपराध-निर्णयार्थं राज्यस्य हस्तक्षेप आवश्यकः ।

बृहस्पतिना वादिकृतं विवादपदमुक्तम् । विषयमिमं प्रकीर्णके (यन्नृपाश्रितम्) प्रस्तुवन्नसौ लिखति "यद्यपि मनुष्यस्य मारणादिका व्यवहारा अपि राज्ञैवेक्ष्यन्ते तथापि ईदृशेषु व्यवहारेषु वादिप्रतिवादिभ्यामुपस्थापितानि साक्ष्याण्यालोच्य एकतरस्य पक्षस्यापराधित्वं निर्णीय तं दण्डयेद्राजा । दण्डो व्यवस्थाप्यो राज्ञा ।

लेखकेन नारदवचनमाश्रित्य वधचौर्यादिः ऋणादिभ्यः पार्थक्यं प्रतिपादितम्[1] । प्रथमस्तु चरेभ्यो लब्धां सूचनामाश्रित्यापि राज्ञा प्रतिविधेयम् । कौटल्येन तु धर्मस्थीयः, कण्टकशोधनम्, एतदाख्यौ द्वौ न्यायालयावेव पृथक्-पृथक् व्यवस्थापितौ । दाक्षिणात्ये चोलशिलालेखेऽप्येवंविधो न्यायालयविभाग उल्लिखितः, परं तदीयं विभाजनं तदीया न्यायालयाश्चापि नाधुनिकप्रकारकाः ।

सूत्रग्रन्थान् यावद् विधेः स्वायत्तीकरणव्यवस्था न दृश्यते । एतन्मूलं वैरयत्नम् वैदिककाले आरोपितमासीत् । एतदवश्यं यत्तस्य वैधानिकं स्वरूपं नासीत् । विषयेऽत्र आपस्तम्बबौधायनमते विचारणीये । आपस्तम्बः वैरयत्नतया एकस्या गोर्दानं निर्दिशति । परं मूलतः नैतत् स्फुटीभवति यदेषा गौः कस्मै देया, राज्ञे ब्राह्मणाय पीडिताय वा । टिप्पणीकृता मृतस्य तत्सम्बन्धिनो वा शत्रुत्वस्योन्मूलनं वैरयत्न-मित्यस्यार्थमुक्तः । एतदनुसारं गौः सम्बन्धिभ्यो दातुं शक्यते । बौधायनस्तु स्फुटमेव राज्ञे गोर्दानं व्यदधात् । पापनिवृत्यर्थमेकस्य वृषस्य विप्राय दानं निर्दिष्टं तेन । दण्डद्वारा इतरेषु प्रभावोद्भावनं मनोरभिमतम् । इतरे जना अपराधं मा चारिषुरित्येव 'प्रत्यदेश्यमित्यस्य तात्पर्यमुक्तं मन्वर्थविवृतौ । एतेन विवेचितेन स्फुटं यद्राज्यं समाजं विधिञ्च द्वारीकृत्यापराधनिवृत्तौ साधनमात्रम् ।

●

1. यद्यपि मनुष्यमारणादिव्यवहारा अपि नृपाश्रिता एवं तथापि तेषु वादिप्रतिवादिभ्यां स्वस्वपक्षेषु दर्शितेषु विचार्य तयोरेकतरस्यापराधिनः राज्ञानुशासनम् । प्रकीर्णके तु शिरोवादिनं विनापि चरादिमुखाद् वर्णाश्रमाणां दोषं श्रुत्वा विचार्य तेषां यथाविहितं दण्डं विधाय धर्म्ये पथि स्थापनमित्येवास्य तेभ्यो भेदः । दण्डविवेकः २५९ ।

# अध्यायः ११

## दायभागः

एकपत्नीव्रतं तु प्रशस्तम्,[1] परञ्च दृश्यते वेदेषु पुरुषाणां कृते बहुपत्नी व्यवस्था–"यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्माद् एको द्वे जाये विन्दते यन्नैका द्वयोर्यूपयोः परिव्ययति तस्मान्न द्वौ पती विन्दते" (तै. सं. ६।५।१।४)। "कल्याणीभिर्युवतिभिर्न मर्यः" (ऋक्. १०।३०।५)। "जनीरिव पतिरेकः समानः नि मामृजे पुर इन्द्रः सु सर्वाः" (ऋक् ७।२६।३)। "राजेव हि जनिभिः क्षेष्येवाऽव द्युभिः" (ऋक्. ७।१८।२)। "पतिर्जनीनाम्" (ऋक्. १।६६।८)। "क्षीरेण स्नातः कुयवस्य योषे हते ते स्याताम्" (ऋक्. १।१०४।३)। "मर्य इव युवतिभिः समर्षति" (ऋक्. ९।८६।१६)। "एवे द्यूने युवतयो नमन्त" (ऋक्. १०।४३।१)। "इन्द्रं जुषाणां जनयो नमन्तीः" (का. सं. ३६।६)। "मनोर्वै दश जाया आसन्" (मै. सं. १।५।६)।

परिवारस्तु रतिपुत्रफलवतीसंस्था। विवाहान्तरमेव परिवारस्योत्पत्तिरिति, ततो दायभागस्य समस्या। आपस्तम्बधर्मसूत्रे[2] श्रुतिरुद्धृता दायनियमनार्थम्–

श्रमस्य दायं विभजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः।
(ऋ. १०।११४।१०)

ददातु वीरं शतदायमुक्थ्यम् (ऋ. २।३२।४)।
मनुः पुत्रेभ्यो दायं व्यभजत् (तै. सं. ३।१।९।४)।
तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति (तै. सं. २।५।२।७)।

तथा च–

तस्माद्यः पुत्राणां दायं धनतममिवोपैति तं मन्यन्ते यमेवेदं भविष्यतीति।
(ताण्ड्य. १६।४।३-४)

न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम्।
(ऋक्. ३।३१।२)

न ब्राह्मणो हिंसितव्योऽग्निः प्रियतनोरिव।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः॥
(अथर्व. ५।१८।६)

---

1. जायापत्ये मधुमतीं वाचं वदतु शन्ति वाम् (अथर्व. ४।३०।२)।
इहेमाविन्द्र सं नुद चक्रवाकेव दम्पती (अथर्व. १४।२।६४)।
सम्मातपन्त्यभितः सपत्नीरिव पर्शवः (ऋ. १।१०४।८)।
2. आप. ध. सू. २।६।१४।११-१२।

उपेया दैवं मे दायं तेन वै त्वोपमन्त्रय इति ( ऐ. ब्रा. ३३।५ )।
एष वः कुशिका वीरो देवरातस्तमन्वित ।
युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि ॥
( ऐ. ब्रा. ३३।६ )

विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः[1] । पित्र्यस्येति पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणं सम्बन्धिमात्रेण सम्बन्धिमात्रधनविभागेऽपि दायभागपद-प्रयोगात्[2] । तत्र दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते (मिता.); असंसृष्ट विभजनीयं धनं दायः[3] । पैतृकस्यार्थस्य यत्र पुत्रैर्विभागः क्रियते, विवादपदं तद्दायभाग उच्यते[4] ।

दीयते इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः, मृतप्रव्रजितादि-स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात् । न तु मृतादीनां तत्र त्यागोऽस्ति । ततश्च पूर्वस्वामिसम्बन्धाधीनं ततस्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्दः[5] । अयञ्च दायो द्विविधः–सप्रतिबन्धोऽप्रतिबन्धश्च । यद् द्रव्यं स्वामिन-स्तत्पुत्रादेरप्यभावे भवति स सप्रतिबन्धो दायः । यथा पित्रादीनां पुत्रादिधनम् । यत्पुत्रपौत्रयोः पितृपितामहधनं जन्मन आरभ्य स्वं भवति सोऽप्रतिबन्धो दायः । तत्र स्वामितत्पुत्रसद्भावस्याप्रतिबन्धकत्वात्[6] ।

अतो जीवतोः पित्रोर्धने पुत्राणां स्वाम्यं नास्ति किं तूपरतयोरिति ज्ञापनार्थं मन्वादिवचनम् । एकः शब्दोऽपरश्चार्थः। न चोपरममात्रमेव विवक्षितं किन्तु पतित-प्रव्रजितत्वाद्युपलक्षयति स्वत्वविनाशहेतुसाम्यात्[7] । ते (जीमूतवाहनादयः) सर्वत्र सप्रतिबन्धस्यैव दायस्य सत्त्वात् रिक्थसंविभागयोर्भिदाभावात् पूर्वोक्तयुक्ति-विरोधान्मूर्खा एव । पातित्ये च प्रायश्चित्तानाचरण एव स्वत्वनाशो विभागानर्हता च । अन्यथा द्रव्यसाध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात् । स्वत्वं पदार्थान्तरमेवेति शिरोमणिभट्टाचार्याः । स्वमिति व्यवहारविषयत्वं शक्तिविशेषो वेत्यन्ये । तच्च स्वगम्यमिति केचित्[8]–स्वत्वं शास्त्रैकसमधिगम्यं वा ।

---

1. निघण्टुः, स्मृ. चं. २ पृ. २५५, व्य. म. पृ. ९३ ।
**पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत् ।**
**कथितं दायशब्देन तद्विभागोऽधुनोच्यते ॥**
**( स्मृ. सं., स्मृ. चं. २ पृ. २५५; व्य. म. पृ. ९३ )**
2. दायभागः १।३ ।
3. व्य. म. पृ. ९३ ।
4. ना. म. सं. १३।१ ।
5. दायभागः १।४-५; दायतत्त्व. पृ. १६१, १६३; व्य. प्र. पृ. ४११-१२ ।
6. मदन. व्य. ८९ ।
7. दायभागः १।३०-३१ पृ. १८ ।
8. व्य. प्र. पृ. ४२९ ।

अत्र **गौतमः**

**स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ।**
**ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः ॥**

**( १०।३९-४२ )**

तत्राप्रतिबन्धो दायो रिक्थम् । क्रयः प्रसिद्धः । संविभागः सप्रतिबन्धो दायः । परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकारः । अधिगमो निध्यादेः प्राप्तिः । अन्यत्र च–

**वर्तते यस्य यद्धस्ते तस्य स्वामी स एव न ।**
**अन्यस्वमन्यहस्ते तु चौर्याद्यैः किं न दृश्यते ॥**
**तस्माच्छास्त्रत एव स्यात्स्वाम्यं नानुभवादपि ।**
**अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ॥**
**विहितोऽर्थागमः शास्त्रे यथावर्णं पृथक्-पृथक् ।**
**... न च स्वमुच्यते तद्यत् स्वेच्छया विनियुज्यते ॥**
**विनियोगोऽत्र सर्वस्य शास्त्रेणैव नियम्यते ।**

**( सङ्ग्रहः, स्मृ. चं. २ पृ. २५६-२५७; म. पा. व्य. प्र. पृ. ४१६ )**

एतत्सङ्ग्रहकारमतं धारेश्वरभट्टेनाप्याश्रितम् । विभागो नाम द्रव्यसमुदाय-विषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम् । एतदेवाभिप्रेत्योक्तं नारदेन । नारदवचने पित्र्यस्येति स्वत्वनिमित्तसंबन्धोपलक्षणम् । 'तनयैः' इत्यपि प्रत्यासन्नोप-लक्षणम् । कस्य विभाग इत्येतावदिह चिन्त्यते । किं विभागात्स्वत्वमुत स्वस्य सतो विभागः ।

तत्र स्वत्वमेव तावन्निरूप्यते–किं शास्त्रैकसमधिगम्यस्वत्वमुत प्रमाणान्तरसमधि-गम्यमिति । तत्र शास्त्रैकसमधिगम्यमिति तावद्युक्तम्; गौतमवचनात् (१०।३९-४२)। प्रमाणान्तरगम्ये स्वत्वे नेदं वचनमर्थवत्स्यात् । तथा स्तेनातिदेशे मनुः

**योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।**
**याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥ ८।३४० ॥**

अदत्तादायिनः सकाशाद्याजनादिद्वारेणापि द्रव्यमर्जयतां दण्डविधानमनुपपन्नं स्यात्स्वत्वस्य लौकिकत्वे । अपि च, लौकिकं चेत्स्वत्वं मम स्वमनेनापहृतम् इति न ब्रूयात्; अपहर्तुरेव स्वत्वात् । अन्यथाऽन्यस्य स्वं तेनापहृतमिति नापहर्तुः स्वम् । एवं तर्हि सुवर्णरजतादिस्वरूपवदस्य वा स्वमन्यस्य वा स्वम् इति संशयो न स्यात् । तस्माच्छास्त्रैकसमधिगम्यं स्वत्वमिति ।

अत्रोच्यते–लौकिकमेव स्वत्वं लौकिकार्थक्रियासाधनत्वात् व्रीह्यादिवत् । आहवनीयादीनां हि शास्त्रगम्यानां न लौकिकक्रियासाधनत्वमस्ति । नन्वाहवनी

यादीनामपि पाकादिसाधनत्वमस्त्येव । नैतत्—नहि तत्राहवनीयादिरूपेण पाकादि-साधनत्वम् । किं तर्हि? प्रत्यक्षादिपरिदृश्यमानाग्न्यादिरूपेण । इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैव । नहि यस्य यत्स्वं न भवति तत्तस्य क्रयाद्यर्थक्रियां साधयति ।

अपि च—प्रत्यन्तवासिनामप्यदृष्टशास्त्रव्यवहाराणां स्वत्वव्यवहारो दृश्यते; क्रयविक्रयादिदर्शनात् । किं च—नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते । तथा हि—लिप्सासूत्रे तृतीये वर्णके द्रव्यार्जननियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् । स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासंभवमाशङ्क्य द्रव्यार्जनस्य प्रति-ग्रहादिना स्वत्वसाधनत्वं लोकसिद्धमिति पूर्वपक्षः समर्थितो गुरुणा (प्रभाकरेण) । ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वत्वमेव न भवतीति याग एव न संवर्तेत । प्रलपितमिदं केनापि 'अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम्' इति वदता ।

तथा सिद्धान्तेऽपि स्वत्वस्य लौकिकत्वमङ्गीकृत्यैव विचारप्रयोजनमुक्तम्, अतो 'नियमातिक्रमः पुरुषस्य न क्रतोः' इति । अस्य चार्थ एवं विवृतः—यदा द्रव्यार्जननि-यमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव द्रव्येण क्रतुसिद्धिर्न नियमातिक्रमार्जितेन द्रव्येण न क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे ।

राद्धान्ते त्वर्जननियमस्य पुरुषार्थत्वात्तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धि-र्भवति, पुरुषस्यैव नियमातिक्रमदोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम्—अन्यथा क्रतुसिद्ध्यभावात्, न चैतावता चौर्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् ।

इदानीमिदं सन्दिह्यते 'किं विभागात्स्वमुत स्वस्य सतो विभाग इति । तत्र विभागात्स्वमिति तावद्युक्तम्; जातपुत्रस्याधानविधानात् । यदि जन्मनैव स्वत्वं स्यात्तदोत्पन्नस्य पुत्रस्यापि तत्स्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरन-धिकारः स्यात् । तथा विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिषेधो नोपपद्यते; सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावात् ।

नच 'स्थावरादृते यद्दत्तम्' इति संबन्धो युक्तः, व्यवहितयोजनाप्रसङ्गात् । यदपि—'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः । स्थावरस्य तु सर्वस्य न पिता न पितामहः' ॥ तथा—"पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च । स्थावरं तु न भुज्येत प्रसादे सति पैतृके" ॥ इति स्थावरस्य प्रसाददानप्रतिषेधवचनम्, तत्पितामहोपात्त-स्थावरविषयम् । अतीते पितामहे तद्धनं पितापुत्रयोः साधारणमपि मणिमुक्तादि पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते । तस्मान्न जन्मना स्वत्वं किन्तु स्वामिनाशाद् विभागाद् वा स्वत्वम् । अत एव पितुरूर्ध्वं विभागात्प्राग्-

द्रव्यस्वत्वस्य प्रहीणत्वादन्येन गृह्यमाणं न निवार्यत इति चोद्यस्यानवकाशः । तथैक-पुत्रस्यापि पितृप्रयाणादेव पुत्रस्य स्वमिति न विभागमपेक्षत इति ।

अत्रोच्यते–लोकप्रसिद्धमेव स्वत्वमित्युक्तम् । लोके च पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरं नापह्नवमर्हति । 'विभाग' शब्दश्च बहुस्वामिकधनविषयो लोकप्रसिद्धः, नान्यदीयविषयो न प्रहीणविषयः; तथा उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्या' इति गौतमवचनाच्च । 'मणिमुक्ताप्रवालानाम्' इत्यादि वचनं जन्मना स्वत्वपक्ष एवोपपद्यते । नच पिता[1]महोपात्तस्थावरविषयमिति युक्तम्; 'न पिता न पितामहः' इति वचनात् । पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यदेयमिति वचनं जन्मना स्वत्वं गमयति । तथा परमते मणिमुक्ताप्रवालवस्त्राभरणादीनां पैता-महानामपि पितुरेव स्वत्वम्; वचनात्, एवं मिताक्षरामतेऽपि पित्रार्जितानामप्येतेषां पितुर्दानाधिकारः, वचनादित्यविशेषः । यत्तु[2] 'भर्त्रा प्रीतेन' इत्यादि विष्णुवचनं स्थावरस्य प्रीतिदानज्ञापनम्, तत्स्वोपार्जितस्यापि पुत्राद्यभ्यनुज्ञयैवेति व्याख्येयम्; पूर्वोक्तैर्मणिमुक्तादिवचनैः स्थावरव्यतिरिक्तस्यैव प्रीतिदानयोग्यत्वनिश्चयात् । यद्यप्यर्थ-साध्येषु वैदिकेषु कर्मस्वनधिकार इति, तत्र तद्विधानबलादेवाधिकारो गम्यते । तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम्, तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम् ।

स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव; 'स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् । असंभूय सुतान्सर्वान् न दानं न च विक्रयः । ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकाङ्क्षति न दानं न च विक्रयः' । इत्यादिस्मरणात् । अस्यापवादः–"एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् । आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः" । इति । अस्यार्थः–अप्राप्तव्यवहारेषु पुत्रेषु पौत्रेषु वाऽनुज्ञानादावसमर्थेषु भ्रातृषु वा तथाविधेष्वविभक्तेष्वपि सकलकुटुम्बव्यापि-न्यामापदि तत्पोषणे वाऽवश्यं कर्त्तव्येषु च पितृश्राद्धादिषु स्थावरस्य दानाधमन-विक्रयमेकोऽपि समर्थः कुर्यादिति ।

यत्तु वचनम्–'विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधमनविक्रये' । इति, तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात्

1. स्वामिनाशस्यापि स्वत्वहेतुत्वेनातीते पितामहे तद्धने पितापुत्रयोः साधारण्ये मणिमुक्तादिकं वचनात्पितुः । स्थावरे तु साधारण्यमेवेत्येतावानर्थो यदि तद्वचनात् प्रतीयते, तदा पूर्वोक्ता व्यवस्था स्यात्; न च तथा । ततश्चैवं वक्तव्यम्–पितामहे जीवत्यपि स्थावरेषु सर्वसाधारण्यमिति । तथा चास्य वचनस्य पितामहोपार्जितस्थावरविषयत्वमनुपपन्नमिति बालंभट्टः ।

2. स्वोपार्जितेष्वपि स्थावरेष्वनुज्ञासमर्थानुज्ञार्हसर्वानुमतिमन्तरेण दानानधिकारः, इतरेषु नानु-मत्यपेक्षेति तदभिप्रायः, इति बालंभट्टः ।

सर्वाभ्यनुज्ञाऽवश्यं कार्या । विभक्तेषु तूत्तरकालं विभक्ताविभक्तसंशयव्युदासेन व्यवहारसौकर्याय सर्वाभ्यनुज्ञा न पुनरेकस्यानीश्वरत्वेन; अतो विभक्तानुमति-व्यतिरेकेणापि व्यवहारः सिद्ध्यत्येवेति व्याख्येयम् ।

यदपि–'स्वग्रामज्ञातिसामन्तदायादानुमतेन च । हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी' । इति, तत्रापि ग्रामानुमतिः; ग्रामजनानुमतिः, 'प्रतिग्रहप्रकाशः स्यात्स्थावरस्य विशेषतः' (व्य. १७६) इति स्मरणात् व्यवहारप्रकाशनार्थमेवापेक्ष्यते, न पुनर्ग्रा-मानुमत्या विना व्यवहारसिद्धिः । सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासाय । ज्ञातिदायादानुमतेस्तु प्रयोजनमुक्तमेव 'हिरण्योदकदानेन' इति; 'स्थावरे विक्रयो नास्ति कुर्यादाधिमनुज्ञया' इति स्थावरस्य विक्रयप्रतिषेधात्, "भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति । उभौ तौ पुण्यकर्माणौ नियतौ स्वर्गगामिनौ" । इति दान-प्रशंसादर्शनाच्च । विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रयं कुर्यात् । पैतृके पैतामहे च धने जन्मनैव स्वत्वेऽपि विशेषम्[1]–

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।**
**तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि ॥**

**( याज्ञ. २।१२१ )**

स्वत्वं न केवलं यथेष्टविनियोज्यत्वं किं तर्हि यथेष्टविनियोगयोग्यत्वम् । तच्च शास्त्रे कुटुम्बभरणादिविनियोगनियमनेन विनियोगान्तरविषयतामलभमानस्याप्यर्जि-तत्वप्रयुक्तमस्त्येव । यथा कुतश्चिद्धेतोरङ्कुरोत्पादनमकुर्वतोऽपि कुशूलादिस्थितस्य बीजस्य बीजत्वप्रयुक्तमङ्कुरोत्पादनयोग्यत्वम् । उक्तं च नयविवेके । तच्च तस्य तदर्हं येनार्जितमिति । तदर्हं यथेष्टविनियोगार्हम् । भट्टमतानुसारिणि तन्त्ररत्नेऽपि । यथेष्टविनियोज्यत्वं हि स्वत्वं केवलक्रत्वर्थत्वेऽन्यत्राविनियोगाद्यथेष्टविनियोज्यत्वा-भाव (विनियोज्यत्वाभावात्स्वत्वाभाव?) इति । विनियोज्यमत्र विनियोगार्हम् ।

विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनमिति मिताक्षरा (याज्ञ. २।११४), पूर्वोक्तम् । अपरार्को तथैव । एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रामाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः । विशेषेण भजनं स्वत्वज्ञापनं वा विभागः[2] । तत्र विभागस्तु सम्बन्ध्यन्तरसद्भावेन भूहिरण्यादावुत्पन्नस्य... गुटिकापातादिना अमुकस्येदमिति विशेषेण भजनं स्वत्वज्ञापनमिति वदन्ति तन्न समीचीनम् । अत्र अस्य स्वत्वं तत्रैव गुटिकापात इति कथं वचनाभावान्निश्चेतव्यः ।

---

1. याज्ञ. २।११३; व्य. प्र. ४१९-४२२; वि. म. पृ. ८९-९०; प. मा. ३ पृ. ४८२-४८३; स. वि. पृ. ३९६; जै. सू. ४।१।२ ।
2. दायभागः १।८-९ पृ. ८ ।

वस्तुतस्तु पूर्वस्वामिसत्त्वोपरमे सम्बन्धाविशेषात् सम्बन्धिनां सर्वधनप्रसूतस्वत्वस्य गुटिकापातादिना प्रादेशिकस्वत्वव्यवस्थापनं विभागः । एवं कृत्स्नधनगतस्वत्वोत्पाद-विनाशावपि कल्प्येते[1] ।

**उत्तराधिकारः**

दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते । तच्चाप्रतिबन्धः सप्रतिबन्धो द्वयप्रकारकः । पुत्रस्य पौत्रस्य च पुत्रत्वेन पौत्रत्वेन च पितृधनेऽधिकारोऽप्रतिबन्धदायः, पितृव्यभ्रात्रादीनां पुत्राभावे स्वाम्यभावे वा योऽधिकारः सः सप्रतिबन्धदायः । विभागद्वारा उत्तराधिकारीणां स्वत्वमुत आहो जन्मसिद्धस्वत्वमित्यत्र विद्यमानस्वत्वस्यैव विभाग इति पक्षः । विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम् । पुत्रादीनां जन्मतैव स्वत्वं प्रसिद्धतरं नापह्नवमर्हति । अत एव 'विभाग'शब्दो बहुस्वामिकधनस्य विभाजने प्रसिद्धः । तथोत्पत्त्यैवार्थस्वामित्वं लभते इत्याचार्याः । अत्र **मनुः**

मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य च सर्वस्व न पिता न पितामहः ॥ १२।६१ ॥

धर्मबोधकवचनानुसारेण दायो धर्म्यस्तद्विपरीतोऽधर्म्यः । अर्थसाध्यवैदिककर्मसु पितुः प्रवृत्तिर्वचनबलेनैव भवति, अतस्तस्यार्थव्ययस्याप्यधिकारी पितैवास्ति । फलतः पैतृकपैतामहद्रव्येषु पुत्रादीनां स्वत्वं जन्मनैव मान्यः । तथापि शास्त्रवचनानुमत आवश्यकधर्मकृत्येषु प्रसाददानकुटुम्बमरणापद्विमोक्षादिषु स्थावरव्यतिरिक्तद्रव्यव्यये पिता स्वतन्त्रः । स्वार्जितेषु पित्रादिना प्राप्तेषु च स्थावरद्रव्येषु पुत्रादिपरतन्त्रता—

स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितः ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च ते कांक्षन्ति न दानं न च विक्रयः ॥

(लघुहारीतस्मृतिः ११७, ११५)

अत्र चापवादाः

एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥

(याज्ञ. २।११४)

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अन्यथा शास्त्रकारी च न विभागे पिता प्रभुः ॥

(नारद. १६।१६)

---

1. दायदत्त्व. पृ. १६३ ।

समविभागे पत्नीनां पुत्राणामिव समभागः स्वीकृतः । पतिश्वसुरादिना प्रीतिदाने कृते पत्न्योऽर्धभागस्यैवाधिकारिण्यः । पुत्रिकाणामप्यधिकारः पिण्डदानाधिकारमूलक एव । पुत्रिका अङ्गीकारानन्तरं यदि पुत्रप्राप्तिस्तदा समभागस्य व्यवस्था । दत्तकग्रहणानन्तरमौरसपुत्रोत्पन्ने सः चतुर्थांशहरः–उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः (याज्ञ. २।१३२ अत्र मिताक्षरा) । यदि असवर्णाः दत्तकाः क्षेत्रजाश्च स्युस्तदा ते जीवननिर्वाहमात्रस्यैवाधिकारिणः–असवर्णास्तु ग्रासाच्छादनभाजनाः (मिताक्षरायां कात्यायनः) । अन्यत्र च–

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।**
**तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः ॥**
**एषामभावे पूर्वस्य धनभांगुत्तरोत्तरः ।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥**

**(याज्ञ. २।१३५-१३६)**

इत्यत्रावधेयं यत्पत्नी पत्युर्धनहारी या स्यादव्यभिचारिणी । पत्न्यभावे तु दुहिता यद्यनूढा भवेत्तदा । अविभक्तसम्पत्तिविषये–

**भ्रातृणामप्रजः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा ।**
**विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥**

**(नारद. १४।२५)**

**भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।**
**रक्षन्ति शय्यां भर्तुश्चेदच्छिद्युरितरासु तु ॥**

**(नार. १६।२५)**

अपुत्राणां धनं पिता भ्राता वा ग्राह्यम्–पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा (मनु. ९।१८५) इति वचनमपि संसृष्टिपरकम् । "स्त्रीधनं दुहितृणामप्रतिष्ठितानाम्" अत्र स्त्रीधनं पितृधनस्योपलक्षणम् । परन्तु अनपत्यस्य असंसृष्टस्य पितुरेव धनं दुहितुस्तस्या अभावे दौहित्रस्य–

**अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।**
**पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रिका मताः ॥**

**(विष्णु. १२।१३६)**

तथा च–

अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे दौहित्रिगामि, तदभावे पितृगामि, तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे सकुल्यगामि (विष्णु. १७।४-१३) ।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥

( मनु. ९।२१७ )

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तेताऽऽचतुर्दशात् ॥
जन्मा नाम्नोः स्मृतिरेके.... । बृहन्मनुः ।

पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्यः, आचार्याभावेऽन्तेवासी ( आप. २।१३६ ) ।

श्रोत्रियब्राह्मणस्यानपत्यस्य रिक्थं भजेरन् ( गौतमः ) ।
सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ( मनु. ९।१८८ ) ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ( मनु. ९।१८९ ) ।

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

( याज्ञ., स्मृ. व्य. १३७ )

विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥
येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियतान्यतरो वापि तस्य भागो न लुप्यते ॥
सोदर्या विभजेयुस्ते समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भागिन्यश्च सनाभयः ॥

( मनु. ९।२१०-२१२ )

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ॥

( याज्ञ. २।१४० )

**संयुक्तपारिवारिकसम्पत्तिः**

केचित्तु "पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया" (मनु. ९।१११), "एकपाकेन वसतां पितृदेवार्चनादिकम्, एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे" (बृहस्पति. २६५), "विभागे तु धर्मवृद्धिः" (गौ. सू. २८४) इत्यादिवचनान्याश्रित्य विभक्तपरिवारस्य प्राशस्त्यं प्रतिपादयन्ति, न तत्समीचीनम् । मन्वादीनामुत्तमः पक्षः संयुक्तपरिवार एव । यथा हि–

ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं यथा ॥

(मनु. ९।१०५)

संयुक्तपरिवार एव ज्येष्ठः पितृसम्बन्धिधनं गृह्णीयात् । कनिष्ठाः पुत्राः ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिवोपजीवेयुः । अथ एवोक्तम्–"एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया" (मनु. ९।१११) । यथा "रिक्थं पुत्रवतः पुत्रा दुहितरो वा" इत्यत्र पुत्राभावे दुहितुरधिकारः, तथैव सहावस्थानासम्भवे पृथक्क्रिया मान्या । सा पृथक्क्रिया अपि धर्मकामनावशादेव न तु स्वाभाविकी । प्रजापतिः सम्पूर्णं मुख्यं भागमिन्द्राय प्रदत्तम्, अन्ये देवाः इन्द्रस्यानुसरणं कृतम्, इत्यपि संयुक्तपरिवारपरकः । "ब्रह्मवादिनो वदन्ति किं दैवत्यं पौर्णमासमिति, प्राजापत्यमिति ब्रूयात्तेनेन्द्रं ज्येष्ठं पुत्रं निरवासापयदिति तस्माज्ज्येष्ठं पुत्रं धनेन निरवासापयन्ति" (तै. सं. २।५।२।७); "सर्वं वा पूर्वजस्येतरान् बिभृयात् पितृवत्" (गौ. ध. स. २८।३); "कामं सह वसेयुरेकमताः संहता बृद्धिमापद्येरन्" (स. वि. ३६३, स्मृ च. २५९); "पितुरसत्यर्थे ज्येष्ठा कनिष्ठाननुगृह्णीयुः अन्यत्र मिथ्या वृत्तेभ्यः" (कौ. ३।५) ।

दृश्यते **महाभारते** विभागस्य निन्दा, सम्मिलितकुटुम्बस्य प्रशंसा च–

आसीद् विभावसुर्नाम महर्षिः कोपनो भृशम् ।
भ्राता तस्यानुजश्चासीत् सुप्रतीको महातपाः ॥
स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः ।
विभागं कीर्तयत्येव सुप्रतीकोऽथ नित्यशः ॥
अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः ।
विभागं बहवो मोहात्कर्त्तुमिच्छन्ति नित्यदः ॥
ततो विभक्ता अन्योऽन्यं नाद्रियन्तेऽर्थमोहिताः ।
ततः स्वार्थपरान् मूढान् पृथग्भूतान् स्वकैर्धनैः ॥
विदित्वा भेदयन्त्येतानमित्रमित्ररूपिणः ।
विदित्वा चापरे भिन्नान्तरेषु पतन्त्यथ ॥
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्त्तते ।
तस्माच्चैवं विभागार्थं न प्रशंसन्ति पण्डिताः ॥
गुरुशास्त्रनिबद्धानामन्योऽन्यमभिशङ्किनाम् ।
नियन्तुं न हि शक्यस्त्वं भेदतो धनमिच्छसि ॥
यस्मात्तस्मात्सुप्रतीकं हस्तित्वं समवाप्स्यसि ।
शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रबीत् ॥
त्वमप्यन्तर्जलचरः कच्छपः सम्भविष्यसि । १।२५।१०-१७ ।

युधिष्ठिर उवाच

यथा ज्येष्ठः कनिष्ठेषु वर्त्तते भरतर्षभ ।
कनिष्ठश्च यथा ज्येष्ठे वर्त्तेरंस्तद् ब्रवीहि मे ॥

भीष्म उवाच

ज्येष्ठवत्तात वर्त्तस्व ज्येष्ठोऽसि सततं भवान् ।
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥
न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्त्तितुम् ।
गुरोर्हि दीर्घदर्शित्वं यत्ताच्छिष्यस्य भारत ॥
अन्धःस्यादन्धवेलायां जडः स्यादपि वा बुधः ।
परिहारेण तद्ब्रूयास्तेषां स्याद् व्यतिक्रमः ॥
प्रत्यक्षं भिन्नहृदया भेदयेयुः कृतं नराः ।
श्रियाभितप्ताः कौन्तेय भेदकामास्तथारयः ॥
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
हन्ति सर्वमपि ज्येष्ठः कुलं यत्र विजायते ॥
अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः ।
अज्येष्ठः स्यादभागश्च नियम्यो राजभिः सदा ॥
निकृती हि नरो लोकान् पापान् गच्छत्यसंशयम् ।
विदुलस्येव तत्पुष्पं मोघं जनयितुः स्मृतम् ॥
सर्वानर्थः कुले यत्र जायते पापपूरुषः ।
अकीर्त्तिं जनयत्येव कीर्तिमन्तर्दधाति च ॥
सर्वे चापि विकर्मस्था भागं नेहन्ति सोदराः ।
नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥
अनुपघ्नन् पितुर्दायं जङ्घाश्रमफलोऽध्वगः ।
स्वमीहितलब्धं तु नाकामो दातुमर्हति ॥
भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह ।
न पुत्रभागं विषमं पिता दद्यात् कदाचन ।
न ज्येष्ठो वावमन्येत दुष्कृतः सकृतोऽपि वा ॥
यदि स्त्री यद्यवरजः श्रेयश्चेत्तत्तदाचरेत् ।
धर्मं हि श्रेय इत्याहुरिति धर्मविदो जनाः ॥
ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ।
स ह्येषां वृत्तिदाता स्यात् स चैतान् प्रतिपालयेत् ॥

कनिष्ठास्तं नमस्येरन् यथैवं पितरं तथा ।
शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा सत्या साऽजरामरा ।
ज्येष्ठभ्रातृसमा चापि भगिनी भरतर्षभ ॥
भ्रातुर्भार्या च तद्वत्स्याद्यस्या बाल्ये स्तनं पिबेत् ।
( १।५७।११ धर्मकोशः १९८३ पृ. )

कथ्यते यद् वैदिकेषु जन्मसिद्धाधिकारव्यवस्थाऽमान्या, अत्र च प्रमाणम्—
अज्येष्ठासोऽकनिष्ठास एते सं भ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः
( ऋ. ५।६०।५ )

अत्र मनुष्यमात्रस्य भ्रातृता समानता च मान्ये, जन्मसिद्धाधिकारस्य सुतरां निराकरणम् । असङ्गतमेतत् । प्रस्तुतमन्त्रस्य मरुद्देवताप्रतिपादनात्, मनुष्याणामसम्भावितोच्चावच्चराहित्यप्रतिपादनाभावाच्च । मरुताः रुद्रस्य पुत्राः सर्वे समानाश्च, तेषां कृते एव "अज्येष्ठासः" इत्युक्तिः–रुद्रस्य ये मीढुषः सन्ति पुत्राः" (ऋ. ६।६६।३), "ते मरुतो जज्ञिरे दिवः" (ऋ. १।६४।२), "मरुतो देवता" (यजु. १४।१०) । अन्यथा "नमो ज्येष्ठाय च कनिष्ठाय च" (यजु. १६।३२) इत्यादौ ज्येष्ठत्वं कनिष्ठत्वं च न स्थापितम् ।

**पुत्रलक्षणम्**

**औरसः** । सवर्णामपूर्वां (न पूर्वपतिर्यस्याः, वाग्दत्ता या न भवति) शास्त्रविहितां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिः सम्बन्धः । दायेनाव्यतिक्रमश्चोभयोः[1] । सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्[2] । ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात् । तस्यां हि पितामहानां तनवोऽनुसूयन्ते । पुत्रोपचारेणात्मानमनुमन्त्रयते, इति शङ्खलिखितौ । औरसो धर्मपत्नीजः[3] । द्वादश इत्येव पुत्राः पुराणदृष्टाः । स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायामौरसः[4] । औरसं पुत्रं प्राथमकल्पिकं विजानीयात् ।

**क्षेत्रजः** । औरसालाभे नियुक्तायां क्षेत्रजो द्वितीयः । नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा । मृतस्य प्रसूतो यः क्लीबस्य व्याधितस्य वाऽन्येनानुमतः स्वक्षेत्रे स क्षेत्रजः । स एष द्विपिता

---

1. आप. २।१३।१-२; वि. र. ५५८ ।
2. बौधा. २।३।१४।१६ ।
3. याज्ञ. २।१२८ ।
4. वसिष्ठ. १७।१२-१३; विष्णु. १५।१-२; मनु. ९।१६६ ।

द्विगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति । मन्त्रसंस्कारकर्त्तुरपत्यम् इत्याङ्गिरसः । बीजिक्षेत्रयोरनुमते यद्बीजं प्रकीर्यते तद्द्विधा शस्यमित्युशना, इति शङ्खलिखितौ ।

जीवति क्षेत्रजमाहुरस्वातन्त्र्यात् । मृते द्व्यामुष्यायणमनूप्तबीजत्वात् । नाबीजं क्षेत्रं फलति, नाक्षेत्रं बीजं प्ररोहति, इत्युभयदर्शनादुभयोरपत्यमित्येके। तेषामुत्पादयितुः प्रथमपिण्डो भवति द्वौ पिण्डौ निर्वपेन्निर्वपे । अथवैकपिण्डे द्वावनुकीर्तयेत् । द्वितीये पुत्रं तृतीये पौत्रं लेपिनश्च त्रीन् वाचक्षाण आसप्तमादित्यपरे, इति हारीतः । अत्र **याज्ञवल्क्यः**

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ २।१२७ ॥**

अस्यार्थः–यदाऽसौ नियुक्तो देवरादिः स्वयमप्यपुत्रोऽपुत्रस्य क्षेत्रे स्वपरपुत्रार्थं प्रवृत्तो यं जनयति, स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च । यदा तु नियुक्तः पुत्रवान् केवलं क्षेत्रिणः पुत्रार्थं प्रयतते, तदा तदुत्पन्नः क्षेत्रिण एव पुत्रो भवति, न बीजिनः[1] । स च न नियमेन बीजिनो रिक्थहारी पिण्डदो भवति । यथोक्तं मनुना (९।५३) । क्रियाभ्युगमादिति अत्रोत्पन्नमपत्यमावयोरुभयोरपि भवत्विति संविदङ्गीकरणाद्यत्क्षेत्रं क्षेत्रस्वामिना बीजावपनार्थं बीजिने दीयते तत्र तस्मिन्क्षेत्रे उत्पन्नस्यापत्यस्य बीजिक्षेत्रिणौ भागिनौ स्वामिनौ दृष्टौ महर्षिभिः । तथा मनुः (९।५२)–फलं त्वनभिसंधायेति । अत्रोत्पन्नमपत्यमावयोरुभयोरस्त्वित्येवमनभिसन्धाय परक्षेत्रे यदपत्यमुत्पाद्यते तदपत्यं क्षेत्रिण एव । यतो बीजाद्योनिर्बलीयसी; गवाश्वादिषु तथा दर्शनात् । अत्रापि नियोगो वाग्दत्ता विषय एव । इतरस्य नियोगस्य मनुना निषिद्धत्वात् (९।५९-६०) । नियोगमुपन्यस्य मनुः स्वयमेव निषेधति (९।६४,६८) ।

न च विहितप्रतिषिद्धत्वाद् विकल्प इति मन्तव्यम्; नियोक्तॄणां निन्दाश्रवणात्, स्त्रीधर्मेषु व्यभिचारस्य बहुदोषश्रवणात्, संयमस्य प्रशस्तत्वाच्च । पुत्रार्थमपि पुरुषान्तराश्रयणं निषेधति मनुः[2] । तस्माद्विहितप्रतिषिद्धत्वाद्विकल्प इति न युक्तम् । एवं विवाहसंस्कृतानियोगे प्रतिषिद्धे कस्तर्हि धर्म्यो नियोग इत्यत आह–

**यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।**
**तामनेन विधानेन निजो विन्देत देवरः ॥**
**यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।**
**मिथो भजेताप्रसवात्सकृत् सकृदृतावृतौ ॥ ९।६९,७० ॥**

---

1. वसिष्ठ. १७।१८; विष्णु. १५।२; याज्ञ. २।१२८; बौधा. २।३।१७-१८ ।
2. मनु. ५।१५७-१६१ ।

यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव वचनादवगम्यते । तस्मिन्प्रेते देवरस्तस्य ज्येष्ठः कनिष्ठो वा निजः सोदरो विन्देत परिणयेत् । यथाविधि यथाशास्त्रमधिगम्य परिणीय अनेन विधानेन घृताभ्यङ्गवाङ्नियमादिना शुक्लवस्त्रां शुचिव्रतां मनोवाक्कायसंयतां मिथो रहस्यागर्भग्रहणात्प्रत्पृत्वेकवारं गच्छेत् । अयञ्च विवाहो वाचनिको घृताभ्यङ्गादिनियमवत्, नियुक्ताभिगमनाङ्गमिति न देवरस्य, भार्यात्वमापादयति । अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एव भवति, न देवरस्य संविदा तूभयोरपि[1] ।

ननु च ब्राह्मणस्य नियोगप्रतिषेधादनारभ्योऽयम् । क्षत्रियार्थस्तर्हि भविष्यति । न च ब्राह्मणस्य नियोगप्रतिषेधः, किं तर्हि ब्राह्मण्याः । तेनाऽन्योत्पादितस्य ब्राह्मणस्य न स्यात् । न तु क्षत्रियादिकायां ब्राह्मणस्यानुत्पादकत्वम् । अतोऽविरुद्ध एवायमौरसाभावे कल्पः, इति विश्वरूपः ।

**पुत्रिकापुत्रः** । तृतीयः पुत्रिका विज्ञायते । अभ्रातृका (हि) पुंसः पितॄनभ्येति प्रतीचीनं गच्छति पुत्रत्वम् । पुत्रिका पुत्रवदिति **प्रचेतसः** । तस्यापत्यं पुत्रिकासुतो मातामहपितामहाभ्यां पिण्डदः[2] । औरसो धर्मपत्नीजः तत्समः पुत्रिकासुतः[3] । अभ्युपगम्य दुहितरि जातम् पुत्रिकापुत्रमस्यां दौहित्रम्[4] । औरसानुवृत्तौ **देवलः**

**तत्तुल्यः पुत्रिकापुत्रो दायदः सोऽथवा भवेत् ।**
**स एव दद्यात् पिण्डं तु पित्रे मातामहाय च ॥**
**पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।**
**तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥**
**अकृता वा कृता वापि यं विन्देत्सदृशं सुतम् ।**
**पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥**

कृताकृतदुहित्रधिकारे **बृहस्पतिः**[5]

**यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।**
**तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥**

---

1. मनु. ९।१६७, ५३; कात्याय न. ८५९; नारद. १६।२३; आप. श्रौ. सू. १।९।७; बौधा. २।३।१९ ।
2. शङ्खलिखितौ, वि. र. ५६४ ।
3. याज्ञ. २।१२८ ।
4. बौधा. २।३।१५ ।
5. व्य. प्र. २६।१३३ ।

स्त्रीधनं च कन्या लभते । तदपत्यस्य धनं कन्याभाग एव[1] । पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्य । अभिसन्धिमात्रात् पुत्रिकेत्येषाम् । तत्संशयान्नोपयच्छेदभ्रातृकाम्[2] । यथाह **वसिष्ठः**

**अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।**
**अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥ १८।१७ ॥**

**मनुश्च**

**अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।**
**यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥**
**अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाम् ।**
**विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षप्रजापतिः ॥**
**ददौ स दश धर्माय काश्यपाय त्रयोदश ।**
**सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ ९।१२७-१२९ ॥**
**मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।**
**द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ ९।१४० ॥**

**पौनर्भवः** । पौनर्भवश्चतुर्थः[3] । अक्षतायां क्षतायां जातः पौनर्भवः सुतः[4] । 'पुनर्भूत्वा' अन्यस्य वर्णस्य भार्या भूत्वा (मनुभावार्थचन्द्रिका) । पुरुषान्तरेण आत्मानं विवाह्य इत्यर्थः (वि. र. ५६८) । मृते भर्तरि अक्षतयोन्यामसंस्कृतायां जातः पौनर्भवः क्षतयोन्यां वा (विश्वरूपः) । अक्षतायां क्लीबादिभार्यायां विधवायामविधवायां वा भार्यायां परैरुपभुक्तायां पुनः परिगृह्य संस्कृतायां यो जातः स पौनर्भवसंज्ञकः (अपरार्कः) । अत्र **मनुः**

**या तु पत्या परित्यक्ता विधवा वा स्वयेच्छया ।**
**उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ ९।१७५ ॥**

**कानीनः** । कानीनः पञ्चमः । या पितृगृहेऽसंस्कृता कामादुत्पादयेत् स कानीनो मातामहस्य पुत्रो भवतीत्याहुः । अथाप्युदाहरन्ति–

**अप्रत्ता दुहिता यस्य सुतं विन्देत तुल्यतः ।**
**पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥**

**( वसिष्ठ. १७।२१-२३ )**

---

1. शङ्खलिखितौ, वि. र. ५६६ ।
2. गौ. २८।१८-२० ।
3. वसिष्ठ. १७।१८; विष्णु. १४।७ ।
4. याज्ञ. २।१३० ।

असंस्कृतानामनतिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीनः[1] । यथाह नारदः

अज्ञातपितृको यस्तु कानीनो गूढमातृकः ।
मातामहाय दद्यात्स पिण्डं रिक्थं हरेत्ततः ॥ १६।१८ ॥
कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृताः
(१६।१७; ना. सं. १४।१६)

गूढोत्पन्नः। अत्र मनुः[2]

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नः तस्य स्याद्यस्य तल्पजः ॥ ९।१७० ॥

सहोढः। सहोढः सप्तमः। गर्भिणी या संक्रियते तस्याः पुत्रः। स तु पाणिग्राहस्य। यथाह मनुः

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ ९।१७३ ॥

**दत्तकः**

मन्वादिधर्मशास्त्रकारा औरसः, क्षेत्रजः, दत्तः, गूढोत्पन्नः, कृत्रिमः, अपविद्धाश्च षड् दायादा बान्धवाश्च वर्णिताः। कानीनः, सहोढः, क्रीतः, पौनर्भवः, स्वयन्दत्तः, शौद्रश्चेति षड्दायादबान्धवा इति मताः[3]। तथापि औरसपुत्राणां सर्वाधिकं महत्त्वमिति सर्वमान्यपक्षः। तेषामुपस्थितावन्येषां पुत्राणां जीवनोपयोगिद्रव्यमात्रस्य दानमात्रमधिकारः। शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः[4]। तत्र दत्तकः–

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥
(मनु. ९।१६८)

---

1. बौधा. २।३।२४।
2. 'न च ज्ञायेत' माता यदुद्भ्रान्ता बहुशो गता वा तदा न ज्ञायते का पुनस्तस्य जातिः यतः पूर्वैरुक्त'मविज्ञातबीजिनो मातृतः' (मेधातिथिः)। 'तल्पजो' भार्याजातः (वि. र. ५७१)। तत्र प्रकाशकृता गर्भिण्याः कन्यात्वं पुरस्कृत्य पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिता इति संस्कार आक्षिप्तः। आथर्वणीयकेन विधिना पुनः संस्कारविधिः श्रुतौ अस्तीत्यन्ये इति सिद्धान्तदृशा लिखितम्। वस्तुतस्तु पाणिग्रहणिकमन्त्रजन्यसंस्कारातिरिक्तहोमादिकर्मसंस्काराभिप्रायं संक्रियते पदमिति (वि. र. ५७२)।
3. मनु. ९।१५९-१६०।
4. वसिष्ठ. १५।१-२।

अत्र 'सदृश' शब्देन समानजातित्वमेव ग्राह्यमिति मनुः

सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ ९।१६९ ॥

तथा चापविद्धपुत्रस्य लक्षणम्–

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥
( मनु. १९।१७१ )

स्वयन्दत्तस्तु–

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥
( मनु. ९।१७७ )

एतेषु द्वादशविधपुत्रेषु पूर्वपूर्वाभावे उत्तरोत्तरो दायभागीति व्यवस्था–"श्रेयसः श्रेयसोऽलाभे पापीयान् रिक्थमर्हति" (मनु. ९।१८४) । शोणितशुक्रसम्भवः पुरुषो मातापितृनिमित्तकः तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः[1] । वेदेषु दत्तकनिन्दा, औरसानामेव पुत्रत्वं दायभागित्वं कन्याया न दायभागित्वं सा संस्कार्येति च प्रतिपादितम्–

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥
( ऋक्. ७।४।७ )

नहि ग्रभायारणः सुशेवो अन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्याऽऽनो वाज्यभीषालेतु नव्यः ॥
( ऋ. ७।४।८ )

न जामये तान्वो रिक्थमारैक् ॥ ऋक् ३।३१।२ ॥
अभ्रातेव पुंस एति प्रतीची ॥ ऋ. १।१२४।७ ॥
शासद् वह्निर्दुहितुर्नप्त्यङ्गाद्विदामृतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे ॥
( ऋक्. ३।३१।१ )

औरसपुत्राभावे पुत्रान्तराणां ग्रहणं वेदेऽपि स्वीकृतम्–

तिस्रो मातृस्त्रीन् पितृन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति (ऋ. १।१६४।१०); द्व्यामुष्यायणपुत्राणां लिङ्गपरकं वचनम्–"अन्यस्या गर्भमन्य ऊ

---

1. वसिष्ठ. १५।१-२ ।

जनत सो अन्येभिः सचते जेन्यो वृषा" (ऋ. २।१८।२) । महर्षिवध्र्यश्वाय दिवोदासनामकस्य पुत्रस्य दानम्–

**इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।**
**या शश्वन्तमाचखादावसम्पणिं ता ते दात्राणि तविषा सरस्वति ॥**

**( ऋ. ६।६१।१ )**

देयो दातुर्धनस्य नाधिकारीति नियमः । अत एव दत्तकः दुहिता च दातुर्धनस्य नाधिकारीति पक्षः । दुहिताऽपि देया–"परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात् स्त्रियं जातां पराऽस्यन्त्युत्पुमांसं हन्ति" (तै. सं. ६।५।१०।३), "अत्रिरददादौर्वाय प्रजां पुत्रकामाय" (तै. सं. ७।१।८।१), "सोऽजीगर्त्तं सौयवसिमृषिमशनया रीतमरण्य उपेयाय...अथ ह शुनः शेपो विश्वामित्रस्याङ्कमाससाद" (ऐ. ब्रा. ३३।३।५)–

**ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।**
**तेभ्यो भद्रमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥**

**( ऋक्. १०।६२।१ )**

पुत्रपौत्रप्रपौत्राणामभावे दत्तकपुत्रस्य ग्रहणमिति शास्त्रव्यवस्था मनुना दत्तकमीमांसायाम्–

**अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।**
**पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनाय च ॥**
**अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।**
**पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥ अत्रि ॥**

स्त्री स्वतन्त्ररूपेण न दत्तकग्रहणाधिकारिणी, अपि तु पतेरनुज्ञया सा एवं कर्त्तुं समर्था–"न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा भ्रातृणामेकमातापितृकाणां मध्ये यद्येकः पुत्रवान्स्यादन्ये च पुत्ररहितास्तदा तेनैकपुत्रेण सर्वान् भ्रातृन् सपुत्रान्मनुराह । ततश्च तस्मिन्सत्यन्ये पुत्रप्रतिनिधयो न कर्त्तव्याः । स एव पिण्डदोऽशहरश्च भवति इति मनुः

**भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।**
**सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ ९।१८२ ॥**

तैत्तिरीयेभ्यो बौधायनस्य विधानम्–प्रतिग्रहीष्यन्नुपकल्पयेत द्वे वाससी कुण्डले ह्यङ्गुलीयकमाचार्यं च वेदपारगं कुशमयं बर्हिः पर्णमिध्ममित्यथ बन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणवागालम्बेनोपविश्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत ददातीतर आह 'तं परिगृह्णामि धर्माय

त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामि' इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधानप्रभृत्याग्निमुखं कृत्वा पक्त्वा जुहोति यस्त्वा हृदा कीरिणमन्यमान इति पुरोनुवाक्यामनूद्य यस्मै त्वं सुकृते जातवेदस इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात्, अथ दक्षिणां ददाति" ।

प्रस्तुत विध्यसम्पन्ने स विवाहोचितधनमात्रस्य भागी, न दायभागी । उत्पादयितुर्गोत्रं धनञ्च न दत्तकाय । गोत्ररिक्थानुसारेणैव पिण्डदानमिति स्थितिः । तथा च दानहेतुना दातुर्धने न दत्तकस्याधिकारः, यतो हि दानेन दातुस्तत्र पुत्रत्वनिवृत्तिः, अतः दातृगोत्रस्यापि निवृत्तिर्भवति । यथा सप्तपद्यनन्तरं कन्यायाः गोत्रभ्रंशनम्—"स्वगोत्राद्भ्रंश्यते नारी विवाहात्सप्तमे पदे" तथैव "गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः" । अन्यत्रानुज्ञाद्भर्तुः (वसिष्ठ. १५।५) । अनेकधा पुत्राः कृताः ऋषिभिर्ये पुरातनैः, परन्तु कलौ शक्तिहीनैरधुना कर्त्तुं न शक्यन्ते । कलौ तु "दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः" । दत्तकः सजातीयः, सगोत्रः, सपिण्डकश्च भवितुमर्हः । सपिण्डाभावेऽसपिण्डः, एवं सगोत्राभावेऽसगोत्रजः, परञ्च सजातीयस्यैव दत्तकत्वमिति व्यवस्था—

ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसङ्ग्रहः ।
तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत् ॥

(शौनकः, दत्तक मीमांसा)

सपिण्डात्मकं चैव सगोत्रजमथापि वा ।
अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागनेयं च मातृश्वसृसुतं विना ॥

(शाकल्यः)

असवर्णास्तु ग्रासाच्छादनमात्रभागिनः ॥ शौनकः ॥
यदि स्यादन्यजातीयो गृहीतोऽपि सुतःक्वचित् ॥ शौनकः ॥

सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते न तु विजातीयस्य, तस्य पुत्रत्वं निषिद्धम् । सजातीयः सुतो ग्राह्यः स पिण्डदाता रिक्थभाक्; तदभावे विजातीयो वंशमात्रकरः स्मृतः । ग्रासाच्छादनमात्रं स लभते तदृक्थिनः । शूद्रो दौहित्रं भागनेयञ्च पुत्ररूपेणाङ्गीकर्त्तुमतः परञ्च द्विजेषु निषिद्धः—

क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥
सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः ।
यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित् ॥

अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ।
दौहित्रो भागनेयश्च शूद्रैस्तु क्रियते सुतः ॥
ब्राह्मणादित्रये नास्तिभागनेयः सुतः क्वचित् ॥
(शौनकः)

**क्रीतः** । तत्र मनुः

क्रीणीयाद्यस्तु अपत्यार्थे मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥ ९।१७४ ॥

मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य वा योऽपत्यार्थे गृह्यते स क्रीतकः[1] ।

**स्वयमुपागतः** । मनुराह–

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं दर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥ ९।१७७ ॥

**अपाविद्धः** । अपाविद्धस्तु एकादशः । पित्रा मात्रा च परित्यक्तः । स च येन परिगृहीतः[2] ।

**कृत्रिमः** । तत्र मनुः

सदृशं यं प्रकुर्यातां गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ ९।१६९ ॥

**शूद्रापुत्रः** । यत्र क्वचनोत्पादितश्च द्वादशः[3] । शूद्रापुत्र एव (षष्ठो) भवतीत्याहुः[4] । द्विजातिप्रवराच्छूद्रायां जातः कामात् पारशव इति[5] । यथाह मनुः

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम् ।
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ ९।१७८ ॥
क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
य एते विहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ ९।१८०-१८१ ॥

मुख्याभावे 'प्रतिनिधिः' । अतोऽसत्यौरस एते कर्त्तव्या इत्युक्तं भवति । 'क्रियालोपात्' अपत्यमुत्पादयितव्यमिति अस्य विधिलोपो मा भूदिति । नित्यो ह्ययं विधिः । स यथाकथञ्चिद् गृहस्थेन संपाद्यः । तत्र मुख्यः कल्प औरसः । तदसंपत्तौ एतेऽनुकल्पा आश्रयितव्याः । ... पूर्वोक्तस्याभावे विधिप्रतिषेधोऽयमिति व्याचक्षते । य

---

1. बौधा. २।३।२६ ।
2. विष्णु. १५।२४-२६; वसिष्ठ. १७।३६-३७ ।
3. विष्णु. १५।२७ ।
4. औरसापेक्षया द्वादश, वि. र. ५८०; वसिष्ठ. १७।३८ ।
5. बौधा. २।३।२९-३० ।

एते औरसाभावे प्रतिनिधयः कर्त्तव्यतया उक्तास्ते न कर्त्तव्याः। यतस्तेऽ 'न्यबीजजाताः' तस्यैव ते पुत्रा 'नेतरस्य' ये न क्रियन्ते तस्य तेन भवन्तीत्यर्थः। अतश्च पूर्वेण विधिरनेन प्रतिषेध इति विकल्पः। स च व्यवस्थितो रिक्थग्रहणे। कानीनादयो न रिक्थभाजः। दत्तकादयस्तु रिक्थभाजोऽसत्यौरसे (मेधातिथिः)।

**पुत्रत्वविचारः**

पुत्रपौत्रप्रपौत्रैर्लोकानन्त्यम्, अग्निहोत्रादिभिश्च प्रयोजनं शास्त्रीयदारसङ्ग्रहस्य फलम्। रतिफलं तु लौकिकमेव। उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति। ततश्च 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः पुण्यलोकाभावपरिहारो भवति। तथा 'प्रजया पितृभ्यः' इति श्रुतेः 'पुत्रेण जातमात्रेण पितॄणामनृणश्च सः' इति। यस्मिन् जाते ऋणं शोधयति। येन जातेनामृतत्वं प्राप्नोति। तथा च श्रुतिः "ऋणमस्मिन् समुन्नयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्" इति[1]। पुत्रेण जातेन स्वर्गादिलोकान्प्राप्नोतीति पौत्रेण तेष्वेव चिरकाल-मवतिष्ठते[2]। यस्मात्पुंनामधेयनरकात्सुतः पितरं त्रायते तस्मात्त्राणादात्मनैव ब्रह्मणा पुत्र इति प्रोक्तः। पुत्रदौहित्रयोर्लोके कश्चिद् विशेषो न संभाव्यते, यस्माद्दौहित्रोऽपि मातामहं परलोके पौत्रवन्निस्तारयति। एतच्च पौत्रिके यस्य पौत्रेण साम्य-प्रतिपादनार्थं पुत्रिकाकरणानन्तरजातपुत्रेण सह धने तुल्यभागः[3]। पौत्रिकेयः प्रथमं मात्रे पिण्डम्, द्वितीयं मातुः पित्रे, तृतीयं मातुः पितामहाय दद्यात्। अथ त्रयो वावलोकाः लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा पितृलोको विद्यया देवलोकः[4]।

क्षेत्रियः पारदारिको न विभागमर्हति। नातिद्वितीयं जनयितुरपत्यम्। समयाद-न्यस्य। जीवतश्च क्षेत्रे। परस्मात्तस्य। द्वयोर्वा। रक्षणात्तु भर्तुरेव[5]।

प्रथममपत्यमतीत्य द्वितीयं न जनयेदिति। जनयितुस्तदपत्यं भवति। यदि ज्ञातयः समयं कृत्वा नियुञ्जते 'क्षेत्रिणोऽपत्यमस्तु' इति तदा क्षेत्रिण एवापत्यं न बीजिनः। 'परस्मात्' देवरादिव्यतिरिक्तात् तदनियुक्तायामप्यपत्यवत्यामनपत्यायां चोत्पन्नस्तस्यैव बीजिनो भवति, न क्षेत्रिणः। एवमुत्पादितमपत्यं द्वयोर्वा भवति

1. याज्ञ. १।७८; मनु. ९।१०६-१०७; निरुक्तः ३।४; आ. गृ. १।१५।११; कौषीतकि. ४।११; मानव गृ. १।१५।६; बौ. ध. सू. २।२।१५-१६; बृह. उप. ५।४।९; वि. र. ५५४-५५५; आदि. ७४।६३।
2. मनु. ९।१३७।
3. मनु. ९।१३८-१३९।
4. बृ. उप. १।५।१६; बौ. गृहपरिभाषा १।२।५; शङ्ख., वि. र. ५५५; बौ. ध. सू. २।९।७; वि. ध. सू. ८५।५७; मत्स्य. २२।६; वायु. १५०।१०; ब्रह्मपु. २२०।३२-३३; अत्रि. ५५; बृह. परा. मा. १।२ पृ. ३०५; द्रोण. १७३।५४; स्मृ. चं. २ पृ. १६८; परा. मा. ३।२६३।
5. गौतम. १८।९-१४।

बीजिक्षेत्रिणोः । इदं नियुक्ताविषयम् । यदि भर्ता क्षेत्र्येव 'रक्षणं' भरणं पोषणं संस्कारादि करोति, न बीजि, तदा भर्तुरेव तदपत्यमिति (हरदत्तभाष्यम्) ।

द्वितीयमतीत्य तृतीयं नोत्पादयेत् । यदि तृतीयमुत्पादपति 'जनयितुः' देवरादेरेव भवति, न क्षेत्रिणः । 'समयः'–तव रतिः ममापत्यमिति समयः कृतश्चेत्, 'अन्यस्य' क्षेत्रिणो भवति तृतीयमपि । 'जीवतः' प्रजननासमर्थस्य पत्युः, 'क्षेत्रे' भार्यायाम्, यदपत्यमुत्पद्यते तत् क्षेत्रिण एव भवति विनाऽपि समयेन द्वितीयादधिकमपि इत्यभिप्रायः । 'परस्मात्' देवरादिव्यतिरिक्तात्, व्यतिक्रमाद्वा यदि जीवतोऽपि अपत्यमुत्पद्यते तत् द्वितीयादधिकमपि 'तस्य' जनयितुरेव भवति, न क्षेत्रिणः । द्व्यामुष्यायणो वा भवति । 'रक्षणे' भरणपोषणसंस्कारादौ क्रियमाणे भर्तुः, परस्मात् छिद्रेण यदपत्यमुत्पद्यते तद्भर्तुरेव भवति (मस्करी) ।

क्षेत्रिकस्याविज्ञानेन यद्बीजं प्रकीर्यते तत्क्षेत्रिकस्यैव । न तत्र बीजी आगमर्हति, इति शङ्खलिखितौ । नियतं क्षेत्रिणामपत्यमिति वेदवादो मातुरपत्यमित्येके । वसिष्ठकश्यपयोर्जलगतयोरुदवासादुत्तीर्यैकः प्रजामुत्पादयत्यविज्ञातो लोकानाम् । एवं तयोर्द्विधा सन्तानः । यस्मात्कुलधर्मपरिग्रहरिक्थपिण्डोदकानि चैकतः परक्षेत्रोत्पन्ना अपि प्रयच्छन्ति । क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते[1] । तत्र **आपस्तम्बः**

**अप्रमत्ता रक्षथ तन्तुमेतं[2] मा वः क्षेत्रे परबीजानि वाप्सुः ।**
**[3]जनयितुः पुत्रोभवति सांपराये मो[4]घं पिता कुरुते तन्तुमेतम् । इति[5] ।**

मनुराह–

**बीज[6]स्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।**
**सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥**
**यादृशं तूप्यते बीजं क्षेत्रे कालोपपादितम् ।**
**तादृग्रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः ॥ ९।३५, ३६ ॥**
**तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।**
**आयुष्कामेन वक्तव्यं न जातु परयोषिति ॥**
**एतावानेव पुरुषो यज्जायात्मा प्रजेति च ।**
**विप्राः प्राहुस्तथा चैव यो भर्ता सा स्मृताङ्गना ॥**
**न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।**

1. वसिष्ठ. १८।६ ।
2. 'तन्तुं' पुत्रपौत्रादि परम्पराम् ।
3. 'जनयितुः' बीजिनः पुत्रो भवति उपकारकः ।
4. 'मोघम्' निष्फलम् ।
5. आप. २।१३।६ ।
6. बीजप्राधान्याद् यस्य बीजं तस्यापत्यम् (इति पूर्वपक्षः) मेधातिथिः ।

एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितम् ॥
यथा गोऽश्वोष्ट्रदासीषु त्वजाविमहिषीषु च ।
नोत्पादकः प्रजाभागी तथैवाऽन्याङ्गनास्वपि ॥
येऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥
यद्यन्यगोषु वृषभो वत्सां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ॥
तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ।
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥
फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥

(९।४१, ४५, ४६, ४८, ४९, ५०-५२, ५४-५५)

**पुत्रातिदेशः** । भ्रातॄणामेकमातापितृकाणां मध्ये यद्येकः पुत्रवान् स्यादन्ये च पुत्ररहितास्तदा तेनैकपुत्रेण सर्वान् भ्रातॄन् सपुत्रान् । ततश्च तस्मिन्सत्यन्ये पुत्रप्रतिनिधयो न कर्त्तव्याः । स एव पिण्डदोंऽशहरश्च भवति[1] । एतच्च "पत्नी दुहितरैश्चैव पितरौ भ्रातरस्तथा । तत्सुता" (याज्ञ. २।१३५) इति । एकपतिकानां सर्वासां स्त्रीणां मध्ये यद्येका पुत्रवती स्यात्तदा तेन पुत्रेण सर्वास्ताः पुत्रयुक्ताः । ततश्च सपत्नीपुत्रे सति स्त्रिया न दत्तकादिपुत्राः कर्त्तव्याः[2] । यथाह बृहस्पतिः

यद्येकजाता बहवो भ्रातरस्ते सहोदराः ।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः ॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः[3] ॥

(व्यव. २६।७९-८०)

**पुत्रनिरुक्तादिः** । अनन्ताः पुत्रिणो लोका नाऽपुत्रस्य लोकोऽस्ति । 'प्रजा सन्त्वपुत्रिणः' इत्यभिशापः । 'प्रजाभिरग्ने अमृतत्वमश्याम्' इत्यपि निगमो[4] भवति । शङ्खलिखितविष्णुवसिष्ठहारीताः[5]–

---

1. मनु. ९।१८२ ।
2. मनु. ९।१८३ ।
3. अत्र असहायेनोक्तं पुंसां सति भ्रातृजे, स्त्रीणां सति सपत्नीपुत्रे क्षेत्रजादयः प्रतिनिधयो न कर्त्तव्याः । पारिजातोऽप्येवमाह । मनुटीकायामुदयकरोऽप्येवम् ( वि. र. ५८९ ) ।
4. यस्त्वा हृदा कीरिणा मन्यमानो मर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ ऋक्. ३।८।१९; तै. सं. १।४।४६ ।
5. वि. स्मृ. १५।४५; व. १७।१,५; वि. र. ५९१ ।

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥
यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः ।
नियन्ता चात्मदोषाणां स तारयति पूर्वजान् ॥
अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः ।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम् ॥
पुत्रपौत्रप्रतिष्ठस्य बहुपुत्रस्य जीवतः ।
अस्कन्नवेदयज्ञस्य हस्तप्राप्तं त्रिविष्टपम् ॥
ऋणमस्मिन् सन्नयति अमृतत्वं च विन्दति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥
पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः ।
तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः ॥

मनुविष्णू[1]

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥

अत्र बृहस्पतिः[2]

पुंनाम्नो नरकाद्यस्मात् पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥
पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थपिण्डप्रदानेन समौ संपरिकल्पितौ ।
अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनस्य च ॥
काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥
यथा जलं कुप्लवेन तरन्मज्जति मानवः ।
तथा पिता कुपुत्रैस्तु तमस्यन्धे निमज्जति ॥

निन्दितः । देवरवत्यामन्यजातमभागम् । (गौ. २८।२४) । विद्यमानदेवरायामन्येनोत्पादितमपत्यमभागार्हम्, कामजत्वात् (मस्करिः) । तत्र मनुः

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ।
उभौ तौ नार्हतो भागं जारजातककामजौ ।

1. मनु. ९।१३८; वि. १५।४४ ।
2. व्यव. २६।८१-८२; ८८-९० ।

नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः।
नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः ॥ ९।१४३-१४४।

अपुत्रे भर्तरि मृते पुत्रोत्पादने स्त्रिया गुरुनियोगोऽपेक्षितव्यः। या गुरुभिरनियुक्ता पुत्रमुत्पादयेत्—"क्षेत्रकिलाहं भर्तुः क्षेत्रजश्च पुत्रस्तदर्थहरः" इत्यनया भ्रान्त्या—स तस्यां समुत्पन्नः न रिक्थहरः। पिण्डदानं तु न निषिध्यते। यद्यपि पतितोत्पन्नो भवति। 'भागं' क्षेत्रियऋक्थादिभागम्। एतच्च पिण्डदानादेरुपलक्षणम्।

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।
तयोर्यद्यस्य पित्र्यं स्यात् तत्स गृह्णीत नेतरः॥

(मनु.९।१९१)

तत्र नारदः

जाता ये त्वनियुक्ता यामेकेन बहुभिस्तथा।
अरिक्तभाजस्ते सर्वे बीजिनामेव ते सुताः॥
दद्युस्ते बीजिनो पिण्डं माता चेच्छुल्कतो हृता।
अशुल्कोपनतायां च पिण्डदा वोढुरेव ते ॥ १६।१९-२० ॥

अनियुक्तायां स्वैरिण्याम्। 'अरिक्तभाजः' क्षेत्ररिक्थं न लभन्ते। मातृक्षेत्रिकमातामहानां च न ऋक्थं भजन्ते इति प्रकाशकारः। यदि क्षत्रिणः 'शुल्कं' दत्वा बीजिना माता हृता, (दद्युस्ते बीजिनो पिण्डम्) वि. र. ५९४।

**अपुत्रधनविभागः** । अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यम्। तदभावे मातापितरौ लभेताम्। पत्नी वाऽज्येष्ठा[1] सगोत्रशिष्यसब्रह्मचारिणः। यच्च 'अपुत्रधनं पत्न्याभिगामि' इत्यादि विष्णुवचनेन (१७।४) भ्रातृसद्भावेऽपि अपुत्रधनस्य पत्न्यभिगामित्वं प्रतिपादितम्, तत् 'अपुत्रा शयनं भर्तुः, इत्यादि वृद्धमनुवाक्यपर्यालोचनया भर्तृशयनपरिपालनश्राद्धकरणादिगुणोपेता या पत्नी तद्विषयम्। या चैवंविधा न भवति तस्यां विद्यमानायामपि भ्रातृगाम्येव तद्धनम्। यच्च—

भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिद्युरितरासु तत्॥

इति भरणमात्रं शङ्खेनोक्तम्। तद्वैधव्यव्रतरहिताऽव्यभिचारिणीमात्रविषयम्। यश्च याज्ञवल्क्येन (२।१३५) 'पितरौ भ्रातरस्तथा' इति भ्रातृसद्भावे पित्रोरेवाधिकार उक्तः, सः पितृपितामहाद्युपार्जितधनविषयः। यच्च पितृद्रव्याविरोधेनोपार्जितं तत्पित्रोः सद्भावेऽपि भ्रातॄणामेव। तत्र मनुः

---

1. 'ज्येष्ठा' इति अपरार्कपाठः (७४४); 'अज्येष्ठा' इति वि. र. ५९७; **शङ्खलिखितपैठीनसिवचनमिति** अपरार्केनोद्धृतम्। 'तत् पितृधनानुपघातेन **अर्जितविभक्तधनेषु भ्रातृषु द्रष्टव्यम्। एतादृशभ्रात्रभावे** पितरौ ज्येष्ठा वा पत्नी (अपरार्कः ७४४)।

संस्थितस्यानपत्यस्य सगोत्रात्तन्तुमाहरेत् ।
तत्र यद्रिक्थजातं स्यात्तत्तस्मै प्रतिपादयेत् ॥ ९।१९० ॥

'अनपत्यस्य' मृतस्य पत्नी 'सगोत्रात्' देवरसपिण्डयोरन्यतरस्मात् अपत्यमुत्पाद्य तस्मै मृतस्वामिस्वत्वोपलक्षितं ऋक्थजातं दद्यात् न स्वयमाददीत इति पारिजातः । 'तन्तुमाहरेत्' सगोत्रात्पुरुषात् सन्तानमुत्पादयेदित्यर्थः । यथा बृद्धमनुः

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्पिण्डं कृत्स्नमर्थं लभेत च ॥

नियोगार्थिन्या नास्ति रिक्थग्राहित्वमिति स्पष्टयति । उक्तगुणा पत्नी पितृभ्रातृसद्भावेऽपि स्वयमेव पतिधनं समग्रं गृह्णाति, श्राद्धादि करोतीति अपरार्कः (७४२) । बृहस्पतिश्च

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्या देहार्थं तस्य जीवति ।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात् ॥
सकुल्यैर्विद्यमानैस्तु पितृभ्रातृसनाभिभिः ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥
पूर्वप्रमीताग्निहोत्रं मृते भर्तरि तद्धनम् ।
विन्देत् पतिव्रता नारी धर्म एष सनातनः ॥
जङ्गमं स्थावरं हैमं कुप्यधान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धान्धानतिथीन् स्त्रियः ॥
तत्सपिण्डा बान्धवाश्च येऽन्ये स्युः परिपन्थिनः ।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत्
(व्यव. २६।९२-९५, ९७-९८, १०५)

अथ नारदः

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ।
पुत्रश्च दुहिता चोभौ पितुः सन्तानकारकौ ॥ १६।५० ॥

पुत्रग्रहणं पत्न्या अप्युपलक्षणम् (मदनरत्ने १५४)। पत्न्यामसत्यां पितृसमानवर्णा दुहितरोऽपुत्रधनस्वामिन्यः (अपरार्कः ७४३) । आत्मस्थानीयः पुत्रः "आत्मा वै पुत्रनामसि" इति मन्त्रलिङ्गात्तत्समा च दुहिता तस्या अप्यङ्गेभ्य उत्पादनात् ।

अतस्तस्यां पुत्रिकायां पितुरात्मस्वरूपायां विद्यमानायामपुत्रस्य मृतस्य पितुर्धने पुत्रिकाव्यतिरिक्तः कथमन्यो हरेत्[1] । अत्र **बृहस्पतिः**

**सदृशी सदृशेनूढा साध्वी शुश्रूषणे रता ।**
**कृताकृता वाऽपुत्रस्य पितुर्धनहरी तु सा ॥**

(व्यव. २६।१३२)

'कृता' पुत्रिकात्वेन स्थापिता । 'सदृशी' सवर्णा । 'कृताकृता' पुत्रिका इत्यर्थः । अत्र च 'कृताकृता वा' इत्यनेन पुत्रिका दृष्टान्ततयोपादीयते, न पुनस्तस्या अपुत्रग्राहित्वं विधीयते । न हि पुत्रिकापिताऽपुत्र इति शक्यते वक्तुम्, पुत्रिकायाः पुत्रत्वात् (अपरार्कः ७४४) ।

**भार्यासुतविहीनस्य तनयस्य मृतस्य च ।**
**माता ऋक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥**

(बृह. २६।३५)

पारिजातमते मातृपदं पितुरप्युपलक्षणम् । 'तदनुज्ञया' मातापित्रोरनुज्ञया (स्मृतिसारः, धर्मकोशे, १५१८); 'तदनुज्ञया' मातुरनुज्ञया' (वि. र. ५९७); पितुरभावे माता, मात्रानुमतो वा भ्राता (अपरार्कः ७४५) । अनपत्यस्य पुत्रस्य धनं माता गृह्णीयात् पूर्वं 'पिता हरेदपुत्रस्य रिक्थम्' (मनु. ९।१८५) । याज्ञवल्क्येन 'पितरौ' (२।१३५) विष्णुना च 'अपुत्रस्य धनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे पितृगामि' इत्येकशेषस्यैव कृतत्वात्, मातापितरौ विभज्य गृह्णीयाताम् । मातरि मृतायां पत्नीपितृभ्रातृजाभावे पितुर्माता धनं गृह्णीयात्[2] । असंसृष्टविभागः । प्रेतानां ज्येष्ठस्य[3] । एतदपि पत्नी-माता-पित्रसत्वे बोद्धव्यम् (वि. र. ५९८) । द्वैमातृकाणां समानजातीयानामसमानजातीयानामभिन्नमातृकाणां च यो भागः स स्वस्ववर्गज्येष्ठस्यैव भवति (मस्करी) ।

न सोदरभ्रातरः, न पितरः, किन्तु औरसाभावे क्षेत्रजादयो गौणपुत्राः पितृरिक्थहरा भवन्ति। औरसस्य तु "एक एवौरसः पुत्रः" (मनु. ९।१६३) इत्यनेनैव सिद्धत्वात्। अविद्यमानमुख्यपुत्रस्य पत्नीदुहितृरहितस्य च पिता धनं गृह्णीयात्तेषां मातुश्चाभावेन भ्रातरो धनं गृह्णीयुः । त्रयाणां पित्रादीनामुदकदानं कार्यम्, त्रिभ्य एव च तेभ्यः पिण्डो देयः । चतुर्थश्च पिण्डोदकयोर्दाता । पञ्चमस्यात्र सम्बन्धो नास्ति । तस्माद्युक्तोऽपुत्रपितामहादिधने गौणपौत्राणामधिकारः[4] । औरसपुत्रपौत्रयोश्च "पुत्रेण लोकाञ्जयति" (मनु. ९।३७) इति । यथा च मनुः

---

1. मनु. ९।१३०; नारदः दायभागे १७५; अपरार्कः ७४३; व्य. नि. ४५७ ।
2. मनु. ९।२१७ ।
3. गौ. २७, २८ ।
4. मनु. ९।१८५-१८६ ।

**अनन्तरं सपिण्डाद्यस्तस्य धनं भवेत् ।**
**अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥ ९।१८७ ॥**

अस्य सामान्यवचनस्योक्तौरसादिसपिण्डमात्रविषयत्वे वैयर्थ्याततश्चानुक्तपत्न्यादि-दायप्राप्त्यर्थमिदम् । सपिण्डमध्यात्संनिकृष्टतरो यः सपिण्डः पुमान् स्त्री वा तस्य मृतधनं भवति । तत्र "एक एवौरसः पुत्रः" (मनु. ९।१६३) इति वचनात्स एव मृतधने स्वाधिकारी । क्षेत्रजगुणवद्दत्तकयोस्तु यथोक्तं पञ्चमं षष्ठं वा भागं दद्यात् । कृत्रिमादिपुत्राणां संवर्धनमात्रं कुर्यात् । औरसाभावे पुत्रिका तत्पुत्रश्च "दौहित्र एव च हरेदपुत्रस्याखिलं धनम्" (मनु. ९।१३२) इति वचनादौरसपुत्ररहित एव तत्रापुत्रो विवक्षितः । तदभावे क्षेत्रजादय एकादश पुत्राः क्रमेण पितृधनाधिकारिणः । परिणीतशूद्रापुत्रस्तु दशमभागमात्राधिकारी "नाधिकं दशमाद्दद्याच्छूद्रापुत्राय" (मनु. ९।१५४) इति । दशमभागावशिष्टं धनं संनिकृष्टसपिण्डो गृह्णीयात् । त्रयोदशविध-पुत्राभावे पत्नी सर्वभर्तृधनभागिनी । यदाह **याज्ञवल्क्यः**

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा ।**
**तत्सुतो गोत्रजो बन्धुशिष्यसब्रह्मचारिणः ॥**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ॥ २।१३५-१३६ ।**

पितृमाता तदभावेऽन्योऽपि संनिकृष्टसपिण्डो मृतधनं गृह्णीयात् । तद्यथा पितामहसंतानेऽविद्यमाने प्रपितामहसन्तान एव । अत ऊर्ध्वं सपिण्डसंतानाभावे समानोदक आचार्यः शिष्यश्च क्रमेण धनं गृह्णीयात्[1] । तथा च–

**सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।**
**त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥**
**अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।**
**इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥**

**( मनु. ९।१८८-१८९ )**

अपुत्रस्य धनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे मातृगामि । तदभावे पितृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे बन्धुगामि । तदभावे सकुल्यगामि । तदभावे सहाध्यायिगामि । तदभावे ब्राह्मण-धनवर्जं राजगामि[2] । प्रपितामहः पितामहः पिता स्वयं सोदर्या भ्रातरः सवर्णायाः पुत्रपौत्राः प्रपौत्रास्तानविभक्तादायादान् सपिण्डानाचक्षते । विभक्तादायादानपि

---

1. मनु. ९।१८७ ।
2. विष्णु. १९।४-१३ ।

सकुल्यानाचक्षते । असत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति । सपिण्डाभावे सकुल्यः । तदभावे पिताऽऽचार्योऽन्तेवासी ऋत्विग्वा हरेत् । तदभावे राजा[1] ।

**देवलः**

**ततो दायमपुत्रस्य विभजेरन् सहोदराः ।**
**कुल्या दुहितरो वापि ध्रियमाणः पिताऽपि वा ॥**
**सवर्णा भ्रातरो माता भार्या वेति यथाक्रमम् ।**
**तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः ॥**

'ध्रियमाणः' विद्यमानः, सस्पृह इति शेषः (स्मृ. च.) । अत्र हलायुधेन 'यथाक्रमं' यथा याज्ञवल्यक्यादिक्रममिति विरोधमाशङ्क्य परिहृतम्—अत्रेदं शास्त्रतत्त्वमिति उपक्रम्य लिखितं च 'पत्नीमारभ्य श्रोत्रियपर्यन्तस्य अपुत्रब्राह्मणधने राजपर्यन्तस्य अपुत्राब्राह्मणधनेऽधिकारित्वम् । एतद्दर्शनाच्च शङ्खलिखितवचनेऽपि व्यवहितकल्पना कार्या' इति, देवलवचने अलब्धक्रमे याज्ञवल्क्यविष्णूक्तः क्रमः अन्वेतीति देवलवचनलिखनानन्तरं याज्ञवल्क्यविष्णुवचने लिखितवतः कल्पतरुकारस्याभिप्रेतम् । वस्तुतस्तु पैठीनसिवाक्ये 'अपुत्रस्य (प्रमीतस्य) भ्रातृगामि द्रव्य' मिति पितृपितामहार्जितधनेतरधने, तदभावे मातापितरा' वित्यपि । अन्यत्र खण्डे क्रमदर्शनमेवेति न विरोधः[2] ।

**बौधायनदेवलनारदाः**

**सर्वत्र दायकं राजा हरेद्ब्रह्मस्ववर्जितम् ।**
**अदायकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥ देवलः ॥**
**ब्रह्मस्वं पुत्रपौत्रघ्नं हन्यादेकाकिनं विषम् ।**
**[ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ] ॥**
**तस्माद्राजा ब्राह्मणस्वं नाददीत कथञ्चन ।**
**परमं ह्येतद्विषं यद् ब्राह्मणस्वमिति ॥**

**( बौधा. १।११,१४ )**

**अभावे दुहितॄणां च सकुल्या बान्धवास्तथा ।**
**ततः सजात्याः सर्वेषामभावे राजगामि तत् ॥**
**अन्यत्र ब्राह्मणात् किं तु राजा धर्मपरायणः ।**
**तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥**

**( नार. १६।५१-५२ )**

1. बौधा. १।११।१५-१२ ।
2. वि. र. ६०० ।

परिषद्गामि वा श्रोत्रियद्रव्यं न राजगामि । न हार्यं राज्ञा देवब्राह्मण-संस्थितम् । न निक्षेपोपनिधिक्रमागतम् । न बालस्त्रीधनानि । एवं ह्याह–

**न हार्यं स्त्रीधनं राज्ञा तथा बालधनानि च ।**
**नार्याः षडागमं वित्तं बालानां पैतृकं धनम् ॥ शङ्ख. ॥**
**येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः ।**
**तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि यः ॥**
**( बृह. २६।११९ )**

यश्चार्थहरः स पिण्डदायी । बालानाथस्त्रीधनानि च राजा परिपालयेत्[1] । रक्षेद्राजा बालानां धनान्यप्राप्तव्यवहाराणां श्रोत्रियवीरपत्नीनाम् । प्रहीणस्वामिकानि राजगामीनि भवन्ति, इति शङ्खलिखितौ । तेषामप्राप्तव्यवहाराणामंशान् सोपचयान् सुगुप्तान् निदध्यादाव्यवहारप्रापणादिति पुत्राधिकारे बौधायनः[2] । तत्र **कात्यायनः**

**प्रोषितस्य च यो भागो रक्षेयुः सर्व एव तम् ।**
**बालपुत्रे मृते रिक्थं रक्ष्यं तत्स्वं तु बन्धुभिः ॥**
**पोगण्डाः परतस्तं तु विभजेरन् यथांशतः ॥ ८४५ ॥**

तथा[3] च **याज्ञवल्क्यः**

**वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।**
**क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥ २।१३७ ॥**

### ज्येष्ठादिव्यवस्था

ज्येष्ठ एव पितृसम्बन्धिधनं गृह्णीयात् । कनिष्ठाः पुनर्ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिवोपजीवेयुः । एवं सर्वेषां सहैवावस्थानम् । उत्पन्नमात्रेण ज्येष्ठेन संस्कार-रहितेनापि मनुष्यः पुत्रवान् भवति । ततश्च "नाऽपुत्रस्य लोकोऽस्ति" इति श्रुतेः पुण्यलोकाभावपरिहारो भवति । तथा "प्रजया पितृभ्यः" इति श्रुतेः "पुत्रेण जातमात्रेण पितृणामनृणश्च सः" इति । अतो ज्येष्ठ एव सर्वधनमर्हति पूर्वस्य । अनुजास्तेन साम्ना वर्तेरन् ।

ज्येष्ठो भ्राता विभागाभावेऽनुजान् भ्रातृन् भक्ताच्छादनादिभिः पितेव बिभृयात् । अनुजाश्च भ्रातरः पुत्रा इव ज्येष्ठे भ्रातरि धर्माय वर्तेरन् । अकृतविभागो ज्येष्ठो यदि धार्मिको भवति तदनुजानामपि तदनुत्वाज्ज्येष्ठः कुलं नाशयति । तथा गुणवाज्ज्येष्ठो लोके पूज्यतमः साधुभिश्चागर्हितो भवति । यो ज्येष्ठोऽनुजेषु भ्रातृषु

---

1. विष्णु. १५।४०; ३।६५ ।
2. २।३।३७ ।
3. बृह. २६।१३९; वसिष्ठ. १५।३१; विष्णु. १७।१५; वि. र. ६०४-६०६; स्मृतिसारः १३८।११४ ।

पितृवद् वर्तेत, स पितेव मातेवागर्हणीयो भवति । यः पुनस्तथा न वर्तेत स मातुलादिबन्धुवदर्चनीयः । एवमविभक्तभ्रातरः सह संवसेयुः । यदि वा **धर्मकामनया कृतविभागाः** पृथग्वसेयुः । यस्मात्पृथगवस्थाने सति पृथक् पृथक् पञ्चमहायज्ञाद्यनुष्ठानधर्मस्तेषां वर्धते, तस्माद्विभागक्रिया धर्मार्था ।

ज्येष्ठस्य विभक्तसाधारणधनादुद्धृत्य विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तद्दातव्यम् । मध्यमस्य चत्वारिंशत्तमो भागो देयः । कनिष्ठस्य पुनरशीतितमो भागो दातव्यः । अवशिष्टं धनं समं कृत्वा विभजनीयम् । ज्येष्ठकनिष्ठव्यतिरिक्ता ये मध्यमास्तेषामेवावान्तरज्येष्ठकनिष्ठतामनपेक्ष्य मध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकं दातव्यः । मध्यमानामवान्तरज्येष्ठकनिष्ठदेयभागे वैषम्यवारणार्थम् सर्वेषां धनप्रकाराणां मध्याद्यच्छ्रेष्ठं धनम्, ज्येष्ठं तद्धनं गृह्णीयात् । यच्चैकमपि प्रकृष्टं द्रव्यं विद्यते तदपि ज्येष्ठ एव गृह्णीयात्[1] । तथा च **मनुः**

**एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ।**
**अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥**
**स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।**
**स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥**
**अजाविकं सैकशफं न जातु विषमं भजेत् ।**
**अजाविकं तु विषमं ज्येष्ठस्यैव विधीयते ॥**
**यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।**
**समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥**
**उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ।**
**पितां प्रधानं प्रजने तस्माद्धर्मेण तं भजेत् ॥**
**न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ।**
**जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ॥**
**यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ ९।११७-१२६ ॥**

**न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतुकम् । ९।२१४ ॥**

'यौतुकम्' पृथग्भूतं द्रव्यं मवादि । हलायुधस्तु 'यौतकं' भार्यालङ्कारादीत्याह (वि. र. ४६०) ।

कामं वसेयुरेकतः संहताः वृद्धिमाचक्षीरन्, इति शङ्खलिखितौ । एकपाकेन वसतां पितृदेवद्विजार्चनम् । एकं भवेद्विभक्तानां तदेव गृहे गृहे स्यात्[2] । जीवति पितरि पुत्राणामर्थदानविसर्गाक्षेपेषु न स्वातन्त्र्यम्, कामदाने प्रोषिते चार्तिं गते वा ज्येष्ठ

1. मनु. ९।१०५-११४ ।
2. बृह. २६।५ ।

एवार्थांश्चिन्तयेत्, इति हारीतः । 'अर्थादानं' पितृनैरपेक्षया साधारणधनग्रहणम् । 'अर्थार्जन'मिति पारिजातः । विसर्गो दानम् । 'आक्षेपः' ऋणिक् हस्तात् तद्धनग्रहणम् । 'कामंदाने' काममात्रादेवार्थदातरि । प्रकाशकारेण तु 'कामं दाने' इति पठित्वा काममिति सन्निहितपित्रनुज्ञामाह । 'दीने' विचित्ते इति विवक्षितम् (वि. र. ४६२)।

पितर्यशक्ते कुटुम्बव्यवहारं ज्येष्ठः कुर्यादनन्तरो वा कार्यज्ञस्तदनुमतेन । न त्वकामे पितरि ऋक्थविभागः । वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान् पालयेदितरेषाम् । ऋक्थमूलं हि कुटुम्बमम् । अस्वतन्त्राः पितृमन्तः । मातर्यप्येवम् स्थितायामिति शङ्खलिखितौ ।

एकधनेन ज्येष्ठं तोषयित्वा । ... ज्येष्ठो दायादित्येके । देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य । ... तच्छास्त्रैर्विप्रतिषिद्धम् । मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते । अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते । अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सह चरन्तीति । ... सर्वे हि धर्मयुक्ता भागिनः (आप. ध. सू. २।६।१४।१।६-७,१०-१३)। जीवद्विभागे पिता नैकं विशेषयेत् । न चैकमकारणान्निर्विभजेत[1] (अर्थ. ३।५)। कात्यायननारदादिभिर्ज्येष्ठपुत्रस्याधिकारविषये यद् व्यवस्थापितं तद्युगान्तरमित्येके ।

मनुः पुत्रेभ्यो दायं व्यभजदिति श्रुतिः । समशः सर्वेषामविशेषात् । वरं वा रूपमुद्धरेज्ज्येष्ठः । तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीति श्रुतिः (बौ. ध. सू. २।२।२-५)। निरवसाययन्ति तोषयन्ति इति स्मृतिचन्द्रिका (२ पृ. २६०)। ज्येष्ठं पुत्रं धनेनोद्धरणलक्षणेन ।नरवसाययन्ति इतरपुत्रेभ्यः पृथक् कुर्वन्ति इति विवादरत्नाकरः (पृ. ४६७)। एकधनेन ज्येष्ठं तोषयित्वा (आप. ध. सू. २।६।११।१)। विभजिष्यमाणे गवां समूहे वृषभमेकधनं वरिष्ठं वा ज्येष्ठाय दद्युर्देवतां गृहं च इतरे निष्क्रम्य कुर्युः । एकस्मिन्नेव दक्षिणं ज्येष्ठायानुपूर्व्यमितरेषामिति हारीतः[2] । जन्मविद्यागुणज्येष्ठो द्व्यंशं दायादवाप्नुयात् । ज्येष्ठः पितृसमः । अन्ये समानांशभागिनः[3] । स यद्येकपुत्रः स्याद् द्वौ भागावात्मनः कुर्यात्[4] । पारिजातस्तु एकपुत्रः ज्येष्ठपुत्र इत्याह । भाष्यकारस्तु पुत्रशब्दं न पठितवान् । यद्येकाकी स्यादिति पठितवान् । यद्येकाकी पत्नीविरहितोऽपि स्यात्तदाप्यंशद्वयं गृह्णीयात् । सपत्नीकश्चेत्तामप्यपरेणांशेन तोषयेत् ।

---

1. दाय. १।४८; कात्या. ८४३; व्य. प्र. ४३९; नारद. (दाय. १५); बृह. अपरार्कः पृ. २६१; व्य. नि. पृ. ४१३; वि. र. ४६८; व्य. म. पृ. ९९ ।
2. वि. र. ४७१ ।
3. बृह., दायभागः २।४२ पृ. ४२; वि. र. पृ. ४८०; स्मृ. च. २ पृ. २६६; परा. मा. ३ पृ. ४९० ।
4. शङ्ख. वि. र. ४५५; दाय. २।५९ पृ. ४७-४८; अपरार्कः ७१७ ।

मदनरत्नधृतकात्यायनवचनात्तु[1] सर्वेषां भ्रातृणां पितापुत्राणां च समांशग्रहणमेव मुख्यमिति प्रतीयते। ... अत एव योगीश्वरोऽपि सर्वे वा स्युः समांशिनः इति सर्वपदं प्रायुङ्क्त। अन्यथा समांशिनो वा प्रकुर्वीत सुतानिति वदेत्। तथा च **बृहस्पतिः**

**क्रमागते गृहक्षेत्रे पितापुत्रा समांशिनः।**
**पैतृके न विभागार्हाः सुताः पितुरनिच्छया॥**

अर्थात् पितामहाद्यर्जिते तदनिच्छयापि विभागार्हा इत्यर्थ[2]। मनुर्निर्दर्शनेन न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्येष्ठता मता। तेन नानावर्णासु भार्यासु पतिसवर्णायां पश्चाज्जातो ज्येष्ठः। तेन कनिष्ठायां पूर्वजात एव ज्येष्ठो न ज्येष्ठायां पश्चाज्जातः।

बहिर्वर्णेषु चारित्र्याद्यमयोः पूर्वजन्मतः। यस्य जातस्य यामयोः पश्यन्ति प्रथमं सुखम्। सन्तानः पितरश्चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम्[3]। इयमुद्धारनियोगस्मृतिरतिक्रान्तकालविषया न त्वद्यत्वे। अनुष्ठेये नियतकालत्वात्स्मृतीनामिति केचित्। ... तस्मादुद्धारनियोगगोवधस्मृतय उपदिष्टा नानुष्ठेयाः। तदेतदपेशलम् (मेधातिथिः, मनु. ९।११२)।

अयं विषमो विभागः शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः। अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन् न तु–इति निषेधात्। यथा महोक्षं वा महाजं वा श्रोत्रियायोकल्पयेत्–इति गवालम्भनविधानेऽपि लोकविद्विष्टत्वादननुष्ठानम्। उक्तञ्च–यथा नियोगधर्मो नो नानुबन्ध्यावधोऽपि वा। तथोद्धारविभागोऽपि नैव संप्रति वर्तते॥ इति। ... तस्माद् विषमो विभागः शास्त्रदृष्टोऽपि लोकविरुद्धत्वाच्छ्रुतिविरोधाच्च नानुष्ठेय इति सममेव विभजेरन्निति नियम्यते[4]। अद्य सम्प्रतिशब्दौ कलियुगमभिसन्धायोक्तौ। एतदेव धारेश्वरेणोक्तम्। ज्येष्ठस्य विंश उद्धार इत्येवमादीनि वाक्यानि न विचार्यन्ते लोकेनात्यन्तपरित्त्यक्तत्वात्। कलाविति शेषः। द्वापरादावनुष्ठेयत्वेनात्यन्तपरित्यागाभावात्[5]।

एवमादीनिं विषमविभागप्रतिपादिकानि मन्वादिवचनानि कलियुगव्यतिरिक्तविषयाणि। अत एव कलौ विषमविभागनिषेध **आदिपुराणे**

---

1. **सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः।**
**पितरौ भ्रातरश्चैव विभागो धर्म्य उच्यते॥** कात्या. ८३८।
2. व्य. म. पृ. ९५।
3. देवलः, वि. र. ४७७; वि. चि. पृ. १२८; निर्णयसिन्धुः ३ पूर्वार्धः पृ. २५१; वैजयन्ती–वि. ध. सू. १८।३७–**द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात्।**
मनु. ९।१२५; गौ. २८।१६; भागवतपुराणम् ३।१७।१८।
4. मिता., याज्ञ. २।११७; व्य. प्र. ४४३; स्मृ. चं. २ पृ. २६६; परा. मा. ३।४९२; व्य. सा. २१९।
5. स्मृ. चं. २ पृ. २६६।

**ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥**

ज्येष्ठांशं जन्मविद्यादिकृतज्यैष्ठ्यनिबन्धनमंशम् । स्मृतिसंग्रहेऽपि । यथानियोगधर्मो...संप्रति वर्तते । संप्रतिकलियुगे[1] । अस्वर्ग्यं लोकविद्विष्टं धर्म्यमाचरेन्न तु । इति योगीश्वरवचनात् । अत्र लोकपदेन युगमुच्यते । युगान्तरे धर्म्यमपि युगान्तरे यद्विद्विष्टं प्रतिषिद्धं तन्नाचरेदित्यर्थः । अन्यथा धर्म्यत्वात्स्वर्ग्यत्वयोर्व्याघातः । शास्त्रविहिते तदभिज्ञविद्वेषो बाधित एव । तदनभिज्ञपामरजनविद्वेषस्तु नास्वर्ग्यत्वापादकोऽग्नीषोमीयादिर्हिंसादावतिप्रसङ्गादित्यादि दूषणं स्यात् । लोकं कर्मसाध्यं ये जानन्ति ते लोकविदो मन्वादयः तैर्द्विष्टं नाचरेत्[2] । अत्र मनुः

**परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।**
**धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥ ४।१७६ ॥**

धर्मविरुद्धौ चार्थकामौ । लोकविद्विष्टं च धर्ममपि (परिहरेत्)[3] । जनघोषे सति क्षुद्रकर्म न कुर्यात्[4] । धर्ममपि लोकविक्रुष्टं न कुर्यात् । करोति चेदाशास्यैनं बुद्धिमद्भिः[5] ।

अत्र कौटल्यः । एकस्त्रीपुत्राणां ज्येष्ठांशः ब्राह्मणानामजाः, क्षत्रियाणामश्वाः, वैश्यानां गावः, शूद्राणामवयः । काणलिङ्गाः तेषां मध्यमांशः । भिन्नवर्णा कनिष्ठांशः । चतुष्पदाभावे रत्नवर्जानां दशानां भागं द्रव्याणामेकं ज्येष्ठो हरेत्; प्रतिमुक्तस्वधापाशो हि भवति—इत्यौशनसो विभागः । अप्रतिषेधाच्चायं कौटलस्याभिमतः[6] ।

पितुः परिच्छदाभरणं च ज्येष्ठांशः । शयनासनं भुक्तकांस्यं च मध्यमांशः, कृष्णधान्यायसं गृहपरिवापो गोशकटं च कनिष्ठांशः । शेषद्रव्याणामेकद्रव्यस्य वा समो विभागः[7] । अनीश्वराः पितृमन्तः स्थितपितृमातृकाः पुत्राः । तेषामूर्ध्वं पितृतो दायविभागः पितृद्रव्याणाम्, स्वयमार्जितमविभाज्यम्, अन्यत्र पितृद्रव्यादुत्थितेभ्यः । पितृद्रव्यादविभक्तोपगमानां पुत्राः पौत्रा वा आचतुर्थादित्यंशभाजः । तावदविच्छिन्नः पिण्डो भवति । विच्छिन्नपिण्डाः सर्वे समं विभजेरन् । अपितृद्रव्याः विभक्तपितृद्रव्या वा सह जीवन्तः पुनर्विभजेरन् । यतश्चोत्तिष्ठेत स ऋद्ध्यंशं लभेत ।

द्रव्यमपुत्रस्य सोदर्याः भ्रातरः सहजीविनो वा हरेयुः, कन्याश्च रिक्थम् । पुत्रवतः पुत्रा दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः, तदभावे पिता धरमाणः, पित्रभावे

1. स्मृ. चं. २ पृ. २६६ ।
2. व्य. प्र. पृ. ४४२ ।
3. वि. ध. सू. ७१।८४-८५ ।
4. बार्हस्पत्य-अर्थशास्त्रम् १।९५ ।
5. बृहस्पतिराजधर्मसूत्रम् १।४-५ ।
6. कौ. ३।६ ।
7. कौ. ३।६ ।

भ्रातरो भ्रातृपुत्राश्च । अपितृका बहवोऽपि च भ्रातरो भ्रातृपुत्राश्च पितुरेकमंशं हरेयुः । सोदर्याणामनेकपितृकाणां पितृतो दायविभागः । पितृभ्रातृपुत्राणां पूर्वे विद्यमाने नापरमवलम्बन्ते, ज्येष्ठे च कनिष्ठमर्थग्राहिणः । जीवद्विभागे पिता नैकं विशेषयेत् । न चैकमकारणान्निर्विभजेत । पितुरसत्यर्थे ज्येष्ठाः कनिष्ठाननुगृह्णीयुः अन्यत्र मिथ्यावृत्तेभ्यः । प्राप्तव्यवहाराणां विभागः । अप्राप्तव्यवहाराणां देयविशुद्धं मातृबन्धुषु ग्रामवृद्धेषु वा स्थापयेयुर्व्यवहारप्रापणात् । प्रोषितस्य वा सन्निविष्टसमम् असन्निविष्टेभ्यो नैवेशनिकं दद्युः, कन्याभ्यश्च प्रादानिकम् । ऋणरिक्थयोस्समो विभागः । उदपात्राण्यपि निष्किञ्चनाः विभजेरन्' इत्याचार्याः । 'छलमेतदिति कौटल्यः । सतोऽर्थस्य विभागो नासतः' । एतावानर्थः सामान्यः, तस्यैतावान्, प्रत्यंशः' इत्यनुभाष्य ब्रुवन् साक्षिषु विभागं कारयेत् । दुर्विभक्तम् अन्योन्यापहृतम् अन्तर्हितम् अविज्ञातोत्पन्नं वा पुनर्विभजेरन्' । अदायादकं राजा हरेत्, स्त्रीवृत्तिप्रेतकार्यवर्जमन्यत्र श्रोत्रियद्रव्यात्, तत्र त्रैविद्येभ्यः प्रयच्छेत् । पतितः पतिताज्जातः क्लीबश्चांशाः जडोमत्तान्धकुष्ठिनश्च । सति भार्यार्थे तेषामपत्यमतद्विधं भागं हरेत्, ग्रासाच्छादनमितरे पतित वर्णाः ।

**तेषां च कृतदाराणां लुप्ते प्रजनने सति ।**
**सृजेयुर्बान्धवाः पुत्रांस्तेषामंशं प्रकल्पयेत् ॥** ( कौ. ३।५ )

नानास्त्रीपुत्राणां तु संस्कृतासंस्कृतयोः कन्या कृतक्रिययोरभावे च, एकस्याः पुत्रयोर्यमयोर्वा पूर्वजन्मना ज्येष्ठभावः । सूतमागधव्रात्यरथकाराणामैश्वर्यतो विभागः । शेषास्तमुपजीवेयुः । अनीश्वरास्समविभाग इति । चातुर्वर्ण्यपुत्राणां ब्राह्मणीपुत्रश्चतुरोंऽशान् हरेत्, क्षत्रियापुत्रस्त्रीनंशान्, वैश्यापुत्रो द्वावंशौ, एकं शूद्रापुत्रः । तेन त्रिवर्णद्विवर्णपुत्रविभागः क्षत्रियवैश्ययोर्व्याख्यातः । ब्राह्मणस्यानन्तरापुत्रः तुल्यांशः क्षत्रियवैश्ययोरर्धांशः, तुल्यांशो वा मानुषोपेतः ।

तुल्यातुल्ययोरेकपुत्रस्सर्वं हरेत् । बन्धूंश्च बिभृयात् । ब्राह्मणानां तु पारशवस्तृतीयमंशं लभेत । द्वावंशौ सपिण्डः कुल्यो वाऽऽसन्नः स्वधादानहेतोः । तदभावे पितुराचार्योऽन्तेवासी वा ।

**क्षेत्रे व जनयेदस्य नियुक्तः क्षेत्रजं सुतम् ।**
**मातृबन्धुः सगोत्रो वा तस्मै तत् प्रदिशेद् धनम् ॥**
**( कौ. ३।६ )**

तथा च–

**समवेतैस्तु यत्प्राप्तं सर्वे तत्र समांशिनः ।**
**तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः[1] ॥**

---

1. बृह., अपरार्कः पृ. ७२७; स्मृ. चं. २ पृ. २७८; व्य. नि. पृ. ४२४; वि. र. ४८१-८२ ।

अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।
स एवांशास्तु सर्वेषां भ्रातृणां न्यायतो भवेत् ।
लभते तत्सुतो वाऽपि निवृत्तिः परतो भवेत्[1] ॥

अविभक्तानामेव वा विभक्तानां सह वसतां संसृष्टानां वा पुनर्विभागो भ्रातृतत्सुत-तत्सुतपर्यन्तमेव तत्सुताच्चतुर्थान्निवर्तत इति[2] । बीजिचतुर्थभागमभिव्याप्य दायभाग इत्यर्थः । विभक्तानामपि संसर्गादिना सहवासे सति इयं व्यवस्था । वसतां सहेति वचनात्[3] ।

पित्रादिधनविभागे भ्रातृणां धर्मतः कृतः सकृदेव भवति न पुनरन्यथा क्रियते । तथा कन्या पित्रादिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते । एवञ्चान्येन पूर्वमन्यस्मै दत्तायां पश्चात्पित्रादिभिः प्राप्तायामपि जनितमपत्यं न बीजिनो भवतीत्येतदर्थमस्योपन्यासः । तथा कन्यातोऽन्यस्मिन्नपि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीयत इति त्रीण्येतानि साधूनां सकृद्भवन्ति । यद्यपि कन्यादानस्य 'सकृत्करणं प्रकृतोपयुक्तं' तथापि प्रसङ्गादंशदानयोरपि सकृत्ताभिधानम् 'सकृदाह ददानि' (मनु. ९।७७) इत्यनेनैव कन्यादानस्यापि सकृत्करणसिद्धौ प्रकृतोपयोगित्वादेव पृथगभिधानम्[4] । अत्र चापवादाः[5]

**गोत्रसाधारणञ्च त्यक्त्वा योऽन्यदेशं समाश्रितः ।**
**तद्वंश्यस्यागतस्यांशः प्रदातव्यो न संशयः ॥**
**तृतीयः पञ्चमश्चैव सप्तमो वाऽपि यो भवेत् ।**
**जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥**
**यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।**
**तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥ बृहस्पतिः ।**
**ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।**
**तन्मूलत्वात्तु ते मौला ऋषिभिः संप्रकीर्तिताः ॥ कात्यायनः ।**

---

1. कात्या. अपरार्कः पृ. ७२७; स्मृ. २ पृ. २७८; वि. र. पृ. २८२; व्य. प्र. पृ. ४४९; व्य. म. पृ. १०१ ।
2. वि. र. पृ. ४८२ ।
3. व्य. प्र. पृ. ४४९ ।
4. मनु. ९।४७; नारद. (स्त्रीपुं. २८); वनपर्व २९४।२६ ।
5. बृह. दाय भागः ८।२-३; स्मृ. च. २ पृ. ३०७-३०८; दायतत्त्व. पृ. १८०; वि. र. पृ. ५४०-५४१; वि. वि. पृ. १३२; अपरार्कः पृ. ७६०; मिता. याज्ञ. २।१५१ अत्र कात्यायनवचनम् ।

यस्त्वा चतुर्थादविभक्तविभक्तानामित्यादिदेवलोकनियमः स सहवासादौ । अयं तु दूरदुर्गमवासादावित्यविरोधः[1] । तदनेन चिरप्रोषितवंश्येन समन्ताद् वासिभिर्मौलैरात्मज्ञापनपूर्वकं भागग्रहणं कार्यम्[2] । ऋणे पित्रादिधार्यमाणे धने च तदीये सर्वस्मिन्यथाशास्त्रं विभक्ते सति पश्चाद्यत्किञ्चित्पैतृकम् ऋणं धनं वा विभागकालेऽज्ञातमुपलभ्यते तत्सर्वं समं कृत्वा विभजनीयम्, न तु शोध्यं ग्राह्यं न वा ज्येष्ठस्योद्धारो देयः[3]। दुर्विभक्तमन्योन्यापहृतमन्तर्हितमविज्ञातोत्पन्नं वा विभजेरन्[4] । अत्र **याज्ञवल्क्यः**

**पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।**
**मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥**
**क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः ।**
**दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ २।११८-११९ ॥**

तथा च—

**अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।**
**तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥ २।१२६ ॥**

परस्परापहृतं समुदायद्रव्यं विभागकाले चाज्ञातं विभक्ते पितृधने यद्दृश्यते, तत्समैरंशैर्विभजेरन् इत्येवं स्थितिः शास्त्रमर्यादा । अत्र 'समैरंशैः' इति वदतोद्धारविभागो निषिद्धः । विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितम् । एवञ्च वचनस्यार्थवत्त्वान्न समुदायद्रव्यापहारे दोषाभावपरत्वम् ।

ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयांसम् (मनु ९।२१३), नैतत्; यतः संभावितस्वातन्त्र्यस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोषं वदता ज्येष्ठपरतन्त्राणां कनीयसां पुत्रस्थानीयानां दण्डापूपिकनीत्या सुतरां दोषो दर्शित एव । तथा चाविशेषेणैव दोषः श्रूयते । यो भागिनं भागार्हं भागान्नुदते भागादपकरोति भागं तस्मै न प्रयच्छति, स भागान्नुन्न एनं नोत्तारं चयते नाशयति दोषिणं करोति; यदि तं न नाशयति, तदा तस्य पुत्रं पौत्रं वा नाशयति इति, ज्येष्ठविशेषमन्तरेणैव साधारणद्रव्यापहारिणो दोषः श्रुतः । अथ साधारणं द्रव्यमात्मनोऽपि स्वं भवतीति स्वत्वबुद्ध्या गृह्यमाणं न दोषमावहतीति मतम् । तदसत्, स्वबुद्ध्या गृहीतेऽप्यवर्जनीयतया परस्वमपि गृहीतमेवेति निषेधानुप्रवेशाद्दोषमावहत्येव । यथा मौद्गे चरौ विपन्ने सदृशतया माषेषु गृह्यमाणेषु 'अयज्ञिया वै माषाः' इति निषेधो न प्रविशति, मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिणोक्ते मुद्गावयवेषु गृह्यमाणेष्ववर्जनीयतया माषावयवा अपि गृह्यन्ते एवेति निषेधः

1. वि. र. पृ. ५४१; स्मृ. चं. २ पृ. ३०८ ।
2. दायभागः ८।४ ।
3. मनु. ९।२१८ ।
4. अर्थ. ३।५ ।

प्रविशत्येवेति राद्धान्तिनोक्तम् । तस्माद्वचनतो न्यायतश्च साधारणद्रव्यापहारे दोषोऽस्त्येवेति[1] ।

विभजेरन्निति वदता येन दृश्यते तेनैव न ग्राह्यमिति दर्शितम्[2] । पूर्वं यथा यस्य विभागाकल्पना कृता तत्समानैव कार्या न पुनरपहर्तुरपहर्तृतया अल्पभागो दातव्यो न दातव्य एव वेति समतां नयेदित्यस्यार्थः[3] । अत्र श्रुतिः–

"यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयते त्वेवैनमिति (ऐ. ब्रा. ६।७)"[4] ।

यो ज्येष्ठो भ्राता लोभात्कनीयसो भ्रातॄन्वञ्चयेत्स ज्येष्ठभ्रातृपूजाशून्यः सोद्धार-भागरहितश्च राजदण्ड्यश्च स्यात्[5] । अत्र वैमत्यम् । तदुक्तं विश्वरूपेणापि । अतस्तस्करदोषो नास्तीति वचनारम्भसामर्थ्यात् स्तेनधात्वर्थानिष्पात्तेरित्यभि-प्रायः ।...सत्यपि वा स्तेयेऽपहर्तुरपि विभागवचनदर्शनान्न स्तेयदोषः । अन्यथा सुवर्णादिनिह्नवे पतितस्य भागो न स्यात्[6] । समर्थने प्रयुक्तं पूर्वमीमांसावचनम्– प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः (जै. ६।३।२०)। अथ यत्प्रतिषिद्धमयज्ञिया वै वरकाः कोद्रवाः अयज्ञिया वै माषा इति। किं, तच्छ्रुतद्रव्यापचारे प्रतिनिधातव्यमुत नेति । किं प्राप्तम् प्रतिनिधेयमिति ।...एवं प्राप्ते ब्रूमः । प्रतिषिद्धं च न प्रतिनिधातव्यमिति । अविशेषेण ह्येतदुच्यते न यज्ञार्हा माषा वरकाः कोद्रवाश्चेति । यज्ञसम्बन्ध एषां प्रतिषिध्यते, शबरः[7] । अत्र कात्यायनः[8]

**बन्धुनापहृतं द्रव्यं बलान्नैव प्रदापयेत् ।**
**गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः ।**
**दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद्भृगुः ॥ कात्या. ८४२ ॥**
**गृहोपस्करबाह्यादि दोह्यालङ्कारकर्मिणः ।**
**...गूढे कोशो विधीयते ॥ बृह. ॥**

---

1. अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत् ।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः ॥ कात्या. ८८५-८८६ ॥
2. मिता. याज्ञ. २।१२६ ।
3. दायभागः १३।२ ।
4. उद्धृतम्–मिता., याज्ञ. २।१२६; व्य. म. पृ. १३१; परा. मा. ३ पृ. ५६५; स. वि. ४३८; व्य. प्र. ५५५ ।
5. मनु. ९।२१३ ।
6. दायभागः १३।११, १३ पृ. २२४-२२५; वि. र. ५२६; अपरार्कः पृ. ७३२; व्य. प्र. पृ. ५५५ ।
7. अस्मिन् विषये मिताक्षरा–याज्ञ. २।१२६ ।
8. दायभागः १३।७ पृ. २२२; दायतत्त्व. पृ. १८३; वि. र. पृ. ५२६, ४९८; स्मृ. चं. २ पृ. २७३ ।

विभागस्यापलापे पितृबन्धुभिर्मातृबन्धुभिः साक्षिभिः लेख्येन च विभागपत्रेण विभागभावना विभागनिर्णयो ज्ञातव्यः। तथा यौतकैः पृथक्कृतैर्गृहक्षेत्रैश्च। पृथक् कृष्यादिकार्यप्रवर्तनं पृथक्पञ्चमहायज्ञादिधर्मानुष्ठानं च[1]। नारदेन विभागलिङ्गमुक्तम्[2]—

विभागधर्मसन्देहे दायादानां विनिर्णयः।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात्॥
भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥ १३।३७, ३९॥
साक्षित्वं प्रातिभाव्यं च दानग्रहणमेव च।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन॥ १३।४२, ४३॥
स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत्।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्॥ बृहस्पतिः॥
वसेयुर्दशवर्षाणि पृथग्धर्माः पृथक् क्रियाः।
भ्रातरस्तेऽपि विज्ञेया विभक्ताः पैतृकाद्धनात्॥ कात्यायनः[3]।
साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्।
अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ॥ बृहस्पतिः[4]॥

स्वार्जितद्रव्यविषये विषमो विभागोऽपि स्वीकृतः। यदा विभागं पिता चिकीर्षति तदा इच्छया विभजेत् पुत्रानात्मनः सकाशात् पुत्रं पुत्रौ पुत्रान्। ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यभागेन, कनिष्ठं कनिष्ठभागेन विभजेत्[5]। ज्येष्ठस्य विंश उद्धारः, सर्वद्रव्याच्च यद्वरम्। ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः। सर्वे वा ज्येष्ठादयः समांशभाजः कर्त्तव्याः।

पितृक्रमायाते तु स्वस्वाम्यस्य नेच्छया विषमो विभागो युक्तः। यदा पितुर्विभागेच्छा स तावदेकः कालः। अपरोऽपि जीवत्यपि पितरि द्रव्यनिःस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम्, पितुरनिच्छायामपि पुत्रेच्छयैव विभागो भवति। यथोक्तं नारदेन अत ऊर्ध्वं पितुः पुत्रा विभजयेयुर्धनं समम् इति पित्रोरूर्ध्वविभागं प्रतिपाद्य—"मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते चापि रमणे पितर्युपरतस्पृहे"॥ इति दर्शितः। अत्र 'पुत्रा धनं समं विभजेयुः' इत्यनुषज्यते॥ गौतमेनाऽपि—"ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्" (२८।१) इत्युक्त्वा 'निवृत्ते चापि

1. याज्ञ. २।१४९।
2. नारद. १३।३७, ३९।
3. स्मृ. चं. २ पृ. ३११; स. वि. पृ. ३४८; अपरार्कः पृ. ७५७; नारद. (दाय. ४१)।
4. दायभागः १४।८ पृ. २३१; स्मृ. चं. २ पृ. ३१०; व्य. प्र. ५६४।
5. याज्ञ. २।११४; मनु. ९।११२।

रजसि' (गौ. २८।२) इति द्वितीयः कालो दर्शितः । 'जीवति चेच्छति' (गौ. २८।२) इति तृतीयः कालो दर्शितः[1] । स्पष्टं यत्पिमहाद्यर्जिते धने तदनिच्छयापि पुत्रा विभागार्हाः । पितुरिच्छया विभागो द्विधा दर्शितः–समो विषमश्च ।

तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम् । स्थावरे तु स्वार्जिते पित्रादिप्राप्ते न पुत्रादिपारतन्त्र्यमेव । स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् । असम्भूय सुतान्सर्वान् न दानं न च विक्रयः । ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः । इत्यादिस्मरणात्[2] । पैतृके पैतामहे च स्वाम्यं यद्यपि जन्मनैव तथापि पैतृके पितृपरतन्त्रत्वात् पितुश्चार्जकत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽस्तीति विशेषः[3] । अत्र **कात्यायनः**

**पैतामहं समानं स्यात्पितुः पुत्रस्य चोभयोः ।**
**स्वयं चोपार्जिते पित्रा न पुत्रः स्वाम्यमर्हति ॥ ८३९ ॥**

**जीवत्पितृकविभागः**

यत्पुनः पितृसम्बन्धिधनं तेनासामर्थ्येनोपेक्षितत्वादनवाप्तं पुत्रः स्वशक्त्या प्राप्नुयात्तत्स्वयमर्जितमनिच्छत्पुत्रैः सह न विभजेत्[4] । द्रव्यं सुवर्णरजतादि- यत्पितामहेन प्रतिग्रहविजयादिना लब्धं तत्र पितुः पुत्रस्य च स्वाम्यं लोकप्रसिद्धमिति कृत्वा विभागोऽस्ति । विभागस्तु समानम्, तस्मान्न पितुरिच्छयैव विभागो नापि पितुर्भागद्वयम् । पारतन्त्र्यं मातापित्रर्जितद्रव्यविषयम्[5] । सरजस्कायां मातरि सस्पृहे च पितरि विभागमनिच्छत्यपि पुत्रेच्छया पैतामहद्रव्यविभागो भवति । तथाऽविभक्तेन पित्रा पैतामहे च स्वाम्यं यद्यपि जन्मनैव, तथापि पैतृके पितृपरतन्त्रत्वात् पितुश्चार्ज- कत्वेन प्राधान्यात् पित्रा विनियुज्यमाने स्वार्जिते द्रव्ये पुत्रेणानुमतिः कर्तव्या । पैतामहे तु द्वयोः स्वाम्यमविशिष्टमिति निषेधाधिकारोऽप्यस्तीति विशेषः । यत्पिता- महार्जितं केनाऽप्यपहृतं पितामहेनानुद्धृतं यदि पितोद्धरति तत्स्वार्जितमिव पुत्रैः

---

1. क्वचित्तदिच्छां विनापि विभागमाह बृहस्पतिः–
**क्रमागते गृहक्षेत्रे पिता पुत्राः समांशिनः ।**
**पैतृके न विभागार्हाः सुताः पितुरनिच्छया ॥**
2. मिता., याज्ञ. २।११४; दायभागः २।२९-३०; व्य नि. पृ. ४११ ।
3. मिता. याज्ञ. २।१२१; वि. ध. सू. १७।१ ।
4. मनु. ९।२०९; वि. १८।४३ ।
5. मनु. ९।२०९; नारद. १३।१२; व्य. ११४, १२० ।

सार्धमकामः स्वयं न विभजेदिति वदन् पितामहार्जितमकामोऽपि पुत्रेच्छया पुत्रैः सह विभजेत्[1] ।

जीवन्नेव वा प्रविभज्य वनमाश्रयेत् । वृद्धाश्रमं वा गच्छेत् । स्वल्पेन वा संविभज्य भूयिष्ठमादाय वा वसेत । स यद्युपदश्येत् पुनस्तेभ्यो गृह्णीयात् । क्षीणांश्च विभजेदिति हारीतः । जीवति वा पितरि रिक्थविभागोऽनुमतः । प्रकाशं वा मिथो वा धर्मतः, इति शङ्खलिखितौ[2] । स यद्येकपुत्रः स्याद् द्वौ भागावात्मनः कुर्याद्द्विपदचतुष्पदेषु रूपमधिकम् । वृषभो ज्येष्ठाय । गृहं यवीयसे । अन्यत्र पितुरवस्थानस्[3] । एकधनेन ज्येष्ठं तोषयित्वा । जीवन्पुत्रेभ्यो विभजेत्समं क्लीबमुन्मत्तं पतितं परिहाप्य[4] । दशानां चैकमुद्धरेज्ज्येष्ठः । सममितरे विभजेरन्[5] । "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता" (नारद. १६।१८) । पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे[6] । तथा च–

**द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।**
**सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥**
**पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।**
**विद्याशौर्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥**
**प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।**
**तदभावे तु तनयाः समांशाः परिकीर्तिताः ॥**
**(बृह. २६।१४,५८,५९)**

**पित्रोरभावे भ्रातृणां विभागः संप्रदर्शितः ।**
**मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥ बृह. २२६।९ ॥**
**समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।**
**तथैव ते पालनीया विनेयास्ते स्युरन्यथा ॥ (बृह. २६।१५)**

याज्ञवल्क्यः

**यदि कुर्यात् समानंशान् पत्न्यः कार्याः समांशिकाः ।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वसुरेण वा ॥ २।११५ ॥**

---

1. याज्ञ. २।१२१ ।
2. वि. र. ४५५ ।
3. शंख., वि. र. ४६८ ।
4. आप. २।१३।१२; २।१४।१ ।
5. बौधा. २।३।६-७ ।
6. विष्णु. १७।१ ।

अत्र मनुः[1]

**भ्रातृणामविभक्तानां यद्युत्थानं भवेत्सह ।**
**न तत्र विषमं भागं पिता दद्यात्कथञ्चन ॥ ९।२१५ ॥**

**प्रमीतपितृकविभागः, तत्रोद्धारः**

विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथो गोवृषः । काणखोरकूटवण्डा मध्यमस्यानेकश्चेत् । अविर्धान्यायसी गृहमनोयुक्तं चतुष्पदां चैककं यवीयसः । समधेतरत्सर्वम्[2] । विभजिष्यमाणे गवां समूहे वृषभमेकधनं वरिष्ठधनं वा ज्येष्ठाय दद्युः । देवतागृहं च । इतरे निष्क्रम्य कुर्युः । एकस्मिन्नेव वा दक्षिणं ज्येष्ठायानुपूर्व्यमितरेषाम्, इति हारीतः । देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य । रथः पितुः परिभाण्डञ्च[3] । असति पितरि चतुर्णां वर्णानां गोऽश्वाऽजावयो ज्येष्ठांशः[4] । मध्यमो दायः मध्यमं धनं विशोंऽशः, एतच्च ज्येष्ठे वेदसमन्विते, अन्येषु निर्गुणेषु मन्तव्यमिति हलायुधपारिजातौ । अन्ये तु पुत्राणां मध्यमो भागः मध्यमं धनं विंशो भागः प्रत्येकम् । यदाग्निवेदवान् ज्येष्ठोऽन्येऽपि निर्गुणाः, तदा ज्येष्ठस्य दशमो भागो निर्गुणभ्रातॄणां तु पूर्ववत् चत्वारिंशत्तमो भाग एव विभज्य दातव्यः ।

एकधनेन ज्येष्ठं तोषयित्वा (आप. २।५।१२) जीवन्पुत्रेभ्यो दायं विभजेत्समं क्लीबमुन्मत्तं पतितञ्च परिहाप्य (आप. २।६।१) । एकेन प्रधानेन केनचिद् धनेन गवादिना ज्येष्ठं पुत्रं तोषयित्वा पुत्रेभ्यो दायं विभजेत्समम् । आत्मना परस्परं च तेषां सामान्याभिधानात् क्रमागतं स्वयमर्जितं क्लीबादीन् वर्जयित्वा । "अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा उन्मत्तजडमूकाश्च ये च निरिन्द्रिया" इत्यादीनां पुत्रसद्भावे ते त्वंशहराः । स्मृत्यन्तरे तु स्वयमर्जिते पितुरिच्छया विषमविभागे दर्शितः, न स धर्म्य इत्यपि पक्षः । भार्याया अपि अंशो न दर्शितः । आत्मन एवांशस्तस्या अपीति मन्यते । केचित्तु पितुर्द्वावंशावित्याहुः । अयमपि न सर्वमान्यपक्षः । यथा पुत्राणामेक एवांशः सभार्याणां तथा पितुरिति । अथ वा पुत्राणामेवांशसाम्यम् । आत्मनस्त्वाधिक्येऽपि न दोषः । विभागादूर्ध्वं पित्रोर्जीवनाभावे पुत्रभागेभ्यो ग्राह्यमित्युक्तं भवति ।

---

1. **समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।**
**तथैव ते पालनीया विनेयास्ते स्युरन्यथा ॥ बृह. २६।१५ ॥**
2. गौतम. २८।५-८ ।
3. आप. २।१४।७-८ ।
4. बौधा. २।२।९ ।

**अनेकमातृकभ्रातृविभागः**

ऋषभोऽधिको ज्येष्ठस्य । ऋषभषोडशा ज्यैष्ठिने यस्य । समधा वाऽज्यैष्ठिनेयेन यवीसाम्[1] । कनीयस्याः पुत्रस्य ज्येष्ठस्य ऋषभ उद्धारः । सममन्यत् । ज्येष्ठायां जातो 'ज्यैष्ठिनेयः', तस्य पञ्चदश गावः बृषभश्चैक उद्धारः । सममितरत् । सम एवायं विभागो भवति अज्यैष्ठिनेयेन कनिष्ठायां जातेन ज्येष्ठेन सह यवीयसः ज्येष्ठायाः पुत्रस्य कनीयसः । एकतः मातृतो ज्यैष्ठ्यमन्यस्य जन्मतः । अयमपि गुणवद्विषयः (मस्करी) । ऋषभोऽधिको ज्येष्ठाय । गृहं यवीयसे । अन्यत्र पितुरवस्थानात्[2] । अत्र मनुः

> पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः ।
> कथं तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥
> एकं वृषभमुद्धारं संहरेत स पूर्वजः ।
> ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥
> ज्येष्ठस्तु जातो ज्येष्ठायां हरेद् वृषभषोडशाः ।
> ततः स्वमातृतः शेषा भजेरन्निति धारणा ॥ ९।१२२-१२४ ॥

'ज्येष्ठा' प्रथमोढा । पश्चादूढा 'कनिष्ठा' । तयोर्जातानां किं मातुरुद्वाहक्रमेण ज्यैष्ठ्यं स्यात् स्वजन्मक्रमेण वेति संशयमुपन्यस्योत्तरत्र निर्णेष्यते संप्रतिपत्तुम् । पूर्वस्यां जातः पूर्वजः' । कनीयान् वृषभस्योक्तभागवान् । 'ततो' वृषभादन्ये ये वृषभा 'अज्येष्ठाः' ते बहूनामेकशः कृत्वा देयाः । 'तदूनानाम्' तस्मात्पूर्वजादूनानाम् । 'स्वमातृतः' पुनर्मुख्यतोढत्वात् तेनात्र मातृज्यैष्ठ्यमाश्रितं भवति न जन्मत इति मेधातिथिः ।

श्लोकद्वयस्यार्थवादत्वान्न विवेके यत्नः । उपक्रममात्रमेतत् । सिद्धान्तमुच्यते—

> सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ।
> न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥
> (मनु. ९।१२५)

एतच्च परमतमुक्तं मनुना । स्वमतन्तु 'सदृशीषु' इत्यादिना जन्मतो ज्यैष्ठ्यमस्तीति दर्शितमिति प्रकाशकारः । यत् कैश्चिदुक्तं तदूनानां स्वमातृत इति 'ज्येष्ठस्तु जातो ज्येष्ठायाम्' (मनु. ९।१२४) इति पूर्वपक्षमुक्त्वा 'सदृशस्त्रीषु' (९।१२५) इत्यादिना सिद्धान्तितम् । अन्यथा विरोधादिति तदपहसितम् । गुणाचारादिति विशेषेण व्यवस्थायाः प्रतिपादितत्वात्, इति, युक्तञ्चैतदिति सिद्धान्तत्वे पूर्व-

---

1. गौ. २८।१४-१६ ।
2. शङ्ख., वि. र. ४७७ ।

पक्षितत्वस्य व्यवस्थापनानर्हत्वात् । लक्ष्मीधरेण ज्येष्ठापुत्रस्य कनीयस एव ज्येष्ठत्वप्रयुक्तोद्धारव्यवस्थापनाच्च पारिजातस्याप्येवं परिग्रहाच्च[1] ।
तथा[2] च **बृहस्पतिः**

**यद्येकजाता बहवः समाना जातिसङ्ख्या ।**
**सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥**
**सवर्णा भिन्नसङ्ख्या ये पुंभागस्तेषु शस्यते ॥ २६।२४-२५ ॥**
**पितृऋक्थहराः पुत्राः सर्व एव यथांशतः ।**
**विद्याकर्मयुतस्तेषामधिकं लब्धुमर्हति ॥**
**विद्याविज्ञानशौर्यार्थज्ञानदानक्रियासु च ।**
**यस्येह प्रार्थना कीर्तिः पितरस्तेन पुत्रिणः ॥ २६।१९-२० ॥**

द्व्यंशं वा पूर्वजस्य स्यात् । एकैकमितरेषाम् । एकैकं वा धनरूपं काम्यं पूर्वः पूर्वो लभेत । दशतः पशूनाम् । नैकशफद्विपदानाम्[3] । द्व्यशं हरेज्ज्येष्ठः । गवाश्वस्य चानुदशमम् । अजावयो गृहं च कनिष्ठस्य । कार्ष्णायसं गृहोपकरणानि च मध्यमस्य । याश्चानपत्याः स्त्रियस्तासां चापुत्रलाभात्[4] । सर्वे हि धर्मयुक्ता भागिनः । यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत[5] । अत्र **नारदः**

**कुटुम्बार्थेषु यो युक्तस्तत्कार्यं कुरुते तु यः ।**
**स भ्रातृभिर्बृहणीयो ग्रासाच्छादनवाहनैः ॥ १६।३५ ॥**

अत्र हलायुधेन तु यः स्वयोग्यतया भागं न गृह्णाति, तस्यापि किञ्चिद्दत्वा तत्पुत्राणां विवादनिवृत्त्यर्थं विभागः कर्त्तव्य इत्यस्यार्थं व्याख्याय तदेवाहेति कृत्वा 'भ्रातॄणां यस्तु नेहेत' इति मनुवाक्यमवतारितम् । प्रकाशकारस्तु अस्यार्थाधिक्य-मादायाह । ये भ्रातरः सह वसन्तो विद्यमानपितृधनाः कृष्यादिना चाधिकं धनमार्ज-यन्ति, तेषां यद्येको नार्जयेत्, स निर्भाज्यापसारयितव्यः स्वकादंशात् यावदधिकं तदीयधनव्यवहारेणोत्पन्नं तत्तस्य न दातव्यम्, न तु मूलस्य निषेधः । तत्रापि सर्वथा न निर्भाज्यः । किञ्चित् दत्वोपजीवनं क्लेशफलमात्मनो गृहीत्वा शेषमस्मै दातव्यम् । 'ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समंशिनः' इति पक्षद्वयेऽप्यपवादमाह ।

1. वि. र. ४७६, ४७९ ।
2. मनु. ९।११५, ११६-११७, २१३, २०७; याज्ञ. २।११७; बृह. २६।१८; नारद. १६।१३-१४, ३३५ ।
3. गौ. २८।९-१३ ।
4. वसिष्ठ. १७।४०, ४१, ४२-४५; मनु. ९।२०७ ।
5. आप. २।१४।१४-१५ ।

**विभागानर्हाः**

सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषाम्[1]। समानवर्णापुत्रोऽपि 'अपि' शब्दाज्ज्येष्ठोऽपि दुर्वृत्तः पतित इति यावत् । न लभेत इत्येके मन्यन्ते । लभते इति आचार्यः । शक्यविनेयत्वापेक्षया विकल्पः (मस्करी) । 'अपि' शब्दात्किमुत-विजातीयपुत्रा इत्याचार्याः[2] । सर्व एव भ्रातरो धनं प्रतिषिद्धाचरणाः नार्हन्ति[3] । अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्त्यन्ते[4] । तथा[5] च **बृहस्पतिः**

**सवर्णाजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने ।**
**तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते ॥**
**उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।**
**अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम् ॥**
**तया गवा किं क्रियते या न धेनुर्न गर्भिणी ।**
**कोऽर्थस्तेन तु पुत्रेण यो न विद्वान्न धार्मिकः ॥**
**शास्त्रशौर्यार्थरहितस्तपोज्ञानविवर्जितः ।**
**आचारहीनः पुत्रास्तु मूत्रोच्चारसमस्तु सः ॥ २६।३४-३७ ॥**

पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः । रिक्थग्राहिभिस्ते भर्तव्याः । तेषां चौरसाः पुत्रा भागहारिणः । न तु पतितस्य । पतनीये कृते कर्मण्यनन्तरोत्पन्नाः । प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः । तत्पुत्राः पैतामहेऽप्यर्थे । अंशग्राहिभिस्ते भरणीयाः[6] । जडक्लीबौ भर्तव्यौ । अपत्यं जडस्य भागार्हम् । शूद्रापुत्रवत्प्रतिलोमासु[7] । शूद्रापुत्रोऽप्यनपत्यशुश्रूषुश्चेल्लभेत वृत्तिमन्तेवासिविधिना तत्पुत्रोक्तप्रकारेण । यथा शूद्रापुत्रो जीवनमात्रं लभत एवं प्रतिलोमासुतोऽपीति । यथाह **कात्यायनः**

**अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।**
**प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित् ॥**
**अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ।**
**असवर्णप्रसूतश्च क्रमोढायां तु यद्भवेत् ॥**
**प्रतिलोमप्रसूता या तस्याः पुत्रो न रिक्थभाक् ।**
**ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिः स्मृतम् ॥**

1. गौ. २८।४१ ।
2. वि. र. ४८८ ।
3. मनु. ९।२१४ ।
4. शङ्ख, वि. र. ४८९ ।
5. मनु. ९।२०१-२०३; याज्ञ. २।१४०-१४२ ।
6. विष्णु. १५।३२-३९ ।
7. गौ. २८।४४-४५ ।

बन्धूनामप्यलाभे तु पित्र्यं द्रव्यं तदाप्नुयात् ।
अपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवैः ॥ ८६२-८६५ ॥

**असंस्कृतसंस्करणम्**

विभज्यमाने दायार्थे कन्यालङ्कारं वैवाहिकं स्त्रीधनं कन्या लभेत् । मातुरलङ्कारं दुहितरः साम्प्रदायिकं लभेरन्नन्यद्वा[1] । अनूढायाः कन्यायाः स्ववित्तानुसारेण संस्कारं कुर्यात्[2] । तथा[3] च कात्यायनः

कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते ।
पुत्राणां च त्रयो भागाः स्वाम्यं स्वल्पे धने स्मृतम् ॥ ८५० ॥

**विभाज्यम्**

तत्र[4] **कात्यायनः**

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले दातव्यमृणिभिः सर्वमेव तु ॥
तदृणं धनिने देयं नान्यथैव प्रदापयेत् ।
भावितं चेत्प्रमाणेन विरोधात्परतो यदा ॥
पित्र्यं पित्र्यर्णसंबद्धमात्मीयं चात्मना कृतम् ।
ऋणमेवंविधं शोध्यं विभागे बन्धुभिः सह ॥
धर्मार्थं प्रीतिदत्तं च यदृणं स्वनियोजितम् ।
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥
दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशङ्कायां प्रत्ययस्त्वत्र कीर्तितः ॥
गृहोपस्करवाह्यास्तु दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद् भृगुः ॥
(८४६, ८४७, ८४९, ८४८, ८४९, ८४१, ८४२)

प्रकाशपारिजातौ तु यदृणमेकेन साधारणमसाधारणधर्मार्थं कृतम्, यदृणं कृत्वाऽन्यस्मै प्रीत्या दत्तम्, यच्च 'स्वनियोजितम्' स्वभोगार्थं कृतम्, तत्त्रयमपि तथा निश्चीयमानमपि विभजेत् पृथक्कुर्याद्येन कृतं तेनैव तद्देयं न पैतृकाद् धनात्, सर्वैर्देयमित्यर्थः (वि. र. ४९९-५००)।

---

1. बौधा. २।३।४४ ।
2. विष्णु. १५।३१ ।
3. मनु. ९।११८; याज्ञ. २।१२४; नारदः १६।३३-३४ ।
4. मनु. ९।११९; नारद. १६।३२ ।

**अविभाज्यम्**

विद्यामैत्रीविवाहार्जितं माधुपर्किकं मधुपर्कदानकाले पूज्यतया यल्लब्धं तस्यैव तत्स्यात्[1] । अतो यन्मेधातिथिगोविदराजाभ्यां माधुपर्किकमार्त्विज्यधनं व्याख्यातं तदयुक्तम्, विद्याधनत्वादिति कुल्लूकभट्टः[2] । स्वयमार्जितमवैद्येभ्यो वैद्यः ।

**अत्र नारदः**

**वैद्योऽवैद्याय नाकामो दद्यादंशं स्वतो धनात् ।**
**पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम् ॥ १६।११ ॥**

अत्र चेदमभिप्रेतम्, यदा साधारणधनेनैव ग्रासाच्छादनाद्युपयोगं कृत्वा समधिगतविद्यः साधारणधनाश्रयेण विद्यया धनं प्राप्नोति, तदा अविद्याय न देयम्, साधारणधनाश्रयेण तु विद्ययार्जितमविद्यायापि देयम् । यदा तु विद्यार्जनकाले साधारणधनोपयोगेऽपि विदुषा न कस्यचिद्देयम्, किंतु विदुष एव तद्धनम्, पितृद्रव्यानुश्लेषार्जितस्याविभाज्यत्वमुक्त्वा पृथग्विद्यालब्धस्यापि व्यासेन अविभाज्यत्वप्रतिपाठनात् । अत एव पुनरग्रे विद्याधनस्य यदविभाज्यत्वं तदसाधारणधनोपश्लेषेणैव उपात्तविद्यया धनार्जनकालेऽपि साधारणधनोपयोगो द्रष्टव्यम्[3] ।

**पुनर्नारदः**

**शौर्यभार्याधने हित्वा यत्तु विद्याधनं भवेत् ।**
**त्रीण्येतानि अविभाज्यानि प्रसादो यश्च पैतृकः ॥**
**मात्रा च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्वकम् ।**
**तस्याप्येषो विधिर्दृष्टो मातापीष्टे यथा पिता ॥ १६।५-७ ॥**

पितामहेन यद्दत्तं पित्रा मात्रा च दत्तं यद् भवेत्, तस्य तन्नापहर्तव्यम् । पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्जयेत्तत्स्वचेष्टाप्राप्तमनिच्छन्भ्रातृभ्यो दातुं नार्हति[4] । न वास्तुविभागो नोदपात्रालङ्कारानुयुक्तस्त्रीवाससामपां प्रचारवर्त्मनां विभागश्चेति प्रजापतिरिति शङ्खलिखितौ । यथाऽऽहमनुविष्णू

**वस्त्रं पत्रमलङ्कारः कृतान्नमुदकं स्त्रियः ।**
**योगक्षेमप्रचारं च न विभाज्यं प्रचक्षते ॥ ९।२१९; १८।४४ ॥**

वस्त्रं समूल्यमङ्गधृतम् । 'पत्र' शब्दोऽत्र लेख्यनिविष्टधनपरः । 'धनपत्रविशिष्टं तु' इति कात्यायनवचनानुसारात् । 'स्त्रियः' संयुक्ताः, 'अविभागः स्त्रीषु संयुक्तासु' (२८।४८) गौतमवचनात् । 'योगक्षेमं' मन्त्रिपुरोहितादि योगक्षेमहेतुत्वात् । प्रचारः

---

1. मनु. ९।२०६ ।
2. याज्ञ. २।११९ ।
3. वि. र. ५०२-५०३; कात्यायनः ८६७, ८७०, ८७३, ८७१, ८७२, ८७६, ८७८-८८० ।
4. मनु. ९।२०८; विष्णु. १८।४२; याज्ञ. २।११५ ।

गवादीनां प्रचारमार्गः । 'योगक्षेमं' पितृक्रमेण राजकुलादौ उपजीव्यमिति **प्रकाशः । हलायुधस्तु** 'योगो' योगहेतुः नौकादिः, 'क्षेमः' क्षेमहेतुः दुर्गादिः इत्याह[1] । **प्रकाशकारस्तु** स्वल्पमूल्यमङ्गसंयुक्तं यत्, तन्न विभजनीयम्, समृद्धन्तु धनं पत्रालङ्कारहस्त्यादि-संश्रितं यत् तद् विभजनीयम्, तस्य विभागप्रकारोऽप्युक्तो 'मध्यस्थितमनाजीव्यम्' इत्यादिनेत्याह[2] ।

**कात्यायनः**

**कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।**
**शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥ ८७४ ॥**

**अस्यार्थः**–स्वकुले पितामहपितृव्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रातॄणां यत्तु विद्याशौर्यप्राप्तं धनं तद्विभागकाले विभक्तव्यमेवेति । येन चैषां स्वयमुत्पादितं स्यात्तद्द्व्यंशमाहरेत्[3] । अत्र मनुः

**यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।**
**भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥**
**अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।**
**समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥ ९।२०४-२०५ ॥**

**स्त्रीधनम्**

दृश्यते स्त्रीधनस्य मूलं वेदेषु[4]–

**सूर्याया वहतुः प्रागात्सविता यमवासृजत् ।**
**अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥**
**तुभ्यमग्रे पर्यवहन् सूर्यां वहतुना सह ।**
**पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥**

**( ऋक्. १०।८५।१३,३८ )**

**पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे ( तै. सं. ६।२।१।१ )।**

स्ववत्तामपि दर्शयति (जै. ६।१।१६) इत्यत्र शबरः–पत्नी वै पारिणय्यस्येष्टे पत्यैव गतमनुमतं क्रियते । असति वा स्त्रीणां स्वाम्ये पत्न्यैवानुमनं क्रियते पत्नी वै पारिणह्यस्येशे इत्यादिश्रुतयो निरालम्बनाः स्युः । अत्रोच्यते । पारतन्त्र्या-भिधानमेतत् । असत्यां भर्त्रनुज्ञायां न स्त्रीभिः स्वातन्त्र्येण यत्र क्वचिद्धनं विनियोक्त-व्यम्, इति मेधातिथिः[5] । भार्यायास्तद्धृतोऽलङ्कारोंऽशो ज्ञातिभ्यः पित्रादिभ्यश्च

---

1. कात्या. ८८२-८८४; बृह. २६।४७, ५०, ५१-५३ ।
2. वि. र. ५०८ ।
3. वसिष्ठ. १७।५१ ।
4. अथर्व. १४।१।१३; १४।२।१ ।
5. मनु. ८।४१६ ।

यल्लब्धं धनं तच्चेत्येके[1] । ज्येष्ठो दायाद इति (आप. २।१६।१४।६) यदुक्तं तच्छास्त्रैर्विप्रतिषिद्धम् । तथा च–मातुरलङ्कारं दुहितरः साम्प्रदायिकं लभेरन्नन्यद्वा (बौ. ध. सू. २।२।४९) । मातुः परिणेयं स्त्रियो विभजेरन् (वसिष्ठ. १७।४६) । इत्थं ज्ञातिधनं चेति विवाहे यद्धनं यौतकाख्यं लब्धं तदपि भार्याया एव ।

विवाहकाले अग्निसन्निधौ यत्पित्रादिदत्तं तदध्यग्नि स्त्रीधनम् । यत्तु प्रीतिहेतुकर्मणि भर्त्रादिदत्तं तथा भ्रात्रा पित्रा च समयान्तरे यद्दत्तमेवं षट्प्रकारकं स्त्रीधनं स्मृतम् । विवाहादूर्ध्वं भर्तृकुले पितृकुले वा यत्स्त्रिया लब्धं भर्त्रा च प्रीतेन दत्तम्, यदध्यग्न्यादि उक्तं तद्भर्तरि जीवति मृतायाः स्त्रियाः सर्वधनं तदपत्यानां भवति[2] । यथाऽऽह कात्यायनः

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना तु पैतृकात् ।
अध्यावहनिकं चैव स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वसुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥
गृहोपस्करबाह्यानां दोह्याभरणकर्मिणाम् ।
मूल्यं लब्धुं तु यत्किञ्चिच्छुल्कं तत् परिकीर्तितम् ॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया ।
अन्वाधेयं तदुक्तं तु लब्धं बन्धुकुलात् तथा ॥
ऊर्ध्वं लब्धं यत्किञ्चित् संस्कारात् प्रीतितः स्त्रिया ।
भर्तुः पित्रोः सकाशाद्वा अन्वाधेयं तु तद्भृगुः ॥
ऊढया कन्यया वाऽपि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥ ८९५-९०१ ॥

पैतृकादित्येकशेषेण पितृमातृकुलाद् यल्लभते धनं भर्तृगृहं नीयमाना तदध्यावाहनिकम्[3] । भर्तृगृहाद्यदा पितृकुलं बाह्यते तदा श्वसुरादिभिर्दत्तमध्यावाहनिकमिति मेधातिथिः, तदपि ग्राह्यं न्यायसाम्यात्[4] । द्विरागमनकाले यत्कुतोऽप्यवाप्तं

1. अलङ्कारो भार्याया ज्ञातिधनं चैके (आप. ध. सू. २।१६।१४।९) ।
2. मनु. ९।१९४-१९५; दायभागः ४; वि. र. ५१०, ५२४-५२५; दीपमालिका. दायभागः ४।१।५ पृ. ७३; वि. चि. पृ. १३८; अपरार्कः पृ. ७५१; व्य. नि. पृ. ४६५; वि. र. पृ. ७७; वि. चि. १३८; व्य. सा. पृ. २३७; व्य. प्र. पृ. ५४३; व्य. म. पृ. १५३; स. वि. पृ. ३८० ।
3. दायभागः ४।१।६ पृ. ७३ ।
4. वि. र. पृ. ५२२-५२३ ।

तदध्यावाहनिकमित्यर्थः[1] । गृहादिकर्मिभिः शिल्पिभिस्तत्कर्मकरणाय भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छुल्कं तदेव मूल्यं प्रवृत्त्यर्थत्वात् । व्यासोक्तं वा यथा । यदा नेतुं भर्तृगृहे शुल्कं तत् परिकीर्तितम् । भर्तृगृहगमनार्थमुत्कोचादिं यद्दत्तं तच्च ब्राह्मादिष्वविशिष्टम्[2] ।

तत्र शुल्कं द्विविधं कन्याविक्रयमूल्यत्वेन कन्यावद्भ्यो दत्तमेकम् । तन्मातृगामि भ्रातृगामि वा । कन्याभूषणगृहोपकरणमूल्यत्वेन दत्तमपरं शुल्कम् । तद्दातृभिरेवादेयम्[3] । **कात्यायनः**

**प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।**
**भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥**

अन्यत इति पितृमातृभर्तृकुलव्यतिरिक्तात् यल्लब्धं शिल्पेन वा यदर्जितं तत्र भर्तुः स्वाम्यं स्वातन्त्र्यम्, अनापद्यपि भर्ता ग्रहीतुमर्हति तेन स्त्रिया अपि धनं न स्त्रीधनमस्वातन्त्र्यात् । 'यदनया भक्तोत्सर्पणेन वा कर्त्तनेन वा धनमुपार्जितं तेन यक्ष्यत इति । उच्यते तदप्यस्या न स्वम्'[4] । अत्र **देवलः**[5]

**"वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।**
**भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि" ॥**

पार्वत्यादिप्रीत्यर्थं व्रतादौ यत् स्त्रिया लभ्यते तदपि स्त्रीधनमिति[6] । वृत्तिःजीवनार्थं पित्रादिदत्तं लाभो वृद्धिः[7] ।

भर्तरि जीवति तत्संमताभिर्योऽलङ्कारः स्त्रीभिर्धृतस्तस्मिन्मृते विभागकाले तं पुत्रादयो न भजेरन् । भजमानाः पापिनो भवन्ति[8] । पत्युरनुज्ञातेनाप्यदत्तोप्यलङ्कारो यो मण्डनार्थं धृतः सोऽपि दायादैर्न हर्तव्य इति मेधातिथिरितिप्रकाशः[9] । पत्युरदत्तोऽपि तदनुज्ञया परिहितोऽप्यलङ्कारस्तावतैव भार्यायाः स्वीयो भवतीति मेधातिथिः[10] ।

एवं स्त्रीधनानि भवन्ति । एतदेव स्त्रीणां सौदायिकं तथा च कात्यायनः । ऊढया...भवेत् । पत्युरित्यत्रापि गृहे इति संबन्धः ।...भ्रातुरित्युपलक्षणम् । तेन कन्यया

---

1. वि. चि. पृ. १३८ ।
2. दायभागः ४।३।२०-२१ पृ. ९३ ।
3. व्य. नि. पृ. ४६८ ।
4. भाष्यम्, जै. ६।१।१२ ।
5. अपरार्कः पृ. ७५५; स्मृ. चं. २ पृ. २८३; दायभागः ४।१।१५ पृ. ७५; वि. र. पृ. ५१२; व्य. म. पृ. ५६; वि. चि. पृ. १४१ ।
6. स्मृ. चं. २ पृ. २८३; व्य. प्र. ५४५; वि. र. पृ. ५१२; वि. चि. पृ. १४१ ।
7. व्य. म. पृ. १५६ ।
8. मनु. ९।२००; वि. ध. सू. १७।२२ ।
9. वि. र. पृ. ५०९ ।
10. वि. रि. चि. पृ. १३९; दायतत्त्व. पृ. १८४ ।

वा ऊढया वा पितृतो वा तत्कुलतो यल्लब्धं तत्सर्वं तस्याः सौदायिकमित्यर्थः।
**व्यासः**[1]

**यत्कन्यया विवाहे च विवाहात्परतश्च यत्।**
**पितृभर्तृगृहात्प्राप्तं धनं सौदायिकं स्मृतम्॥**

सुदायसम्बन्धिभ्यो लब्धं सौदायिकम्। यौतकादि तु यद्देयं सुदायो हरणं च तत्। ननु 'सौदायिकं तु यद्देयं सुदायो भरणं च तत्' इति निघण्टुपाठात् कथं सौदायिकशब्दोऽत्र प्रयुक्तः। स्वार्थे तद्धितान्ततयेत्यनवद्यम्। यातकादि तु यद्देयं सुदाय इति निघण्टुपाठात् (३।२ पृ. ६५५)[2]।

यौतकं विवाहादिकाले एकत्रासनोपविष्टाभ्यां लब्धम्। अत एवोक्तं निघण्टुकारैर्युतयोर्यौतकमिति। यौतकमत्र परिणयनकाले पित्रादिभिः स्त्रियै दत्तम्। यौतकं समानासनोपवेशनप्रत्यासन्नयोर्वधूवरयोर्विवाहादौ येन केनचित् समर्पितं धनं तद्वधूवरयोर्देयम् युतयोर्यौतकं मतम् इति निघण्टुकारोक्तत्वात्।...देवस्वामी तु पितृगृहाल्लब्धं भर्तृगृहाल्लब्धापेक्षया पृथग्धनतया यौतकं मातृधनं नेत्याह। तच्चिन्त्यम्। पक्षद्वयस्यापि कल्पनामात्रत्वात्। यौतकशब्दः पृथग्भावेन च स्त्रीधने। तत्र हि तस्या एव केवलायाः स्वाम्यम्। अन्ये तु सौदायकमेव तत्सम्बन्धस्त्रीधनं तत्र हि तस्याः स्वातन्त्र्यम्। वाचस्पतिमिश्ररायमुकुटधृताद् यौतुकं यौतकमपि साधु। परिणयनकालः परिणयनपूर्वापरीभूतकालः स च वृद्धिश्राद्धारम्भप्रत्यभिवादनान्तो विवाहतत्त्वे विवृत्तः[3]।

पित्रा मात्रा पत्या भ्रात्रा च यद्दत्तं यच्च विवाहकालेऽग्नावधिकृत्य मातुलादिभिर्दत्तम्, आधिवेदनिकमधिवेदननिमित्तमधिविन्नस्त्रियै दद्यादिति। आद्यशब्देन रिक्थक्रयसंविभागपरिग्रहाधिगमप्राप्तम् एतत्स्त्रीधनं मन्वादिभिरुक्तम्। स्त्रीधनशब्दश्च यौगिको न पारिभाषिकः। योगसंभवे परिभाषाया अयुक्तत्वात्, इति मिताक्षरा (याज्ञ. २।१४३)। तदेवमव्यवस्थितसंख्यस्त्रीधनकीर्तनान्न षट्संख्या विवक्षिता किं तु स्त्रीधनकीर्तनमात्रपराणि वचनानि। तदेव च स्त्रीधनं यद्भर्तृतः स्वातन्त्र्येण दानविक्रयभोगान् कर्तुमधिकरोति।...स्थावरेऽपि भर्तृदत्तमात्रे स्त्रिया दानाद्यनधिकारः। तदाह नारदः

**"भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।**
**सा यथाकाममश्नीयाद् दद्याद्वा स्थावरादृते"॥**

---

1. स्मृ. चं. २ पृ. २८२; स. वि. पृ. ३७८।
2. दायभागः ४।१।२२; स्मृ. चं. २ पृ. २८२; याज्ञ. २।१४३।
3. व्य. म. पृ. १५९; वि. र. पृ. ५१७; परा. मा. ३ पृ. ५५२; स्मृ चं. २ पृ. २८५; व्य. प्र. ५४८; व्य. नि. पृ. ४६३; मेधा. (मनु. ९।१३१); दायतत्त्व. पृ. १८६।

भर्तृदत्तविशेषणाद् भर्तृदत्तस्थावरादृते अन्यत् स्थावरं देयमेव भवति[1] । स्त्रीणां स्वातन्त्र्येण विनियोज्यं स्त्रीधनम्। आद्यशब्देन अध्यावाहनिकऋक्थक्रयादिप्राप्तञ्च[2] । यत्तु विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं सममिति याज्ञवल्क्योक्तं तत्पारिभाषिकातिरिक्तविभागकर्तनादिलब्धपरम्[3] ।

यत्तु उत्सवादावेव धार्यमित्येवमाद्युपाधिना अलङ्कारादिदत्तं यच्च दायादादिवञ्चनार्थं दत्तं तत्स्त्रीधनं न भवतीत्याह कात्यायनः[4] । यच्च सोपाधिकं दत्तं योगवशेन वा । पित्रा भ्रात्राथवापत्या न तत्स्त्रीधनमिष्यते[5] ।

सौदायिकधनविषये कात्यायनः

**सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।**
**यस्मात्तदानृशंस्यार्थं तर्दत्तमुपजीवनम् ॥**
**सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।**
**विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥**
**भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः ।**
**विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा ॥**
**न भर्ता नैव च सुता न पिता भ्रातरो न च ।**
**आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः" ॥**

इत्थं नारीणां सम्मानमूलकं माहात्म्यं वैदिकसंस्कृतेराधारः—

**सम्राज्ञी श्वसुरे भव सम्राज्ञी श्वश्र्वां भव ।**
**ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवषु ॥ ऋ. २।१०।८५।४५ ॥**
**यथा सिन्धूनां नदीनां साम्राज्यं सुषुवे वृषा ।**
**एवं त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य ॥ अथर्व. १४।१।४३ ॥**
**गृहान् गच्छ गृहपत्नी यथासः । ऋ. १०।८५।१६ ।**
**अस्मिन् गृहे गार्हपत्याय जागृहि । ऋ. १०।८५।२७ ।**
**आशासाना सौमनसं प्रजां सौभाग्यं रयिम् ।**
**पत्युरनुव्रता भूत्वा संनह्य स्वामृताय कम् ॥ अथर्व. १४।१।-४२ ॥**

"अनृतं स्त्री" इति वचनेन स्त्रीणामविश्वसनीयता निन्दामूलिका इति तु अज्ञानविजृम्भितम् । तात्पर्यबोधमूलकसङ्गतिरनिवार्या शास्त्रवचनेषु । अन्यथा "ततो भूय इव ते तमो य उ विद्यायां रताः" (यजु. ४०।१२) इत्यत्र विद्या तमः प्रापिका

1. दायभागः ४।१।१८,२३ ।
2. परा. मा. ३ पृ. ५४७ ।
3. व्य. म. पृ. १६० ।
4. स्मृ. चं. २ पृ. २८१; परा. मा. ३ पृ. ५४९; व्य. म. पृ. १५४ ।
5. अपरार्कः पृ. ७५२ ।

भविष्यति, यत्तु सर्वथाऽमान्या । वस्तुतः "अनृतं मनुष्या" इत्यप्युक्तम् । सती प्रशस्ता, कुलटा निन्द्या, नात्र विवादः । एवं पुरुषेष्वपि सापेक्षत्वमभिहितम् ।

धर्मशास्त्रकारैः स्त्रीधनं व्याख्यातम्–

अम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरे तु कथमन्यः स्वमाप्नुयात् ॥
सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः ।
अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥ दायभागः १४९ ॥
जङ्गमं स्थावरं हेमकुप्यं धान्यमथाम्बरम् ।
आदाय दापयेच्छ्राद्धम् मासषाण्मासादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तृस्वस्रीयमातुलान् ।
पूजयेत् कव्यपूर्ताभ्यां वृद्धानप्यतिथीन् स्त्रियः ॥
तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः ।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत् ॥ दायभागः १५० ॥
अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमर्थं लभेत च ॥ वृद्धमनुः, मिता. २।१३५ ॥

परञ्च स्त्रीणां नाधिकारः स्थावरसम्पत्तेर्दानविक्रयादौ–

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥ नारद. ४।२८ ॥

केचित्तु "सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते" इत्यादि वचनान्याश्रित्य विक्रये दाने च स्थावरेष्वपि यथेष्टं स्वत्वं प्रतिपादयन्ति[1] । परन्तु "दद्याद्वा स्थावरादृते" इति नारदवचने स्पष्टं यत् स्थावरभूमेर्दानस्यानधिकारः स्त्रीणाम् । तत्र तासां यावदायुभोगमात्रस्यैव विधानम्–

अपुत्राः शयनं भर्तुः पालयन्ति गुरौ स्थिता ।
भुञ्जीतामरणात्क्षान्ता दायादा ऊर्ध्वमाप्नुयुः ॥
(नारद. २।१४४)

तथैव महाभारते–"स्त्रीणां च पतिदायाद्य उपभोगफलं स्मृतम्" (१३।४७।२३) । अत्र कौटल्यः–"अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनं आ आयुःक्षयाद् भुञ्जीत । आपदर्थं हि स्त्रीधनम्, ऊर्ध्वं दायादं गच्छेत् (३।२) । 'तस्माद् अपुत्रस्य

---

1. स्मृतिसारः ६०; स्मृ. चं. २८२; परा. मा. ५४९; शुक्र. ४।७९।९३; कात्या. दायभागः ।

स्वर्यातस्यासंसृष्टिनी धनं परिणीता स्त्री संयता सकलमेव गृह्णाति" इत्यस्यापि पूर्वोक्तार्थः । स्वतन्त्रा पतिद्वेषिणी च निन्द्या–

**अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः ।**
**पापासः सन्तो अनृता असत्या इदं पदमजानता गभीरम् ॥ ऋ. ४।५।५ ॥**
**न जामये तान्वोरिक्थमारैक् ( ऋ. ३।३१।२ ) ।**

राजा रिक्थं पालयेदित्यनुवृत्तौ मनुः

**वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।**
**पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥**
**जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।**
**ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥ ८।२८-२९ ॥**

मृतप्रजास्त्रीधनं भर्तृगामि, जीवन्त्याः सप्रजाया अपि स्त्रिया धनग्रहणे क्वचिद्-भर्तुरभ्यनुज्ञामाह याज्ञवल्क्यः

**दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।**
**गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥ २।१४७ ॥**

प्रकारान्तरेणापहरन् दद्यात् । भर्तृव्यतिरेकेण जीवन्त्याः स्त्रिया धनं केनाऽपि दायादेन न ग्रहीतव्यम्, एवं कृते दण्डविधानम्[1] । यस्यै भर्त्रा श्वशुरेण वा स्त्रीधनं न दत्तम्, दत्ते पुनः स्त्रीधने आधिवेदनिकद्रव्यस्यार्धं दद्यात् । 'अर्ध' शब्दश्चात्र समविभागवचनो न भवति, अतश्च यावता तत्पूर्वदत्तमाधिवेदनिकसमं भवति तावद्देयम् । संप्रतिरोधकेति व्याधिविशेषणं कार्यानुष्ठानबाधके इति । नाकामो दातु-मर्हति इत्यपि दारिद्र्यादिकृततदानासामर्थ्ये बोध्यम् । सति तु सामर्थ्ये दुर्भिक्षादिगृहीत-मप्यवश्यं देयम् । एतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितु-मनर्हत्वात् । पतिग्रहणादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारः । प्रतिदानं चेच्छया नान्यथेति ज्ञेयम्[2] ।

द्वितीयं शुल्कं वरसकाशग्राह्यपरिभाषितशुल्कव्यतिरिक्तं शुल्कं प्रीतिवशाद् दत्तम्, स्त्री कन्यैव हरेत, न तु पितरौ । सर्वेषां प्रीत्यारोपणमप्रतिषिद्धम् । वरेण न केवलं वरबन्ध्वादिभिः सर्वैरपि कन्याया देहे भूषणादिनिवेशनम्, अप्रतिषिद्धम् । तदपि कन्यैव हरेत । वृत्तिरावन्ध्यं वा स्त्रीधनम्[3] । वृत्तिर्भूमिहिरण्यादिर्जीविकार्था, आवन्ध्यं भूषणादि । परद्विसाहस्रा कार्षापणसहस्रद्वयपरमावधिः, वृत्तिः, कल्पयितुमर्हा । आभरणस्य सङ्ख्यानियमाभावः ।

---

1. मनु. ८।२९,२०० ।
2. व्य. प्र. पृ. ५४६; वि. र. ५१३; वि. वि. पृ. १४१; वि. च. ७३ ।
3. कौ. ३।२ ।

तत् स्त्रीधनम्, आत्मपुत्रस्नुषाभर्मणि स्वस्य पुत्राणां तद्भार्यायाश्च पोषणे, भर्तृविदेशगमननिमित्ते जीविकोपायविरहसङ्कटे च, भार्याया भोक्तुमदोषः। 'साम्प्रतमेवादत्त्वा मा याही' त्येवं रोधेन हरणं प्रतिरोधकं तत्प्रतीकारे व्याधिप्रतीकारे, दुर्भिक्षप्रतीकारे भयप्रतीकारे च, धर्मकार्ये च विषये, पत्युः स्त्रीधनव्ययकारिणः।

दम्पत्योः, मिथुनं प्रजातयोः अपत्यद्वयं यद्वा पुत्रपत्येकं स्त्र्यपत्यं चैकं जनितवतोः, मिलित्वा, त्रिवर्षोपभुक्तं च स्त्रीधनं धर्मिष्ठेषु विवाहेषु नानुयुञ्जीत। गान्धर्वासुरोपभुक्तं सवृद्धिकमुभयं दाप्येत। राक्षसपैशाचोपभुक्तं स्तेयं दद्यात्[1]। मृते भर्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं च लभेत। लब्ध्वा वा विन्दमाना सवृद्धिकमुभयं दाप्येत। कुटुम्बकामा तु श्वशुरपतिदत्तं निवेशकाले लभेत। श्वशुरशासनातिक्रमेण वा निविष्टा भर्त्रन्तरं गताः, श्वशुरपतिदत्तं जीयेत, श्वशुरेण पत्या वा च दत्तं दाप्येत।

ज्ञातिहस्तादभिमृष्टायाः ज्ञातयो यथागृहीतं दद्युः। न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत्। पतिदायं विन्दमाना जीयेत। धर्मकामा भुञ्जीत। पुत्रवती विन्दमाना स्त्रीधनं जीयेत। तत्तु स्त्रीधनं पुत्रा हरेयुः। पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं स्फीतीकुर्यात् स्त्रीधनम्। बहुपुरुषप्रजानां पुत्राणां यथापितृदत्तं स्त्रीधनमवस्थापयेत्। कामकारणीयमपि स्त्रीधनं विन्दमाना पुत्रसंस्थं कुर्यात्। अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनम् आ आयुःक्षयाद्भुञ्जीत।

आपदर्थं हि स्त्रीधनम्। तस्यामुपरतायां भर्तृसपिण्डं गच्छेत्। जीवति भर्तरि मृतायाः पुत्राः दुहितरश्च स्त्रीधनं विभजेरन्, अपुत्रायाः दुहितरः, तदभावे भर्ता। शुल्कमन्वाधेयमन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः[2]। तथा च[3]–

यदि ह्येकतरो ह्येषां स्त्रीधनं भक्षयेद् बलात्।
सवृद्धिकं स दाप्यः स्याद् दण्डं चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्।
मूलमेव प्रदाप्यः स्याद्यदासौ धनवान् भवेत्॥ कात्या.॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकम्।
पुत्रार्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति॥ देवलः॥
अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः।
प्रीत्या निसृष्टमपि चेत्प्रतिदाप्याः स तद् बलात्॥ कात्या.॥

---

1. कौ. ३।२।
2. कौ. ३।२।
3. कात्या., अपरार्कः ७५५; दायभागः ४।१।२४ पृ. ७८; स्मृ. चं. २ पृ. २८२; देवलः, स्मृ. चं. २ पृ. २८३; व्य. म. पृ. १५६; कात्या. स्मृ. चं. २८२।

भ्रात्रादिबहुसाधारणात् कुटुम्बधनाद् भार्यादिभिः स्त्रीभी रत्नालङ्काराद्यर्थं धनसञ्चयं न कर्त्तव्यम् । नापि च भर्तुराज्ञां विना भर्तृधनादपि कार्यम् । ततश्च नेदं स्त्रीधनम्[1] । या पुनः अतिपुष्टा स्त्री सा स्वधनमनिसृष्टमपि विनियोक्तुं नार्हति । यथाऽऽह कात्यायनः[2]

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।
तिष्ठेत् भर्तृकुले या तु न सा पितृकुले वसेत् ॥
अपचारक्रियायुक्ता निर्लज्जा वार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं सा न चार्हति ॥

**स्त्रीधनविभागः**

मातरि मृतायां सोदर्यभ्रातरो भगिन्यश्च सोदर्या अनूढा मातृधनं समं कृत्वा गृह्णीयुः । ऊढास्तु धनानुरूपं संमानं लभन्ते । ततश्चानूढानां पितृधन इवोढानां मातृधनं भ्रात्रा स्वादंशाच्चतुर्थभागो देयः । तासां दुहितॄणां या अनूढा दुहितरस्ताभ्योऽपि मातामहीधनाद्यथा तासां पूजा भवति तथा प्रीत्या किञ्चिद्दातव्यम् । मृतायाः स्त्रियाः सर्वधनं तदपत्यानां भवति[3] । तत्र बृहस्पतिः

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अपुत्रा चेत्समूढा तु लभते मानमात्रकम् ॥ २६।३१ ॥

विवाहकाले पित्रादिभिः स्त्रियै यद्दत्तं धनं यौतकम्; मातुस्तु यौतकं यत्स्यात्कुमारी भाग एव सः[4] । ब्राह्मणस्य नानाजातीयासु स्त्रीषु क्षत्रियादिस्त्रियामनपत्यपतिकायां मृतायाम्, तस्याः पितृद्दत्तं धनं सजातिविजातिसापत्न्यकन्यापुत्रसद्भावेऽपि ब्राह्मणी सापत्नेयी कन्या गृह्णीयात् । तदभावे तदपत्यस्य तद्धनं भवति[5] । स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति गौतमः (२८।२२) । विभजेरन्नूर्ध्वमित्यनुवृत्तौ याज्ञवल्क्यः (२।११७) मातुर्दुहितरश्शेषमृणात्ताभ्यः ऋतेऽन्वयः । सर्वेष्वेव प्रसूतानां तद्धनं दुहितृगामि, इति विष्णुः (१७।२०) । कात्यायनश्च–

दुहितॄणामभावे तु ऋक्थं पुत्रेषु तद्भवेत् ।
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥
भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागस्तु प्रकल्पितः ॥ ९१८-९१९ ॥

---

1. मनु. ९।१९९ ।
2. स्मृ. चं. २ पृ. २८३; वि. र. ५१४; वि. चि. पृ. १४२; व्य. म. पृ. १५३; व्य. प्र. ५४५ ।
3. मनु. ९।१९२, १९३, १९५ ।
4. मनु. ९।१३१ ।
5. मनु. ९।१९८ ।

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् ।
अप्रजायां हरेद्भर्ता माता भ्राता पिताऽपि वा ॥
(देवलः, दाय. ४।२ पृ. ७९)

अप्रत्तायास्तु दुहितुः स्त्रीधनं परिकीर्तितम् ।
पुत्रस्तु नैव लभते प्रत्तायां तु समांशभाक् ॥
(पारस्करः, परा. मा. ३ पृ. ५५२; व्य. नि. ४६३)

भगिन्यो बान्धवैः सार्धं विभजेरन् सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागस्तु प्रकल्पितः ॥
दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत् ।
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥
पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् ।
अप्रजायामतीतायां भ्रातृगामि तु सर्वदा ॥
आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रिया ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥ कात्या. ॥
आसुरादिषु यद् द्रव्यं विवाहेषु प्रदीयते ।
अप्रजायामतीतायां पितैव तु धनं हरेत्[1] ॥ यम. ॥

मातृकृतमृणं पुत्रैरेवापाकरणीयं न दुहितृभिः । ऋणावशिष्टं तु धनं दुहितरो गृह्णीयुरिति । युक्तञ्चैतत् । पुमान् पुंसोऽधिके शुक्रे स्त्रीभवत्यधिके स्त्रियाः—इति स्त्र्यवयवानां दुहितृषु बाहुल्यात् स्त्रीधनं दुहितृगामि । पितृधनं पुत्रगामि पित्रवयवानां पुत्रेषु बाहुल्यादिति मिताक्षरा (याज्ञ. २।११७) ।

भार्यायाः धनं प्रथमं भर्तुर्भवति । भर्त्रभावे तत्प्रत्यासन्नानां सपिण्डानां पित्रभावे च तत्प्रत्यासन्नानां सपिण्डानामिति तत्रापि ते नास्याः प्रत्यासन्नास्तत्प्रत्यासन्नाः । तद्द्वारा तत्कुले प्रत्यासन्ना इति यावत् । आसुरगान्धर्वराक्षसपैशाचेषु विवाहेषु तदप्रजस्त्रीधनं पितृगामि । तदभावे तत्प्रत्यासन्नानां धनग्रहणम् । सर्वेष्वेव विवाहेषु प्रसूतवत्यपत्यवती चेद्दुहितॄणां तद्धनं भवति । अत्र 'दुहितृ' शब्देन दुहितृदुहितर उच्यन्ते । साक्षाद्दुहितॄणां 'मातुर्दुहितरः शेषम्' (व्य. ११७) इत्यत्रोक्तत्वात्, अतो मातृधनं मातरि वृत्तायां प्रथमं दुहितरो गृह्णन्ति, तत्र चोढानूढासमवायेऽप्रतिष्ठिता गृह्णाति, तदभावे प्रतिष्ठिताः, यथाह गौतमः (२९।६)—'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च' इति । तत्र 'च' शब्दात्प्रतिष्ठितानां च । अप्रतिष्ठिता अनपत्या निर्धना वा ।

---

1. स्मृ. चं. २ पृ. २८५-२८७; वि. र. ५१८; वि. वि. पृ. १४३; दायभागः ४।२।१२ पृ. ९२; व्य. म. पृ. १६२ ।

एतच्च शुल्क व्यतिरेकेण । शुल्कं तु सोदर्याणामेव; भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः (२९।६) इति गौतमवचनात् । सर्वासां दुहितॄणामभावे दुहितृदुहितरो गृह्णन्ति; 'दुहितॄणां प्रसूता चेत्' इति वचनात् । तासां भिन्नमातृकाणां विषमाणां समवाये मातृद्वारेण भागकल्पना; 'प्रतिमातृ वा स्ववर्गेण भागविशेषः' (२९।५) इति गौतमस्मरणात् । दुहितृदौहित्रीणां किञ्चिदेव दातव्यम्; यथाऽऽह मनुः

**यास्तासां स्युर्दुहितरस्तासामपि यथाऽर्हतः ।**
**मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥ ९।१९३ ॥**

दौहित्रीणामप्यभावे दौहित्रा धनहारिणः; यथाह नारदः

**मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥ १३।२ ॥**

तच्छब्देन संनिहितदुहितृपरामर्शात् । दौहित्राणामभावे पुत्रा गृह्णन्ति । मनुरपि दुहितॄणां पुत्राणां च मातृधनसंबन्धं दर्शयति (मनु. ९।१९२) । मातृकं रिक्थं सर्वे सहोदराः समं भजेरन्, सनाभयो भगिन्यश्च समं भजेरन्निति संबन्धः; न पुनः सहोदरा भगिन्यश्च संभूय भजेरन्निति इतरेतरयोगस्य द्वन्द्वैकशेषाभावादप्रतीतेः । विभागकर्तृत्वान्वयेनापि 'च' शब्दोपपत्तेः, यथा देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेति । अनपत्यहीनजातिस्त्रीधनं तु भिन्नोदराप्युत्तमजातीयसपत्नीदुहिता गृह्णाति, तदभावे तदपत्यम्[1] । पुत्राणामभावे पौत्राः पितामहीधनहारिणः । पौत्राणामपि पितामह्यृणापकरणेऽधिकारात् । पौत्राणामप्यभावे भर्त्रादयो बान्धवा धनहारिणः ।

शुल्कं तु सोदराणामेव । भगिनीशुल्कं सोदर्याणामिति गौतमवचनात्सोदराभावे मातुः । ऊर्ध्वं मातुरिति तद्वचनादेव । पूर्वं चैके इति तु परमतम् (व्य. प्र. ५५३) । शुल्कं तु सोदरा एव गृह्णीयुः । तथा च गौतमः । भगिनी...मातुरिति । दुहित्रादिषु पौत्रपर्यन्तेषु विद्यमानेष्वपि भगिनीशुल्कं सोदरा एव हरेयुः (मदन. ६६८) । माता चात्र भगिन्येव । तथा च तद्रूपमातुरभावे दुहित्रादिषु पौत्रपर्यन्तेषु सत्स्वपि स्वभगिनीशुल्कं सोदरा एव गृह्णीयुः (बालम्भट्टी, व्य. पृ. २५७) । ऊर्ध्वं मातुरुपरतावित्यर्थः । मातापित्रोस्तु सद्भावे तयोरेवेति दीपकलिका । रिक्थं मृतायाः कन्याया गृह्णीयुः सोदरास्तदभा- मातुस्तदभावे पितुरिति बौधायनस्मरणात् (मिता., याज्ञ. २।१४६) । रिक्थं...सोदराः स्वयम् । तदभावे भवेन्मातुस्तदभावे भवेत् पितुः (मदनरत्न. १०६) । रिक्थं...समम् ।...तदभावे पितुर्भवेत् । मातापित्रोरभावे तत्प्रत्यासन्नगामि (व्य. प्र. ५५२) ।

भगिनीशुल्कं सोदर्याणामूर्ध्वं मातुः । पूर्वञ्चेत्येके । आसुरादिविवाहत्रयलब्धविषयमेतत्[2] । अप्रतिष्ठिता अनपत्या निर्धना दुर्भगा विधवा वा । एवमपरा-

---

1. मनु. ९।१९८ ।
2. गौतमः, वि. चि. १४३ ।

र्कानुसारात् गौतमवचनं व्याख्यातम् । अस्य विज्ञानेश्वरकृता व्याख्या हेया स्वबुद्धि-मात्रेणाध्याहारादिकारणात् । अप्रतिष्ठिता अनपत्या निर्धनभर्तृका दुर्भगा चेति रत्नाकरादयः ।

मृतायाः स्त्रियां धनं पुत्रैर्दुहितृभिश्च साम्येन ग्राह्यम् । तथा च मनुः–जनन्यां... सनाभयः । एतच्चान्वाधेयभर्तृप्रीतिदत्तविषयम् । एतद्विविधधनविषयेऽपरिणीत-परिणीतपुत्रीसमवाये विशेषमाह बृहस्पतिः । स्त्रीधनं स्यादपत्यानां...। अप्रत्तानामभावे प्रत्ताभिरविधवाभिर्भ्रातृभिः सह विभज्य ग्राह्यमित्याह कात्यायनः । अन्वाधेयभर्तृ-प्रीतिदत्ताभ्यामन्यदध्यग्न्यादिस्त्रीधनं दुहितर एव गृह्णीयुः । तासु च प्रत्ताप्रत्तासमवाये सत्यप्रत्ता एव गृह्णीयुः । अन्वाधेयभर्तृप्रीतिदत्तभिन्ने पूर्वोक्ते पारिभाषिके स्त्रीधने तु विशेषमाह गौतमः–स्त्रीधनं...अप्रतिष्ठितानां च–इति[1] । पारिभाषिकातिरिक्तं मातृधनं दुहितृसत्त्वे पुत्रादय एव लभेरन्[2] ।

भर्तृरभावे तत्कुले तस्याः प्रत्यासन्नो लभते । पित्रभावे च पितृकुले तस्याः प्रत्यासन्नः ।...यत्तु मिताक्षरायां भर्त्रभावं तत्प्रत्यासन्नानां सपिण्डानां पित्रभावे च तत्प्रत्यासन्नानां सपिण्डानामिति तत्रापि ते नास्याः प्रत्यासन्नास्तत्प्रत्यासन्नास्तद्द्वारा तत्कुले प्रत्यासन्ना इति यावदित्येवं व्याख्येयम्[3] । अतः शुल्कं प्रथमं सोदराणां तदभावे मातुर्मातुरभावे पितुः । एषां पुनरभावे तद्धनं भर्तुः[4] । ततश्च परिणयनलब्धस्त्रीधनं दुहितुरेव न पुत्राणां तत्रैव च क्रमार्थं गौतमवचनं स्त्रीधनं दुहितॄणां...ष्ठितानां च । ब्राह्मादिषु विवाहेषु यल्लब्धमध्यग्निधनं स्त्रियाः तत्तस्यां मृतायां प्रथमं दुहितृणामेव तत्रापि प्रथमं कन्यायास्तदभावे प्रत्तायास्तदभावे परिणीतायाः । सर्वदुहित्रभावे च पुत्रस्याधिकारः । अप्रजः स्त्रीधने भर्तुरधिकारात्[5] ।

यत्पुनः परिणयनानन्तरं पितृमातृभर्तृकुलात् स्त्रिया लब्धं तद्भ्रातॄणामेव । तदाह याज्ञवल्क्यः । बन्धुदत्तं...प्नुयुः (२।१४५)...अतः प्रथमं सोदराणां तदभावे मातुर्मातुरभावे पितुः । एषां पुनरभावे तद्धनं भर्तुः । यथा कात्यायनः । बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्[6] । तत्र मनुः । जनन्यां...सनाभयः ।...बृहस्पतिरपि... स्त्रीधनं तदपत्यानां... । अपत्यपदं पुत्रपरम् । तेषामप्रत्ताभिर्दुहितृभिः सह मातृधन-विभागः । ...किं तूक्तादेव हेतोः पुत्रकुमारीदुहित्रोस्तुल्यवदधिकारः । एतयोश्चान्य-तराभावेऽन्यतरस्य तद्धनं द्वयोरप्येतयोरभावे तु ऊढाया दुहितुः पुत्रवत्याः सम्भावित-

---

1. स्मृ. चं. २ पृ. २६५ ।
2. मदनर. १०५; व्य. म. १५९-१६० ।
3. व्य. म. पृ. १६१ ।
4. दायभागः ४।३।२९ पृ. ९५ ।
5. दायभागः ४।२।२२,२५ पृ. ८५-८६ ।
6. दायभागः ४।३।१०,२९ ।

पुत्रायाश्च तुल्याधिकार...उक्तानां तु सर्वेषां दौहित्रपर्यन्तानामभावे वन्ध्याविधवयोरपि मातृधनाधिकारिता । तयोरपि तत्प्रजात्वात् प्रजाभावे चान्येषामधिकारात्[1] । दौहित्रपर्यन्तानामिति प्रपौत्रोपलक्षणम् ।

यदाह बृहस्पतिः । मातुः स्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः । यदासामौरसो न स्यात्सुतो दौहित्र एव वा । तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः । तदेषां पुत्रादीनां भ्रात्रादिभर्तृपर्यन्तानां चाभावे तत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु भगिनीपुत्रादीनामधिकारिता अनन्यगतेर्वचनात्, स्त्रीणां मातृतुल्यत्वप्रतिपादनेनामीषां पुत्रतुल्यत्वज्ञापनेन पिण्डदातृत्वसूचनस्य दायभागप्रकरणे धनाधिभारज्ञापनैकप्रयोजनकत्वात् । ...मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सरव्युर्मातामहस्य च । एतेषां चैव भार्याभ्यः स्वसुर्मातुः पितुस्तथा । श्राद्धदानं तु कर्त्तव्यमिति वेदविदां स्थितिः । इति वृद्धशातातपवचनादमीषां पिण्डदत्वप्रतिपादनादयं पिण्डदानविशेषादधिकारक्रमः ।

तत्र प्रथमं देवरस्तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वाच्च तदधनेधिक्रियते । ...तस्याप्यभावे श्वशुरयोः पिण्डदानात् जामाता श्वश्रूधनेऽधिकारीति । अयं क्रमो ग्राह्यः । स्वस्रीयाद्या इति तु न क्रमार्थं किं त्वधिकारिमात्रज्ञापनार्थपरम्[2] । तदेषामभावे सत्स्वपि श्वशुरादिषु सपिण्डेष्वनन्यगतिकैतद्वचनबलाद्भगिनीपुत्रादीनामेव मातृष्वस्रादिधने प्रत्यासत्तितारतम्येनाधिकारः । स्नुषादीनां तु ग्रासाच्छादनमात्रभाक्त्वम् । वचनविरोधे सपिण्डवत्प्रत्यासत्तेरप्रयोजकत्वात् । स्मर्यते हि स्कन्दपुराणे पञ्चचूडा नाम कश्चनाप्सरसस्तत्सन्ततिर्वेश्याख्या पञ्चमी जातिरिति[3] ।

**नानावर्णसमवायाविभागः**

ब्राह्मणस्य यदि क्रमेण ब्राह्मण्याद्याश्चतस्रो भार्या भवेयुस्तदा तासां त्रिषूत्पन्नेष्वयं विभागः । कीनाशः कर्षकः, गवां सक्तो वृषः, यानमश्वादि, अलङ्कारोऽङ्गुलीयकादि, वेश्म गृहञ्च प्रधानं यावन्तश्चांशास्तेष्वेकः प्रधानभूतोंऽश इत्येतद्ब्राह्मणी पुत्रस्योद्धारार्थं देयम् । त्रीनंशान् ब्राह्मणो धनाद् गृह्णीयात् । द्वौ क्षत्रियापुत्रः सार्धं वैश्यापुत्रः । अंशं शूद्रापुत्रः । एवञ्च यत्र ब्राह्मणीक्षत्रियापुत्रौ द्वावेव विद्येते तत्र पञ्चधा कृते धने त्रयोभागा ब्राह्मणस्य, द्वौ क्षत्रियापुत्रस्य । अनयैव दिशा ब्राह्मणी वैश्यापुत्रादौ द्विबहुपुत्रादौ च कल्पना कार्या ।

---

1. दायभागः ४।२।१-२,९,११-१२ ।
2. दायभागः ४।३।३१,३५, ३६-३८; स्मृ. चं. २ पृ. २८७; वि. नि. ४७२; परा. मा. ३ पृ. ५५५; व्य. म. १६१; व्य. प. ५५३-५५४ ।
3. व्य. प्र. ५५४; मिता. याज्ञ. २।२९० ।

यद्वा सर्वं रिक्थप्रकारमनुद्धृतोद्धारं दशधा कृत्वा, विभागधर्मज्ञो धर्मादनपेतं विभागमनेन वक्ष्यमाणविधिना कुर्वीत। चतुरो भागान् ब्राह्मणो गृह्णीयात्। त्रीन् क्षत्रियापुत्रः। द्वौ वैश्यापुत्रः। एकं शूद्राजः। अत्रापि ब्राह्मणीक्षत्रियापुत्रसद्भावे सप्तधा धने कृते चत्वारो भागा ब्राह्मणस्य। त्रयः क्षत्रियापुत्रस्य। एवं ब्राह्मणी-वैश्यापुत्रादौ द्विबहुपुत्रेषु च कल्पना कार्या। यदि ब्राह्मणो द्विजातिस्त्रीषु सर्वासु विद्यमानपुत्रः स्यादविद्यमानपुत्रो तथापि शूद्रापुत्रायानन्तराधिकारी यस्तेषु दशम-भागादधिकं धर्मतो न दद्यात्। एवञ्च शूद्रापुत्रविषये निषेधादि विद्यमानसजाति-पुत्रस्य क्षत्रियावैश्यापुत्रौ सर्वरिक्थहरौ स्याताम्।

ब्राह्मणक्षत्रियवैश्यानां शूद्रापुत्रो धनभाङ्न भवति, किन्तु यदेव धनमस्मै पिता दद्यात्तदेव तस्य भवेत्। एवञ्च पूर्वोक्तविभागनिषेधाद् विकल्पः स च गुणवद-गुणापेक्षः। अथवा अनूढशूद्रापुत्रविषयोऽयं दशमविभागनिषेधः। द्विजातीनां समानजातिभार्यासु ये पुत्रा यातास्ते सर्वे ज्येष्ठायोद्धारं दत्त्वाऽवशिष्टं समभागं कृत्वा ज्येष्ठेन सहान्ये विभजेरन्। शूद्रस्य पुनः समानजातीयैव भार्योपदिश्यते नोत्कृष्टाव-कृष्टा वा। तस्यां च ये जातास्ते यदि पुत्रशतमपि तदा समभागा एव भवेयुः। तेनोद्धारः कस्यचिन्न देयः[1]। वर्णावरेष्वंशहानिरूढाजातेष्वनुक्रमात्[2]। यदि सत्पुत्रो विद्यमानसवर्णापुत्रो यदि वा अपुत्रो अविद्यमानसवर्णापुत्रो भवेत्। यत्तु प्राक् चतुस्त्रिद्व्येकभागित्वं योगीश्वरादिभिरुक्तम्। तदतिसद्वृत्तशूद्रापुत्रविषयं वेदितव्यम्, अन्यथा मानवः (९।१५१) विरोधात्। महाभारते (अनु. ४।४८-५६)–

भीष्म उवाच–

क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन।
तृतीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता॥
अष्टधा तु भवेत्कार्यं क्षत्रियस्वं युधिष्ठिर।
क्षत्रियाया हरेत्पुत्रश्चतुरोंऽशान् पितुर्धनात्॥
युद्धौपचारिकं यत्तु पितुरासीद्धरेच्च तत्।
वैश्यापुत्रस्तु भागांस्त्रीन् शूद्रापुत्रस्तथाऽष्टमम्॥
सोऽपि वित्तं हरेत्पित्रोर्नादत्तं हर्तुमर्हति।
एकैव हि भवेद् भार्या वैश्यस्य कुरुनन्दन॥
द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता।
पञ्चधा वा भवेत्कार्यं वैश्यस्वं भरतर्षभ।
तयोरपत्ययोर्वक्ष्ये विभागं च नराधिप॥

1. मनु. ९।१४८-१५७।
2. नारद. १६।१४।

वैश्यापुत्रेण हर्तव्याश्चत्वारोंऽशाःपितुर्धनात् ।
पञ्चमस्तु भवेद्भागः शूद्रापुत्राय भारत ।
सोऽपि दत्तं हरेत् पित्रा नादत्तं हर्तुमर्हति ॥

अत्र विष्णुः–

ब्राह्मणस्य चतुर्षु वर्णेषु (चेत्) पुत्रा भवेयुस्ते पैतृकमृक्थं दशधा विभजेयुः । तत्र च ब्राह्मणीसुतश्चतुरोंऽशानादद्यात् । क्षत्रियापुत्रस्त्रीन् । द्वावंशौ वैश्यासुतः । शूद्रापुत्रस्त्वेकम् । अथ चेच्छूद्रापुत्रवर्जं ब्राह्मणस्य पुत्रत्रयं भवेत् तदा नवधा धनं विभजयेयुः । वर्णक्रमेण चतुस्त्रिद्विभागीकृतानंशानादद्युः । वैश्यवर्जमष्टधा कृत्वा चतुरस्त्रीनेकं च समादद्युः । क्षत्रियवर्जं सप्तधा कृत्वा द्वावेकं च । ब्राह्मणवर्जं षड्धा कृत्वा त्रीन् द्वावेकं च । क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः । अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्याताम्, तदा सप्तधा कृताद्धनात् ब्राह्मणश्चतुरोंऽशान् दद्यात् । त्रीन् राजन्यः । अथ ब्राह्मणस्य ब्राह्मणवैश्यौ चेत् पुत्रौ स्यातां तदा तद्धनात् षड्धा विभक्तात् चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् । द्वौ वैश्यः । अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् । चतुरोंऽशान् ब्राह्मणस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ द्वौ पुत्रौ स्यात् तदा तद्धनं पञ्चधा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । द्वावंशौ वैश्यः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रौ पुत्रौ स्यातां तदा तद्धनं चतुर्धा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियवैश्ययोर्वा पुत्रौ स्यातां तदा तद्धनं त्रिधा विभजेयाताम् । द्वावंशौ वैश्यस्त्वादद्यात् । एकं शूद्रः[1] । अथैकपुत्रा ब्राह्मणस्य (ब्राह्मण) क्षत्रियवैश्याः सर्वहराः । क्षत्रियवैश्यौ राजन्यस्य । वैश्यस्य वैश्यः शूद्रस्य शूद्रः[2] ।

यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः शूद्रापुत्रस्तदा नवधा विभक्तस्यार्थस्य ब्राह्मणी पुत्रावष्टौ भागानादद्यातामेकं शूद्रापुत्रः । अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रस्तदा षड्धा विभक्तस्य धनस्य चतुरोंऽशान् ब्राह्मणस्त्वादद्याद् द्वावंशौ शूद्रापुत्रौ । अनेन क्रमेणान्यत्राऽप्यंशकल्पना भवति[3] । यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युस्तदा त्र्यंशं ब्राह्मण्याः पुत्रो हरेत् । द्वावंशौ राजन्यायाः पुत्रः । सममितरे विभजेरन्[4] । सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत् । गुणवानशेषाणां भर्ता भवेत्[5] । ब्राह्मणस्य राजन्यापुत्रो ज्येष्ठो गुणसम्पन्न-

---

1. विष्णु. १८।१-२७ ।
2. विष्णुः १८।२८-३१ ।
3. विष्णुः १८।१३८-४० ।
4. वसिष्ठ. १७।४७, ५० ।
5. बौधा. २।३।१२-१३ ।

स्तुल्यभाक् । ज्येष्ठांशहीनमन्यत् । राजन्यावैश्यापुत्रसमवाये यथांशं स ब्राह्मणीपुत्रेण । क्षत्रियाच्चेत्तुल्यभाक्[1] । द्विजातीनां शूद्रस्त्वेकेः पुत्रोऽर्धहरः । अपुत्ररिक्थस्य या गतिः सात्रार्धस्य द्वितीयस्य[2] । शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासिविधिना[3] । शूद्रापुत्रवत्प्रतिलोमासु[4], न शूद्रापुत्रोऽर्थभागी । यदेवास्य पिता दद्यात्तदेवास्य भागः । तस्य गोमिथुनं चापरं वा दद्यात् । कृष्णायसं कृष्णधान्यं तिलवर्जम्, इति शङ्खलिखितौ । तथा[5] च–

**विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः ।**
**भवेत्समांशो विप्रेण वैश्याजातस्तथैव च ॥ बृह. २६।१२० ॥**
**शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति ॥ बृह. २६।१२२ ॥**
**अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।**
**लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः ॥ बृह. २६।१२५ ॥**

**दौहित्रः** । अभ्रातृकस्तु दुहितृतत्सुताभावे सर्वभाक् स्यात् । अस्मादेव च दौहित्राभाववचनाद् द्विजातीनामपि पुत्राभावे दौहित्रा धनभाज इति । अत एव मातामहश्राद्धनियमोत्पत्तिः[6] । अभ्रातृकस्तु दुहितृसुताभावे स्याद्राज्ञानुज्ञया बृहस्पतिवचनादेव– अन्वयिनः सर्वं राजा हरेत्तदनुज्ञया वावरोधज इत्येके–इति । तथा गोविन्दराजेनाऽपि मनुटीकायाम्–अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुः । पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रकाः समाः । एतद्विष्णुवचनबलेनोढातः प्रागेव दौहित्रस्याधिकारो दर्शितः । स चास्मभ्यं न रोचते[7] । अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रमन्यं दौहित्रम्[8] । अत्र **बृहस्पतिः**

**यथा पितृधने स्वाम्यं तस्याः सत्स्वमपि बन्धुषु ।**
**तथैव तत्सुतोपीष्टे मातृमातामहे धने ॥**
**( दायभागः ११।२।१७ पृ. १८०; व्य. प्र. ५२१ )**

**कन्यायाःदायाधिकारः**

'शासद्वह्निः' इति ऋचामाश्रित्य कथ्यते यत्कन्याया दायभागो वेदेभ्यः समर्थितः; परञ्च "अथैतां दुहितृदायाद्ये उदाहरन्ति" (निरुक्त. ३।१३।२) इति वचनेन स्पष्टं यद् यास्कोऽन्यस्य मतमुद्धरति पुत्राभावदशायाञ्च । यास्केन "अभ्रातृमतीवाद इत्यपरम्"

---

1. बौधा. २८।३६-३९ ।
2. विष्णु. १८।३२-३३ ।
3. गौ. २८।४० ।
4. गौ. २८।४६ ।
5. मनु. ९।१५४-१५७, १७९; याज्ञ. २।१३३-१३४ ।
6. याज्ञ. २।१३३-१३४ ।
7. दायभागः ९।२३-२४ ।
8. बौधा. २।२।१७ ।

इति वचनेन स्पष्टीकृतम् यद् अभ्रातृकाया अनिर्वाह औपमिकः "नाभ्रात्रीमुपयच्छेत् तोकं हि अस्य तद् भवति' इत्यभ्रातृकाया ·उपयमनप्रतिषेधः प्रत्यक्षपितुश्च पुत्रभावः (निरुक्त. ३।१।५।५)। इत्येव मनोराधारः–

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छत तां प्राज्ञः पुत्रिका धर्मशङ्कया ॥ ३।११ ॥

सन्तानकार्यं पिण्डदानञ्च पुत्रस्य प्रयोजनम्–सन्तानकर्मणे पिण्डदानाया (निरुक्त २३।१।४।६)। 'न जामये तान्वो रिक्थमारैक्' इति मन्त्रस्य व्याख्यायां सायणः– "पिण्डदानादिककर्तृत्वात् पुत्रो दायार्हः दुहिता तथा न दायार्हा"।

पुरु त्रायते नियरणाद्वा, पुं नरकं ततस्त्रायते वा (२।११) इति निरुक्तवचनेन पिण्डदानहेतुना पुत्रस्य पुत्रत्वं सिद्धम्। पुन्नामो नरकाद् यस्मात् त्रायते पितरं सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा (मनु. ९।१३८); 'पिण्डं दत्वा धनं हरेत्" इत्यादि वचनैर्मनुर्दायाधिकारे पिण्डदानं प्रयोजक इति स्वीकरोति। यथा श्रीमद्-भगवद्गीता–

सङ्करो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया ॥ १।४२ ॥

स्पष्टं यदभ्रातृका कन्या पितृधनाधिकारिणी–

अमाजूरिव पित्रोः सचा सती समानादा सदसस्त्वामिये भगम्।
कृधि प्रकेतमुप मास्या भर दद्धि भागं तन्वो येन मामहः॥
(ऋ. २।१७।७)

वेदेषु भ्रातृहीना कन्या हीना मता–

अभ्रातरो न योषणो व्यन्तः पतिरिपो न जनयो दुरेवाः।
पापासः सन्तो अनृता असत्या इदं पदमजनता गभीरम् ॥
(ऋ. ४।५।५)

स्त्रियं जातां परास्यन्ति नो पुंमासम् इति निरुक्तः (३।१।४।३)। कन्यादानान्तरं पितृसम्पत्तौ न सा अधिकारिणी–तस्मात्पुमान् दायादः स्त्री अदायादा (निरुक्तः ३।१।४।३)। 'शासद्वह्निः' इति मन्त्रस्य सायणाचार्यभाष्यमवधेयम्–"अपुत्रस्य पितुः दायादा पुत्रिका सती यतः सन्तानकृत् तस्याः पुत्र इत्यनया उच्यते। अपुत्रो यः पिता कन्यामन्यकुलं प्रापयति, स वह्निरुच्यते। स पिता 'शासद्' 'अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्' अस्यां यो जायते पुत्रः स मे पुत्रो भवेद् इति' स्मृत्युक्तमनु-शासनं कुर्वन्, 'दुहितुः' पुत्रिकाया 'नप्त्यं' नप्तारं पौत्रं 'गात्' गच्छति दुहितुः पुत्रत्वेन स्वीकाराद् दौहित्रं पिण्डदानादिकर्त्तव्यतया गच्छति। किं कुर्वन्? 'विद्वान्' अस्यां दुहितरि जातः पुत्रो मम स्वधाकारो भविष्यति इति जानन्। 'ऋतस्य' सत्यस्य

पुत्रोत्पादनसमर्थस्य रेतसो धर्तारं जामातरं तत्पतिम्, 'सपर्यन्' वस्त्रालङ्कारादिना पूजयन् पिता नप्त्यमवगच्छति । यत्र 'पिता' अपुत्रो जनको, 'दुहितु'रप्रत्तायाः स्वकन्याया रेतसः 'सेकं' तस्यां रेतः सेकं प्रसाधायन् सुखनिमित्तेन मनसा आत्मानं सन्धत्ते अपुत्रत्वनिमित्तदुःखापगमात्" ।

यदा भ्रातृमतीकन्याया दायाधिकारः निषिद्ध इति सिद्धः तदा "अविशेषेण पुत्राणां दायो भवति धर्मतः" (निरुक्तः) "यथैवात्मा..." (मनु. ९।१३०) इत्यादि वचनानां तात्पर्यं भ्रातृमती कन्यासम्बन्धे एव सङ्गतः । अत्र कुल्लूकभट्टः मेधातिथिश्च "अतस्तस्यां पुत्रिकायामात्मस्वरूपायां विद्यमानायामपुत्रस्य तस्य पितुर्धनं पुत्रिकाव्यतिरेकेण कथमन्यो हरेत्? पुत्रिकाया अनुत्पन्नपुत्राया धनहरत्वमप्राप्तं विधीयते अर्थवादेन । समान्यवचनो दुहितृशब्दः प्रकरणात् पुत्रिका विषयो ज्ञेयः" (मेधातिथिः) । 'यदपि चोक्तमविशेषेणेति, तदपि अभ्रातृमतीपक्षे द्रष्टव्यम्' (दुर्गाचार्यः), 'आत्मा वै जायते पुत्रः' 'अङ्गादङ्गात्' इत्यादिषु गौणं दुहितुः पुत्रत्वम् । यदि दुहिता पुत्रेण अविशिष्टा भवेत्, ततो 'दुहिता' इति विशेषसमाख्या न स्यात्, अस्ति चेयम्, तस्माद्विशिष्टतरः पुत्रो दुहितुः सकाशात् । मन्त्रस्य स्वरूपः–

**न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।**
**यदी मातरो जनयन्त वह्निमन्यः कर्त्ता सुकृतोरन्य ऋन्धन् ॥**

**( ऋ. ३।३१।२ )**

अत्र निरुक्तकारस्य व्याख्या–"न जामये भगिन्यै जामिरन्येऽस्यां जनयन्ति जाममपत्यं जमतेर्वा स्याद्गतिकर्मणो निगमनप्राया भवति" (निरुक्तः ३।१।६।१) "तान् व आत्मजः पुत्रो रिक्थं प्रारिचत् प्रादात्" "चकारैनां गर्भधानीं सनितुर्हस्तग्राहस्य" "यदी मातरो जनयन्त वह्निं पुत्रम् अवह्निं च स्त्रियम् । अन्यतरः सन्तानकर्त्ता भवति पुमान् दायादः । अन्यतरोऽर्द्धयित्वा जामिः प्रदीयते" (निरुक्तः ३।१।६।१) ।

अन्येऽपि आचार्याः–"पिता मात्रा इति । मातुरेकशेषश्छान्दसः । "व्यत्ययो बहुलम्" 'मातरः' । 'पिता मात्रा' इति पितुः शेषे प्राप्ते मातुः शेषश्छान्दसः । द्विवचनस्य स्थाने "बहुवचनम् पूजार्थम्" (सायणः) । 'मातरः' 'पितामात्रा' इति पितुः शेषे प्राप्ते मातुः शेपश्छान्दसः । द्विवचनस्य स्थाने बहुवचनम्' (स्कन्दस्वामी माहेश्वरः) ।

स्कन्दस्वामी माहेश्वरस्य समाधानम्–"अथ यदुक्तं पुत्रदायाद्य इत्येके तं पक्षमास्थाय इदानीं 'शासद्वह्निः' इत्यस्य अर्धर्चस्य अविशेषेण पुत्राणामित्यस्य अभ्रातृमती या दुहिता, तद्विषयत्वप्रतिपादनार्थम्, न दुहितर इत्यादि विचारस्तावत् क्रियते । एवमन्यपरश्रुतिलिङ्गदर्शनम् अनेकधा उपन्यस्य पूर्वोक्तस्य शासद्वह्निः

इत्यादेरभ्रातृकाविषयत्वं व्यवस्थापयति । शासद्वह्निः इत्यत्र अभ्रातृका विषयमेतत्, न सर्वाविषयम् इति दुहितुः इति पुत्रभावं शास्ति ततश्च 'शासद्वह्निः' इत्थमर्धर्चोऽभ्रातृमतीविषय एव व्याख्येयो, न दुहितृमात्रविषय इति निश्चयः...। "कदा पुनर्दुहितुः पुत्रभावं शास्ति, नप्तारं चावगच्छति तस्याः पुत्र इति । उच्यते— पिता तस्मिन् काले दुहितुः सेक्तारं जामातरं प्रतिगृह्णाति, अभ्रातृकामिमां तुभ्यं दास्यामि अस्या जनिष्यते गर्भः, सा मम स्वधाकारः" ।

"पिता यत्र दुहितुः" इत्यंशव्याख्याने निरुक्तभाष्यकारः दुर्गाचार्यः—"अधुना योऽसौ 'शासद्वह्निः' इत्यस्या ऋच उत्तरोऽर्धर्च उत्सृष्टः, स एव अभ्रातृकावादपक्षेणैव निरुच्यते । पूर्वोऽपि च शासद्वह्निरित्ययमभ्रातृमतीवादपक्षेणैव योजयितव्यः । एष एव स्थितः पक्षः । तस्या एव हि अभ्रातृमत्याः यः पुत्रो भवति, तमेव पुत्रिका-विधानेन कृताभिसन्धित्वात् पौत्रो ममायमिति अपुत्रः सन् मातामह उपगच्छति, नेतरान् भ्रातृमतीपुत्रान् । अन्यथा सर्व एव हि वोढारो अपुत्राः स्युः, ततो विवाह-परिश्रमो व्यर्थ एव स्यात् अथवा सर्वमेव लोको द्व्यामुष्यायण एव स्यात् । किञ्च पुत्रिकापितुरपि या भार्या सा अन्यस्य दुहिता इति तस्यामपि या जायते, सा मातामहस्यैव, नेतरस्य पुत्रिका पितुः स्यात् । अनिष्टं चैतत्सर्वम् । तस्माच्चैव अभिसन्धिपूर्वकं धर्मेण पुत्रिका क्रियते तस्या एव पुत्रो मातामहस्य भवति, न सर्वस्या इति । सैव च दायार्हा, नेतरा भ्रातृमत्यः । अत इदमुच्यते "पिता यत्र दुहितुः" इति (३।१।५।६), "यदपि चोक्तम्—अविशेषेण पुत्राणां दायो भवति धर्मतः" इति, तदपि अभ्रातृमती पक्षे द्रष्टव्यम् । अथवा वेदस्मृत्योर्विरोधे वेददृष्ट एव धर्मो ज्यायान्, न स्मृतिदृष्टः" (३।१।६।१), "यत्पुनरुक्तो पुंसोऽपि दानातिसर्गविक्रया विद्यन्ते, तत् कदाचित् केनचिन्निमित्तेन भवति । कन्या (स्त्री) निसर्गेणैव दीयते, विक्रीयते, विसृज्यते (वा) सा हि परार्थमेवोत्पद्यते, तस्माद् अभागा इति" ।

"विभागं चेत्पिता" इति विभागस्य प्रथमकालः । द्वितीयकालस्तु "अत ऊर्ध्वं पितुः पुत्रा विभजेयुः समं धनम्" इति पित्रोरुर्ध्वं विभागं प्रतिपाद्य "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च । निवृत्ते चापि रमणे पितर्युपरतस्पृहे" विभक्तधनं पुनर्मिश्रीकृते संस्पृष्टम्, तदस्यास्तीति संसृष्टी । संसृष्टत्वं च न येन केनाऽपि, किन्तु पित्रा, भ्रात्रा, पितृव्येण वा । यथाह बृहस्पतिः

विभक्तो यः पुनः पित्रा भ्रात्रावेकत्र संस्थितिः ।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥

तृतीयविभागकालः—अकामे पितरि रिक्थविभागे वृद्धे विपरीतचेतसि रोगिणि च (शङ्खः) । भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा । तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि (याज्ञ. ८।१२१) । दायस्य पिण्डदानादिना असाधारणसम्बन्धः ।

ज्येष्ठ एव पितृसम्बन्धि धनं गृह्णीयात् । कनिष्ठाः पुनर्ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिवोपजीवेयुः । एवं सर्वेषां सहैवावस्थानम् । उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति । ततश्च 'नापुत्र लोकोऽस्ति' इति श्रुतेः पुण्यलोकाभाव परिहारो भवति । तथा "प्रजया पितृभ्यः" इति श्रुतेः "पुत्रेण जातमात्रेण पितॄणामनृणश्च सः" इति । अतो ज्येष्ठ एव सर्वधनमर्हति पूर्वस्य । अनुजास्तेन साम्ना वर्तेरन् । यस्मिन् जाते ऋणं शोधयति । येन जातेनामृतत्वं प्राप्नोति । स एव पितुर्धमेण हेतुना जातः पुत्रो भवति, तेनैकेनैव ऋणापनयनाद्युपकारस्य कृतत्वात् । इतरांस्तु कामजान्मुनयो जानन्ति । ततश्च सर्वं धनं गृह्णीयादित्यस्यैवायमपि[1] ।

ज्येष्ठस्याविभक्तसाधारणधनादुद्धृत्य विंशतितमो भागः सर्वद्रव्येभ्यश्च यच्छ्रेष्ठं तद्दातव्यम् । मध्यमस्य चत्वारिंशतितमो भागो देयः । कनिष्ठस्य पुनरशीतितमो भागो दातव्यः । अवशिष्टं धनं समं कृत्वा विभजनीयम् । ज्येष्ठकनिष्ठव्यतिरिक्ता ये मध्यमास्तेषामेवावान्तरज्येष्ठकनिष्ठतामनपेक्ष्य मध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकं दातव्यः । मध्यमानामवान्तरज्येष्ठकनिष्ठदेयभागे वैषम्यवारणार्थम्[2] ।

मातुर्यद्धनं तत्तस्यां मृतायां कुमारीभाग एव स्यान्न पुत्राणां तत्र भागः । कुमारी चानूढाभिप्रेता[3] । स्त्रीधनं दुहितृणामदत्तानामप्रतिष्ठितानां च अपुत्रस्य च मातामहस्य दौहित्र एव प्रकृतत्वात्पौत्रिकेयः समग्रं धनं गृह्णीयादिति गोतमः । दौहित्रः प्रकृतत्वात् पौत्रिकेय एव, तस्य मातामहधनग्रहणमनन्तरोक्तं जनकग्रहणञ्च । पिण्डदानार्थोऽयमारम्भः, पितृशब्दस्य तत्रैव प्रसिद्धत्वात् । अन्यस्य पौत्रिकेयः पुत्रान्तररहितस्य जनकस्य समग्रं धनं गृह्णीयात् स एव पितृमातामहाभ्यां द्वौ पिण्डौ दद्यात् । पिण्डदानं श्रद्धोपलक्षणार्थम् । पौत्रिकेयत्वेन जनकधनग्रहणपिण्डदानव्यामोहनिरासार्थमपेक्षितम् । पौत्रपौत्रिकययोर्लोके धर्मकृत्येन कश्चिद्विशेषोऽस्ति[4] ।

कृतायां पुत्रिकायां यदि तत्कर्त्तुः पुत्रोऽनन्तरं जायते तदा तयोर्विभागकाले समो विभागो भवेत् । नोद्धारः पुत्रिकायै देयः । यस्माज्ज्येष्ठाया अपि तस्या उद्धारविषये ज्येष्ठता नादरणीया । अपुत्रायां पुत्रिकायां कथञ्चन मृतायां तदीयधनं तद्भर्तैवाविचारयन् गृह्णीयात् । पुत्रिकायाः पुत्रसमत्वेनानपत्यस्य पत्नीहितस्य मृतपुत्रस्य पितुर्धनग्रहणप्रसक्तौ तन्निवारणार्थमिति व्यवस्था ।

अकृता वा कृता वेति पुत्रिकाया एव द्वैविध्यम्, तत्र "यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्" (मनु. ९।१२७) इत्यभिधाय कन्यादानकाले वरानुमत्या या क्रियते

1. मनु. ९।१०५-१०७ ।
2. मनु. ९।११२-११३ ।
3. मनु. ९।१३१-१३३ ।
4. मनु. ९।१३१ ।

सा कृताभिसन्धिमात्रकृता वाग्व्यहारेण न कृता । तथा गोतमः—"अभिसन्धिमात्रात्पुत्रिकामेकेषाम्" । अतएव मनुः "पुत्रिकाधर्मशङ्कया" (३।११) इंति प्राग्विवाह्यत्वमुक्तम् । पुत्रिकेव कृताऽकृता वा पुत्रं समानजातीयाद् वोढुरुत्पादयेत्तेन दौहित्रेण पौत्रकार्यकरणात्पौत्रिकेयवान्मातामहः पौत्री । तथा चासौ तस्मै पिण्डं दद्यात् । गोविन्दराजस्तु "अकृता वा" इत्यपुत्रिकैव दुहिता तत्पुत्रोऽपि मातामहधने पौत्रिकेय इव मातामह्यादिसत्त्वेप्यधिकारीत्याह । तन्न । पुत्रिकायाः पुत्रतुल्यत्वादपुत्रिकातत्पुत्रयोरतुल्यत्वेन तत्पुत्रयोस्तुल्यत्वायोग्यत्वादिति कुल्लूकभट्टः[1] ।

जातिवैषम्यादिसम्बन्धे विचारः । तद्यथा कस्यचिद्ब्राह्मणस्यैका पत्नी, पुत्रश्चैकः कन्या चैका, तत्र पित्र्यं सर्वमेव द्रव्यं द्विधा विभज्य, तत्रैकभागं चतुर्धा विभज्य, तुरीयांशं कन्यायै दत्वा शेषं पुत्रो गृह्णीयात् । यदा द्वौ पुत्रौ कन्या चैका, तदा पित्र्यं धनं सर्वं त्रिधा विभज्य एकं भागं चतुर्धा विभज्य तुरीयांशं कन्यायै दत्वा शेषं द्वौ पुत्रौ विभज्य गृह्णीतः । अथ त्वेकः पुत्रः द्वे कन्ये, तदा पित्र्यं धनं त्रिधा विभज्य एकं भागं चतुर्धा विभज्य द्वौ भागौ द्वाभ्यां कन्याभ्यां दत्वावशिष्टं सर्वं पुत्रो गृह्णातीत्येवं समानजातीयेषु समविषमेषु भ्रातृषु भगिनीषु च योजनीयम् ।

यदा तु ब्राह्मणीपुत्र एकः क्षत्रिया कन्या चैका, तत्र पितृधनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्धा विभज्य चतुर्थमंशं क्षत्रिया कन्यायै दत्वा शेषं सर्वं ब्राह्मणीपुत्रौ विभज्य गृह्णाति । यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रिया कन्या चैका, तत्र पित्र्यं धनमेकादशधा विभज्य तेषु त्रीनंशान् क्षत्रियापुत्रभागांश्चतुर्धा विभज्य चतुर्थमंशं क्षत्रिया कन्यायै दत्वा शेषं सर्वं ब्राह्मणी पुत्रौ विभज्य गृह्णीतः । एवं जातिवैषम्ये भ्रातृणां भगनीनां च संख्याया वैषम्ये सर्वत्रोहनीयम् ।

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् । स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः (मनु. ९।११८) । ब्राह्मणादयो भ्रातरः ब्राह्मणीप्रभृतिभ्यो भगनीभ्यः स्वेभ्यः स्वजातिविहितेभ्योंऽशेभ्यः चतुरोंऽशान् हरेद्विप्र इत्यादि वचेनभ्यः स्वात् स्वांदशादात्मीयादात्मीयाद्भागाच्चतुर्थं चतुर्थं भागं दद्युः । न चात्रात्मीयाद्भागादुद्धृत्य चतुर्थांशो देय इत्युच्यते, किन्तु स्वजातिविहितादेकस्मादेकस्मादंशात् पृथक् पृथगेकस्याप्येकस्यै कन्यायै चतुर्थांशो देयः । यद्यपि कैश्चिदुच्यते अंशदानविवक्षायां बहुभ्रातृकायाः बहुधनत्वं बहुभगिनीकस्य च निर्धनता प्राप्नोतीति, तदुक्तरीत्या परिहृतमेव । न ह्यत्रात्मीयभागादुद्धृत्य चतुर्थांशं दानमुच्यते, येन तत्स्यात् ।

स्मृतिचन्द्रिकाकारस्तु कन्याभ्यश्चेति देवलवचनानुसारेण संस्कारमात्रोपयोगिद्रव्यदानमेव मन्यते । अत्र वदामः, कन्याभ्यः पितृद्रव्यं देयमिति पृथग्विधिः । तच्च मन्वाद्यनुरोधाच्चतुर्थांशरूपमेव । वैवाहिकं वसु च देयमिति पृथग्विधिः 'विभज्यमाने

1. मनु. ९।१३४-१३६ ।

दायाद्ये कन्यालङ्कारं वैवाहिकं स्त्रीधनं च लभेत' इति शङ्खवचनसमानार्थया, व्याख्यातञ्चेदं शङ्खवचनं विद्यारण्यश्रीचरणैः पराशरस्मृतिटीकायाम् । पैत्रिकद्रव्यविभागकाले स्वधृतमलङ्कारादिकमपि कन्याप्नोतीत्याह शङ्ख इति । यदि तु वैवाहिकं विवाहोपयोगिपितृद्रव्यं कन्याभ्यो देयमित्यर्थः स्याद् वसुपदं पुनरुक्तं स्यादिति पृथग्विधिद्वयमेवात्र युक्तम्[1] ।

**विभक्तजविभागः**

तत्र मनुनारदौ[2]

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव धनं हरेत् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

बृहस्पतिः

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः ।
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ॥
अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः ।
पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ॥
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ।
यथाधने तथर्णेऽपि दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रिया ॥ २६।५४-५५; २६।५६-५७ ॥

याज्ञवल्क्यः

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ २।१२२ ।

यो विभागकाले गर्भस्थो न ज्ञातः पश्चाज्जातः स सर्वेभ्योऽशहरेभ्यः सकाशात् स्वांशं तदंशसमं लभेत । यदाह विष्णुः—पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः (१७।३) । विभागानन्तरकालं च यस्य गर्भाधानं स पित्र्यमेवांशं लभते न तु पूर्वजादंशादपि । "अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः" इति बृहस्पतिवचनात् । पितृविभागकालप्राप्तमाय्व्ययशोधितं यावद्विद्यमानं धनमुपलभ्यते ततो वा धनात् सर्वांशं लभते ।

**विभक्तागतविभागः**

तत्र बृहस्पतिः

कृतेऽकृते विभागे वा ऋक्थी यत्र प्रवर्तते ।
सामान्यं चेद्भावयति तत्र भागहरस्तु सः ॥

---

1. व्य. प्र. ४५६, ४५७ ।
2. मनु. ९।२१६; ना. १६।४४ ।

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि भागभागागतस्तु सः ॥
गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥
यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥
जाता जनिष्यमाणाश्च गर्भस्था ये च मानवाः ।
सर्वे काङ्क्षन्ति तां वृत्तिमनाच्छेद्या ततस्तु सा ॥ २६।६३-६७, ३९ ॥

**पुत्रान्तरविभागः**

ज्येष्ठता नास्ति हि स्त्रियाः । रिक्थभाग एव ज्येष्ठता निषिद्ध्यते न त्वस्यां गुरुवृत्तौ–

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥
( मनु. ९।१३० )

कनिष्ठो यदि ज्येष्ठभ्रातृभ्रार्यायां नियोगेन पुत्रं जनयेत्तदा तेन पितृव्येण सह तस्य क्षेत्रजस्य समो विभागः स्यान्न तु पितृवत्सोद्धारो भवतीति विभागव्यवस्था नियता[1] । यो मृतस्य भ्रातुः स्थावरं जङ्गमं धनं पत्न्या रक्षणाक्षमया समर्पितं रक्षेत्तां च पुष्णीयात्स नियोगधर्मेण तस्यामुत्पादितस्य भ्रातुरपत्यस्य दद्यात्[2] । यदा क्षेत्रिकस्य पितुः क्षेत्रजानन्तरमौरसः पुत्रो भवति तदा तावौरसक्षेत्रजावेकरिक्थिनावेकस्य पितुर्यद्यपि रिक्थार्हौ भवतस्तथापि यद्यस्य जनकसंबन्धि तदेव स गृह्णीयान्न क्षेत्रजः क्षेत्रकपितुः[3] । तथा च मनुः

न भ्रातरो न पितरः पुत्रा ऋक्थहराः स्मृताः । ९।१८५ ।
षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पितृकाद्धनात् ।
औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥
औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ।
दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ ९।१६४-१६५ ।

---

1. मनु. ९।१२० ।
2. मनु. ९।१४६ ।
3. मनु. ९।१६२ ।

'पुत्रं प्रतिगृहीष्यन्' इत्यनुवृत्तौ वसिष्ठः (१५।९-१०) तस्मिंश्चेत्प्रतिगृहीत औरसः पुत्र उत्पद्यते स चतुर्थभागभागी स्यात् । यदि नाभ्युदयिकेषु प्रयुक्तं स्यात् तत्र कात्यायनः

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः ।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥ ८५७ ॥

इदं तृतीयांशहरत्वं क्षेत्रजस्य[1] । पूर्वपरिगृहीतपुत्रे चतुर्थांश उक्तः अनेन तु तृतीयांशभागित्वम् । तदिदमगुणत्वसगुणत्वाभ्यां व्यवस्थाप्यम्[2] । 'सवर्णाः' दत्तकक्षेत्र-जादयः । ते सत्यौरसे चतुर्थांशहराः । "असवर्णाः" कानीनगूढोत्पन्नसहोढजपौनर्भवाः । ते त्वौरसे सति न चतुर्थांशहराः, किन्तु ग्रासाच्छादनभाजिनः[3] । तत्र 'तृतीयांशहराः', इति कल्पतरुपाठे यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया तृतीयांशहरत्वमिति व्याख्येयः[4] । जीमूतवाहनापरार्कमाधवस्तु 'चतुर्थांशहराः' इति पठन्ति । क्षेत्रजाद्या सुताश्चान्ये पञ्चषट्सप्तभागिनः, इति बृहस्पतिः (२६।७१) ।

विभजिष्यमाणमेकविंशं कानीनाय दद्यात् । विंशं पौनर्भवाय । एकोनविंशं द्व्यामुष्यायणाय । अष्टादशं क्षेत्रजाय । सप्तदशं पुकिापुत्राय । इतरानौरसाय पुत्राय दद्युः, इति हारीतः । ब्रह्मपुराणे

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः ।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥
कृत्रिमः पञ्चभागं तु षड्भागं गूढसंभवः ।
सप्तांशं चापविद्धस्तु कानीनश्चाष्टमांशकम् ॥
नवभागं सहोढश्च क्रीतो दशममश्नुते ।
पौनर्भवस्तु परतो द्वादशं स्वयमागतः ॥
त्रयोदशं स्वभागं तु शूद्रो भुङ्क्ते पितुर्धनात् ।
तद्गोत्रजो वा धर्मिष्ठो ब्रह्मचार्यथवा पुनः[5] ॥

षड्दायादेषु विकल्पः । औरसः क्षेत्रजः पुत्रिकासुतः पौनर्भवः कानीनो गूढोत्पन्नश्चेति । षड्विधा बन्धुदायादाः । पितृपितामहानामेकगोत्रा रिक्थपिण्डोदक-सामान्यात् । तेषामर्थं दशभागान् कुर्यात् । द्वौ भागौ पितुर्द्वावौरसस्य । त्रीन् क्षेत्रजपुत्रिकासुतयोः । एकैकमितरेषामिति शङ्खलिखितौ । पुनश्च—ऋषभोऽधिको ज्येष्ठस्य । तस्याभावे क्षेत्रजपुत्रिकापुत्रसुतयोः । तयोरप्यभावे त्रयाणामितरेषाम् ।

1. वि. चि. २३४ ।
2. वि. र. ५४८ ।
3. मिता., याज्ञ. २।१३२ ।
4. व्य. प्र. ४८३ ।
5. व्य. प्र. ४८४ ।

तेषामप्यभावे षण्णामादायादानाम् । अपविद्धः सहोढो दत्तः क्रीतकः शूद्रापुत्रः उपनतश्च स्वयमित्यदायादाः षडेव पुत्राः । तेषां सारानुसारतोऽर्थमपेक्ष्य देयमेतेभ्यः प्रजीवनम् ।

पुत्रा औरसक्षेत्रजदत्तकृत्रिमगूढोत्पन्नापविद्धा रिक्थभाजः । कानीनसहोढपौनर्भवपुत्रिकापुत्रस्वयंदत्तक्रीता गोत्रभाजश्चतुर्थांशिन औरसाभावे[1] । औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नानभिधाय वसिष्ठः[2] । इदं पौनर्भवकानीनयोरंशहरत्वाभिधानं पितृवर्णपौनर्भवकानीनविषयम् । गौतमीयं चैतयोरंशहरत्वनिषेधनमसवर्णविषयम् ।

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः सुताः ।
सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः ॥ ८५७ ॥

इति कात्यायनवचनात् । । सहोढदत्तक्रीतस्वयमुपगतापविद्धशूद्रपुत्रानभिधाय, औरसादीन् परामृश्य यस्य पूर्वेषां षण्णां न कश्चिद्दायादः स्यादेते तस्य दायं हरेयुरिति वसिष्ठः (१७।३९)।

षड्बन्धुदायादाः षडबन्धुदायादाः । साध्व्यां स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गृहे गुढोत्पन्न इति बन्धुदायादाः । दत्तः क्रीतोऽपविद्धः सहोढः स्वयमुपागतः सहसा दृष्टश्चेत्यबन्धुदायादाः, इति हारीतः । श्रेयसः श्रेयसोऽलाभे पापीयानृक्थमर्हति[3] ।

**विभक्तकृत्यम्**

तत्र नारदः

यद्येकाजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु सम्मताः ॥
स्वभागान्यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥

बृहस्पतिः

येनांशो यादृशो भुक्तस्तस्य तन्न विचालयेत् ।
स्वेच्छाकृतं विभागो यः पुनरेव विसंवदेत् ॥
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ।
विभक्ता ह्यविभक्ता वा दायादा स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥ व्यव. २६ ॥

---

1. गौतमः २५।३३ ।
2. १७।२५-२६ ।
3. नारद. १६।४५-४७,४९; मनु. ९।१८४; बृह. २६।७२-७५ ।

उपसंहरामि आपस्तम्बवचनेन तत्रत्यया हरदत्तस्योज्ज्वलया च पूर्वोद्धृधवचनानि संक्षिप्य च–

"पुत्राभावे यः प्रत्यासन्नः सपिण्डः" (२।६।१४।२) । अथ मृते कुटुम्बिनि तद्धनगतिमाह पुत्राभावे य इति । पुत्राभाव इति वचनात्सत्सु पुत्रेषु त एव गृह्णीयुः । अविशेषात्समम् । तत्र नारदीये विशेषः । "यच्छिष्टं प्रीतिदायेभ्यो दत्वर्णं पैतृकं च यत् भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पितेति" । कात्यायनस्तु–"भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतं विभागकाले देयं तद्रिक्थिभिः सर्वमेव त्विति । अत्र याज्ञवल्क्यः (२।१२३) "पितुरूर्ध्वम्..." । तथा च मनुः (९।३) "पिता रक्षति..." । एवं मातुरप्यभावे तद्धनं भर्तृकुललब्धं स्वयमर्जितं च पुत्रा अप्रत्ताश्च दुहितरः समं गृह्णीयुः "स्त्रीधनं... ..." (मनु. ९।१३१) । अथ प्रत्ता दुहितरः पुत्राश्च "जनन्यां..." इति मानवमेव (मनु. ९।१९२) । अत्र व्यासः "असंस्कृतास्तु ये तत्र..." ।

अत्र क्रमविवाहे बृहस्पतिः–"ब्रह्मक्षत्रियविट्शूद्राः.." । मानवे च स्पष्टमुक्तम्–"सर्वं वा रिक्थजातं... ..." (९।१५३) । यस्य तु ब्राह्मणी बन्ध्या मृता वा तस्य क्षत्रियादिसुतास्त्रिद्व्येकभागाः । यस्य त्वेकस्यामप्येकः पुत्रः स सर्वमेव हरेत् शूद्रापुत्रवर्जं यथाह देवलः "आनुलोम्यैकपुत्रस्तु पितुः.." । निषादः पारशवः । क्षेत्रविषये बृहस्पतिः "न प्रतिग्रहभूर्देया..." । याज्ञवल्क्यः (२।१३३-१३४) "जातो हि दास्याम्..." । भार्याविषये विष्णुः (१८।३४), "मातरः पुत्रभागानुसारिभागहारिण्य" इति । अत्र "औरसपुत्रिकाबीज..." । गौतमः (२८।१८) "पितोत्सृजेत्पुत्रिका... ..." । बृहस्पतिः "पुत्रोऽथपुत्रिकापुत्रः.." । काश्यपः "सप्त पौनर्भवाः.. ..." । मनु. (९।१३२) "पितृवेश्मनिः.." । कात्यायनः "क्लीबं विहाय..." । नारदः (१३।१७) "कानीनश्च..." । वसिष्ठः (१७।२३) "अप्रत्ता दुहिता... ..." । अनूढायामेव मृतायां मातामहस्य पौत्रः । अन्यथा वोढुः पुत्रः । मनुः (९।१७३) "या गर्भिणी... ..." । पैठनसिः "अथ दत्तक्रीत..." । मनु. (९।१८२) "भ्रातॄणामेक..." । मनुः (९।१७४, १७६, १७७, १६९, १७१) "क्रीणीयाद्यस्तु... ... ... ... ..." । सर्व एते सजातीयाः "सजातीयेष्वयम्..." (याज्ञ. २।१३३) । विष्णुः (१५।२७) "यत्र क्वचनोत्पादितश्च द्वादश" । याज्ञवल्क्यः (२।१३२) "पिण्डोंऽश..." । मनुः (९।१८४) "श्रेयसः.." । नारदः (१३।४९) "क्रमादेते... ..." । देवलः "सर्वे ह्यनौरसस्यैते... ..." । मनुः (९।१६४) "षष्ठं तु... ..." । बृहस्पतिः "क्षेत्रजाद्याः.. ..." । हारीतः "विभजयिष्यमाण... ..." । वसिष्ठः "पुत्रं प्रतिग्रहीष्यन्निति" प्रकम्य "तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागिति (वा. ध. शा. १५।९) । एवमेतेषु शास्त्रेषु विद्यमानेषु पुत्रेषु यदाचार्येण उक्तं "तेषां कर्मभिः सम्बन्धो दायेनाव्यतिक्रमश्चेति" (१३।१-२) । तद्धर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां समांशहरत्वप्रतिषेधपरं वेदितव्यम् ।

अविभाज्यम् । अत्र मनुः (९।२०८) "अनुपघ्नन्... ..." । कत्यायनः "नाविद्यानां तु वैद्येन... ..." । व्यासः "पितामहपितृभ्याम्... ..." । याज्ञवल्क्यः (२।११९) "क्रमादभ्यागतं... ..." । मनुः (९।२००) "पत्यौ जीवति यः.." । व्यासः "साधारणं समाश्रित्य... ..." । इति पुत्रदायभागः । तदभावे तु "मृतस्य यः प्रत्यासन्नः.." । "लेपभाजश्च चतुर्थाद्याः.." । इति सपिण्डलक्षणम् । तेषु यो यः प्रत्यासन्नः स गृह्णीयादिति ।

भार्या तु रिक्थग्राहिणः सपिण्डा रक्षेयुरित्याचार्यपक्षः । श्रूयतेति (तैत्ति. सं. ६।५।८।२) "तस्मात्स्त्रियो निरिन्द्रिया अदायादीरिति" । मनुरपि (९।१८) "निरिन्द्रिया... ..." । अत्र सपिण्डाद्यभावे बृहस्पतिः "अन्यत्र ब्राह्मणात्... ..." । व्यासः "द्विसाहस्रः परो दायः..." । "पत्नी दुहितरश्चैव" इत्यादि (या. ध. शा. २।१३५) यानि पत्न्या दायप्राप्तिपराणि तान्यप्येवमेव द्रष्टव्यानि । गोतमस्तु पुत्राभावे पत्न्याः सपिण्डादिभिः समांशग्रहणमाह (२८।२१) । "पिण्डगोत्रर्षिसम्बन्धा रिक्थं..." (या. ध. शा. २।१२३) । सपिण्डादिभिः सह ग्रहणमुक्तमिति । वयमपि एतमेव पक्षं रोचयामहे । अत्र पितरि भ्रातरि च सोदर्ये जीवति सोदर्यो भ्राता गृह्णीयमित्येके । तथा च शङ्खः । "अपुत्रस्य स्वर्यातस्य... ..." । देवलः "ततो दायमपुत्रस्य... ..." । याज्ञवल्क्यः (२।१३, ८, ९) "संसृष्टिनस्तु... ..." । अत्र सोदर्य इति विशेषवचनात् "पत्नी दुहितर"श्चेत्यत्र भ्रातृग्रहणं भिन्नोदरविषयमपि प्रत्यासत्त्यतिशयात् पितैवेत्याचार्यस्य पक्षः । तदभावे भ्राता सोदर्यः। तदभावे तत्पुत्राः । तदभावे भिन्नोदराः । तदभावे पितृव्य इत्यादि द्रष्टव्यम् । मात्रादयोऽपि स्त्रियो जीवनमात्रं लभेरन्निति ।

# अध्यायः १२

## न्यायिकप्रक्रिया (१)

प्राचीनवैदिककाले न्यायिकप्रक्रियायाः, न्याधिकसंघटनस्य, न्यायिकप्रशासनस्य च स्थापना नासीदित्यपि पक्षः[1] । ऋग्वेदे 'मध्यमशी' अन्यैश्च वैदिकोदाहरणैर्व्यवहार-विधेः सङ्केता लभ्यन्ते[2] । तान् आश्रित्य जिम्मर-राथ इत्येताभ्यां मध्यस्थविषयिणी न्यायाधीशविषयिणी च व्यवस्था स्वीक्रियते । मेकडॉनल, कीथ इत्येतौ मन्येते यद् व्यवहारविधौ राज्ञोऽधिको हस्तक्षेपो नासीत्[3] । न्यायविषये राजा न्यायाधीशो वा माध्यस्थ्यम् आचरति स्म किन्तु न्यायिकप्रक्रियायाः सङ्केतो न लभ्यते ।

शतपथब्राह्मणे (३।४) प्रश्निनन्, अभिप्रश्निनन्, प्रश्नविवाक् इत्येतेषां सङ्केतो लभ्यते किन्तु वादिप्रभृतिविषयकनियमानां व्याख्या न दृश्यते । सम्भाव्यते च यत्तदानीं मध्यस्थैरेव विवादेषु निर्णीयते स्म । किञ्च, तदानीं न्यायिकप्रक्रियायाः प्रशासनस्य च सूत्रपातो जातः । दण्डविषये तत्कार्यान्वयनविषये च सहायकानां नियुक्तेरुल्लेखस्तस्माद्युगाद् आरभ्यते[4] । उत्तरवैदिककाले राज्ञि न्यायाधीशतां याति न्यायिकप्रक्रियायाः[5] । धर्मसूत्रयुगादुत्तरं व्यवहाररूपेण न्यायिकप्रक्रियाया विवरणं लभ्यते । व्यवहारो वेदैः सम्बद्धः । तस्य सम्बन्धो लौकिकविधिरस्ति ।

**परिभाषा**

व्यवहारशब्दः कार्यानुष्ठानम्, न्यायिकप्रशासनम्, विधीयप्रक्रिया, विवादः, विधीयविवादः, व्यवहारप्रवेशस्य विधीयक्षमता, विवादनिर्णयसाधनम् इत्येतेषु अर्थेषु प्रयुक्तो दृश्यते[6] । शिलालेखेष्वपि एषु अर्थेषु अयं शब्दः प्रयुक्तोऽस्ति । तत्र व्यवहारो न्यायालये विवादनिर्णयप्रक्रियारूपेऽर्थे प्रयुक्तोऽस्ति । अशोकस्य स्तम्भलेखे वियोहाल समता (व्यवहारसमतायाः) उल्लेखो लभ्यते । महावग्गे व्यवहारमन्त्रिणः

---

1. वेदिक इण्डेक्स, खं. १, पृ. ३९१-३९२।
2. ऋग्वेद. १०।९७।१२; अथर्व. ४।९४; वाज. सं. १२।८६।
3. वेदिक इण्डेक्स, खं. १पृ. ३९४।
4. शत. ब्रा. ५।४।४७; कठकसं. २७।४।
5. गौ. ध. सू. २८।४८।४९; बौ. ध. १।१।१।७-१६; व. ध. सू. ११।५-७।२०।
6. **व्यवहारः स्मृतो यस्य स वेद विषयात्मकः**—महा. १२।१२१।५३; उद्योग. ३७।३०; 268 शां. ६९।२८; मनु. ७।१; वसि. १६।१; याज्ञ. २।१; **दशमे व्यवहारे राद्धि**-आप. ध. सू. २।७।१६-१७; मृच्छकटिक. ९।१०; गौ. ध-सू. २।१९

(वोहारमहावच्च) एकः स्वतन्त्रो विभागो निर्दिष्टः[1] । याज्ञवल्क्यस्मृतावपि विवाद-व्यवहारयोर्भेद उक्तः—चतुष्पादव्यवहारोऽयं विवादेषूपदर्शितः (२।८)। मध्ययुगे वरद-राजस्य व्यवहारनिर्णयः, चण्डेश्वरस्य विवादरत्नाकरः, जीमूतवाहनस्य व्यवहारमातृका, कमलाकरस्य विवादताण्डवम् इत्येतैर्ग्रन्थैर्विवादव्यवहारयोः पार्थक्यं कृतम् । तत्र कैश्चिदुभयोरभिन्नतैव प्रतिपादिता ।

कात्यायनेन विवादस्य द्वे व्याख्ये दर्शिते स्तः । एका व्याख्या व्यवहारपदीयां व्युत्पत्तिमाश्रित्य कृता, यत्र तत्प्रक्रियायाः प्रयोगो ज्ञायते । द्वितीयपरिभाषानुसारं विवादपरो व्यवहारशब्दो ज्ञायते । व्यवहारशब्दे वि, अव, हार इति त्रीणि पदानि वर्तन्ते । तत्र वेरर्थो विभिन्नता, अवस्यार्थः संशयः, हार इत्यस्य च निराकरणमित्यर्थः। इत्थं नानाविधानां विवादानां संशयानां वा निराकरणमित्येषोऽर्थो व्यवहारपदीय-व्युत्पत्त्या लभ्यते[2] । विवादविभिन्नतादिविषयिकां सूचीं संयोज्य स्मृतिकारैः व्याख्या-कारैश्च व्यवहारपदस्य परिभाषेत्त्थं विस्तारिता, यत्तत्र सभास्थलम्, वादी, प्रतिवादी, निर्णायकः, निर्णेयः, निर्णयः, न्यायप्रमाणमित्यादयो विषयाः समावेशिताः[3] ।

इत्त्थं व्यवहारेण विवादेन सह न्यायिकप्रक्रिया अभूत् सङ्ग्रहीता। परिभाषाया-मेषोंऽश उपस्थापितः । अत्र न्यायप्रतिष्ठायाः शैघ्र्यमस्ति मूलभूतमुद्देश्यम् । एतेन सहैव इदमप्यवधेयं यन्न्यायिकप्रक्रियाद्वारा सत्यप्राप्तेरनेकाः सीमाः सन्ति । इदं लिखितप्रमाणेषु शास्त्रादिषु च निर्भरम् । फलतोऽत्र तत्कालं सत्यप्राप्तिर्न संभवति । तत्र आवेदनादारभ्य साक्षिपर्यन्ता अंशाः सन्ति समाविष्टाः । मिताक्षरापरिभाषोक्तं विषयं सूचयति । तस्यैव सारांशः "एकस्मिन्नेव विषये द्वयोः पक्षयोर्निर्णयस्तदर्थं प्रयुक्ता प्रक्रिया चैव व्यवहारः[4] । अत्राध्याये विधीयप्रक्रियायां न्यायालयीयविधिविवादे च व्यवहारशब्दः प्रयुक्तोऽस्ति । अत्र विशेषविश्लेषणमावश्यम् ।

**व्यवहारः**

व्यवहरन्त्यनेनेति व्यवहारः। तस्य राज्ञः प्रजापालनेऽधिकृतस्य वेदादीनि व्यवहार-साधनानि । यथा वेदेऽभिहितं तथा व्यवहरेत् । व्यवहारो लोकमर्यादास्थापनम्—तस्य च व्यवहारो वेदो शास्त्राण्यङ्गान्युपवेदाः पुराणम् (गौ. २।१९) । वादिप्रतिवादि-

---

1. Kharavela's Hāthigumpha Inscription, E. I. Vol. xx. p. 79; Delhi Topra Pillar Edict No. 1 of Aśoka Corpus I, I, Vol. I. p. 123; महावग्ग १।४०।३; ४०।3; चुल्लवग्ग ६।४।९।
2. गौ. ध. सू. १०।४८; ११।१९।
3. स्वधनस्य यथा प्राप्तिः परधनस्य वर्जनम् । न्यायेन यत्र क्रियते व्यवहारः स उच्यते (स्मृ. चं. २पृ. १)। प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे । साध्यमूलस्तु यो वादो व्यवहारः उच्यते (अपरार्कः पृ. ५९६; स्मृ चं. २पृ. १; परा. मा. ३पृ. ५-७; व्य. प्र. पृ. ३-४।
4. मिता. यज्ञ. २।१।

नोरितरेतराशनोधाराय वृत्तिरुच्यते। अथवा ऋणादानादयः पदार्था एव विप्रतिपत्ति-विषयाः सन्तो विचारगोचरसमर्थतया कर्त्तव्या। एवंविधविपक्षमहीक्षिद्भ्यः प्रजानां रक्षणादवाप्तवृत्तिस्तासामेवेतरेतरविवादजपीडापरिहारार्थम्, ऋणादानाद्यष्टादशविवादे विरुद्धार्थिप्रत्यर्थिवाक्यजनितसन्देहहारी विचार एव व्यवहारः। तदाह **कात्यायनः**

**वि नानार्थेऽव सन्देहे हरणं हार उच्यते।**
**नानासन्देहहरणाद् व्यवहार इति स्मृतः॥**
**(व्य. मा. पृ. २८३)**

अन्यविरोधेन स्वात्मसम्बन्धितया कथनं व्यवहारः। विप्रतिपद्यमाननरान्तरगता-ज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः। वादिप्रतिवादिकर्त्तृकः सम्भवद्भोगसाक्षि-प्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापारो वा सः। सम्प्रतिप्रत्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने। ऋणादानादिनानाविवादपदविषयः निराक्रियतेऽनेनेति नानासंशयहारी विचारः व्यवहार इत्युक्तः। प्रयत्नसाध्ये गृह-क्षेत्रादिविषये विच्छिन्ने स्वेच्छया भोक्तुमशक्ये सति न्यायविस्तरे न्यायः प्रमाणं विस्तीर्यते प्रपञ्चयते निर्णीयते यस्मिंस्तस्मिन् धर्माख्ये धर्माधिकरणमिति प्रसिद्धे सभालक्षणे स्थले साध्यमूलको यो गृहक्षेत्रादिविषयो वादः स व्यवहार इत्यपि व्याख्यातः तथा च **हारीतः**

**स्वधनस्य यथा प्राप्तिः परधनस्य वर्जनम्।**
**न्यायेन यत्र क्रियते व्यवहारः स उच्यते॥**
**(स्मृ. चं. २पृ. १)**

**व्यवहारपदम्**

प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयः। व्यवहारपदान्यष्टादश गणयति–

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**संभूय च समुत्थानं दत्तस्यानपकर्म च॥**
**वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।**
**क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥**
**सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।**
**स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च॥**
**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।**
**पदान्यष्टादशैतानि व्यवहारस्थिताविह॥**
**(मनु. ८।४-७)**

एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि–

**एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं भवेत् ।**
**क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥ ( नारद. १।२० )**

भूयिष्ठग्रहणम् (मनु. ८।८) प्राधान्यख्यापनार्थम् । अन्येऽपि व्यवहारहेतवः सन्ति यथा निवसनार्थं त्वया मे वेश्म दत्तं तत्र किमित्यर्वाक्संवत्सरादन्यस्मै ददासीति न चेदं दत्तानपकर्म न ह्यत्र स्वत्वनिवृत्तिरस्ति भोगानुज्ञामात्रं वसतः (मेधातिथिः) । भूयिष्ठशब्देनान्यान्यपि विवादपदानि सन्तीति सूचयति । तानि च प्रकीर्णकशब्देन नारदाद्युक्तानि, इति कुल्लूकः । विभिन्नस्मृतौ सङ्ख्याविषये मतभेदोऽप्यस्ति ।

ऋणादानम् ऋणस्य न दानमदानम्, निक्षेपः स्वधनस्यान्यस्मिन्नर्पणम्, अस्वामिना कृतो विक्रयः, सम्भूयसमुत्थानमनेकैर्मिलित्वा यत्र धनार्थं वाणिज्याद्युद्यमः क्रियते । दत्तस्यानपकर्म अप्रत्यर्पणम्, संविदः कृतव्यवस्थाया अतिक्रमः, अनुशयः क्रयविक्रये च कृते पश्चात्तापाद्विप्रतिपत्तिः, स्वामिपशुपालनयोर्विवादः । ग्रामसीमाविप्रतिपत्तिः, वाक्पारुष्यमाक्रोशनादि, दण्डपारुष्यं ताडनादि, स्तेयं निह्नवेन धनग्रहणम्, साहसं प्रसह्य धनम् तत्र कात्यायनः

**प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।**
**साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥ ( २५ )**

लिखितं साक्षिणश्च तस्य न्यायाख्यस्य व्यवहारस्याङ्गम्, याभ्यां परिच्छिद्यते व्यवहारः । तावत्र द्वौ विधी सम्प्रवर्तितौ लिखितं साक्षिणश्च । तावुत्तरत्र विशेष्येते, अतः सन्दिग्धार्थविशुद्ध्यर्थम् । नार्थः सन्दिह्यते, तद्विषये प्रमाणानुपलब्धौ पुरुषस्य संशयप्रत्यय उत्पद्यते, तन्निमित्तत्वादर्थः सन्दिग्ध उच्यते । स एव प्रमाणेन निर्णय-प्रत्यय उत्पन्ने विशुद्ध उच्यते । स व्यवहारो द्विलक्षणः सोत्तरश्चानुत्तरश्च । सोत्तरस्य विशेष उच्यते । विवादे सोत्तरपर्णे । विरुद्धो वादः विवादः, अन्योऽन्यथा ब्रवीति अन्यश्चान्यथा । प्रधानव्यवहाराणां प्रतिज्ञोक्ता । स च चतुष्पदादित्युक्तम् । तत्र तेषु चतुर्षु सत्ये स्थितो धर्मः । तथाभूताख्याने उभयोरपि प्रतिपत्तौ साक्ष्यादिभिः प्रयोजनाभावाद् धर्मव्यवहारः । व्यवहारस्तु साक्षिष्विति । चरित्रं पुस्तकरणम् । लेख्येन निर्णीयते तच्चरित्रम् । पारम्पर्यविच्छिन्नस्मृतिदेशाधिष्ठानगणधर्मः सत्पुरुषैः परिगृहीतः, तस्मिन् स्थित इति सम्बन्धः। स तथैव द्रष्टव्यः । राजाज्ञायां तु शासनम्।

चतुः साधनत्वं चतुर्हितत्वं चोच्यते । सामदानभेददण्डैः साध्यत इति चतुःसाधनः। चतुर्णामाश्रमाणां चतुर्णां वर्णानामपि रक्षणात् स चतुर्हितः । कर्त्तृसाक्षिसभ्यनृपाणां पादशो व्यापनादसम्यग्दर्शननिमित्तस्याधर्मस्य सम्यग्दर्शननिमित्तस्य धर्मस्य च व्याप्तेश्चतुर्व्यापीत्युच्यते । धर्मादीनां चतुर्णां करणाच्चतुष्कारी । कामादिभ्यस्त्रिभ्यः

प्रवर्त्तनात् त्रियोनिः । यस्मादेतत् त्रयमपि निह्नवाभियोगवाग्दण्डपारुष्यादिद्वारेण विवादस्य कारणम् ।

व्यवहारानुवृत्तौ नारदः

सोत्तरो नोत्तरश्चैव स विज्ञेयो द्विलक्षणः ।
सोत्तरोऽभ्यधिको यत्र विलेखापूर्वकः पणः ॥
स चतुष्पाच्चतुः स्थानश्चतुः साधन एव सः ।
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्तितः ॥
त्रियोनिर्द्व्यभियोगश्च द्विर्दारो द्विगतिस्तथा ॥
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ।
चतुर्णां करणादेषां चतुःकारी प्रकीर्तितः ।
कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्त्तते ॥
त्रियोनिः कीर्त्यते तेन त्रयमेतद्द्विवादकृत् ॥
द्व्यभियोगश्च विज्ञेयः शङ्कातत्त्वाभियोगतः ।
शङ्का सतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् ॥

(नारद. १४-२२)

द्विपदो व्यवहारः स्याद्धनहिंसासमुद्भवः। द्विसप्तकोऽर्थमूलस्तु हिंसामूलश्चतुर्विधः। ...एवमर्थसमुत्थानि पदानि तु चतुर्दश । पुनरेव प्रभिन्नानि क्रिया भेदादनेकधा । पारुष्ये द्वे साहसञ्च परस्त्रीसङ्ग्रहस्तथा । हिंसोद्भवपदान्येवं चत्वार्याह बृहस्पतिः (स्मृ. चं. २पृ. ९)। तथा च कात्यायनः

साध्यं वादस्य मूलं स्याद् वादिना यन्निवेदितम् ।
देया प्रदानं हिंसा चेत्युत्थानद्वयमुच्यते ॥

(स्मृ. चं. २ पृ. १३)

कौटल्येन व्यवहारस्य विषयः विवादपदेन कीर्तितः[1] । 'व्यवहारपदम्' इत्यस्य एषोऽर्थः यद्विवादस्य विषयः[2] । ईदृशानां विवादानां न्यायालये उपस्थापनम् आवश्यकम् । मनुना पदम् इत्यस्य 'स्थानम्' इत्यर्थः उक्तः । याज्ञवल्क्यमतानुसारं स्मृतेः आचारस्य परम्परादीनां च प्रतिकूलं कस्यचिच्क्षतिः क्रियेत स च राज्ञे निवेदयेत् तदा एष विषयः व्यवहारपदम् इत्युच्यते[3] । इत्थं न्यायालये उपस्थाप्य-

---

1. कौ. ३।१६, ४।७ ।
2. याज्ञ. २।६ अत्र मिताक्षरा अपरार्कश्च् ।
3. स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः ।
   आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ २।५ ॥
   प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारस्तस्य पदं विषयः । स च द्विविधः– शङ्काभियोगगतस्तत्त्वाभियोगश्चेति । यथाहनारदः–अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगश्चेति ।

मानानां व्यवहाराणां विषयाः मुख्यतः अष्टादशधा परिगणिताः । इदमेव परिगणनम् आश्रित्य प्रधानानि गौणानि च परिगणनानि विकासमायान्ति । अत्र केचनविषयाः अपरिगणिताः सन्ति । परिगणनेषु वैषम्यमपि दृश्यते[1] ।

मनुमतानुसारम् ऋणादानम्, निक्षेपः, अस्वामिविक्रयः, सम्भूयसमुत्थानम्, दत्त-स्यानापकर्म, वेतनादानम्, संविदव्यतिक्रमः, क्रयविक्रयानुशयः, स्वामिपालविवादः, सीमाविवादः, वाक्पारुष्यम्, दण्डपारुष्यम्, स्तेयम्, साहसम्, स्त्रीसंग्रहणम्, स्त्रीपुंधर्मः, विभागः, द्यूतसमाह्वय एते अष्टादश व्यवहारस्य विषयाः सन्ति । याज्ञवल्क्यः स्त्रीपुंसयोः विवादम् आचार इति संगृह्णाति । इमं व्यवहारसीमातः बहिर्भूतं मन्यते। तेन विंशतिर्विषयाः परिगणिताः । क्रयविक्रयानुशयस्य भेदद्वयं प्रकल्प्य प्रकीर्णकम् अभ्युपेत्याशुश्रूषा चेति परिगणयति । नारदेन स्वामिपालविवादस्य, स्तेयस्य, स्त्रीसंग्रहणस्य च पञ्चदशस्वेव अन्तर्भावं मत्वां पञ्चदशविषयाः उट्टङ्किताः[2] । बृहस्पतिना प्रकीर्णकमादाय एकोनविंशतिविषयाः प्रतिपादिताः[3] । स्तेयस्थाने प्रकीर्णकं निवेश्य कौटल्येनापि षोडशविषयाः स्वीकृताः ।

प्रस्तुतानां परिगणनानां मूलस्य आरम्भः धर्मशास्त्रगत एव भवति । गौतमेन वाक्पारुष्यदण्डपारुष्ये उल्लिखिते[4] । इत्थं सङ्ग्रहणम्, स्तेयम्, स्वामिपालविवादः, ऋणादानम्, निधिः, दायविभाग इत्येषामपि उल्लेखो दृश्यते[5] । आपस्तम्बधर्म-सूत्रेऽपि यत्र तत्र व्यवहारविषयाणां सङ्केतो लभ्यते[6] । साहसम्, बलात्कारः, स्तेयम्, दायविभागः वाक्पारुष्यम् एतेविषयाः उल्लिखिताः । वसिष्ठेनापि दायविभागः उल्लिखितः[7] । एतेन सदैव प्रमाणविषयकचर्चां कुर्वता तेन द्वादशविधैः पुत्रैः सह ऋणादानस्य सम्बन्धः भवतीति विवेचितम् । बौधायनेन दायविभागशब्दः निर्दिष्टः[8]। स्पष्टं यत् मनुस्मृतेः पूर्वमेव व्यवहारपदविषयाणां सूत्रपातः जातः । याज्ञवल्क्येन व्यवहारस्य या परिभाषा दर्शिता तदनुसारं स्पष्टं यद् व्यवहारः राजसभायाम् उपस्थापनीयः "आवेदयति चेद्राज्ञे" । अत्र पक्षद्वयस्य उपस्थितिरपि आवश्यिका । किन्तु कमपि विवादं स्वयं राजा राजकर्मचारी वा न प्रस्तुयात् इति मनुना निर्दिष्टम्

---

**शङ्काऽसतां तु संसर्गात्तत्त्वं होढाभिदर्शनात् (१।२७) । तत्त्वाभियोगोऽपि द्विविधः –प्रतिषेधात्मको विध्यात्मकश्चेति ।**

1. P. V. Kane, Op. cit, Vol. III. P. 249.
2. नारद. १।१६-१९ ।
3. स्मृ. चं. (व्यव.) पृ. ७९ ।
4. गौ. ध. सू. १२।१ ।
5. बौ. ध. सू. १२।२-३; १२।१२-१३; १२।१६, २६-३३, ३९ ।
6. आप. ध. सू. १।९।२४; ८५।११-१२; १।१०।२५।१५-२०; २।१०।२८।१५-२०; २।१०।२६।१८; १।९।२५।४-११; २।६।१४; २।१०।२७।१४ ।
7. व. ध. सू. १७।४०; १३।१३-१५; १६।५१; १७।१२-३९ ।
8. बौ. ध. सू. २।२।८ ।

किन्तु राजा स्वप्रभावमहिम्ना अनुचितरीत्या कमपि निर्णयं सभया न कारयेत्[1]। गौतमस्य मतं यद्वादी प्रतिवादी वा स्वयं स्वपक्षम् उपस्थापयेत् । प्रकीर्णकव्यवहारः राजानम् आश्रयति[2] । अस्य सूची निर्दिष्टा अस्ति यत्र वैयक्तिकः सामाजिकाः धार्मिकाः समेऽपि पक्षाः समायान्ति । कौटल्येन व्यवहारपदं धर्मस्थीयस्य विषयः मन्यते ।

न्यायिकप्रशासने द्वौ मूलभूतौ सिद्धान्तौ कार्यान्वितौ भवतः, स्वप्रतिज्ञानां निर्वाहः कस्यापि अपीडनम् । अनयोरुल्लंघने विवादः आरभ्यते अतः बृहस्पतिना विवादः द्विविधः स्वीकृतम्–अर्थविषयकः क्षतिविषयकश्च । सरस्वतीविलासे दण्ड-व्यवस्थास्थापनावसरे यद्विवरणं प्रस्तुतं तत्र एवंविध एव विभागः दृश्यते[3] । मानवस्वभाववैभिन्यत्वात् परिगणनं कठिनमस्ति[4] । याज्ञवल्क्येनापि अर्थविवाद-व्याख्यानावसरे अर्थहिंसयोः भेदो व्यवस्थापितः । अर्थविवादः चतुर्दशविधः भवति । हिंसाविवादश्च चतुर्धा । इत्थम् अर्थमूलकविवादहिंसामूलकविवादयोः भेदो भवति स्फुटः । एते विवादा अष्टादशधा विभज्यन्ते[5] । परं प्रक्रियायां न कश्चित् मौलिको भेदः ।

---

1. न राजा वशित्वेन धनलोभेन वा पुनः ।
स्वयं कार्याणि कुर्वीत नराणामविवादिनाम् ॥ कात्यायनः ॥
( न वागमविवादिनाम् व्य. मा. पृ. २८५ ) । स्वयं नोत्पादयेत्कार्यं समर्थःपृथिवीपतिः । नाददीत तथोत्कोचं दत्तं कार्यार्थिना नृपः ॥ मानसोल्लासः २।२०।१२७४ ।

2. प्रकीर्णकं पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।
राज्ञामाज्ञाप्रतीज्ञातस्तत्कर्मकरणं तथा ॥
पुरं प्रदानं संभेदः प्रकृतीनां तथैव च ।
पाखण्डिनैगमश्रेणीगणधर्मविपर्ययः ॥
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च कोपश्चाश्रमिणामपि ॥
वर्णसंकरदोषश्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकम् ॥ ( नारद. प्रकी. १-४ )

3. तथा च गौतमसूत्रम् । द्विरुत्थानतो द्विगतिरिति । व्यवहार इत्यनुषज्यते तत्र निबन्धकारेणोक्तम्–ऋणादानादिविभागान्तानां देयनिबन्धनत्वं साहसादिपञ्चकस्य दण्डनिबन्धनत्वमिति द्विरुत्थानतेत्यर्थ इति ( स. वि. पृ. ५१ ) ।

4. भूयिष्ठग्रहणं प्राधान्यख्यापनार्थम् । अन्येऽपि व्यवहारहेतवः सन्ति यथा निवसनार्थं त्वया मे वेश्म दत्तं तत्र किमित्यर्वाक् संवत्सरादन्यस्मै ददातीति न चेदं दत्तानपकर्म न ह्यत्र स्वत्वनिवृत्तिरस्ति भोगानुज्ञामात्रं वसतः ( मनुः ८।८ मेधातिथिः ) । भूयिष्ठशब्देनान्यान्यपि विवादपदानि सन्तीति सूचयन्ति तानि च प्रकीर्णकशब्देन नारदाद्युक्तानीति कुल्लूकभट्टः ।

5. द्विपदो व्यवहारः स्याद्धनहिंसासमुद्भवः । द्विसप्तकोऽर्थमूलस्तु हिंसामूलस्तु चतुर्विधः ।... एवमर्थसमुत्थानि पदानि तु चतुर्दश । पुनरेव प्रभिन्नानि क्रियाभेदादनेकधा । पारुष्ये द्वे साहसञ्च परस्त्रीसंग्रहस्तथा, हिंसोद्भवपदान्येवं चत्वार्याह बृहस्पतिः, स्मृ. च. २पृ. ९; व्य. मा. २७७। साध्यं वादस्य मूलं स्याद् वादिना यन्निवेदितम् । देयाप्रदानं हिंसा चेत्युत्थानद्वयमुच्यते॥ कात्या. ३०॥

**व्यवहाराङ्गानि**

नारदमतानुसारं व्यवहारस्य चत्वारः पादाः, चत्वारि साधनानि, चत्वारि च स्थानानि। स चतुर्णां हितं करोति चतुर्षु च व्याप्तो भवति। तस्य चत्वारि फलानि भवन्ति। धर्मः, व्यवहारः, चरित्रम्, राजशासनञ्चेति चत्वारः अस्य पादाः। चतुर्णां वर्णानाम् आश्रमाणाञ्च हितं करोति अतः स चतुर्हितः कथ्यते। कर्त्रा, साक्षिणा, सभ्येन, राज्ञा च सम्बद्धतया स "चतुर्व्यापी" कथितः। धर्मस्य, अर्थस्य, यशसः, लोकस्य च उपकारम् आचरति अतः एष चतुष्कारी कथ्यते। सामदानभेददण्डाः अस्य चत्वारि साधनानि। एतेषां व्यवहाराङ्गानां पर्यालोचनेन व्यक्त्या समाजेन राज्ञा च सह व्यवहारस्य सम्बन्धः प्रकाशम् आयाति। तस्य कार्यान्वयनार्थम् उपायाः प्रयोक्तुं शक्यन्ते। उपायप्रयोगे निर्णायकः स्वविवेकमाश्रयितुं शक्नोति। यदा पक्षद्वयतः अपि सत्यप्राप्तेः मार्गः भवत्यवरुद्धः तदा निर्णायकः उपायान् प्रयुङ्क्ते।

अपराधविषये, पदविषये, छलविषये च आवेदनं विनापि राजा स्वयं विवादं प्रस्तुयात्[1]। दश अपराधाः द्वाविंशतिः पदानि पञ्चाशत् च छलानि सन्ति। राजा सूचकद्वारा स्तोभकद्वारा वा ईदृशान् विषयान् परिजानीयात्[2]। अपराधपदच्छलानां परिभाषाः, सीमाः, परिगणनानि च यदा प्रस्तुतानि तत्पर्यालोचनेन्[3] स्पष्टं प्रतीयते

1. छलानि चापराधांश्च पदानि नृपतेस्तथा।
स्वयमेतानि गृह्णीयान् नृपतिस्त्वावेदकैर्विना॥ कात्या., स्मृ. चं. २ पृ.।
2. शास्त्रेण निन्दितं त्वर्थमुख्यो राज्ञा प्रचोदितः।
आवेदयति यत्पूर्वं स्तोभकः स उदाहृतः॥
नृपेणैव नियुक्तो यः परदोषमवेक्षितुम्।
नृपस्य सूचयेज्ज्ञात्वा सूचकः स उदाहृतः॥ कात्या., स्मृ. चं. ३पृ. २८।
3. आज्ञालङ्घनकर्त्तारः स्त्रीवधो वर्णसङ्करः।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना॥
वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च।
गर्भस्य पातनञ्चैवेत्यपराधा दशैव तु॥ नारदः, स्मृ. चं. २पृ. २८, परा. मा. ३ पृ. ४४; स. वि. पृ. ७३।
उत्कर्षी सस्यघाती चाप्यग्निदश्च तथैव च।
विध्वंसकः कुमार्याश्च निधानस्योपगोपकः॥
सेतुकण्टकभेत्ता च क्षेत्रसञ्चारकस्तथा।
आरामच्छेदकश्चैव गारदश्च तथैव च॥
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्यैव च मोचकः॥
भोगदण्डौ च गृह्णाति दानमुत्सकमेव च।
पटहाघोषणाच्छादी द्रव्यमस्वामिकञ्च यत्॥
राजावलीढं द्रव्यं यद्यच्चैवाङ्गविनाशनम्।
द्वाविंशतिं पदान्याहुर्नृपज्ञेयानि पण्डिताः॥ स्मृ. च. २पृ. २८; व्य. प्र. ३७; परा. मा. ३पृ. ४५; स. वि. ७३।

यन्महद्व्यापकं राज्यस्य उत्तरदायित्वम् आसीत् । अर्थदण्डसम्बद्धविषयाः अपराधेन संगृह्यन्ते । अनेकेषु परिगणनेषु वर्णसाङ्कर्यम् उल्लिखितं दृश्यते । तत् प्रकीर्णकेऽपि परिगणितमस्ति । स्पष्टं यद् राज्यं यया कयापि रीत्या सामाजिकं वर्णसाङ्कर्यं समापयितुम् ईहते । सामाजिकविधिम् आश्रित्य समाजसंरक्षणम् अस्ति राज्यस्य अद्वितीयः आधारः । अस्मिन्नर्थे अपराधशब्दः प्रयोगविषयेऽनेकानि ऐतिहासिकानि प्रमाणान्यपि लभ्यन्ते[1] ।

परिगणनप्रक्रियावलोकनेन स्पष्टी भवति यत्तदानीम् अर्थं हिंसाञ्च आश्रित्य तेषां विभागः व्यवस्थापित आसीत् । एवं करणे समाजशक्तिः प्रायुज्यत । व्यवहारस्य एतेऽंशाः आधुनिकविधिशास्त्ररीत्या सम्यग्द्रष्टुं शक्यन्ते । शुक्रनीतेः कानिचिद् वैशिष्ट्यानि पर्यालोच्य संस्कृतज्ञानशून्याः परन्तु तथाकथिताः भारतीयाः केचन विद्वांसः मन्यन्ते यद् एकोनविंशतितमशताब्द्यां शुक्रनीतेः रचना अभूदिति सभाव्यते यत् प्रक्रियायाः विभिन्नान् पक्षान् (यान् अत्र वयं प्रस्तोष्यामः) दृष्ट्वा ते कथयिष्यन्ति यद् सर्वासामेव स्मृतीनां रचनाः १८३३ ईस्वीये वर्षे इण्डियन पेनल कोड इत्यतः पश्चाज्जाता इति । परन्तु एवंविधैः ब्रिटिशमानसपुत्रैः इदं ज्ञात्वा दविष्यते यद् ब्रिटेनदेशस्य उत्पत्तेः पूर्वत एव भारतं "न व्यक्त्या अपितु विधिना शासितमासीत्" । 'व्यक्तेः शासनं' तस्य कृते दुर्भाग्यपूर्णं क्षेपकमात्रमासीत् । अस्मिन्नंशे भारतीयानां सर्वेषां सम्प्रदायानां किम्बहुना बौद्धानामपि ऐक्यमत्यम् अस्ति[2] ।

बृहस्पतेः नारदस्य च मतानुसारं प्रत्येकं प्रक्रियायाः चत्वारः पादाः अंशा वा भवन्ति–पूर्वः, उत्तरः, क्रिया, निर्णयश्च । क्वचित् क्वचित् क्रिया साधनं कथिताः निर्णयश्च 'प्रत्यकलित' इति । सामण्ड अनेन अस्याः प्रक्रियायाः पञ्चभेदाः उक्तः– आह्वानम्, विचारः, प्रमाणम्, निर्णयः, कार्यान्वयनञ्च[3] । विनोग्राडाफ मतानुसारं लोकविधिप्रक्रियाविषयके इतिहासेन व्यावहारिकजीवनस्य तर्काणां च नियमानां समन्वयः प्रचुरं प्रकाशम् आयाति । ये नियमाः विधिज्ञैः सन्ति प्रस्तुताः । लोकविधेः प्रक्रिया तर्कस्य वास्तविकतां प्रति विकासमायाति । तत्र महत्त्वपूर्णमिदमस्ति यत्पक्षद्वयमपि वास्तवं तथ्यं प्रति आनीयते । ईदृशानां तर्काणां प्रयोगो वार्यते यैः न्यायाधीशः सभ्याश्च भ्रान्ता भवेयुः[4] । वादिना कृतानामाक्षेपाणां प्रतिवादिना

---

1. E. I. Vol. XVII. p. 310, Vol. I p. 05 at p. 88, XVII p. 310 at p. 321. Gupta Inscriptions, No. 39, p. 179 of 766-767. A. D. Vol. VII. p. 26 p. 40 of Śake 852, Vol III. p. 53 at p. 56.
2. K. P. Jaiswal, Hindu Polity, Vol. II. p. 156-157.
   Hiouen Thsang's account in Beal's B. R. W. Vol. I, pp. 84-85.
   Bombay Gazettear, Vol. 24. pp. 266-267.
3. Salmond, Jurisprudence, p. 650.
4. Vinogradoff, History of Jurisprudence, pp. 7-9.

दीयमानानि उत्तराणि चतुर्धा विभक्तानि सन्ति–परीक्षा, कारणम्, प्रत्यवस्कन्दनं वा, संप्रतिपत्तिः सत्यं वा, विषयपराङ्मुखता च । एतानि तत्त्वानि प्राचीन-भारतीयव्यवस्थाया आधारेषु उद्देश्येषु च द्रष्टुं शक्यन्ते । नारदेनैतानि इत्थं चतुर्धा विभज्यन्ते–मिथ्या, सम्प्रतिपत्तिः, प्रत्यवस्कन्दः, प्राङ्न्यायसाध्यञ्च[1] ।

**अनादेयासाध्यवादाः**

दुष्टानां नियमने यो नृपतिः साधूनामभयं ददाति स एव पूज्यः । सत्रं गवाय-नादिक्रतुविशेषः यद्यस्मात् सत्रमिव सत्रं तदभयदानाच्चौरनिग्रहरूपाभयदक्षिणं सर्वदैव तस्य वृद्धिमेति । अन्यद्धि नियतकालीनं नियतदक्षिणञ्च, एतत्सर्वकालीनम-भयदक्षिणञ्चेति । प्रजा रक्षतो राज्ञः सर्वस्य भृत्तिदातुर्वणिगादेर्भृत्यदातुश्च श्रोत्रियादेः सकाशाद्धर्मषड्भागो भवति । अरक्षतश्चाधर्मादपि लोकेन कृतात्षड्भागो भवति । भूतानि सर्वाणि स्थावरजङ्गमादीनि यथाशास्त्रं दण्डप्रणयनरूपेण धर्मेण रक्षन्, वध्यांश्च स्तेनादींस्ताडयन्, प्रत्यहं लक्षगोदक्षिणैर्यज्ञैर्यजते । तज्जन्यं पुण्यं प्राप्नोति[2] । स्पष्टं यद् वाददर्शने राज्ञो दायित्वं महत्त्वपूर्णम् ।

तत्र व्यवहारायायोग्यास्तेषां कृते विचारोऽपेक्ष्यते । मत्तोन्मत्तार्तव्यसनिबाल-भीतादियोजितोऽसम्बद्धकृतश्चैव व्यवहारो न सिद्धयति[3] । अत्र **बृहस्पतिः**

**राज्ञा विवर्जितो यस्तु यश्च पौरविरोधकृत् ।**
**राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥**
**अन्यायेन पुरग्राममहाजनविरोधकः ।**
**अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥**
**अप्रसिद्धं सदोषं च निरर्थं निष्प्रयोजनम् ।**
**असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥**
**न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।**
**अन्यार्थः स्वार्थहीनश्च सदोषः परिकीर्तितः ॥**
**अल्पापराधः स्वल्पार्थो निरर्थक इति स्मृतः ।**
**कार्यवाधाहीनस्तु विज्ञेयो निष्प्रयोजनः ॥**
**कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।**
**वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥**
**ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः ।**
**असंभाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः ॥**

---

1. याज्ञ २।६ मिता; नारद. २।२ ।
2. मनु. ८।३०३-३०४।
3. याज्ञ. २।३२।

यस्मिन्निवोदिते पक्षे प्राड्विवाकेऽथ राजनि ।
पुरे राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते ॥
(२।४३, ३२; ८।१३)

कात्यायनः (१३६-१३७)

पुरराष्ट्रविरुद्धश्च यश्च राजविवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति ॥
बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्वबुभुत्सया ॥

बृहस्पतिः कात्यायनश्च, पुनर्यमः

न्यायं वा नेच्छते कर्त्तुमन्यायं वा करोति यः ।
न लेखयति यस्त्वेनं तस्य पक्षो न सिद्ध्यति ॥
विरुद्धाश्चाविरुद्धाश्च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरस्त्यजेत् ॥
(बृ. २।४४-४५; का. १।१३९)

एकस्य बहुभिः सार्धं स्त्रीभिः प्रेष्यकरैस्तथा ।
अनादेयो भवेद् वादो धर्मविद्भिरुदाहृतः ।
(बृह. १।१३)

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न विद्यते ॥
एवं परीक्षितं सभ्यैः पूर्वपक्षं तु लेखयेत् ।
अप्रसिद्धं पुरदृष्टं विवादं न विचारयेत् ॥
(बृह. १।१२४-१२५)

ईर्ष्यासूयासमुत्थे तु संरभ्ये कामहेतुके ।
दम्पती विवदेयतां स्वज्ञातिषु न राजनि ॥
(नारद. १२।२९)

स्पष्टं यत्केचन वैयक्तिकाः कौटुम्बिकाः सामाजिकाः राष्ट्रियाश्च वादा आसन् यत्सीमान्तर्गतेषु विवादेषु न विचार्यते स्म[1] । प्रजापतिमतानुसारं पतितस्य अस्वस्थस्य अन्यप्रेरितस्य चावेदने न विचारणीयम्[2] । याज्ञवल्क्यानुसारं मत्तस्य, उन्मत्तस्यार्त्तस्य, व्यसनिनः, बालकस्य, भयप्रेरितस्य चापि पक्षो भवति अविचारणीयः । नारदमता-

---

1. बृह. १।१३५ ।
2. पतितादिकृतश्चैव यश्च न प्रकृतिं गतः ।
अस्वतन्त्रकृतश्चैव व्यवहारो न सिद्ध्यति ॥ प्रजापतिः ॥

नुसारं पितापुत्रयोर्गुरुशिष्योर्दम्पत्योः स्वामिसेवकयोश्च वादो व्यवहारविषयतां न भजति। कात्यायनः परस्पविरोधपूर्णमावेदनपत्रमविचारणीयं मन्यते। एकस्य बहुभिः सञ्जायमानो विवादः स्त्रीविषयः भृत्यविषयकश्च विवादो वा नारदमतानुसारं विचारं नार्हति। बृहस्पतिः राजविवर्जितस्य, पौरविरोधिनः, राष्ट्रसमयप्रकृतिजनपदग्राम-महाजनानाञ्च विरोधिनो विवादं विचारानर्हं मन्यते। कात्यायनः निरर्थकोऽ-प्रसिद्धोऽसाध्यो विरुद्धो वा पक्षो राज्ञा विसर्जनीय इति विधत्ते।

अनादेयवादेन सह ते विषयाः असाध्यवादे सङ्गृहीता सन्ति येऽप्रसिद्धा अपूर्णाश्च, व्यर्थयन्ति च न्यायालस्यामूल्यं समयम्। वस्तुतः न किमपि तेषां महत्त्वम्। इत्थमनावश्यकानां व्यवहाराणां दूरीकरणे महत्प्रयतितमस्ति। एतेन सह इदमप्यासीत् यदसत्पक्षप्रस्तोता दण्ड्यते स्म। अत्रेदमवधेयं यदनादेयवादस्यैषा व्याख्या कदापि नासीद् यत्सम्बद्धव्यक्तीनां विधीया अधिकारा एव नासन्निति। अस्यैष एव हेतुरासीत् यत्समया सामाजिकानां पारिवारिकाणां वादानां दूरे स्थेयम्। परार्थवादिनः समापने पूर्णतया प्रयतितमस्ति। एवंविधा जनाः दण्डनीया मताः। इमां स्थितिं विशदयन् टीकाकारः असहायः लिखति—"अनेक पुरुषाः कामक्रोधलोभ-ग्रस्ताः परकीयार्थ एव सम्बद्ध्यमाना अनियुक्ता अपि धनिकत्वं कृत्वा परान् विद्वेषयन्ति तन्निवारणार्थं व्यवस्था।

**देशाचारादिः**

देशजातिकुलधर्माश्चाम्नायैः अविरुद्धाः प्रमाणम्। कर्षकवणिक्पशुपालकुसीदि-कारवः स्वे स्वे वर्गे। तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्था[1]। देशधर्मः—यथा करविभागादिः प्रसिद्धो यो यत्र स तत्रैव प्रमाणम्। जातिधर्मः—यथा आभीराणां दन्तरञ्जनाभावः। कुलधर्मः—यथा दध्यमथनादिः। यथा जातिर्नित्या एवं देशधर्मा अपि शास्त्राविरुद्धा नित्याः। ते नित्यवदनुष्ठेया दृष्टार्था गोप्रचारोदकक्षरणादयः। वाक्याभावे तु सर्वेषां देशदृष्टेन तन्नयेत्[2]। गोत्रस्थितिषु धर्मतः या येषां क्रमायातापि, तं कुलधर्मं प्राहुः, तं तथैव पालयेत्[3]।

यस्य देशस्य यो धर्मः सार्वकालिकः प्रवृत्तः, श्रुतिस्मृत्यविरोधेन स देशधर्म उच्यते। देशधर्मास्तथैव पालनीया अन्यथा प्रजाः प्रक्षुभ्यते—जनापरक्तिर्भवति बलं कोशश्च नश्यति[4]। तद्यथा—

---

1. गौतम. ११।२२-२४; मनु. ८।४१-४३,४६।
2. कात्या. ५५-४५।
3. कात्या. ८५।
4. बृह. १।१२६-१२७।

शास्त्रवद्यत्नतो रक्ष्या सन्दिग्धौ साधनं तु सा ।
तां दृष्ट्वा निर्णयं कुर्यात्प्राङ्निविष्टव्यवस्थया ॥ ( बृ. १।१३२ )
देशस्यानुमतेनैव व्यवस्था या निरूपिता ।
.... ..... .....
तस्मात्तत्संप्रवर्तेत नान्यथैव प्रवर्तयेत् ।
प्रमाणं देशदृष्टं तु यदेवमिति निश्चितम् ॥
( कात्या. ४८ )

**आसेधः**

आसेधो राजाज्ञयाऽवरोधः । चतुर्विधः स्यादासेधः–स्थानासेधः, कालकृतः, प्रवासात्कर्मणस्तथा । चतुर्विधमप्यासिद्धो नातिक्रमेत् । अतिक्रमाद्दण्ड्यः । य आसेधमतिवर्तते स विनेयोऽन्यथाकुर्वन्नासेद्धा दण्डभाग्भवेत् । नदीसन्तारकान्तार-दुर्देशोपप्लवादिषु, आसिद्धस्तं परासेधमुत्क्रामन् नापराध्नुयात् । निवेष्टुकामः, रोगार्त्तः, यियक्षुः, व्यसने स्थितः, अभियुक्तः, अन्येन राजकार्योद्यतः, गवां प्रचारे गोपालाः, सस्याबन्धे कृषीवलाः, शिल्पिनः, आयुधीयाः, अप्राप्तव्यवहारः, दूतः, दानोन्मुखोव्रती, विषमस्थश्च नासेध्या, न चैनानाह्वयेन्नृपः[1] ।
नासेध्या इत्यनुवृत्तौ **कात्यायनः**

प्रतिष्ठाभिप्रयातश्च कृतकालश्च नान्तरा ।
उद्युक्तः कर्षकः सस्ये तोयस्यागमने तथा ॥
आरम्भात्संग्रहं यावत्कालं न विवादयेत् ।
अकल्यबालस्थविरविषमस्थक्रियाकुलान् ॥
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान्।
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वाययेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां नाज्ञातिप्रभुकाः स्त्रियः ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमर्हति ॥
ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥
कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैः शनैरानाययेन्नृपः ॥ ( १०९, ११०, ९७ )
आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥ ( १०० )

1. नारद. १।४५-४८; बृहस्पति. पृ. २२, २६, २३; १।१३६।

योगी, विवक्षुः, उन्मत्तः, धर्मार्थी, व्यसनी, व्रती, दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् । पुनश्च कात्यायनः

उत्पादयति यो हिंसा देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
आवेद्य तु नृपे कार्यमसन्दिग्धे प्रतिश्रुते ।
तदासेधं नियुञ्जीत यावदाह्वानदर्शनम् ॥
क्रियार्थिनावरुद्धः सन्नासेधं चेद्विलङ्घयेत् ।
स्वहस्तेनापि रोद्धव्यो यद्यसौ न विभावयेत् ॥
आसेधयोग्य आसिद्ध उत्क्रामन् दण्डमर्हति ।
आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थिति ॥( १०३-१०८, ११० )
ग्रहीतग्रहणो न्यायो न प्रवर्त्यो महीभुजा ।
तस्य वा तत्समर्प्यं स्यात्स्थाप्यं वापि परस्य तत् ॥ ( स्मृ. चं. २।५।३५ )

अर्थिना प्रत्यर्थिसकाशाच्चेद्विवादपदमानीयते तदा यावत्प्रत्यर्थिनि मध्यस्थे वा न समर्प्यते तावद्विवादो न द्रष्टव्यः । यदासौ अर्थिनो विवादनिमित्तां क्रियां लोके विभावयितुं न शक्नुयात्तदा स्वहस्तव्यापारेणापि उपरुन्ध्यात् । वृक्षपर्वतादिषु प्रदेशेषु अवसरेषु च आसिद्ध आसेधं व्यतिक्रमान्नृपस्यापराधप्राप्तो न भवति ।

तथा च–

निवेष्टुकामो रोगार्तो यियिक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्कालेनायुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहाराश्च दूतो दानोद्यतो व्रती ।
विषमस्थाश्च नासेध्याः न चैतानाह्वयेन्नृपः ॥
( नारद. १।५२-५४ )

योगी विवक्षुरुन्मत्तो धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥ व्यासः ॥

**प्रतिभूः**

अर्थिप्रत्यर्थिनोर्निर्णयकार्ये ससभ्येन सभापतिना प्रतिभूर्ग्राह्यः । निर्णयस्य च यत्कार्यं साधितधनदानं दण्डदानं च तस्मिन् समर्थः प्रतिभूः प्रतिभवति तत्कार्यं तद्वद्भवतीति प्रतिभूर्ग्राह्यः । तस्यासंभवेऽर्थिप्रत्यर्थिनो रक्षणे पुरुषा नियोक्तव्याः । तेभ्यश्च ताभ्यां प्रतिदिनं वेतनं देयम् । यथाह कात्यायनः

अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः।
संरक्षितो दिनस्यान्ते दद्याद्भृतस्य वेतनम् ॥ (११७)

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते। अत्र याज्ञवलल्क्यः

कुर्यात् प्रत्यभियोगं च कलहे साहसेषु च।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये॥
निह्नवे भाविते दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्॥ (२।१०-११)

लग्नके विशेषनिषेधश्च कात्यायनेनोक्तः

न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा।
निरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित्॥
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः।
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः॥
न शक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
जीवन्वापि पिता यस्य तथैवेच्छाप्रवर्त्तकः॥
नाविज्ञाय ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति। (११४-११९)

## न्यायालयशुल्कम्

आधुनिकन्यायव्यवस्थायां प्रतिशतमनुपातमधिकृत्य न्यायालयशुल्कं गृह्यते। प्राचीनभारते हिंसामूलविवादे न्यायालयशुल्कं न गृह्यते स्म। धनमूलविवादेषु प्रारम्भे आवेदनकरणसमये किञ्चिदपि शुल्कं दीयमानं नासीत्। निर्णयानन्तरं किञ्चित् शुल्कं देयमिति व्यवस्था[1]।

ऋणग्रहीता यद्यभियोगं स्वीकुर्यात्तदा प्रतिशतं दश, ऋणदाता च प्रतिशतं पञ्च परिमितं शुल्कं न्यायालयाय दद्यादिति व्यवस्था आसीत्। ऋणग्रहीता यद्यभियोगमस्वीकरोति परं न्यायालयद्वारा तस्योपरि अभियोगः सिद्धः स्यात्तदा यावत्याः सम्पत्तेः अभियोगो भवेत् तावती सम्पत्तिः दण्डरूपेण राज्याय देया आसीत्। यदि हि आवेदकस्य पक्षोऽसत्य एव निर्धारितः स्यात् तदा सः सम्पत्तेर्द्विगुणं दण्डरूपेण राज्याय दद्यादिति व्यवस्थितम्[2]। मयोत्तमर्णस्य धनं देयमिति सभायामधमर्णेनोक्ते सत्यधर्मणः पणशतात् पञ्च पणा इत्येवं दण्डमर्हति। यदा तु सभायामपि न किञ्चिदस्मै धारयामीत्येवमपलपति तदा पणशताद्दशपणा इत्येवं दण्डमर्हति[3]।

---

1. वि. ध. सू. ८।२०-२१; नारद. ४।१३२; स्मृ. चं. २पृ. १२१।
2. याज्ञ. २।४२।
3. मनु. ८।१३९।

ऋणं परित्यज्यान्येष्वपि विषयेषु शुल्कस्य व्यवस्था आसीत् । आध्यं यद् द्रव्यं तस्य दुष्प्रयोगम्[1], कस्याश्चन ज्ञातेः सङ्घस्य वा ये नियमास्तान् प्रति विश्वास-घातम्[2] । सम्पत्तेरुपरि मिथ्यास्वत्वस्थापनं वाधिकृत्य प्रवृत्तेऽभियोगे[3] सम्पत्तिमूल्यस्य प्रतिशतं पञ्च दण्डरूपेण देयम्, तच्च राज्येनैव प्राप्तव्यमासीत् । असङ्गतिपूर्णस्य पक्षस्य समुपस्थापने कृते साक्षिविषयं प्रमाणं प्रस्तोतुं प्रतिज्ञाबद्धः सन्नपि तत्सम्बन्धेऽसत्यत्वे वा प्रमाणिते प्रतिशतं विंशतिर्दण्ड आसीत्[4] ।

एभिः प्रमाणैरिदन्तु स्पष्टं न भवति यद् दीयमानमेतत्सर्वं न्यायालयशुल्करूपेण ग्राह्यं दण्डरूपेण वेति । छन्देन राजानमाज्ञापयित्वा यदा प्रागुक्तैश्चतुर्भिरुपायैः स्वेच्छया धनमार्गेण प्रवृत्तं तथाभूतं वा राजपुरुषैराह्वानेनार्हतरप्रदेशेऽनुरुध्येदं हि धनमिति स च पृष्टो धारयामि इति यत्प्रतिपद्यते स राज्ञा चतुर्थं भागं दण्डापयितव्यः। यावत्तस्मै धारयति तस्य। तत्र सर्वमृणं शतं चेद्धारयति पञ्चविंशतिर्दण्डनीयः शतं तस्य दाप्यः[5] । तथाच, याज्ञवल्क्यस्मृतेः (२।४२) टीकायां मिताक्षराकारो भृतिशब्दं पारितोषिकशब्दञ्च व्यवहृतवांन् । भृतिः सेवाद्वारैव सम्पाद्यते, पारितोषकन्तु स्वेच्छया प्रसन्नतया च दीयते । इमानि प्रमाणानि न्यायालयस्य आधुनिकशुल्केषु नागच्छन्ति । अनिवार्यरूपेण दीयमानं शुल्कं दण्डरूपो नासीत् । अत एव तस्य न्यायालयशुल्करूपेण स्वीकारो न युक्तः । तथा च निष्कर्षरूपेण वक्तुमिदं शक्यं यन्निर्धनेभ्योऽपि न्यायालयेषु स्वपक्षसमुपस्थापनाय पूर्णं सौविध्यं प्राप्तमासीत् ।

**नियुक्तः**

वैदिकसमाजे नियुक्तानामावश्यकतैव नासीत् । स्मृतिकालप्रारम्भं यावद् विधिव्याख्यातृणान्नियुक्तानां व्यवसायविषये न किञ्चिदपि प्राप्यते[6] । कात्यायनस्मृतौ एकं एतादृशं वचनं समुपलभ्यते येन तदानीं विधिव्याख्यातुः अस्तित्वं प्रतीयते । विवादास्पदविषयनिर्णायकाय ब्राह्मणाय तदानीं धनं मिलति स्म तच्च तस्य विद्याधनं मन्यते स्म । तादृग् धनेषु कुटुम्बस्य अन्यस्य वा कस्यचनाधिकारः स्वीक्रियते स्म[7] । अत्र **विद्याधनस्यानेके** आधाराः सन्ति । कल्याणभट्टेन नारदस्य (ऋणादान ४) उपरि असहायस्य टीकासम्पादनप्रसङ्गे श्रीधरनाम्नो ब्राह्मणस्य कथामुल्लिखिता नियुक्तस्य स्थितिः प्रस्तुतास्ति । यस्याः सम्बन्धस्तुलना च अधुनातन प्राड्विवाकैः सार्धं कर्त्तुं

---

1. याज्ञ. २।२६।
2. याज्ञ. २।३३, १८८।
3. याज्ञ. २।१७१।
4. कौटल्य. ३।९।
5. मनु. ८।१७६।
6. मनु. ९।२०६, कुल्लूकभट्टः।
7. तुलनीयम्–Indian Civil Proceedure Code, Order 3, Section 2 (1908 Act 5).

शक्यते । इत्थं प्रतीयते यद् वैधानिकप्रतिनिधिः इव तदानीं तस्य स्थितिः आसीत् । शुक्रेण एवंविधानां प्रतिनिधीनां शुल्कं कर्त्तव्यं योग्यता च समुल्लिखिताः सन्ति[1] । एतादृशकर्मणि नियोजितो जनः धर्मशास्त्रस्य तत्र विद्यमानायाः प्रक्रियायाः सूक्ष्म-तत्त्वानाञ्च ज्ञाता अपेक्षितः। प्रतिनिधयश्च राज्ञा न नियोक्तव्याः तत् तत् पक्षेणैव नियोक्तव्याः । यदि प्रतिनिधिः स्वपक्षं प्रति विश्वासघातं करोति अथवा अज्ञात-विषयमधिकृत्यापि प्रतिनिधित्वं करोति तदा सः दण्ड्यो भवति । लोभवशीभूतः सन्नपि यदि अन्यथाकरोति तदापि सः राज्यदण्डेन दण्डितो भवत्येव[2] ।

शुक्रस्य व्यवस्थानुसारं स्पष्टमिदं भवति यत् तस्य समये प्रतिनिधीनां शुल्कं निश्चितमासीत् तच्च दातुं वादिप्रतिवादिनो बाध्यौ आस्ताम् । प्रतिनिधिः विधेः ज्ञाता, स्वपक्षं प्रति पूर्णविश्वस्तः न्यायालयनियमानां पालकश्च स्यादिति नितरामावश्यकमासीत् । निश्चितशुल्कं दापयितुम्, यत्पक्षद्वारा सः नियुक्तस्तं प्रति कर्त्तव्यपालनं च कारयितुं राज्यद्वारा हस्तक्षेपोऽपि सम्भावित आसीत् । पक्षं प्रस्तोतुं स्वातन्त्र्यम् आसीदत एव वादिप्रतिवादिनौ स्वयमेव स्वप्रतिनिधीनां नियुक्तिं कुर्वन्तौ आस्ताम् । नियुक्तानां यथावस्थितकथनेऽपि यदि राजा अन्यथा करोति तदासौ निवारणीयः । अन्यथा दोषः । अनियुक्तानां तु अन्यथाभिधाने अनभिधाने दोषो न तु राज्ञः अनिवारणे । नानियुक्तेन व्यक्तव्यं व्यवहारे कथञ्चन ।

यद्यपीदमुक्तमस्ति यत् स्मृतिषु प्रतिनिधयः विधिक्षेत्रे नासन् परं शुक्रस्य व्यवस्थायान्तु तत्पूर्वं विद्यमानायाः परम्पराया एव प्रभावोऽस्ति । मनुद्वारा प्रस्तुतस्य विद्याधनस्य स्पष्टीकरणप्रसङ्गे कुल्लूकभट्टेन कात्यायनस्य वचनं समुद्धृतं तेन एतावत्तु परिलक्ष्यत एव यत् विवादसम्बद्धेषु प्रश्नेषु स्पष्टीकरणं कुर्वद्भ्य विधिवेत्तृभ्यः किञ्चिद् अवश्यं मिलतिस्म । दायभागे जीमूतवाहनेन कात्यायनवचन-मधिकं स्पष्टं कृतम् । फलत इदं स्फुटं भवति यद् व्यवहारे प्रतिनिधित्वं

---

1. नियोगितस्यापि भृतिं विवादात् षोडशांशिकीम् ।
विंशत्यंशां तदर्धां वा तदर्धां च तदर्धिकाम् ॥
यथा द्रव्याधिकं कार्यं हीना हीना भृतिस्तथा ।
यदि बहुनियोगी स्यादन्यथा तस्य पोषणम् ॥
धर्मज्ञो व्यवहारज्ञो नियोक्तव्योऽन्यथा न हि ।
अन्यथा भृतिं गृह्णन्तं दण्डयेच्च नियोगिनम् ॥
कार्यो नित्यो नियोगी न नृपेण स्वमनीषया ।
लोभेन त्वन्यथा कुर्वन् नियोगी दण्डमर्हति ॥
(शुक्र. ४।५।११४-११७)

2. तदेव।
नाभियुक्तोऽभियुञ्जीत तमती ( त्या? र्त्वा ) र्थमन्तरा ।
न चाभियुक्तमन्येन विद्धं न व्यद्धुमर्हति ॥
(नारद. १।४८)

प्रचलितमासीदेव[1] । परन्तु तस्मिन् शुल्कं नासीदनिवार्यम् अपि तु ऐच्छिकमेव । परम्पराया विस्तारेण सह शुक्रकाले तस्य अनिवार्यता वैधता च सम्पन्ना । अस्या एव अवस्थायाः कश्चन सङ्केतात्मक आधारः मनुस्मृतावपि मिलति । परं तदानीं यावत् तद् दानरूपेणैव प्रचलितमासीत् ।

नारदशुक्रयोः कालं यावद् विवादेषु प्रतिनिधीनामुपस्थितिः आवश्यकी सञ्जाता आसीत् । तेषां विषय एव पृथक् सञ्जात आसीत् । तदर्थं पक्षेषु बाध्यता नासीत् । इदमवश्यमासीद् यत् नियुक्तोऽनियुक्तो वा कश्चनापि धर्मशास्त्री स्वसमक्षं प्रस्तुत-निर्णयमधिकृत्य प्रवृत्ते विचारे स्वमताभिव्यक्तये स्वतन्त्र आसीत् । तस्य वाणी देववाणी इव मन्यते स्म[2] । नियुक्तेन प्रतिनिधिना स्वोपस्थितिः न्यायाधीशं प्रति सूच्यते स्म, न्याये साहाय्यं च क्रियते स्म[3] । अनेन प्रकारेण अनियुक्तोऽपि प्रतिनिधिः न्यायालये समागन्तुं शक्नोति स्म । न्यायालयसमक्षं स एव मताभिव्यक्तये अधिकृत आसीत् । यदि अन्यः कश्चन जनः मताभिव्यक्तिं कुर्यात् तदा सः दण्ड्यः स्वीक्रियते स्म तस्योपरि न्यायालयावमानानाया अपराधोऽपि प्रसज्यते स्म[4] ।

पुनः कालान्तरे तु प्रतिनिधिसिद्धान्तद्वारा तदेव स्वरूपं प्रस्तावितं यद् इदानीं वाक्कीलैः (वकीलैः) प्रस्तुतमस्ति । रूप्यकादिप्रलोभनवशेन विवादसम्बन्धिन्यो विपरीता अपि व्याख्याः प्रस्तुता अभवन् । मिलिन्दप्रश्ने एवं विधाः नियुक्ताः 'धम्म पणिक' अर्थात् 'धर्मविक्रेता' किं वा 'धर्मवणिक्' शब्देन व्यवहृताः सन्ति । इतः पूर्वं ते 'धर्मरक्षक'शब्देन व्यवह्रियन्ते स्म । मिलिन्दप्रश्ने 'धर्मसेट्ठिनो' शब्देन यो भावः प्रकाश्यते तादृश एव मृच्छकटिकेऽपि अभिव्यक्तोऽस्ति । अनेन प्रकारेण शुक्रस्य कालं यावत् प्रतिनिधीनां सर्वाङ्गीणो विकासः सम्पन्न आसीत् । यस्य समता अधुनातनैः वाक्कीलैः सार्धं कर्त्तुं शक्यते[5] ।

**विचारविधिः**

एवंविधविपक्षमहीक्षिद्भ्यः प्रजानां रक्षणादवाप्तवृत्तिस्तासामेवेतरेतरविवादज-पीडापरिहारार्थमृणादानाद्यष्टादशविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यजनितसन्देहहारी विचार एव व्यवहार । तान्व्यवहारान् द्रष्टुमिच्छन्पृथिवीपतिर्निश्चितलक्षणलक्षितै-र्ब्राह्मणैरमात्यैश्च विहितपञ्चाङ्गमन्त्रैःसह विनीतो वाक्पाणिपादचापलविरहादनुद्धतः ।

---

1. मनु. ९।२०६ अत्र कुल्लूकभट्टः ।
2. **अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति ।**
   **दैवीं वाचं स वदति यः** शास्त्रमनुजीवति ॥ नारद. ३१२; शुक्र. ४।५।२३, २८।
3. बृहस्पति. १।२; शुक्र. ४।५।२६।
4. शुक्र. ४।८०-८२; परा. मा. पृ. ३२-33।
5. मिलिन्द. ५, पृ. ३४४, सम्पादकः ट्रेंकर ।
   Bombay Act 17, 1920, Bengal 4 Regulation Act 7, 1793.

अविनीते हि नृपे वादिप्रतिवादिनां प्रतिभाक्षयादसम्यगभिधाने तत्त्वनिर्णयो न स्यात्। तादृशो वक्ष्यमाणां सभां प्रविशेत् । व्यवहारदर्शनं चेदं प्रजानामितरेतरपीडायां तत्त्वनिर्णयेन रक्षणार्थं दृष्टादृष्टार्थकरणफलेनैव फलवत्। सभा च–

दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥
माल्यधूपासनोपेतां बीजरत्नसमन्विताम् ।
प्रतिमालेख्यदेवैश्च युक्तान्यग्न्यम्बुना तथा ॥
पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि श्रृणुयात्तथा ॥
राजा कार्याणि संपश्येत्प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥

(बृह. १।४५-४७, १।१५.६५)

कात्यायनः

सभास्थानेषु पूर्वाह्णे कार्याणां निश्चयं नृपः ।
कुर्याच्छास्त्रप्रमाणेन मार्गेणामित्रकर्षणः ॥
दिवसस्याष्टमं भागमुक्त्वा कालत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥
पूर्वपक्षश्चोत्तरं च प्रत्याकलितमेव च ।
क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः ॥ ६०, ६१, ३१ ॥

अष्टमभागोऽत्र आद्योऽर्धप्रहरः । तस्यां च सभायां कार्यगौरवापेक्षायामुपविष्टः, लघुनि कार्ये उत्थितोऽपि दक्षिणपाणिमुद्यम्यानुद्धतवेषालङ्कारः इन्द्रियानौद्धत्यमुक्तं तादृशाः कार्याणि विचारयेत्[1] ।

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनमन्तरेण संभवति । तद्व्यवहार-दर्शनमहरहः कर्त्तव्यम् । स च व्यवहारः कीदृशः, कतिविधः, कथञ्चेतीतिकर्त्तव्य-ताकलापो स्पष्टतया अभिधेयम् शास्त्रेण देशाचारिदना वा । अन्यविरोधेन स्वात्म-संबन्धितया कथनं व्यवहारः । तस्यानेकविधत्वम् । देशादिधर्मस्यापि धर्मशास्त्र-विरुद्धस्य धर्मशास्त्रविषयत्वात् ग्रहणम्[2] । व्यवहारः मनुष्येषु धर्मे नष्टे प्रकल्पितः।

---

1. मनु. ८।१-२ ।
2. निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥
(याज्ञ. २।१८६)

व्यवहाराणाञ्च द्रष्टा दण्डधरो राजा कृतः[1] । तदेव हि व्यवहारपदं यत् स्मृत्याचारव्यपेतेन बाह्येन मार्गेणासम्बद्धैः खलीकृत इत्येवं कश्चित् कथयेत्[2] । धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम्, इति मनुः[3] ।

यदा कार्यान्तराकुलतया रोगादिना वा राजा स्वयं कार्यदर्शनं न कुर्यात्तदा तद्दर्शनार्थं कार्यदर्शनाभिज्ञं ब्राह्मणं नियुञ्जीत । स ब्राह्मणोऽस्य राज्ञो द्रष्टव्यानि कार्याणि त्रिभिर्ब्राह्मणैः सभायां साधुभिर्धार्मिकैः कार्यदर्शनाभिज्ञैर्वृतस्तामेव सभां प्रविश्योपविश्य स्थितो वा न तु चंक्रम्यमाणस्तस्य चित्तव्याक्षेपसंभवत्वात्तादृशऋणादानादीनि कार्याणि पश्येत्[4] । सभ्यैःसह सर्वधर्मविद् ब्राह्मणो नियोक्तव्यः, न क्षत्रियादिर्व्यवहारदर्शने इति मिताक्षरा । कात्यायननारदादीनां वचनान्यत्र प्रमाणानि । राजा प्राड्विवाकमते स्थितः, न तु स्वमते[5] ।

राजा राजनियुक्तो वा धनलोभादिना कार्यमृणादिविवादं नोत्पादयेत् । न चार्थिना प्रत्यर्थिना वावेदितं विवादं धनादिलोभेनोपेक्षेत[6] । धर्मशास्त्रसमाचारविरुद्धेन मार्गेण परैराधर्षितोऽभिभूतो यद्राज्ञे प्राड्विवाकाय वा आवेदयति चेद्यदि तदावेद्यमानं व्यवहारपदम् । स्वयमेवागत्य आवेदयति, न राजप्रेरितस्तत्पुरुषप्रेरितो वा । राज्ञा पृष्टो विनीतवेष आवेदयेत्[7] । आसेधो राजाज्ञयाऽवरोधः । अकल्पादयः, आधिव्याधिपीडिताः, पुत्रादिकमन्यं वा सुहृदं प्रेषयेयुः, न च ते परार्थवादिनः । तथा च–

**आगमः प्रथमं कार्यो व्यवहारपदं ततः ।**
**चिकित्सा निर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥**

**( नारद. १।३६ )**

**पूर्वपक्षः स्मृतो पादो द्वितीयश्चोत्तरस्तथा ।**
**क्रियापादस्तथा चान्यच्चतुर्थो निर्णयः स्मृतः ॥**

---

1. याज्ञ. २।१; नारद. १।२।
2. स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥
( याज्ञ. २।५ )
3. मनु. ८।८।
4. मनु. ८।९-१०, याज्ञ. २।३।
5. धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
समाहितमतिः पश्येद् व्यवहारानुक्रमात् ॥
( नारद. १।२९ )
6. नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसदेर्थं कथञ्चन ॥
( मनु. ८।४३ )
7. याज्ञ. २।५।

मिथ्योक्तौ तु चतुष्पादः प्रत्यवस्कन्दने तथा ।
प्राङ्न्यायश्च स विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥
( बृह १।२७. २।३ )

कार्यमुद्दिश्य पीडां यः कश्चिद्राज्ञे निवेदयेत् ।
पदं तदष्टादशविधं विवादानां प्रकीर्तितम् ॥ ( उशना )

आगमानां विवदतामसकृद्वादिनां नृपः ।
वादान् पश्येदात्मकृतान्न चाध्यक्षनिवेदितान् ॥
( बृह. १।१६९ )

न राज्ञा तु विशिष्टेन धनलोभेन वा पुनः ।
स्वयं कार्याणि कुर्वीत नराणामविवादिनाम् ॥
( कात्या. २७ )

अष्टादशपदो वादो विचार्यो विनिवेदितः ।
सन्त्यन्यानि पदान्यत्र तानि राजा विशेत्स्वयम् ॥
( बृह. २।२६ )

प्राड्विवाकमध्याभवेदिति गौतमः (१३।२७) । नानाविवादप्रयुक्तः पक्षो युगपन्न सिद्ध्यति, एवमनेकोऽपि पक्षो युगपन्न सिद्ध्यति[1] । न तु नानापक्षनिर्देशात्तस्य हानिः स्यात् । किन्तु तदपि राजा तत्वप्रतिपन्नं लेखयेत् क्रमशो निरूपयितुम् । यत्र तु नानाविवादपदानि एकहेतुसाध्यानि भवन्ति तत्र युगपदेव निर्णयः । यथाऽऽह–

न्यायं वा नेच्छते कर्तुमन्यायं वा करोति यः ।
न लेखयति यस्त्वेनं तस्य पक्षो न सिद्ध्यति ॥
विरुद्धाश्चाविरुद्धाश्च द्वावप्यर्थनिवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत्[2] ॥

**आवेदनं प्रतिज्ञा भाषा वा**

व्यवहारस्य प्रथमः पाद आवेदनतः प्रतिज्ञातो वा आरभ्यते । तदेव व्यवहारस्य मूलम् । याज्ञवल्क्यानुसारं विपक्षिणा पीडितः कश्चिद् यदि धर्मशास्त्रप्रतिकूलमावेदनं राज्ञे करोति तदा तद्भवति व्यवहारपदस्य विषयः[3] । अर्थ्यते इत्यर्थः साध्यः, सोऽस्यास्तीत्यर्थी, तत्प्रतिपक्षः प्रत्यर्थी । प्रत्येकं व्यवहारस्य चत्वारः मुख्याः पादा भवन्ति–

---

1. कात्यायन. १३६-१३७।
2. बृह. २।४४-४५; कात्या. १३९ प्रथमे ।
3. याज्ञ. २।५।

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा ।
क्रियापादस्तथा चान्यच्चतुर्थो निर्णयः स्मृतः ॥

(बृह. १।७)

हिंसामूलविवादं विहाय अन्येषु सर्वेषु विवादेषु पूर्वपक्षोत्तरपक्षाभ्यामवश्यं भाव्यम् । हिंसामूलकस्थाने राजा लोभवशेन विवादं न प्रस्तुयात् । वादिनः प्रतिज्ञायां यदि कीदृशी अपि अशुद्धिर्भवति तदा तत्रैव तदीयः पक्षः समाप्तो मन्यते[1] ।

प्रतिज्ञा, भाषा, पक्षः, पूर्वपक्षः, वाद इत्येतैः शब्दैरपि आवेदनमुच्यते[2] । अत्र कालः, वत्सरः, मासः, पक्षः, तिथिश्च लेख्या । वेला, प्रदेशः, विषयः, स्थानम्, जातिः, आकृतिः, वयः, साध्यम्, द्रव्यम्, प्रमाणम्, संस्था, स्वनाम चेत्येतेषामुल्लेखः कार्यः । साध्यस्य, निवासस्य, पितुश्च नामानि उल्लेखनीयानि–

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥
साध्यं प्रमाणं द्रव्यं च संख्या नाम तथाऽऽत्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात्पितृणां नामानि पीडां चाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षं संकल्प्य कीर्तयेत् ॥
देशः कालस्तथा स्थानं सन्निवेशस्तथैव च ।
जातिः संज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्ववंशानुकीर्तनम् ।
स्थावरेषु विचारेषु दशैतानि निवेदयेत् ॥

(कात्या. १२४-१२८)

नारदः प्रतिज्ञाशुद्धिविषये बहुविचारितम् । तन्मतानुसारं यदि कश्चिद् विन्दुः इतस्ततो भवेत्, कश्चिद् वर्णः अस्पष्टो भवेत्, अर्थो भवेन्न्यूनाधिकतया निवेशितः, जलेन तैलेन वा आर्द्रं भवेत्, कथञ्चिद् भवेत् तदा स्पष्टं सदपि आवेदनपत्रमग्राह्यं भवति–

अन्यार्थमर्थहीनञ्च प्रमाणागमवर्जितम् ।
लेख्यं हीनाधिकं भ्रष्टं भाषादोषा ह्युदाहृताः ॥
अन्याक्षरनिवेशेन नान्यार्थगमनेन च ।
आकुलं च क्रियादानं क्रिया चैवाकुला भवेत् ॥

---

1. देशकालविहीनश्च द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते ॥
(कात्या. १३८)

2. याज्ञ. २।६; कात्या. १३१; नारद. २।१।

भाषाया उत्तरं यावत्प्रार्थी नाभिलेखयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥

(नारद. २।८, १७, ७)

कात्यायनमतानुसारं यस्मिन्नावेदनपत्रे देशस्य, कालस्य, सङ्ख्यायाः, प्रमाणस्य, परिमाणस्य च उल्लेखो न भवेत् तद् विचारानर्हम् (कात्या. १३८)–

मृषायुक्तं क्रियाहीनमसाराक्षरमाकुलम् ।
पूर्वपक्षं लेखयतो वादे हानिः प्रजायते ॥

(बृह. २।२०)

बृहस्पतिना संक्षिप्तमावेदनपत्रमधिकमादृतम् । तदनुसारं प्रार्थनापत्रं संक्षेपत इत्त्थं लेख्यो यत्तत्र स्वपक्षीयतथ्यैः सहैव प्रतिपक्षीयप्रतिरोधकारणानामपि उल्लेखो भवेत्–

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥
अल्पाक्षरः प्रभूतार्थो निःसन्दिग्धस्त्वनाकुलम् ।
मुक्तो विरोधकरणैर्विरोधिप्रतिषेधाः ॥
यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्पक्षान्तसम्बन्धं पूर्ववादी तदोत्तरम् ॥

(कात्या. १४१-१४३, बृह. २।१४-१५, ३।१)

अग्रे स वदति यद्वादि यदि सशस्त्रः, अनुत्तरीयः, मुक्तः, सासनश्च सन् वामेन करेण आवेदनपत्रं दद्यात् तदा तस्यावेदनपत्रमस्वीकृत्य स दण्डनीयः ।

आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यते[1] । संवत्सरमृतुं मासं पक्षं दिवसं करणमधिकरणमृणं वेदकावेदकयोः कृतसामर्थ्यावस्थयोर्देशग्रामजातिगोत्रनामकर्मणि चाभिलिख्य वादिप्रतिवादिप्रश्नानर्थानुपूर्व्यान्निवेशयेत्, निविष्टांश्चावेक्षेत (अर्थ. ३।१) । एतच्चाचलसम्पत्तिविषयके आवेदनविषये । येषां मध्ये यानि साधकबाधकप्रमाणोपन्यासोपयोगीनि यत्र भवन्ति तत्र तान्येव लेख्यानि न सर्वाणि प्रयोजनाभावात् (अपरार्कः पृ. ६०८)। उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसंमितं दण्डं दद्यात् प्राप्तार्थश्चोत्तमर्णो विंशतितमंशम्[2] । तथा च–

अधिकान् शोधयेदर्थानन्यांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत्तावद्यावत् पक्षः प्रतिष्ठितः ॥

---

1. याज्ञ. २।६ मिता. ।
2. वि. ध. सू. ६।२०-२१।

**पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।**
**पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥**
**( कात्या., याज्ञ. २।६ मिताक्षरा )**

येन प्रकारेण पूर्वमावेदनकाले आवेदितं तथा, न पुनरन्यथा, अन्यथावादित्वेन व्यवहारस्य भङ्गप्रसङ्गात्–

**अन्यवादी क्रियाद्वेषी वोपस्थाता निरुत्तरः ।**
**आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः ॥**
**( नारद. २।३३ )**

आवेदनकाल एवार्तिवचनस्य लिखित्वात्पुनर्लेखनमनर्थकम् । धर्मसंयुक्तं धर्मो गुणः स्वल्पाक्षरत्वप्रभूतार्थवत्त्वादिकस्तेन युक्तम्, परिपूर्णमध्याहारानपेक्षम्, अनाकुलमसन्दिग्धाक्षरम्, साध्यवत् सिषाधयिषितार्थसहितम्, वाचकपरं बहुव्रीहि-गौणलाक्षणिकादिरहितम्, प्राकृतार्थानुबन्धि पूर्वविदितार्थानुरोधि । आवेदनसमये कार्यमात्रं लिखितं प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यते । संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते, तथाप्याधिप्रतिग्रहक्रियेषु निर्णयार्थमुपयुज्यते, 'आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति वचनात् । अर्थव्यवहारोऽपि एकस्मिन्संवत्सरे यत्संख्याकं यद् द्रव्यं यतो येन गृहीतं प्रत्यर्पितञ्च पुनरस्मिन्वत्सरे तद् द्रव्यं तत्संख्याकं ततस्तेन गृहीतम्, याच्यमानो यदि ब्रूयात् सत्यं गृहीतं प्रत्यर्पितञ्च । वत्सरान्ते गृहीतं प्रत्यर्पितं नास्मिन्वत्सरे इत्युपयुज्यते । एवं मासाद्यपि योज्यम् । देशस्थानादयः पुनः स्थावरेषु विवादेषु दशैतानि निवेशयेत्[1] । तथा च–

**अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।**
**लेख्यं हीनाधिकं भ्रष्टं भाषादोषा ह्युदाहृताः ॥**
**अन्याक्षरनिवेशेन नान्यार्थगमनेन च ।**
**आकुलं च क्रियादानं क्रिया चैवाकुला भवेत् ॥**
**भाषाया उत्तरं यावत्प्रार्थी नाभिलेखयेत् ।**
**अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥**
**( नारद. २।८,१७, ७ )**

**ऊनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत् ।**
**न दद्यादुत्तरं यावत्प्रार्थी सभ्यसन्निधौ ॥**
**( बृह. २।२२ )**

1. याज्ञ. २।६ मिता.; कात्या. १२४-१२८।

अभियोक्ता प्रगल्भत्वाद्वक्तुं नोत्सहते यदा।
तस्य कालः प्रदातव्यः कार्यशक्त्यनुरूपतः॥

(बृह. २।३४)

स्वलेखनाद्वा लभते त्र्यहं सप्ताहमेव वा॥ नारद. २।३॥
निराकुलावबोधाय धर्मस्थैः सुविचारितम्।
तस्मादपोह्यमन्यार्थं वादिनोः प्रतिपादितम्॥
वादिभ्यामभ्यनुज्ञातमशेषं फलके स्थितम्।
ससाक्षिकं लिखेत्पत्रे प्रतिपत्तिं तु वादिनोः॥
शोधयेत्पूर्वपादं तु यावन्नोत्तरदर्शनम्।
अष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्॥

(नारद. २।१९, २०, ७)

यदा वादी अन्यादृशार्थस्याक्षरनिवेशं कृत्वा व्यवहारकाले अन्यादृशमेव प्रभृततरार्थोत्पादकमर्थमुपन्यस्यति तदा क्रियादानमाकुलं भवति। यदा च प्रथमवादयोर्द्वयोः द्वितीयेन द्वितीयप्रथमेन सभ्याश्च द्वाभ्यामपि व्याकुलाः, तदार्थापत्त्या क्रियापि व्याकुला भवति।

अर्थी भाषायां स्वकीयं विवक्षितं वस्तु तावदेव लेखयेत्, यावत्प्रार्थी उत्तरं न निवेशयेत्। उत्तराक्रान्तभाषायां तु तस्य विवक्षितवस्तुनस्तस्यापि भूयो लेख्याधिकारो नास्ति।

एतच्च संस्कृतदेशभाषान्यतरेण यथाबोधं वक्तव्यं लेख्यं वा। मूर्खाणामपि वादिप्रतिवादतादर्शनात्। अत एवाध्ययनेनापि तथोक्तं विष्णुधर्मोत्तरे। संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः। देशभाषाद्युपायैश्च बोधयेत्स गुरुः स्मृतः। (व्य. प्र. पृ. २०५)

पक्षःकेनचिद्वादिना उपस्थापनीयो न तु राज्ञा। राजा कश्चित्कर्मचारी वा पक्षं नारभेत किन्तु पक्षप्रस्तावसमये कयाचिद्रीत्या विवादप्रशमनसमये च तूष्णीं स्थातुं न शक्नोति। केनचित्प्रभावितः सन् धनलोभेन वा राजा कमपि विवादं न प्रस्तुयात् नापि प्रस्तावयेत्। यदि उभौ पक्षौ स्वयं निर्णयं सन्धिं च चिकीर्षितौ तदा राजा न बलाद् विवादमुपस्थापयेत्। इत्त्थं न्यायव्यवस्थायां कीदृशोऽपि शासनस्य हस्तक्षेपः अमान्य आसीत्। शासनद्वारा व्यवहारारम्भः कासुचिद् अपवादभूतासु परिस्थितिषु भवति स्म। राज्यविद्रोहविषयकविवादमिव देवब्राह्मणतपस्विस्त्रीबालवृद्धरुग्णानाथानामपि ये स्वयं विवादं प्रस्तोतुमशक्ताः विवादान् राज्यं स्वयं प्रस्तोतुमशकत्। पक्षद्वयेनाऽपि विवादे प्रस्तुते स विवादः प्रत्यर्थिनः समक्षं प्रस्तोतव्यः। वादिने एष अवसरः दीयते स्म यदि स इच्छेत् तदा प्रतिज्ञायां संशोधनं कुर्यात्।

**क्रमः, विभागः, समयश्च**

एकस्मिन्नेव दिने प्रस्तुतानाम् अनेकेषाम् आवेदनानां क्रमनिर्धारणस्यं द्वौ आधारौ। प्रथमाधारानुसारं विवादस्य आधारं लक्ष्यं परिणामञ्च आश्रित्य प्राथम्यं गौणत्वञ्च निर्धार्यते । द्वितीयाधारानुसारम् अक्षरक्रममाश्रित्य विभिन्नानाम् आवेदनानां क्रमः व्यवस्थाप्यते। महत्त्वपूर्णकार्यविषयकेषु विवादेषु झटिति विचार्यते स्म। बृहस्पतिमतानुसारं गौः, वृषभः, क्षेत्रम्, स्त्रीप्रजननम्, न्यासः, दत्तम्, क्रयः, विक्रयः, कन्यादूषणम्, स्तेयम्, कलहः, साक्ष्यम् इत्यादिषु विषयेषु तत्कालं विचारणीयम्। नारदस्य मतं यद् यस्य पुरुषस्य अधिका क्षतिः पीडा कार्यं वा भवेत् तदीयो विवादः आशु विचारार्थम् अवतार्यः । कात्यायनोऽपि पीडाधिक्यस्य कार्यगौरवस्य च महत्त्वं स्वीकरोति । एतन्नियमविषये व्यक्तेः राजनीतिकस्य सामाजिकस्य वा प्रभावस्य न किमपि महत्त्वम् । कृत्यकल्पतरौ व्यवहारकाण्डे उक्तविषयकस्मृत्यन्तरवचनोद्धरणपुरःसरं कथितं यद् यदि तदानीं दैवराजकृतयद्यनवस्था न स्यात् तदा क्रमव्यवस्था पालनीया । बृहस्पतिः कथयति यदुक्तपरिस्थितीः विहाय अन्यत्र वर्णक्रमानुसारम् आवेदनेषु विचारणीयम्। एतदेव प्रजापतेरपि मतम्[1] ।

निर्णये यदि विलम्बो भवति तदा न्यायपालिका एव भवति दोषभाक्[2]। महाभारतानुसारं निर्णयं विलम्बयमानः राजा नृग इव अधो गच्छति[3]। निर्णयशैघ्र्यार्थम् इदमवधेयं यद् वादी प्रतिवादी वा निर्णये कीदृशीमपि बाधान्तु नोपस्थापयति । वादी पक्षं प्रस्तूय यदि विलम्बं कुर्यात्तदा स अपराधी उद्घोष्यते स्म। प्रतिवादिने

---

1. अहं पूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥
(बृह. ३।२५)
अर्थानर्थावुभौ बुध्वा धर्माधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥ २४ ॥
आज्ञालेखः पट्टकः शासनं वा आधिः पत्रं विक्रयो वा क्रयो वा ।
राज्ञे कुर्यात् पूर्वमावेदनं यः तस्य ज्ञेयः पूर्ववादो विधिज्ञैः ॥
(नारद. २।३८)
यस्य वाभ्यधिका पीडा कार्यं वाऽप्यधिकं भवेत् ।
तस्यार्थे वादो दातव्यो न यः पूर्वं निवेदयेत् ॥
(नारद. २।३९)
2. तुलनीयम्–Holdsworth, History of English Law, 1926, Vol. IX, pp. 374-375.
3. महा. अनु. ६।३८।

निश्चितोऽवधिः दीयते स्म । निर्धारितेऽवधौ पक्षस्य अनुपस्थापने स अपराधी मन्यते[1] ।

याज्ञवल्क्यमतानुसारं साहसं स्तेयं गौः अभिशापः अत्ययः स्त्री इत्येतद्विषयकाः विवादाः सद्यो निर्णेयाः[2] । सम्पत्तिविषयकेषु विवादेषु अवधिप्रदानं पितामहः अनुमन्यते[3] । सम्पत्तिविषये विवादे एकवर्षात्मकं समयः अनुमन्यमानो गौतमः स्त्रीविषयकाणां हिंसाविषयकाणां महत्त्वपूर्णकार्यान्तरविषयकाणां च विवादानां सद्योविचारणीयतां विधत्ते[4] । ईदृशानां वादिनां ये अप्रगल्भतया स्वपक्षम् उपस्थापयितुम् अशक्ताः, कृते अवधिप्रदानं विधत्ते बृहस्पतिः । यदि साक्षी विदेशस्थः प्रतिवादी च शारीरिकेण मानसिकेन वा व्याधिना इत्थं पीडितो भवेद् यत्सः स्वपक्षम् उपस्थापयितुम् अशक्तः तदा तस्य अवसरो देयः । अचलसम्पत्तिविषये बृहस्पतिः समयप्रदानं नानुमन्यते[5] । कौटल्येन शुक्रेण च सङ्क्षेपेणेदमुच्येते यद्राज्ञा तथा विधेयं येन न्याये विलम्बेन अपयशः आपत्तिश्च तं न स्पृशेताम् । राज्ञा देशकालपात्रानुरूपं यथाशक्यं शीघ्रमेव न्यायः कर्त्तव्योऽन्यथा न्यायस्य मृत्युर्भवति–

सद्यः कृतेषु कार्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥
श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ॥
सद्यो वैवाहिकपञ्चाहो त्र्यहं वा गुरुलाघवात् ।
लभेतासौ त्रिपक्षं सप्ताहं वा ऋणादिषु ॥
सद्यः कृते सद्योवादः समातीते दिनं क्षिपेत् ।
षड्द्विके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्धं लभते नरः ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो भवेत् ॥
अस्वतन्त्रजडोन्मत्तबालदीक्षितरोगिणाम् ।
कालं संवत्सरादर्वाक् स्वयमेव यथेप्सितम् ॥
कालशक्ती विदित्वा तु कार्याणां तु बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥
यो वा यस्मिन् समाचारः पारम्पर्यक्रमागतः ।
तं प्रतीक्ष्य यथान्यायमुत्तरं दापयेन्नृपः ॥

1. कौ. ३।१; रामा. उत्तर. ५३।१८-१९; शुक्र. ४।५।८ ।
2. याज्ञ. २।१२; मनु. ८।५८; नारद. १।४४ ।
3. स्मृ. चं. २पृ. ४३ ।
4. गौ. १३।१९-२० ।
5. स्मृ. चं. २पृ. ४० ।

मूलं वा साक्षिणो वाथ परदेशस्थिता यदि ।
तत्र कालो भवेत्पुंसां स्वदेशे वक्तुमागमात् ॥
दिनं मासार्धमासं वा ऋतुः संवत्सरोऽपि ।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु ॥
(कात्या. १५३, १४५, १४६, १५४, १५६, १४७, १६४, १५७, १४८)

**वादस्य प्रवेशः**

प्रतिज्ञाया आवेदनपत्रस्य वा समुपस्थापनानन्तरं विवादस्य कार्यकलापः प्रारम्भते स्म । आवेदनपत्रेण सह समागतं प्रार्थिनं न्यायाधीशः पृच्छति स्म यत् किं तव कार्यम्, किं वा कष्टम्, भो मनुष्य मा भैषीः, कदा केन कस्मात् कस्मिन् विषये त्वं कष्टव्याकुलः कृत [1]इति । एतदनन्तरं कात्यायनमतेन वादी आवेदनपत्रमाद्यमेन स्वपक्षं प्रस्तौति स्म । प्रतिज्ञायाः सर्वैर्नियमैर्युक्तमेव आवेदनपत्रं न्यायालयेन स्वीक्रियते स्म । अपेक्षितं स्पष्टीकरणं वादिना क्रियमाणं लेखकेन लिख्यते स्म । एतेन आवेदनपत्रे अपेक्षितं संशोधनम् (Currection), संयोजनम् (addition), परिष्करणम् (Improve merits) शक्यक्रिय आसीत् । लेखे पूर्णे सति लेखकस्तं लेखमावेदनपत्रं यथाविधिपूर्णं विदधाति स्म । शुक्रमतेन तदानीमेवावेदनपत्रस्योपरि वादिनो हस्ताक्षरं कारयित्वा राजमुद्राया अङ्कनमपेक्षितम् । प्रतिवादिन उत्तरात्पूर्वं स्वीये आवेदनपत्रेऽपेक्षितं संशोधनमपि वादिना कर्त्तुं शक्य आसीत् ।

---

1. काले कार्यार्थिनं पृच्छेद्गृणन्तं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
केन कस्मिन् कदा कस्मात्पृच्छेदेवं सभागतम् ।
एवं पृष्टः स यद् ब्रूयात्स सभ्यैर्ब्राह्मणैः सह ॥
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।
मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेत् ॥
अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान्॥
मत्तोन्मत्तप्रमत्तार्तान्भृत्यान्नाह्वानयेन्नृपः ।
न हीनपक्षा युवतिं कुले जातां प्रसूतिकाम् ॥
सर्ववर्णोत्तमां कन्यां तां ज्ञातिप्रभुकाः स्मृताः ।
तदधीनकुटुम्बिन्यः स्वैरिणो गणिकाश्च याः ॥
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ।
कालं देशं च विज्ञाय कार्याणां च बलाबले ॥
अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ।
ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ॥
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ ( याज्ञ. २।५ मिताक्षरयोद्धृतकात्यायनवचनानि )

एवमावेदनसमये यदुक्तं तद्विरुद्धभावं न प्रापयेत् । आवेदनसमये यद्वस्तु निवेदितं तदेव भाषासमयेऽपि तथैव लेखनीयम् । एकस्मिन्नपि पदे न वस्त्वन्तर-मित्युक्तम् । यथा–'अनेन रूपशतकं वृद्ध्या गृहीतम्' इत्यावेदनसमये प्रतिपाद्य प्रत्यर्थिसन्निधौ भाषासमये "वस्त्रशतं वृद्ध्या गृहीतम्" इति वक्तव्यम् । तथा सति पदान्तरगमनेऽपि वस्त्वन्तरगमनाद्धीनवादी दण्ड्यः स्यात् । 'नोक्तं प्रकृतिं नयेत्' इत्यनेनैकवस्तुत्वेऽपि पदान्तरगमनं निषिद्धम्, इह तु पदान्तरगमनं निषिद्ध्यत इति पौनरुक्त्यम् । एतदेव स्पष्टीकृतं नारदेन–

**पूर्वपादं परित्यज्य योऽन्यमालम्बते पुनः ।**
**पदसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥**

हीनवादी दण्ड्यो भवति, न प्रकृतादर्थाद्धीयते । अतएव प्रत्यर्थिनोऽर्थिनश्च प्रमादपरिहारार्थमेवायम् "अभियोगमनिस्तीर्य" इत्याद्युपदेशो न प्रकृतार्थसिद्ध्य-सिद्धिविषयः[1] ।

न्यायालये आवेदनपत्रमधिकृत्यापेक्षिते स्पष्टीकरणे वादनं प्रति प्रष्टव्याः प्रश्नाः उभयपक्षस्य समुपस्थितावेव पृच्छ्यन्ते स्म । वादिना दीयमानमुत्तरमपि प्रतिवादिनः समक्षमेव लिख्यमानमासीत् । प्रतिवादिनेऽपि तदानीमेव अपेक्षिते समयान्तरे वा स्पष्टीकरणाय अवसरो मिलति स्म । विचारप्रारम्भात् पूर्वं वादिन आवेदनानुसारं राजमुद्राङ्किताह्वानपत्र (समन) द्वारा पूरुष (बलिफ) द्वारा वा सूचनापुरःसरं प्रति-वादी न्यायालये आकार्यते स्म । तस्यागमनानन्तरमावेदनविषये वादिनं प्रति प्रश्नाः क्रियन्ते स्म । प्रतिवादिना उत्तरे अप्रदीयमाने तु सामदानभेददण्डाख्या उपाया अपि प्रयुज्यन्ते स्म । अथापि सफलतायामनधिगताया सप्ताहपर्यन्तमवसरं प्रदायानन्तरं दण्डस्यापि विधानं कर्तुं शक्य[2] आसीत् ।

यमर्थं धान्यहिरण्यादिकमुद्दिश्य व्यवहारो लेखितः, तमर्थं क्रियाकालेऽन्यथा न ब्रूयात् । हिरण्यं लेखयित्वा साक्षिप्रश्नकाले धान्यमिति । नान्यत् पक्षान्तरः । गच्छेत् साक्षिणमुद्दिश्येत्युक्तम्, नार्थान्तरमुद्दिश्य । ... ... तच्च न लभते दण्ड्यश्चेति नारदः

**यमर्थमभियुञ्जीत न तं विप्रकृतिं नयेत् ।**
**नान्यत्पक्षान्तरं गच्छेद् गच्छन् पूर्वात् स हीयते ॥**
**न च मिथ्याभियुञ्जीत दोषो मिथ्याभियोगिनः ।**
**यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत् ॥ १।४-९-५० ॥**

वाग्दण्डपारुष्यात्मके विषशास्त्रादिनिमित्तप्राणव्यापादनादिषु प्रत्यभियोगसम्भवे स्वाभियोगमनिस्तीर्याप्यभियोक्तारं प्रत्यभियोजयेत् । नन्वत्रापि पूर्वपक्षानुमोदन-

1. याज्ञवल्क्य. २।९-१०; नारद. १।५५।
2. व्य. मा. पृ. १४८ ।

रूपत्वेनानुत्तरत्वात्प्रत्यभियोगस्य प्रतिज्ञान्तरत्वे युगपद्यव्यवहारासम्भवः समानः । सत्यम् । नात्र युगपद्यव्यवहाराय प्रत्यभियोगोपदेशः, अपितु न्यूनदण्डप्राप्तये अधिकदण्डनिवृत्तये वा । तथा हि–अनेनाहं ताडितः शप्तो वा' इत्यभियोगे, 'पूर्वमहमनेन ताडितः शप्तो वा' इति प्रत्यभियोगे दण्डाल्पत्वम् । यथाह नारदः

**पूर्वमाक्षरयेद्यस्तु नियतं स्यात्स दोषभाक् ।**
**पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥ १५।९ ॥**

अनिवेद्य राज्ञः सन्दिग्धेऽर्थे प्रवर्तते अनिर्णीते धारयतीति न धारयतीति यः प्रवर्तते साधयितुं स्वयमेवारभते बलादाक्रम्य स दण्ड्यः स्यात् । सोऽप्यर्थः सन्दिग्धो न लभ्यते हीयते च[1] ।

**प्रतिवादिनः आह्वानम्**

वादिना स्वपक्षे प्रस्तुते प्रतिवादी आकार्यते स्म[2] । वादी यं प्रति विरोधं प्रदर्शयितुमावेदनपत्रं प्रस्तौति स्म स एव प्रतिवादी मन्यते स्म[3] । न्यायालये तस्योपस्थितये व्यवस्था क्रियते स्म । कासुचित् स्थितिषु प्रतिवादी स्वयमुपस्थातुं नाशक्नोत् । यथा–रुग्णः, सप्तति वर्षा(७०)धिकवयस्कः, देवविपत्तिग्रस्तः, धार्मिकविधिषु संल्लग्नः, न्यायालये उपस्थित्या यस्य अपूरणीया क्षतिः सम्भवेत्, यस्य कश्चन सम्बन्धी मृतः स्यात् अथवा कयाचन अन्ययैव एवंविधया अभाग्यपूर्णस्थित्या ग्रस्तः, राजकार्ये यज्ञादौ वा व्यस्तः, युवती स्त्री, नवविवाहिता स्त्री, कुलाङ्गना, नवप्रसूता वा, वादिनः कुलापेक्षयोच्चकुलस्य स्त्री, इत्यादिस्थितिषु प्रतिवादी स्वयं न्यायालये समुपस्थातुं समर्थो नासीत्[4] । पशूनां चारणकाले अन्नोत्पादनकाले वा तत्कर्मणि संल्लग्नः कश्चन पशुपालकः कृषको वा कलायां संल्लग्नः कश्चन कलाकारः युद्धे सुरक्षायां वा प्रवृत्तः आसन् । एवंविधाः प्रतिवादिनः स्वकार्यं विदधातुं स्वप्रतिनिधीन् प्रेषयितुम् अशक्नुवन् । ते प्रतिनिधयोऽपि प्रतिवादिन एव अमन्यन्त ।

---

1. नारदीयमनु. १।४० ।
2. नारद. १; १५४-५५; कात्या. ९६-१००; शुक्र. ४।५।१०३-१०६ ।
3. स्मृ. चं. २पृ. २२; स. वि. पृ. ८०।

**अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेः ।**
**इतरोऽप्यभियुक्तेन प्रेरितोऽधिकृतो मतः ॥**
**समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणी ।**
**प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥**
**(कात्या. ८९-९०)**

4. तुलनीयम् Indian Civil Procedure Code, Section 132, Act 5, 1908. नारद. १।५३, तुलनीयम् Indian Soldier Litigation Act, 5, 1925.

**उत्तरम्**

तत्र बृहस्पतिः

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशेषितें ।
प्रतिज्ञार्थे स्थिरीभूते लेखयदुत्तरं ततः ॥
शालीनत्वाद्भयार्तो वा प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥
एकाहत्र्यहपञ्चाहसप्ताहं पक्षमेव वा ।
मासमृतुत्रयं वर्षं लभते शक्त्यपेक्षया ॥

( बृह. ३।१ २-४ )

उपादेयविशेषणोपादाने हेयविशेषणे ह्यनेन च पूर्वपक्षे विशिष्टत्वेन च ज्ञापिते सति प्रतिज्ञार्थे स्थिरे जाते उत्तरं लेखयेत् । एवं शोधितपत्रारूढे पूर्वपक्षे किं कर्त्तव्यमित्यत आह–

श्रुतस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।
ततोऽर्थी लेखयेत्सद्यः **प्रतिज्ञातार्थसाधनम्** ॥

( याज्ञ. २।७ )

श्रुतो भाषार्थो येन प्रत्यर्थिनाऽसौ श्रुतार्थः, तस्योत्तरं पूर्वपक्षादुत्तरत्र भवतीत्युत्तरं लेखनीयम्। अव्याख्यागम्यमप्रसिद्धपदप्रयोगेण दुःश्लिष्टविभक्तिसमासाद्याहाराभिधानेन वान्यदेशभाषाभिधानेन वा यद् व्याख्येयार्थं न भवति तत्सदुत्तरम्[1] । तच्चतुर्विधम् संप्रतिपत्तिः, मिथ्या, प्रत्यवस्कन्दनम्, पूर्वन्यायश्चेति । अत्र **बृहस्पतिः**

मिथ्यासंप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा ।
प्राङ्न्यायश्चोत्तराः प्रोक्तारश्चत्वारः शास्त्रवेदिभिः ॥ २।२ ॥
सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥

( कात्या., मिता. याज्ञ. २।७ )।

तत्र सत्योत्तरं यथा–"रूपकशतं मह्यं धारयति" इत्युक्ते 'सत्यं धारयामि' इति । यथाऽऽह–" साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता" इति । मिथ्योत्तरं तु नाहं धारयामीति । तथा च–

अभियुक्तोऽभियोगस्य यदि **कुर्यात्तु** निह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यहारतः ॥

( बृह. ३।१७ )

---

1. पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ।

**मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः।**
**अज्ञातश्चास्मि तत्काल इति मिथ्या चतुर्विधा ॥**

**(व्यासः, कृत्य. पृ. ६८)**

मिथ्योत्तरकारणोत्तरयोरेकस्मिन्नर्थे सङ्कीर्णयोः कारणोत्तरमाश्रित्य निर्णेतव्यम्। तद्यथा—मदीया गौरमुष्मिन् काले नष्टा सा चैतस्य गृहे तिष्ठतीत्युक्ते, मिथ्यैतद्वदसि तत्कालात्प्रागपि च मद्गृहे स्थिता जातेत्युत्तरम्। सत्यमिथ्याकारणोत्तराणामपि सङ्करे कारणोत्तरमेव ग्राह्यम्। मिथ्याकारणयोर्वापीति वापिशब्दाभ्यां त्रिभिरपि सङ्करे कारणमेव ग्राह्यम् इति दर्शितत्वात्। उदाहरणं यथा—नवत्यभियोगे मिथ्यैतत् षष्ठिरेव पणा गृहीतास्तत्रापि त्रिंशत्परिशोधिताः त्रिंशच्च धारयामीति। यत्प्रभूतार्थ-विषयमिति यदि पुनरेकं प्रभूतार्थविषयमुत्तरं तदा उपादाय निर्णेतव्यम्। उदाहरणं यथा—शताभियोगे अशीतिर्मिथ्या विंशतिमात्रं गृहीतं तच्च दत्तमित्यत्र मिथ्यांशस्य प्रभूतार्थविषयत्वात् मित्थोत्तरमेव ग्राह्यम्। पूर्ववादिन एव क्रिया देया। यत्र वा स्यात् क्रियाफलम्। यत्र मिथ्याकारणादिसंकरे व्यक्तं निर्णयकारणं पत्रादिकमस्ति, तदा उपादाय निर्णेतव्यम्। उदाहरणं यथा—शताभियोगे अशीतिर्मिथ्या विंशतिमात्रं गृहीतं तच्च दत्तमित्यत्र मिथ्यांशस्य प्रभूतार्थविषयत्वात् मिथ्योत्तरमेव ग्राह्यम्। पूर्ववादिन एव क्रिया देया। यत्र वा स्यात् क्रियाफलम्। यत्र मिथ्याकारणादिसंकरे व्यक्तं निर्णयकारणं पत्रादिकमस्ति, तदुत्तरं ग्राह्यमप्रभूतार्थमपि। अतोऽन्यथा सङ्कर-मुत्तरं भवति।

प्रथममेकं कारणमभिधाय ततोऽपरं गुरुतरं यदि कारणं वक्ति तदोत्तरं तत्र प्रमाणमनुसरणीयम्, न पूर्वोक्तम्—

**प्रथमं कारणं पूर्वमन्यद्गुरुतरं यदि।**
**प्रतिवाच्यगतं ब्रूयात्साध्यमेतद् विनेतरम् ॥**

**(कात्या. १९१)**

**प्रत्युक्तादन्यदव्यक्तं न्यूनाधिकमसङ्गतम्।**
**अव्याप्यसारं सन्दिग्धं प्रतिपक्षं न लेखयेत् ॥**

**(बृह. ३।२८)**

**यद् व्यस्तपदमव्यापि निगूढार्थं तथाकुलम्।**
**व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥**
**पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्।**
**मिथ्या चैवेकदेशे च सङ्करस्तदनन्तरम् ॥**
**न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।**
**न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥**

**(कात्या. १७५, १८९-१९०)**

प्रत्यवस्कन्दनं नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहणे न लब्धम्। यथाह नारदादयः–

श्रुताभियोगं प्रत्यर्थी यदि तत्त्वं प्रपद्यते।
सा तु संप्रतिपत्तिस्तु शास्त्रविद्भिरुदाहृता॥

(बृह. ३।१८-१९)

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तत्तथा।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतम्॥

(नारद, व्य. नि. ५१)

प्राङ्न्यायोत्तरं[1] तु यत्राभियुक्त एवं ब्रूयात् "अस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण पराश्रितः"। बृहस्पतिना

आचारेणावसन्नोऽपि पुनर्लेखयते यदि।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायःसम्यगुच्यते।
तथ्ये तथ्यं प्रयुञ्जीत मिथ्यां मिथ्यां च लेखयेत्।
कारणं कारणोपेते प्राङ्न्याये तूभयं तथा॥
भयदोषोद्भवा मिथ्या गर्हिता शास्त्रवेदिभिः।
सत्या संप्रतिपत्तिस्तु धर्म्या सा परिकीर्तिता॥
प्राङ्न्यायकारणं तथ्यं श्लाघ्यं सद्भिरुदाहृतम्।
विपरीतधर्म्यं स्यात् प्रत्यर्थी हानिमाप्नुयात्॥ ३।२१-२४॥

एवमुत्तरे पत्रे निवेशिते साध्यसिद्धेः साधनायत्तत्वात्साधननिर्देशं कः कुर्यात्– "ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्।" उत्तराभिधाने कालविलम्बनमप्यङ्गीकृतमिति गम्यते। अर्थी प्रतिज्ञातार्थसाधनं लेखयेदित्युक्तम्, अतश्च प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेत्। मिथ्योत्तरे तु पूर्ववद्येवार्थी स एव साधनं निर्दिशेत्। ततोऽर्थी लेखयेदिति वदता अर्थ्येव लेखयेन्नान्यः। अतश्च संप्रतिपत्युत्तरे साध्याभावेन भाषोत्तरत्वादिनोर्द्वयोरप्यर्थित्वाभावात्साधननिर्देश एव नास्तीति तावतैव व्यवहारः परिसमाप्यत इति गम्यते। एतदेव हारीतेन स्पष्टमुक्तम्–

---

1. विभावयामिकुलिकैः साक्षिभिर्लिखितेन वा।
जितैश्च मयायं प्राङ्न्यायस्त्रिप्रकारकः॥ कात्या. स्मृ. चं. २पृ. ४३॥ कुलिकैरिति प्रकृतव्यवहारद्रष्टृणामुपलक्षणार्थम् (व्य. प्र. पृ. ६१)। व्यवहारनिर्णयः पृ. ५३)–"ऐन्द्रस्थाने जितस्य प्राङ्न्यायविधिसिद्धौ जयपत्रेणाहं भावयामीत्येकःकुलव्यवहारे च जयपत्राभावात् कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः–इति वचनात् तैरेव व्यवहारदर्शिभिर्भावयामीति द्वितीयः। राज्ञा धर्मासनस्थेन यच्छ्रुतं तत्त्वदर्शिना। नान्यः साक्षी भवेत् तत्र मुक्त्वा राजानमीश्वरम्॥–इति वचनात् साक्ष्यभावात्तेन राज्ञा भावयामीति तृतीयः"।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

कालप्रतीक्षणदर्शनेऽपवादम्–

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥
(याज्ञ. २।१२)

तथा[1] च–

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा।
न्यासे याचितके दत्ते तथैव क्रयविक्रये।
कन्याया दूषणे स्तेये कलहे साहसे निधौ।
उपधौ कूटसाक्ष्ये च सद्य एव विवादयेत्।
व्यपैति गौरवं यत्र विनाशे त्याग एव वा।
काले तत्र न कुर्वीत कार्यमात्यन्तिकं हि तत् ॥
(कात्या. १५०, १५१, १४९)

प्रथममेकं कारणमभिधाय ततोऽपरं गुरुतरं यदि कारणं वक्ति तदोत्तरं तत्र प्रमाणमनुसरणीयम्, न पूर्वोक्तम्। मिथ्याकारणयोरुभयत्र क्रिया भवेत्। न च तद्युक्तम्, उभयोः साध्याभावात्। प्राङ्न्यायकारणयोरेकस्य क्रियाद्वयं विरुध्यते एक साध्यत्वात्[2]। तथा च बृहस्पतिकात्यायनौ–

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः।
प्रत्यर्थी दापनीयः स्यात्सामादिभिरुपक्रमैः ॥
प्रियपूर्वं वचः साम भेदो वस्तूपदर्शनम्।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥
उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥
उन्मत्तमत्तनिर्धूता महापातकदूषिताः।
जडातिवृद्धा बालाश्च विज्ञेयास्ते निरुत्तराः ॥
(बृह. ३।७, ८; २।४; १।१७३)

उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिश्चये।
अनुक्तं तत्र यो ब्रूयात्तदर्थात्स तु हीयते ॥

---

1. बृह. ३।९; कात्या. १५; नारद. १।४५।
2. बृह. ३।२८; कात्या. १७५, १८९-१९०।

मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं चापि तद्ग्राह्यमुभयोरपि ॥

( कात्या. २०६, १९३ )

भाषालेखनसमये मोहात् शाठ्याद्वा यन्नोक्तं तद्विचारकालेऽपि यदि केनचित् प्रकारेण व्यक्तं भवति तदा तदपि भाषान्तर्गतं कार्यम् । एवमुत्तरेऽपि बोध्यम् ।

एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानामुत्तरवदवभासमानानामुत्तराभासत्वमर्थसिद्धम् । क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानां चेच्छया भवति । यत्र एनुरुभयोः सङ्करे तत्र यस्य प्रभूतार्थविषयत्वं तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्तितव्यः, पश्चादल्पविषयोत्तरोपादानेन च व्यवहारो द्रष्टव्यः । संप्रतिपत्तौ क्रियाभावात् । शेषापेक्षया ऐच्छिकक्रमं भवति । तत्र प्रभूतार्थं यथा–"अनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानि" । अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः । एवं मिथ्याप्राङ्न्यायसङ्करे च योजनीयम् । इत्यलम्[1] ।

**प्रतिनिधिः**

तत्र कात्यायनः

अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेः ।
इतरोऽप्यभियुक्तेन प्रेरितोऽविकृतो मतः ॥
समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणि ।
प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥ ८९-९० ॥
ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येष्वसह्यवादेषु प्रतिवादी न दीयते ॥
मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दाप्यः स्यात्कर्त्ता तु विवदेत्स्वयम् ॥ ९३, ९५ ॥
अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थं विवदते तयोर्जयपराजयौ ॥

( कात्या. ९२; नार. २।२२ )

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

( नारदाकात्यायनौ–२।२३ )

---

1. याज्ञ. २।६ अत्र मिताक्षरा ।

दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्याः स्युः यः स्वतोऽन्य स दण्डभाक् ॥
(कात्या. ९२)

बृहस्पतिः

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥ १।१४८ ॥
ऋत्विग्वादे नियुक्तश्च समौ संपरिकल्पितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥ ३।१० ॥
पूर्वोत्तरेऽभिलिखिते यत्र वादी प्रमीयते ।
प्रत्यर्थी वा सुतस्ताभ्यां व्यवहारं विशोधयेत् ॥
अनिर्णीते विवादे तु विप्रलब्धो भवेन्नरः ।
जयदानं दमं न स्यात्तस्मात्कार्यं विनिर्णयेत् ॥ ३।३१-३२ ॥

**प्रत्याकलितम्**

उत्तराभिधानानन्तरं सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादिति परामर्शलक्षणस्य प्रत्याकलितस्य याज्ञवल्क्येन व्यवहारपादत्वेनानभिधानाद् व्यवहर्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमिति स्थितम्[1] । अत्र नारदः

वादिभ्यां लिखिताच्छेद्यं यत्पुनर्वादिना स्मृतम् ।
तत्प्रत्याकलितं नाम स्वपादे तस्य लिख्यते ॥ २।२१ ॥

बाह्यैः स्वरादिलिङ्गैरित्यभिधानादेवावधारितव्यापारैः अर्थिप्रत्यर्थिनामन्तर्गतमभिप्रायं निरूपयेत् । स्वरो गद्गदादिः, वर्णः स्वाभाविकवर्णादन्यादृशो मुखकालिमादिः, इङ्गितमधोनिरीक्षणादिः, आकारो देहभवस्वेदरोमाञ्चादिः, चेष्टा हस्तास्फालनादिः । अकारादिभिः पूर्वोक्तैः गत्या स्खलत्पादादिकया अन्तर्गतमनोबुद्धिरूपेण परिणतमवधार्यते[2] । दुष्टलक्षणमाह याज्ञवल्क्यः

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥
स्वभावाद् विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये वा दुष्टः परिकीर्तितः ॥
(याज्ञ. २।१३-१५)

---

1. याज्ञ. २।८ मिता।
2. मनु. ८।२५-२६।

तथा च–

आकारेङ्गितचेष्टाभिस्तस्य भावं विचारयेत् ।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्शनम् ॥
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ।
स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः ॥ कात्या. ३८५-३८६ ॥
आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येव भावन्तर्गतं नृणाम् ॥
(रामा. युद्ध. १७।६४)

कालिकापुराणेऽपि–

वाचं न वदति त्रस्तः स्वेदोऽथ वा न तु ।
विकारो वाऽन्यथा गात्रे मतिर्वा स्यान्न चान्यथा ॥

**हीनः**

यश्च मम हस्तात्सुवर्णस्य पलमनेन गृहीतमिति निर्दिश्य मत्पुत्रहस्ताद्गृहीतमित्येवमादिना यः पुनरपसरति । यश्च सम्यक्प्रतिज्ञातमर्थं कस्मात्त्वया रात्रावसाक्षिकं दत्तमित्येवमादि प्राड्विवाकेन पृष्टः सन्न समाधत्ते । यश्च संभाषणानर्हनिर्जनादिदेशे साक्षिभिः सहान्योन्यं संभाषते । यश्च भाषार्थस्थिरीकरणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्नं नेच्छेत् । यश्च ब्रूहीत्युक्तो न किञ्चिद्ब्रवीति । उक्तं साध्यं न प्रमाणेन प्रतिपादयति । पूर्वं साधनम्, अपरं साध्यम्, तद्यो न जानाति । असाधनमेव साधनत्वेन निर्दिशति । असाध्यमेव मानेन 'शशश्रृङ्गकृतं धनुर्ज्ञेयम्' इत्यादि साध्यत्वेन निर्दिशति स तस्मात्साध्यादर्थाद्धीयते ।

साक्षिणो मम विद्यन्त इत्युक्त्वा तन्निर्दिशेत्युक्तो यो न निर्दिशति तं पूर्वोक्तैरेभिः कारणैर्धर्मस्थः प्राड्विवाकः पराजितं कथयेत् । योऽर्थी सन् राजस्थाने निवेद्य भाषायां न ब्रूयात्तदा विषयगौरवापेक्षया वध्यो लघुनि विषये दण्ड्यश्च धर्मतःस्यात् । प्रत्यर्थी पुनर्यदि पक्षत्रयमध्ये न ब्रूयात्तदा धर्मत एव पराजितो न तु छलेन[1] ।

अधमर्णेनानङ्गीकृतमेव यः साधननिरपेक्षः साधयत्यासेधादिना स हीनो दण्ड्यश्च भवति । यश्च स्वयं संप्रतिपन्नं साधनेन वा साधितं याच्यमानो पलायेत, यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति 'सोऽपि हीनो दण्ड्यश्च स्मृतः' इति संबध्यते । 'अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः' इति प्रस्तुतत्वाद्धीन-

1. मनु. ८।५३-५८।

परिज्ञानमात्रमेव मा भूदिति 'दण्ड्य'ग्रहणम् । दण्ड्यस्यापि चापि 'शास्योऽप्यर्थान्न हीयत' इत्यर्थादहीनत्वदर्शनादत्र तन्मा भूदिति 'हीन' ग्रहणम्[1] । तथा[2] च **बृहस्पतिः**

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत् ।
त्रिशंद्रात्रात्त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥
आहूतः प्रपलायेत मौनी साक्षिपराजितः ।
सवाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥
प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥

अभियुक्तो न प्रत्यभियुञ्जीत अन्यत्र कलहसाहससामर्थ्यसमवायेभ्यः । न चाभियुक्तेऽभियोगोऽस्ति[3] तथा च[4] –

उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दातुमर्हति ॥ वसिष्ठ. ॥
योऽभियुक्तः परैतः स्यात्तस्य रिक्थी तमुद्धरेत् । याज्ञ. २।२९ ॥
प्रवर्तयित्वा वादं तु वादिनौ तु मृतौ यदि ।
तत्पुत्रो विवदेत् तज्ज्ञो ह्यन्यथा तु निवर्तयेत ॥
(शुक्र. ४।५।१२०)

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलयी च हीनः पञ्चविधःस्मृतः ॥
(नारद. २।३३)

निवेदितस्याकथनमनुपस्थानमेव च ।
पक्षार्थं दूष्य मौनं च हीयमानस्य लक्षणम् ॥
महापापोपपापाभ्यां पातकेनाथ संसदि ।
योऽभिशस्तस्तत्क्षमते संयुक्तं तं विदुर्जनाः ॥
तस्माद्यत्नेन कर्त्तव्यं बुधेनात्मविशोधनम् ।
यद्यद्गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत् ॥
महापापाभिशस्तो यः पातकात्तर्तुमिच्छति ।
पूर्वमङ्गीकृतं तेन जितोऽसौ दण्डमर्हति ॥
(बृह. २।३३-३९)

---

1. याज्ञ. २।१६।
2. नारद. ३।१६५; २।३२-३३, २४; १।६६, ५८-५९; कात्यायन. १९६-१९७; नारद. २।२५।
3. अर्थ. ३।१।
4. स्मृ. च. २ पृ. ४६; परा. मा. ३ पृ. ८१; व्यं. प्र. पृ. ५६; सं. वि. पृ. ९९।

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् ।
नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥
देवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागभावेन न भवेत्स पराजितः ॥
पूर्वोत्तरे निविष्टे तु विचारे संप्रवर्तिते ।
प्रथमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

(३।४०-४२)

**सन्धिः**

तत्र बृहस्पतिः (३।४३-४५, ४७-४९)

पूर्वोत्तरेऽभिलिखिते प्रकान्ते कार्यनिर्णये ।
द्वयो सन्तप्तयोःसन्धिः स्यादयः खण्डयोरिव ॥
साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्यातां तौ विचक्षणौ ॥
प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥
धर्मार्थोपग्रहः कीर्तिः भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं विनिवर्तते ॥
निग्रहानुग्रहं दण्डं धर्मं प्राप्य यशोऽयशः ।
विग्रहाज्जायते नृणां पुनर्द्वेषस्तथैव च ॥
तस्मात् कुलगणाध्यक्षा धर्मज्ञाः समदृष्टयः ।
अद्वेषलोभाद्यद्ब्रूयुस्तत्कर्त्तव्यं विजानता ॥

साक्षिसभ्यविकल्प इति । उभयोरप्यर्थिप्रत्यर्थिनोर्यत्र साक्षिसभ्यविकल्पो भवेत् किमेते वक्ष्यन्तीति, तत्र दोलायमाने कार्यनिर्णये कथं भविष्यतीति सन्दिग्धे यौ सन्धिं कुर्यातां तौ विचक्षणावित्यर्थः । समतेति । उभयोरप्यर्थिप्रत्यर्थिनोः पक्षे सभ्यानां प्रमाणसामान्यं यत्र प्रतिभाति । यत्र च भेदः शास्त्रचरित्रयोः । शास्त्रे शास्त्रान्तरेण विप्रतिपत्तिः, व्यवहारे च व्यवहारान्तरेण विप्रतिपत्तिस्तत्र राजाज्ञया सन्धिः प्रशस्यते । निग्रहानुग्रहमिति । अर्थिप्रत्यर्थिनो विग्रहे सत्यवस्थितानि निग्रहादीनि भवन्तीत्यतः सन्धिः श्रेयानिति[1] ।

द्विगणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया न तु विवादस्पदीभूतद्रव्यापेक्षया । अद्रव्यविवादेष्वव्याप्तिः । तथा च कात्यायनः

---

1. स्मृ. च. २ पृ. ४९, सं. वि. १०४; परा. मां. ३ पृ. ८४-८५; व्यं. प्र. पृ. ७७।

आवेद्य प्रगृहीतार्थं प्रथमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्ड्याः स्युर्विप्रलम्भान्नृपस्य तु ॥ २१० ॥

**क्रियादानम्**

नाहमस्मै धारयामीति धनविषयेऽपह्नवानमधमर्णं करणेन लेख्यसाक्षि-दिव्यादिना प्रतिपादितमर्थमुत्तमर्णस्य राजा प्रदापयेत् । उत्तमर्णस्य धनं देहीति सभायां प्राड्विवाकेनोक्तस्याधमर्णस्य नास्मै धारयामित्यपलापे सति अभियोक्ताऽर्थी देश्यं धनप्रयोगदेशवर्तिसाक्षिणं निर्दिशेत् । प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारण-ऋणनिर्यात्प्राक्साक्ष्युपन्यासः । अन्यद्वा करणं पत्रादि कथयेत्[1] ।

यदा राज्ञा प्राड्विवाकेन च 'संसदि' व्यवहाराधिकरणादिदेशे ह्युत्तमर्णवचन-मित्युक्तस्यापह्नवोऽधमर्णस्य भवति तदा 'अभियोक्ता' धनस्य प्रयोक्ता उत्तमर्णो 'दिशेद्देशं' साक्षिणो प्रमाणभूतान् निर्दिशेत् "अन्यद्वा कारणं" लेख्यादि निर्दिशेत् । व्यवहाराधिकरणादिदेशे देह्युत्तमर्णाय धनमिति उक्तस्य अपह्नवो अपलापः अधमर्णेन भवति तदाभियोक्ता धनस्य प्रयोक्ता उत्तमर्णो दिशेद्देशं साक्षिणं प्रमाणभूतं निर्दिशेत् । तथा च **नारदः**

**द्वयोर्विवदयोरर्थे द्वयोः सत्सु च साक्षिषु ।**
**पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः ॥ ३।१६३ ॥**
**आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद् भवेत् ।**
**विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥**
**कारणप्रतिपत्तौ तु पूर्वपक्षे विरोधिते ।**
**अभियुक्तेन वै भाव्यं विज्ञेयं पूर्वपक्षवत् ॥ १६४; २।३१ ॥**

**व्यासः**

**प्राङ्न्यायजयपत्रेण प्राड्विवाकादिभिस्तथा ।**
**सत्यवादी समाप्नोति पद्यते न निवेदितम् ॥**
**प्राङ्न्याये कारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।**
**मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न साधयेत् ॥**
**(व्य. मि. ६१)**

**कात्यायनः**

**कारणात्पूर्वपक्षोऽपि ह्युत्तरं प्रतिपद्यते ।**
**अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥ २११ ॥**

---

1. मनु. ८।५१-५२।

बृहस्पतिः

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
कारयित्वोत्तरं सम्यग्दातव्यैकस्य वादिनः ॥
प्रतिज्ञां साधयेद्वादी प्रत्यर्थी कारणे तथा ।
प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ॥ ४।८ ॥

याज्ञवल्क्यः

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ २।१७ ॥

# अध्यायः १३

# न्यायिकप्रक्रिया (२)

## क्रियापादः

**प्रमाणविषयः**

प्रतिज्ञातार्थसाधनमित्यपेक्षितमाह–

**प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।**
**एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥**

(याज्ञ. २।२२)

प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाणम् । तच्च द्विविधम्–मानुषं दैविकञ्च । तत्र मानुषं प्रमाणं त्रिविधम्–लिखितम्, भुक्तिः, साक्षिणश्चेति । तत्र लिखितं द्विविधम्–शासनं चीरकञ्चेति ।

ननु लिखितस्य साक्षिणां च शब्दाभिव्यक्तिद्वारेण शब्देऽन्तर्भावाद्युक्तं प्रामाण्यम् । भुक्तेस्तु कथं प्रामाण्यम्? उच्यते–भुक्तिरपि कैश्चिद्विशेषणैर्युक्ता स्वत्वहेतुभूत-क्रयादिकमव्यभिचारादनुमापयन्त्यनुपपद्यमाना वा कल्पयन्तीत्यनुमानेऽर्थापत्तौ चान्त-र्भवतीति प्रमाणमेव । एषां लिखितादीनां त्रयाणामन्यतमस्यापि अभावे दिव्यानां वक्ष्यमाणस्वरूपभेदानामन्यतमं जातिदेशकालद्रव्याद्यपेक्षया प्रमाणमुच्यते । मानुषा-भाव एव दिव्यस्य प्रामाण्यमस्मादेव वचनादवगम्यते; दिव्यस्य स्वरूपप्रामाण्ययो-रागमगम्यत्वात् । अतश्च यत्र परस्परविवादेन युगपदधर्माधिकारिणं प्राप्तयोरेको मानुषीं क्रियामपरस्तु दैवीमवलम्बते तत्र मानुष्येव ग्राह्या । यथाऽऽह **कात्यायनः**

**यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।**
**मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृपः ॥**

यत्रापि प्रधानैकदेशसाधनं मानुषं संभवति तत्रापि न दैवमाश्रयणीयम् । यथा 'रूपकशतमनया वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यभियोगाह्नवे'–ग्रहणे साक्षिणः सन्ति नो संख्यायां वृद्धिविशेषे वा, अतो दिव्येन भावयामी'त्युक्ते तत्रैकदेशविभावित-न्यायेनापि संख्यावृद्धिविशेषसिद्धिर्न दिव्यस्यावकाशः । उक्तञ्च–

**अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।**
**न्यासस्यापह्नवे चैव दिव्या संभवति क्रिया ॥ नारद ॥**

तदपि मानुषसंभाव एव। तस्मान्मानुषाभाव एव दिव्येन निर्णय इत्यौत्सर्गिकम् । अस्य चापवादो दृश्यते–

प्रकान्ते साहसे वादे पारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥

तथा लेख्यादीनामपि क्वचिन्नियमो दृश्यते । अत्र बृहस्पतिः

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥ ४।५ ।
द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना ऋषिभिस्तत्त्ववेदिभिः ॥
साक्षिलेख्यानुमानञ्च मानुषी त्रिविधा क्रिया ।
घटाद्या धर्मजान्ता च दैविकी नवधा स्मृता ॥
साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् ।
अनुमानं च द्विविधं नवधा दैविकी क्रिया ॥ ४।५,६ ॥
ऋणादिषु तु कार्येषु कल्पयेन्मानुषीं क्रियाम् । ४।१० ।
लिखिते साक्षिवादे तु सन्दिग्धं जायते यदा ।
अनुमानेन संभ्रान्ते तत्र दिव्यं विशोधनम् ॥
नृपद्रोहे साहसे च कल्पयेद्दैविकीम् क्रियाम् ।
मणिमुक्तानाणकानां कूटकृन्न्यासहारकः ॥
हिंसकोऽन्यङ्गनासेवी परीक्ष्याः शपथैः सदा । ४।१४, २१ ।
दिवा कृते कार्यविधौ ग्रामेषु नगरेषु च ।
संभवे साक्षिणां चैव न दिव्या भवति क्रिया ॥
( बृह. ७।१ ; नारद. २।२९ )

कात्यायनः

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।
तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् ॥
सारभूतं पदं मुक्त्वा असाराणि बहून्यपि ।
संसाधयेत्क्रियां यां तु तां जह्यात्सारवर्जिताम् ॥
पक्षद्वयं साधयन्तीं तां जह्याद्दूरतः क्रियाम् ।
क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते ॥
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥ २१३, २२२ ॥
साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः ।
लेशोद्देशस्तु युक्तिः स्याद्दिव्यानपीह विषादयः ॥
ऋणं लेख्यं साक्षिणो वा युक्तिलेशभूयोऽपि च ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥ २१४, २३३ ॥

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥
यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा न्याय्या न तु पूर्वापि दैविकीं वदतां नृणाम् ॥
क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥ २१८, २१९, २२३ ॥
वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।
दत्वादत्ते तथादत्ते स्वामिनां निर्णये सति ॥
विक्रयदानसम्बन्धे कृत्वा धनमनिच्छति ।
द्यूते समाह्वये चैव विवादे समुपस्थिते ॥
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ।
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ॥
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ।
प्रकान्ते साहसे वादे पारुष्ये दण्डवाचिके ॥
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥
( २३९, २२७, २२४, २२५, २२६, ५२९ )

पतनं क्रियते यत्र अङ्गच्छेदो वधोऽपि वा ।
दिव्यं चेद्देशयेद्वादी सम्यग्दृष्टैः प्रपादयेत् ॥
गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥
अलेखेऽसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥ २३०, २२४ ॥
समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ।
उत्तमेषु तु सर्वेषु साहसेषु विचारयेत् ॥
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै प्रभुः ॥ २३२, २३१ ॥
यत्र स्यात्सोपधं लेख्यं तद्राज्ञे श्रावितं यदि ।
दिव्यं शोधयेत्तत्र राजा धर्मासनस्थितः ॥ २३८ ॥
प्रमाणानि प्रमाणज्ञैः पातनीयानि यत्नतः ।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥
( वीरमित्रोदः ११५; नारद. ३।६८ )

प्राप्तावसरं यदुपन्यस्तं भवति तत्प्रदुष्टसाक्षिकं परीक्ष्य परिहरेत् । यत्पुनरतिक्रान्तस्वकीयावसरं तद्भूतमप्युपन्यस्तं वादिप्रमात्तस्य ग्रन्थिच्छुटितद्रव्यमिव तदेवापुण्यैरेव तद्भूतं प्रणष्टम्[1] । दिव्यप्रमाणविषये **नारदः**

**अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे ।**
**न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥**
**यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।**
**तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥**
**स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।**
**एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥ २।३०; ३।२४७, २४२ ॥**

अरण्ये वनमध्ये पत्तने वा निर्जनप्रदेशे रात्रौ च मानुषासंभवे एकान्ते गृहमध्ये वा तथा साहसे व्यवहारे तथा न्यासापह्नवे एतेषु प्रदेशेषु अर्थेषु च मानुषीक्रियाभावे दिव्या क्रिया संभवति । यदा स्त्रीणां शीले चरित्रेऽभियोगो भवति; तथा स्तेयसाहसाभियोगो भवति; तथा साहसे व्यवहारे तथा न्यासापह्नवे मिथ्यासु एवंविधेषु महाभियोगेषु एष महादिव्यविधिर्दृष्टः शपथादिरिति[2] । अत्र **पितामहः**

**स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।**
**साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत् ॥**

**( स्मृ. चं. पृ. ५३ )**

तदपि लिखितसाक्ष्यादिसंभवे दिव्यानि परिवर्जयेत् । 'ननु विवादान्तरेष्वपि दिव्यानामवकाश एव। ऋणादिषु विवादेषूक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी दण्डमुपगम्यावष्टम्भेन दिव्यमालम्बते, तदा दिव्यमपि भवति । साक्षिणामाशये दोषसम्भवाद्दिव्यस्य निर्दोषत्वात्' स्थावरेषु विवादेषु, पुनः प्रत्यर्थिना दण्डावष्टम्भेन दिव्यालम्बने कृते लेख्यसाक्ष्यादिदृष्टप्रमाणसम्भवे न दिव्यं ग्राह्यम्'। न पुनरस्यान्तिक-' दिव्यनिराकरणम् । तथात्वे लिखितसाक्ष्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्[3] ।

## साक्षी

**साक्षिणः**

चक्षुर्ग्राह्ये साक्षाद्दर्शनात्, श्रोत्रग्राह्ये श्रवणात्साक्ष्यं सिद्ध्यति । तत्र साक्षी सत्यं

---

1. नारद. १।६।
2. प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे ।
   परेभ्यश्च तथा चान्ये तं वादं शपथैर्नयेत् ॥ व्यासः ॥
   यन्नामगोत्रैर्यल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत् ।
   अगृहीते धने तत्र कार्यो दिव्येन निर्णयः ॥ प्रजापतिः, व्य. नि. ९१ ॥
3. व्य. नि. पृ. १९२।

वदन्धर्मार्थाभ्यां न मुच्यते । सत्यवचने धर्मोपपत्तेर्दण्डाभावेऽर्थहान्यभावात्[1] । श्वेताश्वतरोपनिषदि साक्षी इति प्रयुक्तः—एकः देवः सर्वभूतेषु गूढः..साक्षी चेता केवलो निर्गुणश्च (६।२) । पाणिनिना 'साक्षाद्द्रष्टरि संज्ञायाम् (५।२।९१) इति साक्षी शब्दसाधुत्वं प्रस्तुतम् । विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था, इति गौतमः (१३।१) । असंप्रतिपत्तौ तु साक्षिणः प्रमाणमिति कौटल्यः (३।१) । समक्षदर्शनात्साक्षी श्रवणाद्वा[2] । समक्षदर्शनात् साक्षी श्रवणाच्चेति धारणात्[3] । श्रुतदृष्टानुभूतार्थात् साक्षिभ्यो व्यक्तिदर्शनम्[4] । **कात्यायनश्च**

**अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु यदभवेत् ।**
**तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥**
**(व्य. प्र. १०६)**

समक्षदर्शनात् साक्षादनुभवाच्छ्रवणाच्च समक्षशब्दानुषङ्गः कर्त्तव्यः । यत् कुतश्चिदेकेन श्रूयते ततोऽन्येन तत्परम्पराश्रुतं तेन परम्पराश्रावी न साक्षी[5] । चक्षुषा श्रोत्रेण वा येन विवादविषयः पूर्वं प्रमितः स तत्र साक्षीत्यर्थः । तेन यो विवादविषयो येन प्रमितः स तत्र सक्षित्वेनाकुतोऽपि साक्षी भवतीति सिद्धयति इतरथा वेतनादानादिषु विवादेषु लिखितादीनामसम्भवेन साक्ष्यमानप्रसङ्गः[6] ।

तत्र **बृहस्पतिः**

**लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।**
**यादृच्छश्चोत्तरश्चैव कार्यमध्यगतोऽपरः ॥**
**नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।**
**प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥**
**जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ।**
**निवासश्च विज्ञेयः साक्षी लिखितसंज्ञकः ॥**
**अर्थिक्रियां क्रियाभेदैस्तस्य कृत्वा ऋणादिके ।**
**प्रत्यक्षं लेख्यते यश्च लेखितः स उदाहृतः ॥**
**कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।**
**विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥**

1. मनु. ८।७४।
2. वि. ध. सू. ८।१३।
3. सभापर्व ६८।८४।
4. नारद. ४।१४७।
5. मेधा., मनु. ८।७४।
6. व्य. प्र. पृ. १०९।

आहूय यः कृतः साक्षी ऋणे न्यासक्रियादिके ।
स्मार्यते च मुहुर्यश्च स्मारितः सोऽभिधीयते ॥
विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्तितः ॥
अर्थिप्रत्यर्थिवचनं श्रृणुयात् प्रेषितस्तु यः ।
उभयोः संमतः साधुर्दूतकः स उदाहृतः ॥
क्रियमाणे तु कर्त्तव्ये यः कश्चित्स्वयमागतः ।
अस्ति साक्षित्वमस्माकमुक्तो यादृच्छिकस्तु सः ॥
यत्र साक्षी दिशं गच्छन्मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥

( ५।४-१३ पृ. ४९-५२ )

नारदकात्यायनौ[1]

अन्ये पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वभ्यन्तरो यश्च अर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥
एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां त्रिविधोऽकृत उच्यते ॥
लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः ॥

( नारद. ४।१४९-१५० )

लिखितः पत्रारूढः । स्मारितः कर्णकथितः । यदृच्छाभिज्ञोऽनुरोधतागतः कृतः । गूढो कुट्यन्तरितश्रोता । उत्तरसाक्षी साक्षिजल्पितश्रोता । एवं पञ्चविधः साक्षी कृतो भवेत् ।

मनौ ((८।७४) समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति । यस्तत्र संनिहितः कथञ्चिदनुभविता त्वं स्मर्त्तुमर्हस्यावयोरमुमर्थमित्येवमनुक्तेऽपि भवत्येव साक्षी । यथैतेनेदमकार्यं कृतमिदमस्मै वा धारयतीति लोकप्रसिद्ध्याऽगतम्, न तु प्रमाणतः । तत्र समक्षदर्शनं साक्षादनुभवनमर्थविषयमृणप्रयोगदण्डपारुष्यादि साक्षाद्दृष्टं चक्षुर्व्यापारेण वाक्पारुष्यं तथेदमस्मान्मया गृहीतमित्येवमादिविषयं शब्दश्रवणम् । यद्यपि दृशिरुपलब्धिमात्रवचनः तथापि वृत्तानुरोधितया श्रोत्रज्ञानं श्रवणं भेदेनोपात्तम् । एतावच्चात्र विवक्षितम् । प्रमाणतो येनानुभूतं स साक्षी । समक्षशब्दग्रहणं

1. नारद. ४।१५१-१५२; कात्या. ३५६-३५७।

प्रमाणमात्रोपलक्षणार्थम् । तेनानुमानादिनाऽप्यनुभूतमनुभूतमेव । अत आप्तागमाच्छ्रुतम् प्रत्यक्षमपि प्रमाणम् । उत्तरस्तु श्लोकार्धोऽनुवाद एव । सत्यवचनस्य विहितत्वात्, असत्यवादिनो धर्मार्थहानेश्च प्रमाणान्तरावगतत्वादिति मेधातिथिः ।

तथा[1] च कात्यायनः

**लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।**
**नृपे पश्यति कार्यं साक्षिणः समुदाहृतः ॥ ३५५ ॥**
**अशक्य आगमो यत्र विदेशप्रतिवादिनाम् ।**
**त्रैविद्यप्रहितस्तत्र लेख्यं साक्ष्यं प्रवादयेत् ॥ ३५२ ॥**

धनार्थिनोत्तमर्णेन राजपुरुषापकर्षं कृताह्वानः प्राड्विवाकेन पृष्टः सन्यदा धारयामीत्यपह्नवानो भवति तदा नृपत्यधिकृतब्राह्मणसमक्षं त्र्यवरैः साक्षिभिस्त्र्ययोऽवरान्यूना येषां वैरर्थिना भावनी च (मनु. ८।६०)।

साक्षिसङ्ख्याविषये विमर्शः[2] । "नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा । उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचनः" इति बृहस्पतिः (स्मृ. चं. २ पृ. ७६)। उभाविति लिखितगूढसाक्षिविषयम् (परा. मा. ३ पृ. ९५; व्य. प्र. ११२) । अन्ये त्वसुलुब्धोऽप्येको न साक्षी किं पुनर्लब्ध इत्येवाचक्षते । तथा च द्वयोरभ्यनुज्ञानं भवति । मनुवचनम्–

**एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योऽपि न स्त्रियः ।**

अत्र कुल्लूकभट्टपक्षः । एकोऽलुब्ध इत्यत्राकारप्रश्लेषो द्रष्टव्यः । एकोऽपि साक्षी लोभादिरहितः स्यात् । अतएव व्यासः–"शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् । प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः" । मेधातिथिगोविन्दराजाभ्याम् "एको लुब्धस्त्वसाक्षी स्यात्" इति पठितं व्याख्यातञ्च–लोभात्मक एकः साक्षी न भवति । एवञ्चालुब्धो गुणवान् कस्यांचिदवस्थायामेकोऽपि भवतीति । स्त्रियः पुनरात्मशौचादियुक्ता बह्व्योऽप्यस्थिरबुद्धित्वादृणादानाद्यैः पर्यालोचितव्यवहारे साक्षिण्यो न भवन्ति । अपर्यालोचिते तु स्तेयवाग्दण्डपारुष्यादौ "स्त्रियाप्यसंभवे कार्यम्" इति साक्षित्वमुक्तम् । अन्येऽपि ये स्तेयादिदोषैर्व्याप्तास्तेऽपि पर्यालोचितव्यवहारे साक्षिणो न स्युः ।

"उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्" इति याज्ञवल्क्यः (२।७२) । अपि शब्दबलाद्द्वावपि । यद्यपि 'श्रौतस्मार्तक्रियापराः"(२।६९) इति त्र्यवराणामपि धर्मवित्त्वं

---

1. मनु. ८।६७।
2. Best, Evidence, 12th ed. 1922, P. 515.
Indian Evidence Act (1 of 1872) Section 134.
वि. ध. सू. ८।१२; कात्या. ३४०-३४१; अपरार्कः पृ. ६७५,६७७; स्मृ. चं. २ पृ. ९२; व्य. प्र. पृ. ३३१; कात्या. ३५२; गौ. १३।२; मनु. ८।६०; याज्ञ. २।६९; नारद. ४।१५३।

समानम्, तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वं भवति। एकस्य द्वयोर्वोभयानुमत्यैव साक्षित्वं भवतीत्यर्थवत् 'त्र्यवर'ग्रहणम्। धनार्थिनोत्तमर्णेन राजपुरुषापकर्षं कृताह्वानः प्राड्विवाकेन पृष्टः सन्यदा न धारयामीत्यपह्नवानो भवति तदा नृपत्यधिकृतब्राह्मणसमक्षं त्र्यवरैः साक्षिभिस्त्रयोऽवरा न्यूना येषां तैरर्थिना भावनीयः[1]।

सुदीर्घेणापि कालेन लिखितस्य साक्षित्वम्, तेन च लिपिसमये तेनात्मनैव स्वनामलेख्यम्। यथा कस्मिंश्चिद्देशे साक्षिणः स्वहस्तेन मतमारोपयिष्यन्ति इति। लेखकेन विलिखिते आत्मनैव लिखेदत्राहं साक्षी देवदत्त इति। न चेल्लिपिज्ञस्तदान्येन लेखयेत्। तस्य कालान्तरं निरूपयतश्चिह्नाय भवति[2]।

साक्षियोग्यताऽप्यवधेया। बहवः स्युरनिन्दिताः स्वकर्मसु प्रात्ययिका राज्ञां निष्पीत्यनभितापाश्चान्यतरस्मिन्[3]। प्रात्ययिकाः शुचयोऽनुमता वा त्रयोऽवरार्घ्याः पक्षानुमतौ वा द्वौ ऋणं प्रति नत्वेवैकः[4]। कुलजा वृत्तवित्तसम्पन्ना यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तः त्रैविद्यवृद्धाः[5]। मौलाः प्रतिष्ठिताः साश्चर्यं विदिवन्तः कुलीना ऋजवो जन्मतः कर्मतोऽर्थतः शुद्धाः पुत्रिणः सत्यवादिनः श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सरा अप्रवासिनो युवानो लोभमोहविवर्जितास्त्र्यवरा नव सङ्ख्याकार न जातु कूटतां प्रतिपद्यन्ते[6]। ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्योऽनिबद्धश्चेत्[7]।

अत्र कात्यायनः[8]

**विभावको वादिना यादृक् सदृशैरेव भावयेत्।**
**नोत्कृष्टैश्चैवावकृष्टस्तु साक्षिभिर्भावयेत्सदा॥**
**लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे।**
**समूहस्थाश्च ये चान्ये वर्गस्तानमब्रवीद्गुरुः॥**
**दासचारणमल्लानां हस्त्यश्वायुधजीविनाम्।**
**प्रत्येकैकं समूहानां नायका वर्गिणस्तथा॥**
**तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः।**

---

1. मनु. ८।६०।
2. नारद. ४।१६७।
3. गौ. १३।२।
4. कौ. ३।२।
5. विष्णु. ८।८।
6. शङ्ख., स. वि. पृ. १३८।
7. गौ. १३।४।
8. व्य. प्र. १११; अपरार्कः पृ. ६६६।

व्यासः[1]

शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः ॥

रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्याद्राजतापसवर्जम्[2] । कृतदारपरिग्रहा पुत्रवन्तस्तद्देशजाः क्षत्रियवैश्यजातीया अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्या भवन्ति । ते हि कृतपरिकरपुत्रभयात्तद्देशवासिना विरोधाच्च नान्यथा वदन्ति न तु ये केचिदृणादानादिव्यवहारेषु साक्षिणः स्युः । आपदि तु वाग्दण्डपारुष्यस्त्रीसंग्रहणदिषूक्तव्यतिरिक्ताः साक्षिणो भवन्ति । सर्ववर्णेषु मध्ये ये यथार्थावगतवादिनः सर्वधर्मज्ञा लोभरहितास्ते साक्षिणः कर्त्तव्याः । विपरीतांश्च वर्जयेत्[3] । याज्ञवल्क्यः[4]

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवरा साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ।२।६८-६९॥

नारदः

श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥ ४।१५५॥

साक्षिकालसीमाविषये नारदः

अष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः ।
आपञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य तु ॥
आतृतीयात्तथा वर्षात्सिद्धिर्गूढस्य साक्षिणः ।
आ संवत्सरात्सिद्धिं तु वदन्त्युत्तरसाक्षिणः ॥
अथवा कालनियमो न दृष्टः साक्षिणः प्रति ।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥
यस्य नोपहता बुद्धिः स्मृता श्रोत्रं च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥ ६।१६८-१७१ ॥

---

1. स्मृ. २ पृ. ७६; व्य. प्र. पृ. ११२।
2. कौ. ३।२।
3. मनु. ८।६१-६३;
   स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां द्विजसत्तमाः ।
   शूद्राणां मर्त्यानां मर्त्ययोनयः ॥ मनु. ८।६८; कात्या. ३५१ ॥
4. कात्या. ३४७-३४८।

**असाक्षिणः**

ऋणाद्यर्थसम्बन्धिनोऽधमर्णाद्याः, आप्ता मित्राणि, सहायास्तत्परिचारकाः, शत्रवः स्थानान्तरावगतकौटसाक्ष्याः, रोगपीडिता महापातकादिदूषिताः साक्षिणो न कर्तव्याः। लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनां संभवात्। उत्तमर्णा ह्यधमर्णवचनेन पराजीयमानास्तदानीमेव रोषावेशवशतः स्तम्भयन्ति धनं प्रत्यादातुमधमर्णम्। अतोऽसौ सन्निहितधनिकचित्तमनुवर्तमानः तदनुगुणं वक्तुं शक्नोति। तस्मादसौ न साक्षी उत्तमर्णोऽपि निर्धनेऽधमर्णे व्यवहारजयाच्च धनप्राप्तौ मह्यमयं प्रतिदास्यतीत्यनया बुद्ध्या कदाचित्तत्पक्षानुगुणं वक्तीति सोऽप्यसाक्षी। अथवाऽर्थःप्रयोजनं यस्य साक्षिणो विवादिभ्यां किञ्चित्प्रयोजनं साध्यम्, तेन वा तयोः, स उपकारगन्धान्न साक्षी। यो वा व्यवहारगतेनार्थेन समानफलः[1]।

त्वं मे साक्षी भविष्यसीति व्यवहारकृता धनविसर्गादिकाले साक्षित्वे नृपतिर्नाध्येषितव्यः। तस्य हि साक्ष्यं ददतः पक्षपातमाशङ्केरन्। प्रभुत्वाद्वा ददतोऽन्यतरस्य कार्यनाशः। न च साक्षिधर्मेण प्रष्टुं युज्यते। तद्देशवासी च यद्यपि लेखादिना संवादयेत्तथाऽपि साक्षिधर्मं सर्वं न कुर्यादिति तद्देशवासिनो राज्ञः साक्षिकरणप्रतिषेधः। प्रभुत्वात् साक्षिधर्मेण प्रष्टुमयोग्यत्वान्न राजा साक्षी कार्यः। सूपकारादिः, नटादिः, तयोः स्वकर्मव्यग्रत्वात्प्रायेण धनलोभत्वाच्चासाक्षित्वम्। श्रोत्रियोऽप्यध्ययनाग्निहोत्रादिकर्मव्यग्रतया न साक्षी। लिङ्गस्थो ब्रह्मचारी, सङ्गविनिर्गतः परिव्राजकस्तयोरपि स्वकर्मव्यग्रत्वाद् ब्रह्मनिष्ठत्वाच्चासाक्षित्वम्। श्रोत्रियग्रहणादध्ययनाग्निहोत्रादिव्यग्रेतरब्राह्मणस्यानिषेधः[2]।

आध्यधीनोऽत्यन्तपरतन्त्रो गर्भदासो न वक्तव्यो विहितकर्मत्यागाल्लोकविगर्हितः दस्युः क्रूरकर्मा "न क्रुद्धो नापि तस्करः" (मनु. ८।६७) इति वक्ष्यमाणत्वात्। विकर्मकृन्निषिद्धकर्मकारी, एतेषां रागद्वेषादिसंभवात्। न वृद्धः, प्रायेण स्मृतिभ्रंशसंभवात्। न बालोऽप्राप्तव्यवहारत्वात्। नैको विनाशप्रवासशङ्कया तस्य त्र्यवरैरिति विधानात्। अर्थप्रतिषेधसिद्धौ कस्यांचिदवस्थायां द्वयोरभ्यनुज्ञानार्थं निषेधवचनम्। अन्त्यश्चाण्डालादिः धर्मानभिज्ञातत्वात्। विकलेन्द्रिय उपलब्धिवैकल्यान्न साक्षी कार्यः[3]।

---

1. नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः।
न दृष्टदोषाः कर्त्तव्या न व्याध्यार्ता न दूषिताः॥
(मनु. ८।६४)

2. न साक्षी नृपतिः कार्यो न कारुककुशीलवौ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः॥
(मनु. ८।६५)

3. नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।

आर्तो बन्धुविनाशादिना, मत्तो मद्यादिना, उन्मत्त उत्क्षेपभूतावेशादिना, क्षुधापिपासादिना पीडितः, श्रमार्तो वर्त्मगमनादिना खिन्नः, कामार्त्तः, उत्पन्नक्रोधः, चौरश्च न साक्षी कार्य इति सर्वत्र संबध्यते । तत्रार्तादिबुद्धिवैकल्यात् । स्त्रीणामन्योन्यवहारे ऋणादानादौ स्त्रियः साक्षिणो भवंति । यत्र पुंमासावर्थिप्रत्यर्थिनौ तत्र स्त्रीणां साक्ष्यं नास्ति । यत्र तु स्त्रिया सह पुंसः कार्यं स्त्रीणां स्त्रिय एव साक्ष्यं कुयुर्न पुमांसः । केवलं पुंविषये क्वचिदेव स्त्रीणां साक्ष्यं यतोऽस्थिरत्वादिति हेतुरुपात्तः । भवन्ति काश्चन स्त्रियो ब्रह्मवादिना इव सत्यवादिन्यः स्थिरबुद्धयश्च ।

यः प्रमाणतरो द्विजः स विसदृशं शङ्क्यमानप्रमाणभावमपि दिशन् साक्ष्ये न श्रद्धेयवचनो भवति । यतस्तथाभूतेन प्रमाणभूत एव द्रष्टव्यः । स हि तस्य सदृशः । सदृशानां हि समानदेशस्थानमितरेतरकार्यज्ञत्वं च संभाव्यते। इतरस्य तु तत्प्रदेशसन्निधिर्यत्नेन साध्यः । सदृशयोस्त्वौचित्यात्सिद्ध एव । एवं हीनस्य हीनगुणोऽपि सादृश्याद्ग्रहीतव्यः । न तूत्कृष्टगुणो न ग्रहीतव्यः । सादृश्यं जात्या शिल्पादिना वा गुणेन क्रियया वा श्रुताध्ययनादिक्रिया समानशीलतया च । एतच्च नातिमहति कार्ये द्रष्टव्यम् । न हि हीनगुणेषु प्रत्ययितता निश्चीयते । एवं शूद्राः साधवः शूद्राणाम्, चाण्डालादीनां चाण्डालादयः साक्षिणो भवेयुः । एतच्च सजातीयसाक्ष्यभिधानम् । उक्तलक्षणसजातीयसाक्ष्यसंभवे विजातीया अपि साक्षिणो भवन्ति । अत एव याज्ञवल्क्यः–"यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः" (२।६९)[1] ।

गृहाभ्यन्तरेऽरण्यादौ वा चौरादिकृतोपद्रवे देहोपघाते वातताय्यादिकृते यः कश्चिदुपलभ्यते स वादिनोरेव साक्षी भवति, न तु ऋणादानादिवदुक्तलक्षणोपेतः ॥ अन्तर्वेश्मादावुक्तसाक्ष्यभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्मकरा अपि साक्षिणः स्युः[2] । बालवृद्धव्याधितानामुपप्लुतमनसां च साक्ष्येऽनृतं वदतामस्थिरा वाग्भवति । अतस्तामनुमानेन जानीयात्। गृहदारादिषु साहसेष्वाचार्यस्त्रीसंग्रहणे वाग्दण्डपारुष्ये च गृहिण इत्युक्तसाक्षिपरीक्षा न कार्या[3] ।

साक्षिणां परस्परविरुद्धानां बहुभिर्यदुक्तं तदेव निर्णयार्थत्वेन राजा गृह्णीयात् । समेषु तु विरुद्धार्थाभिधायिषु गुणवतः प्रमाणीकुर्यात् । गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् द्विजेषु य उत्तमाः । क्रियावन्त इत्यर्थः । गोविन्दराजस्तु गुणवतां विप्रतिपत्तौ द्विजोत्तमान् ब्राह्मणान् प्रमाणीकुर्यादित्याह–समक्षदर्शनात्साक्ष्यमित्या-

---

न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रिय :॥

(मनु. ८।६६)

1. मनु. ८।६८।
2. मनु. ८।६९-७०।
3. मनु. ८।७०-७८।

दयः[1] । ननु च साक्षी नृपतिः कार्य इति राज्ञः साक्षित्वनिषेधात् । तस्य कथं साक्षित्वमिति चेत्, उच्यते । व्यवहारदर्शनकालेऽवगतेष्वर्थेषु तस्येह साक्षित्वमुच्यते, कालान्तरापेक्षया निषेधः । तथा च व्यासः

राज्ञा धर्मासनस्थेन यच्छ्रुतं तत्त्वमिच्छता ।
नान्यः साक्षी भवेत्तत्र मुक्त्वा राजानमीश्वरम् ॥

बृहस्पतिः

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥

तत्र नारदः

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तरः ॥
श्रोत्रियाद्याः वचनतः स्तेनाद्याः दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्यात् विवादे यत्र साक्षिणाम् ॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद‍ृते ॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥
स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकस्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥ ४।१५७-१५८ ॥
दासनैकृतिकाश्रद्धवृद्धस्त्रीबालवञ्चकाः ।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥
महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ।
एकस्थालीसहायारिधरज्ञातिसनाभयः ॥
प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः ।
गरदाग्निदकीनाशोशूद्रीपुत्रोपपातिकाः ॥
क्लान्त ( साहसिकाश्रान्तनिर्धूतान्त्यवासिनः ) ।
भिन्नवृत्तासमावृत्तजलतैलिकमूलिकाः ॥

---

1. कौ. ३।२; उद्योगपर्व, ३५।४४-४७; याज्ञ. २।७०-७१; नारद. ४।१७७-१८७; वि. घ. सू. १-४; बृह. २९-३०; कात्या. ३६०-३६४; अपरार्कः ६६९-६७०; स्मृ. च. २ पृ. ७७-७८; व्य. प्र. पृ. ११९।

भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः॥
कुनखी श्यावदच्छिवत्रिमित्रध्रुकृच्छठशौण्डिकाः।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः॥
वधकश्चित्रकृच्छङ्खः पतितः कूटकारकः।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः॥
मनुष्यपशुमांसास्थिमधुशीराम्बुसर्पिषाम्।
विक्रेता ब्राह्मणास्त्वेषां द्विजो वार्धुषिकश्च यः॥
च्युतः सर्वधर्मात्कुलिकः सूचको हीनसेवकः।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः॥
श्रेण्यादिषु तु वर्गेषु कश्चिद्वै द्वेष्यतामियात्।
तस्य तेभ्यो न साक्ष्यं स्याद् द्वेष्टारः सर्व एव ते॥ ४।१५८-१८५॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः॥
स्मृतिमत्साक्ष्यसाम्यं तु विवादे यत्र दृश्यते।
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः॥
अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत्।
स्वयमुक्तः स शास्त्रेषु न च साक्षित्वमर्हति॥ ४।१६०, २३०, २३१॥
योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति वाऽर्थिनि।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः॥
सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः।
अन्यत्र श्रावितं यत्स्यात्स्वयमावसन्नमृत्युना॥
न हि प्रत्यर्थिनि प्रेते प्रमाणं साक्षिणां वचः।
साक्षिमत्कारणं तत्र प्रमाणं स्याद् विनिश्चयः॥
श्रावितेनान्तरेणापि यस्त्वर्थो धर्मसंहितः।
मृतोऽपि तत्र साक्ष्यं स्यात् षट्सु चान्वाहिताग्निषु॥ ४।१६२,९४-९६॥

येनार्थिना साक्षीकृतः सोऽर्थं यस्य साक्षिणो मृतोत्तरे स मृतान्तरनामासौ न साक्षित्वमर्हति। यदि मुमूर्षुणा अर्थिना पित्रा अमुकं द्रव्यमियदेतया वृध्या अमुककाले देवदत्ताय दत्तमत्रार्थेऽमी साक्षिण इत्येवं पुत्रः श्रावितो भवेत्। तस्य साध्यादि-विवेकाभावात्। अर्थिना योऽर्थः श्रावयितव्यः साक्षिणामस्मिन्नर्थे भवन्तः साक्षिण इति। श्रावितादृते तत्साध्यादिविशेषपरीक्षाभावान्नार्थं श्रावयितुं साक्षिणां शक्नोति,

इत्यतः–"क्व तद्वस्तु साक्षित्वमिति साक्षी मृतान्तर' इति । यदा तु मुमूर्षुणा श्रावितास्तदा मृतेऽप्यर्थिनि भवन्त्येव स्वाक्षिणः । **कात्यायनः**

**अन्येन हि कृतः साक्षी नैवान्यस्तं विवादयेत् ।**
**तदभावे विनिर्युक्तो बान्धवो वा विवादयेत् ॥**
**भावयेत्साक्षिभिः कार्यं मृते त्वर्थिनि बान्धवः ।**
**कुलादीनां समक्षं चोल्लिखितं भावयेत्सदा ॥ ३६०-३६१ ॥**

**साक्षिप्रत्युद्धारः**

साहसेषु सर्वेषु स्तेयसङ्ग्रणेषु वाग्दण्डयो पारुष्ये च साक्षिणः न परीक्षेत । एवमेव व्याघातेषु नृपाज्ञायाः सङ्ग्रामेऽपि साक्षिणोऽपरीक्षणीयः[1] । अत्र **कात्यायनः**

**अन्तर्वेश्मनि रात्रौ वा बहिर्ग्रामाच्च यो भवेत् ।**
**एतेष्वेवाभियोगे तु परीक्षा नात्र साक्षिणाम् ॥ ३६७ ॥**
**ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।**
**साहसात्यायिके चैव परीक्षा कुत्रचित्स्मृता ॥ ३६५ ॥**

**नारदः**

**असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।**
**कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥**
**तेषामपि न बालः स्यान्नैको न साक्षी न कूटकृत् ।**
**न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥**
**बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।**
**विक्रियाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥ ४।१८०, १९०-१९१ ॥**

तथा च[2] **उशना**

**दासोऽन्धो बधिरः कुष्ठी स्त्रीबलस्थविरादयः ।**
**एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ॥**

**साक्षिदूषणम्**

विवादिनाऽविदित्वेनानुद्भाविताः दोषाः शास्त्रप्रदर्शनेन प्रकटीकृत्य सभ्यैर्वक्तव्याः। तत्र **बृहस्पतिः**

**साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।**
**अदुष्टान् दूषयन् वादी तत्समं दण्डमर्हति ॥ ५।२१ ॥**
**लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।**
**तस्य कार्यं न सिध्येत्तु यावत्तन्न विशोधयेत् ॥ ५।२९ ॥**

---

1. मनु. ८।७२; नारद. ४।१८९; कात्या. ३६६।
2. मनु. ८।६९-७०, ७७, ७१।

साक्षिभिर्गदितैः सभ्यैः प्रक्रान्ते निर्भये तु यत् ।
पुनर्विवादं कुरुते तस्य राजा विचारयेत् ॥ ५।३० ॥
साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रेऽभिलिखितान् सर्वान् वाच्याः प्रत्युत्तरं तु ये ॥
प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा[1] ।
यदि वादी निराकाङ्क्षः साक्षिसभ्येष्ववस्थितः ॥
(व्यासः५।३०।२३-२५।२७)

**साक्षिश्रावणम्**

सादरमाहूय साक्षिणः समस्तान् पृच्छेत् पूर्वश्रुतार्थां चैके नैकैकशो विज्ञाताचारानथवा समस्तान् विदिताचारान् पृच्छेदविज्ञाताचारांश्चैकैकशः । अप्रतिदूषिता ह्यविज्ञाताचारा अपि प्रश्नश्चोभयथापि युक्तः । नियम्य शपथैभृशं सुतराम्[2] । साक्षिणश्चाहूय आदित्योदये कृतशपथान् पृच्छेत[3] । साक्षिप्रभाषणे राज्ञा कालहरणं न कार्यम् । कालाद्धर्मव्यावृत्तिलक्षणः महान् दोषो भवेत्[4] । तत्र कात्यायनः

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ ।
प्रत्यक्षं चोदयेत्साक्ष्यं न परोक्षं कथञ्चन ॥
अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेषु च ॥
तौल्यगणिममेयानामभावेऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न ततोऽन्यथा ॥ ३८८-३९० ॥

प्रतिमादेवताब्राह्मणसंनिधाने शुचीन्द्विजातिप्रभृतीन् प्राङ्मुखानुदङ्मुखान् वा स्वयं प्रयतः प्राड्विवाकः पूर्वाह्णे काले याथातथ्यं साक्ष्यं पृच्छेत्[5] । सभा मध्यं साक्षिणः संप्राप्तानर्थिप्रत्यर्थिसमक्षं राजाधिकृतो ब्राह्मणः प्रियोक्तिं रचयन्नित्त्थं पृच्छेत् ।

1. कात्या. ३८२-३८४,३७८,४०७,४०७,३७९।
2. आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥
(नारद. ४।१९८)
3. विष्णु. ८।१९।
4. कात्या. ३३९ ।
5. मनु. ८।८७ ।

यद्द्वयोरर्थिप्रत्यर्थिनोरनयोः परस्परमस्मिन्कार्ये चेष्टितं जानीथ तत्सर्वं सत्येन कथयत। यतो युष्माकमत्र साक्षित्वम् । साक्षी साक्ष्ये कर्मणि सत्यं वदन्सन्नुत्कृष्टान्ब्रह्मलोकादीन् प्राप्नोति पुष्कलान्, इह लोकेषु चात्युत्कृष्टां ख्यातिं लभते । यस्मादेषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता[1] ।

यस्मात्साक्षी मृषा वाचं कथयन्वरुणसंबन्धिभिः पाशैः सर्परज्जुभिर्जलोदरेण परतन्त्रीकृतः शतं जन्मानि यावदर्थं पीड्यते । तस्मात्साक्ष्ये सत्यं ब्रूयात् । यस्मात्सत्येन पूर्वार्जितादपि पापात्साक्षी मुच्यते धर्मश्चास्य सत्याभिधानेन वृद्धिमेति तस्मात्सर्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम् । यस्माच्छुभाशुभकर्मप्रतिष्ठा आत्मैवात्मनः शरणं तस्मादेवं स्वमात्मानं नराणां मध्यमादुत्तमं साक्षिणं मृषाभिधाने नावज्ञासीः । पापकारिण एवं मन्यन्तेऽस्मानधर्मप्रवृत्तान्न कश्चित्पश्यति । तान् देवाः पश्यन्ति । स्वस्यान्तरपुरुषः पश्यति ।

द्युलोकपृथिवीजलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसन्ध्याद्वयधर्माः सर्वशरीरिणां शुभाशुभकर्मज्ञाः । दिवादीनां चाधिष्ठातृदेवतास्ति सा च शरीरिण्यैकात्रावस्थापिता तत्सर्वं जानातीत्यागमप्रामाण्याद् वेदान्तदर्शनं तदङ्गीकृत्येदमुक्तम्[2] । ब्रूहीत्येवं शब्दमुच्चार्य ब्राह्मणं पृच्छेत् । सत्यं ब्रूहीति पार्थिवं क्षत्रियं पृच्छेत् । गोबीजसुवर्णापहारे यत्पापं तद्भवतोऽनृताभिधाने स्यादित्येवं वैश्यम् । शूद्रं पुनः सर्वैर्निश्चितपापैः संबध्यसे यदि मृषा वदसि इति पृच्छेत्[3] ।

साक्षिश्रावणमाह याज्ञवल्क्यः—साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान्"[4] । अर्थिप्रत्यर्थिसन्निधौ साक्षिणः समवेतान् "नासमवेताः पृष्टाः प्रब्रुयुः (१३।५) इति गौतमवचनात्, वक्ष्यमाणं श्रावयेत् । तथा ब्राह्मणादिषु श्रावणे मनुना नियमो दर्शितः[5] । अत्र चापवादस्तेनैव दर्शितः—

**गोरक्षकान्वाणिजिकांस्तथा कारुकुशीलवान् ।**
**प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥**

**( मनु. ८।१०२ )**

'विप्र' ग्रहणं क्षत्रियवैश्ययोरुपलक्षणार्थम् । कुशीलवा गायकाः । प्रतिवादिना साक्षिदूषणे दत्ते प्रत्यक्षयोग्यदूषणेषु बाल्यादिषु तथैव निर्णयः । अयोग्येषु तु तद्वचनाल्लोकतश्च निर्णयो न साक्ष्यन्तरणेति नानवस्था । यदि साक्षिदोषमुद्भाव्य

---

1. मनु. ८।७९-८१ ।
2. मनु. ८।८२-८६।
3. मनु. ८।८७-८८।
4. याज्ञ. २।७३।
5. **सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ८।११३।**

साधयितुं न शक्नोति प्रतिवादी, तदाऽसौ दोषानुसारेण दण्ड्यः । अथ साधयति, तदा न साक्षिणः । यथाह—असाधयन् (अभावयन्) दमं दाप्यो दूषणं साक्षिणां स्फुटम् । भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः' । उद्दिष्टेषु च सर्वेषु साक्षिषु दुष्टेष्वर्थी यदा क्रियान्तरनिरपेक्षस्तदा पराजितो भवति; 'जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा । यदि वादीनिराकाङ्क्षः साक्षिसत्ये व्यवस्थितः" । इति स्मरणात्। साकाङ्क्षश्चेत् क्रियान्तरमवलम्बेतेत्यभिप्रायः[1] ।

कथं श्रावयेदित्यत आह—'पातकोपपातकमहापातककारिणामग्निदानां स्त्रीबालघातिनां च ये लोकास्तान् सर्वानसावाप्नोति यः साक्ष्यमनृतं वदति' । तथा जन्मान्तरशतैर्यत्सुकृतं कृतम्, तत्सर्वं तस्य भवति, यस्तेऽनृतवदनेन पराजितो भवति' इति, श्रावयेत् । एतच्च शूद्रविषयं द्रष्टव्यम् ; "शूद्रं सर्वैस्तु पातकैः" (मनु. ८।१२३) इति शूद्रे सर्वपातकश्रावणस्य विहितत्वात् । गोरक्षकादिद्विजातिविषयं च; 'गोरक्षकान् वाणिजिकान्' (मनु. ८।१०२)इत्युक्तत्वात् । अन्यानेकजन्मार्जितसुकृतसंक्रमणस्य महापातकादिफलप्राप्तेश्चानृतवचनमात्रेणानुपपत्तेः, साक्षिसंत्रासार्थमिदुमुच्यते[2] । यथाह नारदः

**पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः ।**
**अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥ १।२०० ॥**

**साक्षिशपथः**

शपथेनैक सत्यकर्म । तद्देवराजब्राह्मणसंसदि स्यात् अब्राह्मणानाम्[3] । यदा तु साक्ष्यादिप्रमाणान्तरप्रत्यन्तमयस्तथा 'शपथेन' कोशादिना 'एके' 'सत्यकर्म' सत्यव्यवस्थापनमिच्छन्ति । ....गौतमस्तु न्याः नैव । तत्र प्रमाणलेशे सति शपथम्, असति न्याय एवेति द्रष्टव्यमिति मस्करिः ।

साक्षिणः सुवर्णरजतरत्नगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्टरथोपस्थशस्त्रादिभिस्तथा पुत्रपौत्रैर्यथावर्णं परिग्रहविशेषतः स्याद्देवब्राह्मणस्वामिनामग्रतः, इति शङ्खलिखितौ । सुवर्णादिस्पर्शनेन, सूर्यादिदर्शनेन, शापयेदिति शेषः । तथा पुत्रपौत्रैरिति । पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः । यथावर्णम् इति । यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथ आम्नातः, स्मृत्यन्तरे स तेनैव कारयितव्य इत्यर्थः । तथा च स्मृत्यन्तरम्—

---

1. अन्येषां मतानि—बृह. ५।३२-३५; नारद. ४।२००-२०२,२०६,२१२-२१६,२२६-२२८; विष्णु. ८।३६; नारद. ४।२२१; बौधा. ध. सू. १।१९।१३-१५।
2. याज्ञ. २।७५।
3. गौतम. १३।१३-१४

अब्राह्मणान्नृपः सम्यक्कारयेद्देवसन्निधौ ।
शपथं तदलाभे च ब्राह्मणस्य समीपतः ॥
तदलाभे नृपस्यायं भगवान् काश्यपोऽब्रवीत्[1] ॥

सत्येन श्रावयेत्[2] विप्रमित्यपकृष्टब्राह्मणविषयम्, न ब्राह्मणमात्रविषयम् । तत्र गौतमेन शपथनिषेधात् । 'श्रावयेत्' शापयेदित्यर्थः । मनु [3]र्नारदश्च षष्ठे—

ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रमेभिस्तु पातकैः ॥
ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनाम् ।
जन्मप्रभृति यत्किञ्च पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥
एकोऽहमस्मीति आत्मानं यस्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥
यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः।
तेन चेदविवादस्ते या गङ्गा मा कुरुन् गमः ॥
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
क्रुद्धः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥
अवाक् शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात् पृष्टःसन् धर्मनिश्चये ॥
अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।
यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥
यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः[4] ॥

तत्र ब्राह्मणं ब्रूयात् सत्यं ब्रूहीति राजन्यं वैश्यं वा मा तवेष्टापूर्त्तफलम् कपालहस्तः शत्रुबलं भित्वार्थी गच्छेदिति शूद्रं जन्ममरणान्तरे यद्वः पुण्यफलं तद्राजानं गच्छेत्, राज्ञश्च किल्बिषं युष्मानन्यथावादे । दण्डश्चानुबन्धः पश्चादपि ज्ञायेत यथादृष्टश्रुतम् । एकमन्त्राः सत्यमवहरतेति[5] ।

---

1. मस्करिभाष्ये पृ. २१९ ।
2. मनु. ८।११३; नारद. ४।१९९।
3. मनु. ८।८८-९६; नारद. ४।२०१।
4. अन्यदपि–मनु. ८।९७-९९,१००-१०१,१२०; नारद. ४।२०३-४०९,२१६-२२४।
5. कौ. ३।२।

**साक्ष्योक्तविधिः**

लोकाः प्रतिग्रहार्थं यथादृष्टं यथाश्रुतं साक्ष्यं ब्रूयुः[1] । नासमवेता अपृष्टाः प्रब्रूयुः[2]। तथा[3] च कात्यायनः

सभान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मोऽन्यत्र स्यात्स्थावरेषु च ॥
वधे च प्राणिनां साक्ष्यं वादयेच्छिवसन्निधौ ।
तदभावे तु चिह्नस्य नाऽन्यत्रैवं प्रवादयेत् ॥
अनुद्वेगेन चित्तेन दृष्टं सम्यग्यदा तु यत् ।
प्रत्यक्षं तत्स्मृतं कार्यं साक्षी साक्ष्यं तु तद्वदेत् ॥
यद्दृष्टं वक्तव्यं तैस्तथैव तत् ।
विभिर्नैककार्यं च वक्तव्यं तत्पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकालं तु तद्भृगुः ॥
नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥
(३८७;३९१;३९४-३९५)
स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा प्रष्टव्या न पुनः पुनः ॥ ३९३ ।

**साक्षिपरीक्षा**

उपस्थिताः स्वरवर्णेङ्गितादिभिः परीक्ष्याः[4] । तत्र कात्यायनः[5]

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।
साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत् ॥
यदा शुद्धा क्रिया पाल्या तदा तद्वाक्यशोधनम् ।
शुद्धार्थवाक्यात् यश्शुद्धः स शुद्धार्थोऽन्यथा न तु ॥

देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत् । दूरस्थान् अप्रसारान्वा स्वामिवाक्येन साधयेत् (कौ. ३।२) । यस्तु रोगविवर्जितः साक्षी आहूतो नागच्छेत् सःऋणं दमं च

---

1. बौधा. १।२०।२९।
2. गौ. १३।६।
3. तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते । मनु. ८।७४।
विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यं गोशकृद्दर्भान् समादाय ऋतं वदेत् ॥ बृह. ५।४२।
4. बृह. ५।४५।
5. कात्या. ३४०, ४०९।

दाप्यः स्यात्त्रिपक्षात्परतः[1] । ततः पूर्वस्यह्नः प्रचारं रात्रौ निवासं चाग्रहणादिति अनुयुञ्जीत (कौ. ४।८) । तत्र शुक्रः

**स्वेतरः कार्यविज्ञानी यः स साक्षी त्वनेकधा ।**

**दृष्टार्थश्च श्रुतार्थश्च कृतश्चैषाकृतो द्विधा ॥ ४।५।१८४ ॥**

उपस्थितः परीक्ष्याः स्युरिति बृहस्पति[2] ।

**कूटसाक्षिणः**

मन्त्रिभिः शास्त्रसामर्थ्याद्दुष्टलक्षणं ग्राह्यम् । तिर्यक् प्रेक्षते, समन्तादेवावलोकयति, अकस्मात् मूत्रपुरीषं विसृजति, देशाद्देशं गच्छति, पाणिना पाणिं पीडयति, नखान्निकृन्तति, मुखमस्य विवर्णतामेति, प्रस्विद्यति चास्य ललाटम्, चक्षुवाचं न प्रतिपूजयति, अकस्माद्ददाति, प्रशंसति, पुनः पुनः अन्यमपनुदति, बहिर्निरीक्षते, शास्त्रं परामृशति,[3] भूमिं विलिखति, शिरः प्रकम्पयति, ओष्ठौ निर्भुजति, सृक्किणी परिलेढि, अविस्मितः कर्मसु महत्सु भ्रुवौ संहरति, हसति, तूष्णीं ध्यायति, पूर्वापरविरुद्धं व्याहरति, एवमादिदुष्टलक्षणम् । क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात् । तत्र राजमूला व्यवहाराः ।

क्रुद्धस्य चेति क्रोधाविष्टस्यापि राज्ञो मन्त्रिभिरेतान्येव चिह्नानि गृहीतव्यानि । 'अन्यत्र प्रकृतिशीलात्' स्वभावत एव च एवंविधः तद्व्यतिरेकेणैतानि दुष्टत्वस्य च लक्षणानि । राजक्रोधावधारणे प्रयोजनमाह–"राजमूला व्यवहाराः" । अत्र **नारदः**

**यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते ।**

**स्थानात्स्थानान्तरं गच्छेदेकैकं चानुधावति ॥**

अत्र प्राड्विवाकस्य व्यवहारदर्शनमुपदिश्यते । साक्षिप्रश्नकाल उपस्थित इङ्गिताकारादि परीक्षेत । न केवलमुक्तदोषदूषित एव प्रश्नार्हः । एवं क्रियोऽपि प्रष्टव्यः कूटसाक्षी सः ।

**कासत्यकस्माच्च भृशमाभीक्ष्णं निश्वसत्यपि ।**

**विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत ॥**

**भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते यथा ।**

**शोषमागच्छतश्चौष्ठौ ऊर्ध्वं तिर्यक् च वीक्षते ॥**

**त्वरमाण इवा ( विद्धमपृष्टो ) बहु भाषते ।**

**कूटसाक्षी स विजेयस्तं पापं विनयेद्भृशम् ॥**

---

1. बृह. स्मृ. चं. २ पृ. ९१; परा. मा. ३ पृ. ११५; मनु. ८।१०७; याज्ञ. २।७७; विष्णु. ८।३७।
2. स्मृ. चं. २ पृ. ८५; व्य. प्र. १२४।
3. शोकमुपवर्णयति ।

श्रावयित्वा तथाऽन्येभ्यः साक्षित्वं योऽपनिह्नुते ।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः ॥

(नारद. ४।१९३-१९८)

**साक्षिदण्डः**

उक्त्वाऽन्यथा ब्रुवाणाश्च वाक्छलान्विताः दण्ड्याः स्युः[1] । लोभेन, विपरीतज्ञानेन, भयेन, स्नेहेन, कामेन, क्रोधेन, अज्ञानेन, अनवधानेन, साक्ष्यमसत्यमुच्यते । एषां लोभादीनां मध्यादन्यतमस्मिन्निमित्ते सति यो मिथ्या साक्ष्यं कथयेत्तस्य दण्डविशेषाणि । लोभेन मिथ्याभिधाने सति निश्चितपणानां सहस्रं दण्ड्यः, मोहेन प्रथमं साहसभयेन च द्वौ मध्यमौ साहसौ, मैत्रात्प्रथमसाहसं चतुर्गुणम् । स्त्रीसंभोगरूपकामानुरोधेन मिथ्या वदन्प्रथमसाहसं दशगुणं दण्ड्यः । क्रोधेन तु परं मध्यमसाहसं त्रिगुणम् । अज्ञानाद्द्वे शते, बालिश्यादनवधानात्पणशतमेव दण्ड्यः । एतच्च सकृत्कौटसाक्ष्ये ।

भूयोभूयः कौटसाक्ष्यकरणे तु विशेषव्यवस्था । क्षत्रियादींस्त्रीन्वर्णान् कौटसाक्ष्यात्पूर्वोक्तेन दण्डयित्वा धार्मिको राजा स्वराष्ट्राद्विवासयेत् । ब्राह्मण तु धनदण्डव्यतिरेकेण स्वराष्ट्रान्निःसारयेत् (मनु. ८।३८०) । धनसहितनिर्वासनस्याभिधास्यमानत्वादिति कुल्लूकभट्टः । गोविन्दराजस्तु ब्राह्मणं पुनः पूर्वदण्डेन दण्डयित्वा नग्नं कुर्यादिति व्याचष्टे । मेधातिथिस्तु ब्राह्मणस्य विवासस्त्वं वासोऽपहरणं गृहभङ्गो वेत्याचष्टे[2] । कूटसाक्षिणां सर्वस्वापहारः कार्यः[3] । तथा च–

पृथक्पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादात् द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥
यः साक्ष्ये श्राविते‌ऽन्येभ्यो निह्नुते तत्तमोवृत्तः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

(याज्ञ. २।८१-८२)

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः षट् चत्वारिंशत्तमेऽहनि ॥

(याज्ञ. २।७६)

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।
तदृणं प्राप्नुयात्सर्वं दशबन्धं तु सर्वशः ॥

(मनु. ८।१०३)

---

1. कात्या. ४०६ ।
2. मनु. ८।११८-१२३।
3. विष्णु. ५।१७९।

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥
(मनु. ८।१०८)

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ।
अवाङ्नरकमाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥
(मनु. ८।७५)

अवचने दोषिणः स्युः । स्वर्गः सत्यवचने, विपर्यये नरकः[1] । ब्राह्मणस्त्वब्राह्मणवचनादनवरोध्योऽनिबद्धश्चेत्[2] । ब्राह्मणग्रहणं श्रोत्रियपरिहारार्थम् । इतरो ग्राह्य एव। तु शब्दात् अन्येऽपि लिङ्गिनो न ग्राह्याः विशेषेण ब्राह्मणा इति । अब्राह्मणवचनादवरोध्यो न ग्राह्यः–'अस्य वृत्तान्तस्यासौ ब्राह्मणः साक्षी' इति अब्राह्मणस्योक्ते, राज्ञासौ साक्षित्वेन न ग्राह्यः । अनिबद्धश्चेत् ब्राह्मणः पत्रकेऽनारोपितश्चेत् । आरोपितो भवत्येवेत्यभिप्रायः[3] ।

तथा च–

साक्षी साक्ष्यं न चेद् ब्रूयात्समदण्डं वहेदृणम् ।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति ॥
(कात्या. ४०५)

सम्यक् क्रिया परिज्ञाने देयः कालस्तु साक्षिणाम् ।
सन्दिग्धं यत्र साक्ष्यं तु सद्यः पृष्टान् विवादयेत् ॥
(कात्या. ३४१)

पारयन्तोऽपि ये साक्ष्ये तूर्ष्णीं भूता उपासते ।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चैव हि ॥
(विष्णु. ८।३७)

**सत्यापवादः**

साक्षिणः सत्येन पूयन्ते । वर्णिनां यत्र वधस्तत्रानृतेन[4] । नानृतवचने दोषो जीवनं चेत्तदधीनम् । न तु पापीयसो जीवनम्[5] । 'पापीयसः' स्तेनादेः यत्रानृतवचनेन जीवनं संपद्यते तत्रानृतं न वक्तव्यम् । तत्पावनाय कूष्माण्डादिभिः (द्विजोऽग्निम्) जुहुयात् । शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात्[6] । अत्र **याज्ञवल्क्यः**

---

1. गौ. १३।७-८।
2. गौ. १३।५।
3. मनु. ८।६५।
4. विष्णु. ८।१४-१५।
5. गौ. १३।२४,२५।
6. विष्णु. ८।१६-१७।

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ २।८३ ।

यथाह मनुः

शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।
तद् वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥
तद्वदन्धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः ।
न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ॥ ८।१०४,१०३ ॥
वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥
कूष्माण्डैर्वापि च जुहुयाद् धृतमग्नौ यथाविधि ॥
उदित्यृचा च वारुण्या तृचेनाब्दैवतेन वा ॥

(मनु. ८।१०५-१०६)

**साक्षिबलत्वम्**

साक्षिणां परस्परविरुद्धानां बहुभिर्यदुक्तं तदेव निर्णयार्थत्वेन राजा गृह्णीयात् । समेषु तु विरुद्धार्थाभिधायिषु गुणवतः प्रमाणीकुर्यात् । गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् द्विजेषु य उत्तमाः । क्रियावन्त इत्यर्थः । अत एव बृहस्पतिः–"गुणद्वैधे क्रियायुक्ताः" इति[1] । यथाऽह याज्ञवल्क्यः

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥

(याज्ञ. २।७८)

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

(याज्ञ. २।८०)

तथा[2] च

साक्षिद्वैधे प्रभूताः स्युर्ग्राह्याः साम्ये गुणान्विताः ।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये स्मृतिमत्तराः ॥

(बृहस्पतिः ॥ ५।४६)

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो यतः ।
तत्साम्ये गुणिनो ग्राह्यास्तत्साम्ये स्मृतिमन्तराः ॥

(नारद. ४।२२९)

---

1. मनु. ८।७३।
2. विष्णु. ८।३९; नारद. ४।२२९; का. ४०८।

**यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।**
**प्रतिवादी यदा तत्र भावयेत्कार्यमन्यथा ॥ ( कात्या. ४०८ )**
**बहुभिश्च कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः ॥**
**( कात्या., स्मृ. चं. २१८ )**
**साक्षिणां लिखितानां तु निर्दिष्टानां च वादिना ।**
**तेषामेकोऽन्यवादी भेदात्सर्वे न साक्षिणः ॥ कात्या.[1] ॥**

यदा पुनर्गुणिनां विप्रतिपत्तिस्तदा ये गुणवत्तमाः श्रुताध्ययनतदर्थानुष्ठानधन-पुत्रादिगुणसम्पन्नास्तेषां वचनं ग्राह्यम् । यत्र तु गुणिनः कतिपये इतरे च बहवस्तत्रापि गुणिनामेव वचनं ग्राह्यम् । उभयानुगतः साक्षी भवत्येकोऽपि धर्मविदिति गुणातिशयस्य मुख्यत्वात् । यत्र साक्षिभिः अशेषप्रतिज्ञार्थः प्रतिवर्णितः, स जयी स्यात्, अन्यथा तु साध्यार्थं न समाप्नुयात्[2] । तथा[3] च कात्यायनः

**ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।**
**ऊने वाप्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥**
**ऊनाधिकं तु यत्र स्यात् तत्साक्ष्यं तत्र वर्जयेत् ।**
**साक्षी तत्र न दण्ड्यः स्यादब्रुवन् दण्डमर्हति ।**
**( कात्या. ३९६;३९८ )**
**देशकालं धनं संख्या रूपं जात्याकृती वयः ।**
**विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः ॥**
**( कात्या, अपरार्कः ६७८ )**

यत्र तु प्रतिज्ञातार्थस्य विस्मरणादिना भावाभावौ साक्षिणो न प्रतिपादयन्ति तत्र प्रमाणान्तरेण निर्णयः कार्यः[4] । एतावता सन्देहे तूर्ष्णीं भावे वा न जानामि इति भाषणे वा किञ्चिदभिधाने वा यावत्यर्थे संशयस्तत्र क्रियान्तरेण निर्णय इत्यायाति । प्रकृताविरोध्यधिकाभिधाने जय एव । प्रकृतविरोध्यधिकाभिधाने भङ्ग एवेति[5] । साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात् । अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत् (अर्थ ३।२) अत्र कात्यायनः

**साध्यार्थांशोऽपि गदिते साक्षिभिः सकलं भवेत् ।**
**स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्पितम् ॥ कात्या[6] ॥**

---

1. अपरार्कः पृ. ६७०; व्य. मा. पृ. ३२५; परा. मा. ३।११६।
2. बृह. , अपरार्कः पृ. ६७८; स्मृ. चं. २ पृ. ९१; परा. मा. ३।२२४।
3. व्य. मा. पृ. ३१२,३१८; अपरार्कः ६७८; स्मृ. चं. ९०; व्य. नि. पृ. ६८।
4. मिता., याज्ञ. २।७९।
5. वि. चं. पृ. १३१-१३३।
6. मिता. याज्ञ. २।२०।

साक्षिभिर्भाषितं वाक्यं सभ्यैः सह परीक्षयेत् ।

( कात्या., मिता. याज्ञ. २।८० )

आनुमानिकं साक्ष्यम् । अनुमानं त्रिधा दैविकीक्रिया च नवधा प्रोक्तम् । त्रिविधा क्रिया मानुषी, साक्षिलेख्यानुमानञ्च । घटाद्या धर्मजान्ता च दैवी नवधा स्मृता[1] । अत्र भुक्तेः पृथगनिर्देशोऽनुमानेऽन्तर्भावात् । अनुमानमपि द्विविधम् । भुक्तिः कैश्चिद्विशेषणैर्विशिष्टा स्वत्वहेतुः । सा तु क्रयसाक्षिलेख्यादिकमव्यभिचारादनुमापयति, अनुपपद्यमाना वा कल्पयतीत्यनुमानं द्विविधमिति युक्तिरेवोक्ता । सन्देहे लिङ्गतो दैवेनेति विचित्य[2] । केशाकेशिसङ्ग्रहणात्पारजयिक उल्कास्तोऽग्निदः शस्त्रपणिर्धातुको लोप्त्रहस्तश्चौरः[3] । केशाकेशिकं सङ्ग्रहणम् । उपलिङ्गनाद्वा शरीरोपभोगानां तज्जातेभ्यः स्त्रीवचनाद्वा (कौटल्य ४।१८) ।

आनुमानिकसाक्ष्यविषये न कर्त्तव्या अनवधानता । यतोहि, दृश्यते ह्यचोरोऽपि चोरमार्गे यदृच्छया सन्निपाते चोरवेषशस्त्रभाण्डसामान्येन गृह्यमाणो दृष्टः, चोरभाण्डस्पोपवासेन वा यथा हि माण्डव्यः कर्मक्लेशभयम् चोरश्चोरोऽस्मीति ब्रुवाणः । तस्मात्समाप्तकरणं नियमेत्[4] । नारदश्च[5]

यात्यचोरोऽपि चोरत्वं चोरश्चायात्यचोरताम् ।
अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारतः ॥ १४२।

**साक्षिनिगदः**

तत्र व्यासः[6]

कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

**विष्णुयाज्ञवल्क्यौ**

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ।

( याज्ञ २।७९; वि. ८।३४ )

---

1. बृह., परा. मा. ३२।८७; स्मृ. चं. २ पृ. ५०; व्य. नि. पृ. ७३।
2. आप. ध सू. २।२।२९६।
3. शङ्ख, परा. मा. ३ प्र. ११९; स्मृ. चं. २ पृ. ९५; व्य. प्र. १६८।
   तुलनीयम्–Indian Evidence Act, Sect. 114.
4. कौ. ४।८।
5. चौरोऽचौरः साध्वसाधुर्जायते व्यवहारतः ।
   युक्तिं विना विचारेण माण्डव्यश्चौरतां गतः ॥
   ( बृह., व्य. प्र. १३-१४, परा. मा. ३ पृ. ३९; स्मृ. चं. २ पृ. २५ )
6. व्य. नि. पृ. १२०; व्य. मा. पृ. ११४; नारद. ४।१३२ ।

**अनिगदः**

तत्र नारदः

**निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः ।**
**न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥**
**देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।**
**यत्र विप्रतिपत्तिः स्यात्साक्ष्यं तदपि कुत्सितम् ॥**
**न्यूनमभ्यधिकं चार्थं प्रब्रूयुर्यत्र साक्षिणः ।**
**तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः ॥ ४।२३२-२३४ ॥**

## लिखितम्

उपलभ्यन्ते प्रभूतानि प्रमाणानि लिखितविषये[1] । अस्मिन् ग्रामे प्रतिक्षेत्रं क्षेत्रस्वामिनैतद्धनमस्मै प्रत्यब्दं प्रतिमासं वा देयम्" इत्येवमादि नियमो निबन्धः । शास्त्रविधिना भूमिं दत्वा स्वत्वनिवृत्तिं कृत्वा 'निबन्धं' वा एकस्य भाण्डभरकस्येयन्तो रूपकाः, एकस्य पर्णभरकस्येयन्ति पर्णानीति वा निबन्धं कृत्वा लेख्यं कारयेत् । किमर्थम् ? एष्यन्तो ये भद्राः भूपास्तेषाम् 'अनेन दत्तम्, अनेन प्रतिगृहीतम्' इति परिज्ञानाय । लेख्यं कथं कारयेदित्यप्युक्तम्—

**पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।**
**अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥**
**प्रतिग्रहणपरीमाणं दानच्छेदोपवर्णनम् ।**
**स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम् ॥**
**( याज्ञ. १।३१९-३२० )**

स्वहस्तेन स्वहस्तलिखितेन मतं मे अमुकनाम्नः अमुकपुत्रस्य यदत्रोपरि लेखितमित्यनेन सम्पन्नम्, कालेन च द्विविधेन नृपातीतरूपेण संवत्सररूपेण च दानकालेन चन्द्रसूर्योपरागादिना सम्पन्नं स्वमुद्रया गरुडवाराहादिरूपयोपरि बहिश्चिह्निमङ्कितं स्थिरं दृढं शासनं शिष्यन्ते भविष्यन्तो नृपतयोऽनेन दानाच्छ्रेयोऽनुपालनम्' इति शासनं कारयेत्, महीपतिर्न भोगपतिः । सन्धिविग्रहादिकारिणा येन केनच्चिल्लेख्यम्, सन्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः । स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम्" इति स्मरणात् ।

---

1. गौ. १३।४; वसिष्ठ. १६।१०; विष्णु धर्मोतर. ६।२३; याज्ञ. २।२२; मनु. ८।५१, १६८, ९।२३२; कौटल्य. २।१०, २।२१, ३०, ४।९, १०, ३।१; याज्ञ. २।२३, १।३१९, २।८४-९४; नारद. ४।६९-७५, १३५-१४६; कात्या. २४९-३१२; शुक्र. २।२९१-३१८, ४।१७२-१८२; नारद. ४।७०-७१; शुक्र. २।२९७, ४।५।१७२; वि. ध. सू. ७८; नारद. ४।१३५; याज्ञ. १।३१८-३२० इत्यादयः । पाश्चात्यानामाक्षेपो यद्भारतीया लेख्यप्रमाणविषयेऽनभिज्ञा आसन्, उपहासास्पदमेतत्, उक्तप्रमाणानान्तरम् ।

'प्रत्यर्थिनोऽग्रतो लेख्यम्' इत्यत्र व्यवहारः लिखितप्रतिज्ञयैव प्रारभ्यते । तत्साधनं प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति । लिखितं द्विविधमुक्तम्–शासनं चीरकञ्चेति[1] । लेख्यप्रमाणं द्विविधम्–शासनं जानपदञ्चेति । जानपदञ्च द्विविधिम्–स्वहस्तकृतमन्यहस्तकृतञ्चेति । तत्र स्वहस्तकृतमसाक्षिकम्, अन्यकृतं ससाक्षिकम्, अनयोश्च देशाचारानुसारेण प्रामाण्यम् । यथाह नारदः

**लेख्यं तु द्विविधं ज्ञेयं स्वहस्ताऽन्यकृतं तथा ।**
**असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ १।१३५ ॥**

तत्राऽन्यकृतमाह याज्ञवल्क्यः

**यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।**
**लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ॥**
**समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।**
**सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥**
**समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।**
**मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥**
**साक्षिणश्च स्वहस्तेन पितृनामपूर्वकम् ।**
**अत्राहममुकः साक्षी लिखेयुरिति ते समाः ॥**
**उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।**
**लिखितं ह्यमुकेनेति लेखकोऽन्ते लिखेत् ॥**
**विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।**
**तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ॥**

**( याज्ञ. २।८४-८९ )**

तत्रैतत्स्वहस्तकृतं परहस्तकृतं च यल्लेख्यं देशाचारानुसारेण सबन्धकव्यवहारेऽबन्धकव्यवहारे च मुक्तमर्थक्रमापरिलोपेन लिप्यक्षरापरिलोपेन च लेख्यमित्येतावन्न पुनः साधुशब्दैरेव, प्रतिस्विकदेशभाषयापि लेखनीयम् । यथाह नारदः

**देशाचारविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।**
**तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥ १।१३६ ॥**

विधानं विधिः । आधेर्विधिराधिविधिराधीकरणं तस्य लक्षणं गोप्याधिभोग्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् । अविलुप्तक्रमाक्षरम् । अर्थानां क्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिंस्तदविलुप्त क्रमाक्षरम् । तदेवंभूतं लेख्यं प्रमाणम् ।

---

1. याज्ञ. २।२२।

नाहमस्मै धारयामीति धनविषयेऽपह्नवानमधमर्णं करणेन लेख्यसाक्षिदिव्यादिना प्रतिपादितमर्थमुत्तमर्णस्य राजा प्रदापयेत्[1] । "बलाद्यच्चापि लेखितम्" (मनु. ८।१६८) इत्यपि वर्णितम् । 'कूटशासनकर्तृंश्च' (मनु. ९।२३२) इति प्रतिपादितम् । सीमाविवादे निर्वृत्ते सीमापत्र विधीयते[2] । लेख्यं त्रिविधम् । राजसाक्षिकं ससाक्षिकमसाक्षिकमिति विष्णुः (७।१-३) । राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं राजसाक्षिकम् । यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितम् ससाक्षिकम् । स्वहस्तलिखितमसाक्षिकम्[3] ।

क्षेत्रादिविषये विक्रयादीनां लेख्यं विना सिद्धिर्न भवति । सिध्यते वाचिकोऽपि । स्थावरेषु विषये आधिर्दशवर्षपर्यन्तमुपयुक्तः स तथा वाचिकोऽपि लेख्यं विनाऽपि सिध्यति । यथाह **मरीचिः**

**स्थावरे विक्रयाधाने विभागे दान एव च ।**
**लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥**
**सिध्यते वाचिकोऽप्याधिः स्थावरे च दशाब्दिकः ।**
**प्रतिग्रहे च क्रीते च नालेख्या सिध्यति क्रिया ॥**

तथा[4] च विस्तरेण **बृहस्पतिः**

**साक्षिणामेष निर्दिष्टः सङ्ख्यालक्षणनिश्चयः ।**
**लिखितस्याधुना वच्मि विधानमनुपूर्वशः ।**
**षाण्मासिके समये भ्रान्तिः संजायते यतः ।**
**धात्राऽक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥**
**राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।**
**लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥**

---

1. मनु. ८।५१।
2. कात्या. २५७,३०१।
3. विष्णु. ७।४-५।
4. **अलिपिज्ञऋणी यः स्याल्लेखयेत्स्वमतं तु सः ।**
**साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीमपगाः ॥**
(**व्यासः, याज्ञ. २।९०**)

**उत्पत्तिजातिसंज्ञाय धनसंज्ञा च लेखयेत् ।**
**स्मरत्येवं प्रयुक्तस्य नश्येदर्थस्त्वलेखितः ॥**
(**कात्या. २५१**)

**राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।**
**राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥**
(**कात्या. २५८**)

भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् । ६।१,२,४.५ ॥
भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥
भूमिं दत्वा तु यः पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यस्तु क्रयलेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं दत्वा लेख्यं करोति यः ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तु तत्स्मृतम् ॥
ग्रामो देशश्च यः कुर्यान्मतं लेख्यं परस्परम् ।
राजाऽविरोधिधर्मार्थेसन्धिपत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः ।
कर्माणि तु करिष्यामि दासपत्रं तदिष्यते ॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उज्जामपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥ ६।११-१७;६।३ ॥

**शासनम्**

तत्र व्यासः

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे वाऽपि प्रलिखेद्राजशासनम् ॥
स्थानं वंशानुपूर्वी च देशं ग्राममुपागतान् ।
ब्राह्मणांश्च तथा चान्यान् मान्यान्यानधिकृतान् लिखेत् ।
कुटुम्बिनोऽत्र कायस्थ दूतवैद्यमहत्तरान् ।
म्लेच्छचाण्डालपर्यन्तान् सर्वान् संबोधयन्निति ॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकीयाय दानं सब्रह्मचारिणे ॥
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ।
अनाच्छेद्यमनाहार्यं सर्वभाव्यविवर्जितम् ॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
ज्ञातं मयेति लिखितं तदा व्यक्ताक्षरैर्युतम् ॥
अब्दमासतदर्धाहो राजमुद्राङ्कितं तथा ।
अनेन विधिना लेख्यं राजशासनकं लिखेत् ॥

बृहस्पतिः

वंशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत् ॥
यद् वृत्तं व्यवहारे तु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

वृद्धवसिष्ठः[1]

यथोपन्यस्तसाध्यार्थसंयुक्तं चोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमिष्यते ॥
प्राड्विवाकादिनामाङ्कं मुद्रितं राजमुद्रया ।

कात्यायनः

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक् तथा ।
निर्णयश्च यथा तस्य यथा चावधृतं स्वयम् ॥
एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत् ।
सभासद्श्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ॥
यथालेख्यविधौ तद्वत्स्वहस्तं तत्र दापयेत् ।
अभियोक्त्रभियुक्तानां वचनं प्राङ्निवेशयेत् ॥
सभ्यानां प्राड्विवाकस्य कुलानां वा ततः परम् ।
निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥
अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ॥
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥

(कात्या.२५९,२६०,२६३,२६१,२६४)

सल्लेख्यम्

लेख्यं तु साक्षिमत्कार्यमविलुप्तक्रमाक्षरम् ।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु ॥
वर्णवाक्यक्रियायुक्तमसन्दिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥
ख्यापितं चेद्द्वितीयेऽह्नि न कश्चिद्विनिवर्तयेत् ।
तथा तुं स्यात्प्रमाणं तन्मत्तोन्मत्तकृतादृते ॥

1. व्य. नि. पृ. ८५।

मलैर्यद्भेदितं दग्धं छिद्रितं वीतमेव वा ।
तदन्यत्कारयेल्लेख्यं स्वात्मना लिखितं तथा ॥

(कात्या. २७२, २५२, २५३, २६, २७२, ३१२)

व्यवहाराक्षमे पत्रे पत्रान्तरं कुर्यादिति विधीयते । व्यवहाराक्षमत्व चात्यन्त-व्यवहितदेशान्तरस्थे पत्रे दुर्लेख्ये दुष्टानि सन्दिह्यमानानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिंस्तद् दुर्लेख्यं तस्मिन् दुर्लेख्ये, नष्टे कालवशेन, उन्मृष्टे मषीदौर्बल्यादिना मृदितलिप्यक्षरे, हृते तस्करादिभिः, भिन्ने विदलिते, दग्धे अग्निना प्रज्वलिते, छिन्ने द्विधाभूते सति पत्रं भवति । एतच्चार्थिप्रत्यर्थिनोः परस्परानुमतौ सत्याम् । विमत्यां तु व्यवहारप्राप्तौ देशान्तरस्थपत्रानयनायाध्वापेक्षया कालो दातव्यः । दुर्गदिशावस्थिते नष्टे वा पत्रे साक्षिभिरेव व्यवहारनिर्णयः कार्यः । यथाह **नारदः**

**लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते ।**
**सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥ २।१४२ ॥**

सतो विद्यमानस्य पत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालावधिर्दातव्यः । असतः पुनरविद्यमानस्य पत्रस्य पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारपरिसमापनं कार्यम्[1] ।

**दुष्टलेख्यम्**

तत्र **कात्यायनः**

**साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य वा ।**
**धनिकस्योपधादोषात्तथा धारणिकस्य वा ॥**
**दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विर्निदिशेत् ।**
**तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः ॥**

**(कात्या. २७३-२७४)**

**नारदः**

**मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत् ।**
**तदप्रमाणं लिखितं भीतोपधिकृतं तथा ॥ ४।१३७ ॥**

अत्र मत्तेन लिखितम्, तथा तदा ब्रह्महत्याद्यभिशस्तेन यत्, स्त्रिया यत्, बालेन च कृतं यत्, तथा अर्थसंबधेन विनैव बलात्कारेण कारितं तथैव भीतोपधिकृतं यत्कारणमिति तत्कारमप्रमाणम् । अत्र **बृहस्पतिः**

---

1. याज्ञ. २।९१।

मुमूर्षुशिशुर्भीतार्तैः स्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिध्यति ॥ ६।३० ॥
दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः ॥
यदुज्ज्वलं चिरकृतं मलिनं स्वल्पकालिकम् ।
भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥ ६।३१-३२ ॥
स्थानभ्रष्टास्त्वपंक्तिस्थाः सन्दिग्धा लक्षणच्युताः ।
यत्रैवं स्युः स्थिता वर्णाः लेख्यं दृष्टं तथा भृगुः ॥
(कात्या. २६९)
स्थावरे विक्रियाधाने कूटं लेख्यं करोति यः ।
स सम्यग्भावितः कार्ये जिह्वापाण्यङ्घ्रिवर्जितः ॥
(कात्या. ३११)
धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्त्ता कृतं हीति विभावयेत् ॥
देशाचारविरुद्धं यत्संदिग्धं क्रमविवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥
(कात्या. २८१;२७०)

**दूषितलेख्यपरीक्षा**

लेखकेन न लिखितं तथा साक्षिभिर्न दृष्टमेवं प्रार्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम्[1] । अत्र कात्यायनः

साक्षिलेख्यककर्त्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥ २७६ ॥
आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥ ३२३ ॥
कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दममुत्तमम् ॥ २९० ॥
अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुध्येत्तु न संशयः ॥ २८५ ॥

---

1. कार्यो बलेन महता निर्णयो राजशासने ।
राज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥ प्रजापतिः ॥
बृह. ६।३९-४४; नारद; ४।१४३-१४४ ।

ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥ २८६ ॥
समुद्रेऽपि यदा लेख्ये मृताः सर्वेऽपि ते स्थिताः ।
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु च ॥ २८७ ॥
शुद्धाशुद्धं क्रियाशुद्धं पारम्पर्यानुमोदितम् ।
ईदृशं सिद्धिमवाप्नोति शासनं नृपचिह्नितम् ॥ २९६ ॥
पश्चात्कारनिबन्धं यत्तद्यत्नेन विचारयेत् ।
यदि स्याद्युक्तियुक्तं तु प्रमाणं लिखिते तदा ॥ २९४ ॥
अन्यथा मूलतः कार्यं पुनरेव विनिर्णयेत् ।
अतथ्यं तथ्यभावेन स्थापितं ज्ञानविभ्रमात् ॥
निवर्त्यं तत्प्रमाणं स्याद्यत्नेनापि कृतं नृपैः । २९६ ॥

**लेख्यबलम्**

लेख्ये सति लेख्यक्रिया प्रोक्ता सैव बलीयसी । वाचिके साक्षिरूपे प्रमाणे सति वाचिकी क्रिया साक्षिरूपा क्रिया सैव मता बलीयसी । लेख्यस्योपरि या वाचिकी साक्षिरूपा क्रिया लेख्या नारूढेति यावत् तत्र सा सिद्ध्येत् । अर्थात्, लेख्यक्रिया-विरोधिनी या क्रिया सा न प्रमाणम् । तत्र **बृहस्पतिः**

कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत् ।
श्रावयेत्स्मारयेच्चैव यथा स्याद् बलवत्तरम् ॥ ६।४९ ॥

**नारदः**

दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं च यत् ।
लेख्यं सिद्ध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥ ४।१४० ।

अत्र धनिकसंतत्या ऋणिकसन्ततेः यत्प्रतिकालं दर्शितम् । यदा-यदा किञ्चित् फलं प्रार्थ्यते तत्प्रार्थितम् । यथा यत्प्रतिकालं श्रावितं कालान्तरे स्कन्धकं वा गृहीतम् । अथवा श्रावितमेव भूयो भयः कथितम् । तदेवमृणिकसन्ततेः सन्तानारूढ-प्रत्ययमेव मृतेष्वपि साक्ष्यादिषु सर्वेष्वपि प्रमाणमेवेति ।

तथा[1] च **कात्यायनः**

---

1. स्वहस्तकाज्जानपदं तस्माच्च नृपशासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥
द्वित्रिलिपिज्ञः स्वकृतमन्यलेख्येन युक्तिभिः ।
कुर्याच्च सदृशं लेख्यं तस्माज्जानपदं शुभम् ॥
अप्रकाशात् साक्षियुक्तं लेखकाक्षरमुद्रितम् ॥
लोकप्रसिद्धं स्वकृताद्धीनमन्यकृतं शुभम् ॥
देशाध्यक्षादिना लेख्यं पत्रं जानपदं कृतम् ।

दृष्टं पत्रे स्फुटं दोषं नोक्तवानृणिको यदि ।
ततो विंशति वर्षाणि कालं पत्रं स्थिरं भवेत् ॥
शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत् तत् पत्रं दोषवर्जितम् ॥
अथवा विंशतिं वर्षाण्याधिर्भुक्तस्तु निश्चितः ।
तेन लेख्येन तत्सिद्धिर्लेख्ये दोषविवर्जिता ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रोक्तव्या यावद् वर्षाणि विंशति ॥
आधानसहितं यत्र ऋणं लेख्यनिवेशितम् ।
मृतसाक्षिप्रमाणात्तु स्वल्पभोगेन तद्विदुः ॥
प्राप्तं वानेन चेत् किञ्चिद्देयं चार्थनिरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥ २९८-२३० ॥
न दिव्यैः साक्षिभिर्वापि हीयते लिखितं क्वचित् ।
लेख्यधर्मः सदा श्रेष्ठो ह्यतो नान्येन हीयते ॥
तद्युक्तिप्रतिलेख्येन तद्विशिष्टेन वा सता ।
लेख्यक्रिया निरस्येत न साक्षिशपथैः क्वचित् ॥ कात्या. ३०६-३०७ ॥

**लेख्यदौर्बल्यम्**

तत्र **बृहस्पतिः**

आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धर्णाशङ्कया तत्तु लेख्यं दुर्बलतामियात् ॥
लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।
न तत्सिद्धिमवाप्नोति सन्तिष्ठस्त्वपि साक्षिषु ॥
प्रयुक्ते शान्तिलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं तत्सन्देहमवाप्नुयात् ॥
उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्तानां न लेख्यं हानिमवाप्नुयात् ॥ ६।५१,४७,४८ ।

तथा[1] च **नारदकात्यायनौ**

---

सभाकालं पश्चिमं वा तत्र राजकृतं शुभम् । व्यासः ॥

1. अदृष्टाश्रावितं लेख्यं प्रमीतधनकर्णिकाम् ।
अबन्धलग्नकञ्चैव बहुकालं न सिध्यति ॥ व्यासः ॥

लेख्ये देशान्तरं नीते दग्धे दुर्लिखिते कृते ।
सतस्तत्कालहरणमसतो द्रष्टृदर्शनम् ॥

(नारद. ४।१४२)

अस्य श्लोकस्यार्थो द्वयोरपि वादिप्रतिवादिनोः सोपयोगः । वादिनस्तावत्—यदा वादिना प्रतिवादी लिखितद्रव्यसम्बन्धे पृष्टः, न च तत्पत्रं तस्य हस्ते । ऋणी च वदति दर्शयतु ममायं पत्रम् । यदि विद्यमानं स्यात् तदानपेक्षया तदानयनाय धर्माधिकरणेन विशिष्टैर्वा कालहरणं देयम् । अथवा यदीदं पत्रं दग्धं हृतं वा, तदा असत अविद्यमानस्य तद्दृष्टदर्शनमपि साधुजनसाक्ष्यपेक्षया प्रमाणम् । ते च द्रष्टारः साक्षिलेखका साधवो यदि जीवन्ति । अथवा केचिदुदासीनाः प्रश्नकाले आगतां यैस्ताल्लिख्यमानं दृष्टम् । अविद्यमानं च पत्रमानीतं वादिना । किन्तु यावद्वाच्यते तावदङ्कनष्टत्वादक्षरभ्रष्टत्वाद्वा असत्पत्रसन्देहमागतम्, तदा तस्याशोभनस्य ये तत्काललिख्यमानस्य साक्षिलेखकोदासीनादयो द्रष्टारः केचित् तेऽङ्कभ्रान्त्यपनोदने नामवर्णभ्रान्त्यपनोदने वा प्रमाणं भवन्ति । एवमयं वादिसंबध्यमानः श्लोकोऽभिहितः।

इदानीं प्रतिवादिसंबध्यमानोऽयमेवोच्यते—यदा अग्रहीतधनपत्रेण वा प्रवेशितधनपत्रेण वा पत्रारूढपितृनामजातिद्रव्यप्रमाणर्णिमतसाक्षिलेखाद्यङ्गपरिपूर्णलिखितबलात् कश्चिदृणी धर्माधिकरणमानीतः । तेन चोत्तरकालेऽभिहितम्—यथा सत्यमिदमहमस्मि। मया तत्पत्रं लिखितमासीत् । किंतु किल कार्यार्थं द्वितीयदिने द्रव्यमभिग्रहीष्यामि, तावत्कार्यं वोढनीयम् । मया द्रव्यं न गृहीतम् । पत्रं च प्रमादात् पार्श्वे स्थित्वा मया न पाटितम् । तावत् कतिपयदिवसागमेनैवास्य पित्रा उक्तोऽहं यथा त्वदीयमगृहीतार्थं पत्रं तस्मिन्नेव दिने अनादरेण बहिरेव मुक्तं किल निरर्थकत्वात् । त्वन्निरोधात् पाटयिष्यामि । तावत्तद्देयं नष्टम्, येनातिप्रयत्नेनान्वेषयतापि यथा तत्क्वचिन्न दृष्टम्। तन्मा कश्चिद्दैवयोगात्कालान्तरेऽपि तव यः चाकरीभवति । ततोऽहमेव प्रणष्टिविशुद्धिपत्रं प्रयच्छामि । एवमुक्त्वा तेनास्य पित्रा तत्काल एव मम प्रणष्टिविशुद्धिपत्रं दत्तम् । तच्च मयातिप्रयत्नेन तत्कालेऽमुकायतने वसता तत्रैवामुकपार्श्वे धवलगृहमञ्जूषायां स्थापितम् । इत्येवं प्रतिवादिनोत्तरे दत्ते तदानयनापेक्षया तद्दानार्थं तस्य सतस्तत्कालहरणं देयम् । असतस्तद्द्रष्टृदर्शनं प्रमाणमित्यादिकं प्रतिवादिनोऽपि सोपयोगार्थम् ।

सतस्तत्कालहरणमिति, देशान्तरादौ विद्यमाने लेख्ये तदानयनं यावत्, अविद्यमाने च तल्लेख्यदर्शितपुरुषदर्शनं यावत्प्रतीक्षणीयम् ।

**कात्यायनः**

यल्लेख्यं प्राड्विवाकेन न दृष्टं न प्रतिश्रुतम् ।
अलब्धर्णे कृते लेख्ये कथं तत्प्राप्नुयाद्धनी ॥

आधानमुपरुद्धो वा यावत्तिष्ठति लग्नकः।
लेख्यालाभात् स्मृतं तावत्प्रमाणं द्रष्टृदर्शनम् ॥

यल्लेख्यं दर्शनीयमिति प्रतिश्रुतं तत्प्राड्विवाकेन न दृष्टम्, तस्मिन् कृते कथमलब्धधनो धनं प्राप्नुयादित्यर्थः।

## भुक्तिः

यस्मिन्वस्तुनि संभोगो विद्यते क्रयादिरूपस्त्वागमो नास्ति तत्र प्रथमपुरुषगोचर आगम एव प्रमाणं न संभोग इति शास्त्रमर्यादा[1]। भुक्तेः कैश्चिद्विशेषणैर्युक्तायाः प्रामाण्यं दर्शयिष्यन् कस्याश्चिद्भुक्तेः कार्यान्तरमाह–

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥
(याज्ञ. २।२४)

असंबद्धेन भुज्यमानां भुवं धनं वा पश्यतः अब्रुवतः 'मदीयेयं भूः न त्वया भोक्तव्या' इत्यप्रतिषेधयतः तस्या अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति। धनस्य तु हस्त्यश्वादेर्दशवार्षिकी हानिः। नन्वेतदनुपपन्नम्, नह्यप्रतिषेधात्स्वत्वमपगच्छति। अप्रतिषिद्धस्य दानविक्रयादिवत्स्वत्वनिवृत्तिहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात्। नापि विंशतिवर्षोपभोगात्स्वत्वम्। उपभोगस्य स्वत्वे प्रमाणत्वात् प्रमाणस्य च प्रमेयप्रत्यनुत्पादकत्वात्, रिक्थक्रयादिषु स्वत्वकारकहेतुष्वपाठाच्च। तथा हि–'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धम्, क्षत्रियस्य वर्जितम्, निर्विष्टं वैश्यशूद्रयोः' (गौ. २।१०, ३९-४२) इत्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति न भोगम्।

नचेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वापत्तिहेतुत्वं प्रतिपादयतीति युक्तम्। स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात्। गौतमवचनं तु नियमार्थम्। अपि च 'अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि। चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः"। इत्येतदनागमोपभोगस्य स्वत्वहेतुत्वे विरुद्ध्यते। नच 'अनागमं तु यो भुङ्क्ते' इत्येत्परोक्षभोगविषयम्, 'पश्यतोऽब्रुवतः' इति प्रत्यक्षभोगविषयमिति युक्तं वक्तुम्। 'अनागमं तु यो भुङ्क्ते' इत्यविशेषाभिधानात्, "नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा। पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः" ॥ इति कात्यायनवचनाच्च। समक्षभोगे च हानिकारणाभावेन हानेरसम्भवात्।

न चैतन्मन्तव्यम्–आधिप्रतिग्रहक्रयेषु पूर्वस्याःक्रियायाः प्राबल्यादपवादेन भूविषये विंशतिवर्षोपभोगयुक्तायाः, धनविषये दशवर्षोपभोगयुक्तायाः, उत्तरस्याः क्रियायाः

1. मनु. ८।२००।

प्राबल्यमनेनोच्यते । यतस्तेषूक्तैव क्रियातत्त्वतो नोपपद्यते, स्वमेव ह्याधेयं देयं विक्रयं च भवति । न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति । अस्वत्वदाने प्रतिग्रहे च दण्डः । "भूम्यादीनां हानिरनुपपन्नम्, नापि व्यवहारहानिः । नारदादिना[1] व्यवहारतो भङ्गो दर्शितो न वस्तुतः । व्यवहारभङ्गश्चैव–"भोक्ता किल वदति 'अजडोऽयम-पौगण्डोऽबालोऽयमस्य संनिधौ विंशतिवर्षाण्यप्रतिरवंमया भुक्तम्, तत्र बहवः साक्षिणः सन्ति, यद्यस्य स्वमन्यायेन मया भुज्यते तदायं किमित्येतावन्तं कालमुदास्ते' इति, तत्र चायं निरुत्तरो भवति । एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव । 'छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः' (याज्ञ. २।१९) इति नियमात् ।

यद्यपि न वस्तुहानिर्नापि व्यवहारहानिस्तथापि पश्यतोऽप्रतिषेधतो व्यवहारहानि-शङ्का भवतीति तन्निवृत्तये तूष्णीं न स्थातव्यमित्युपदिश्यते । तच्च न स्मार्तकालाया भुक्तेर्हानिशङ्काकारणत्वाभावात्, तूष्णीं न स्थातव्यमित्येतावन्मात्राभिधित्सायां विंशतिग्रहणमविवक्षितं स्यात् । अथोच्यते–विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिरा-करणार्थम् । आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनाधिसी-मेत्याद्यपवादासंभवात् । भूमेर्धनस्य च फलहानिरिह विवक्षिता, न वस्तुहानिर्नापि व्यवहारहानिः । अस्यापवादमाह–

**आधिसीमोपनिक्षेपजडबालधनैर्विना ।**
**तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥**

**(याज्ञ. २।२५)**

स्वत्वाव्यभिचारत्वेन भोगस्य स्वत्वे प्रामाण्यमुक्तम् । भोगमात्रस्य स्व-त्वव्यभिचारित्वात्कीदृशो भोगः प्रमाणामित्यत आह–

**आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।**
**आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥**

**(याज्ञ. २।२७)**

स्वत्वहेतुः प्रतिग्रहक्रयादिः आगमः । स भोगादप्यधिको बलीयान्; स्वत्वबोधने भोगस्यागमसापेक्षत्वात् । न च भोगमात्रात्स्वत्वागमः; परकीयस्याप्यपहारादिनोपभोग-संभवात्[2] । अतश्च सागमो दीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तं भवति[3] । क्वचिच्चागमननिरपेक्षस्यापि भोगस्य प्रामाण्यम् ।

---

1. मनु. ८।१४८।
2. भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।
   भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥
   (नारद. १८।६)
3. सागमो दीर्घकालश्चाविच्छेदोऽपरवोज्झितः ।

पूर्वेषां पित्रादीनां त्रयाणां क्रमःपूर्वक्रमः । तेनागतो यो भोगस्तस्माद्विना । आगमोऽभ्यधिक इति सम्बन्धः । स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणम् । तत्राऽप्यागमोऽज्ञातनिरपेक्षो न सत्तानिरपेक्षः । सत्ता तु तेनैवागम्यते । 'विना पूर्वक्रमागतात्' इत्येतच्च स्मार्तकालप्रदर्शनार्थम् । 'आगमोऽभ्यधिको भोगात्' इति च स्मार्तकालविषयम् । अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्या आगमाभावनिश्चयसंभवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम् । अस्मार्ते तु काले योग्यानुपब्ध्यभावेनागमाभावनिश्चयासंभवादागमज्ञाननिरपेक्ष एव् सन्ततो भोगः प्रमाणम्[1] ।

स्मार्तश्च कालो वर्षशतपर्यन्तः, 'शतायुर्वै पुरुषः' इति श्रुतेः । अनुगमाभावदिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चयासंभवात् । अतश्च वर्षशताधिको भोगः सन्ततोऽप्रतिरवः प्रत्यक्षश्चागमाभावे वाऽनिश्चितेऽव्यभिचारादाक्षिप्तागमः, स्वत्वं गमयति । अस्मार्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम्[2] । नच 'अनागमं तु यो भुङ्क्ते' इत्येकवचननिर्देशात् 'बहून्यब्दशतानि अपि' इति 'अपि' शब्दप्रयोगात्प्रथमस्यैव पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानम् । द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात्[3] । तस्मात्सर्वत्र निरागमोपभोगे 'अनागमं तु यो भुङ्क्ते' इत्येतद्द्रष्टव्यम्' ।

यदपि "अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम्" ॥ इति, तदपि पित्रा सह पूर्वतरैस्त्रिभिरिति योज्यम् । तत्रापि 'क्रमात्त्रिपुरुषागतमित्यस्मार्तकालोपभोगलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसंभवात्, द्वितीये वर्षे निरागमस्य भागस्य प्रामाण्यप्रसङ्गः । तथा सति 'स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते' इति स्मृतिविरोधः, 'अन्यायेनापि यद्भुक्तम्' इत्येतच्चान्यायेनापि भुक्तमपहर्तुं न शक्यम्, किं पुनरन्यायानिश्चये इति व्याख्येयम् 'अपि' शब्द श्रवणात्[4] । तत्रापि अत्यन्तमागमं विना ।

अत्यन्तमुपलभ्यमानमानमागमं विनेति व्याख्येयम्, न पुनरागमस्वरूपं विनेति । आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तम् । 'क्रमात्त्रिपुरुषागतम् इत्येतदुक्तार्थम् । ननु स्मरणभोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपन्नम् ।

---

प्रत्यर्थिसंनिधानश्च परिभोगोऽपि पञ्चधा ॥ मिता. ॥

1. स्मार्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता ॥ कात्या. मिता. ॥

2. अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ मिता. ॥

3. आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ॥
(नारद. २।८७)

4. यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥ हारीतः, मिता. ॥

तथा हि—यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम् । अथ प्रमाणान्तरेणागमो नावगतः कथं तद्विशिष्टो भोगः प्रमाणम्? उच्यते—प्रमाणान्तरेणाऽवगतागमसहित एव निरन्तरो भोगः कालान्तरे स्वत्वं गमयति। अवगतोऽप्यागमो भोगरहितो न कालान्तरे स्वत्वं गमयितुमलम् । मध्ये दानविक्रयादिना स्वत्वापगमसंभवादिति सर्वमनवद्यम् ।

आगमसापेक्षो भोगः प्रमाणम् । आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणम् । यस्मिन्नागमे स्वल्पापि भुक्तिर्नास्ति तस्मिन्नागमे बलं संपूर्णं नैवास्ति। अयमभिसन्धिः— स्वस्वत्वनिवृत्तिःपरस्वत्वापादानं च दानम्, परस्वत्वापादानञ्च परो यदि स्वीकरोति तदा संपद्यते, नान्यथा। स्वीकारश्च त्रिविधः—मानसः, वाचिकः, कायिकश्चेति। तत्र मानसो ममेदमिति संकल्परूपः । वाचिकस्तु ममेदमित्यादि अभिव्याहारोल्लेखी सविकल्पकः प्रत्ययः । कायिकः पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः[1] । आश्वलायनोऽप्याह—अनुमन्त्रयेत् प्राण्यभिमृशेद्वप्राणि कन्यां च' इति। तत्र हिरण्यवस्त्रादावुदकदानानन्तरमेवोपादानादिसंभवात् त्रिविधोऽपि स्वीकारः सम्पद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासंभवात् स्वल्पेनाप्युपभोगेन भवितव्यम्; अन्यथा दानक्रयादेः संपूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकल आगमो दुर्बलो भवति तत्सहितादागमात्। एतच्च द्वयोः पूर्वापरकालापरिज्ञाने ।

पूर्वापरकालपरिज्ञाने तु विगुणोऽपि पूर्वकालागम एव बलीयानिति । अथवा 'लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधम्' इत्युक्तमेतेषां समवाये कुत्र यस्य वा प्राबल्यम्[2] । आद्ये पुरुषे साक्षिभिर्भावित आगमो भोगादप्यधिको बलवान् । पूर्वक्रमागताद्भोगाद्विना । स पुनः क्रमागतो भोगश्चतुर्थे पुरुषे लिखितेन भावितादागमाद्बलवान् । मध्यमे तु भोगरहितादागमात्स्तोकभोगसहितोऽप्यागमो बलवान्[3] ।

तत्र **बृहस्पतिः**

> **विद्यया क्रयबन्धने शौर्यभार्यान्वयागतम् ।**
> **सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम् ॥**
> **पित्र्ये लब्धक्रयाधाने सत्वशौर्यप्रवेदनात् ।**
> **प्राप्ते सप्तविधे भोगः सागमः सिद्धिमवाप्नुयात् ॥**

---

1. दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे ।
केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥ मिता. ॥
2. आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।
आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ॥ मिता. ॥
3. आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका संतता या चिरन्तनी ॥ मिता. ॥

क्रमागतः शासनिकः क्रयाधानागमान्वितः।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात्॥
संविभागक्रयप्राप्तं पित्र्यं लब्धं च राजतः।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया॥
प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम्।
तस्य तत्सिद्धिमाप्नोति हानिं चोपेक्षया तथा॥
अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्॥ २७।२-२८॥
यदा आहर्ताऽभियुक्तः स्याल्लेख्यं साक्षी तदा गुरुः।
लेख्याभावे तु युक्तिस्तु भुक्तिस्ताभ्यां गरीयसी॥
आहर्ता शोधयेद्भुक्तिमागमं चापि संसदि।
तत्सुतो भुक्तिमेवैकां पौत्रादिस्तु न किञ्चन॥ ७।३८-३९॥

विष्णुकात्यायनौ[1]

सागमेन तु भोगेन भुक्तं सम्यग्सदा तु यत्।
आहर्ता लभते तत्तु नापहार्यं तु तत्क्वचित्॥
पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः।
तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत्॥
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात्॥

कात्यायनः[2]

भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी।
विच्छिन्नापि तु सा ज्ञेया या तु पूर्वप्रसाधिता॥
आदानकालादारभ्यभुक्तिर्या तु निरन्तरा।
आदानं प्राप्य तस्यां तु प्रायः साक्ष्यं प्रवर्तते॥
स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते।
अस्मार्तेऽनुगमाभावात् क्रमात्त्रिपुरुषागता॥
मुख्या पैतामही भुक्तिः पैतृकी चापि संमता।
त्रिभिरेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिका मता॥

---

1. विष्णु. ५।१८५-१८७; कात्या. ३१९, ३२६, ३२७; व्यास. व्य. नि. पृ. १२८; वीरमित्रोदयः पृ. २०४-२०५; नारद. ४।९७, ४।७५-७६, ४।९३, ४।८५, ४।८७-८८, ९२।
2. कात्या. ३२९, ३२१, ३१८, ३२४, ३१६।

येनोपात्तं हि यद्द्रव्यं सोऽभियुक्तस्तदुद्धरेत् ।
चिरकालोपभोगेऽपि भुक्तिस्तस्यैव नेष्यते ॥
नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

**अनुपभोगेनासिद्धिरन्यभोगहान्यपवादश्च**

अजडापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः[1] । अजडस्य अपोगण्डस्य च धनं तत्संनिधाने अविवादं परैर्दशवर्षपर्यन्तमुपभुक्तं भोक्तुरेवेतत्स्वं संपद्यते । आधिर्बन्धकः, उपनिधीयत इत्युपनिधिः प्रीत्या भोगार्थं द्रव्यम् । एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः । यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्यौ[2] । तथा च–

संप्रीत्या भुज्यमानानि नं नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥
(मनु. ८।१४६)

यावद्भोक्ता जीवति तावदनागमं भुज्यमानं परकीयं भवति । यथा तथा ऽस्योद्धरणसम्भवो भवति । यदा पुनरत्र भोक्तापि अप्रार्थित एव मृतः । तदा तद्वस्तु तदीयवंश्यभोग्यंतां याति । अतो नोपेक्षणीयम् । यथाह नारदः

तथारूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत् ॥
आगमेन विशुद्धेन भोग्ये याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ॥ ४।९३,८५ ॥
अनागमेन भुक्तं यन्न तद्भुक्तिवशान्नयेत् ।
एतत्तु कर्त्तरि धनं याति तद्वंशिनो मतम् ॥
अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥
अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम् ।
अप्रत्यक्षं च यद्भुङ्क्तं षडेतान्यागमं विना ॥ ४। ८७-८८,९२ ॥

स्वकीयानर्थान् द्विपदश्चतुष्पदस्थावरादिकान् प्रीतिसमर्पितबलात्कारगृहीत शून्याक्रान्तादिप्रपञ्चैः परैर्भुज्यमानानुपेक्षते । तस्य जीवतोऽपि चिरकालातिक्रान्ता

1. गौ. १२।३४।
2. मनु. ८।१४५।

भुक्तिस्तान् पराणामेव वशीकुरुते, प्रत्यक्षं प्रापयति । किं पुनर्मृतस्य[1] । यथाह **याज्ञवल्क्यः**

**पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।**
**परेण भुज्यमानाया धनदशवार्षिकी ॥ २।२४ ॥**

इत्येवमादिभिर्वचनैरेतावन्तं कालमुपेक्षमाणस्यान्यत्र स्वद्रव्यार्थं प्राणपरित्यागेनापि अभिनिविशमानस्य परेण भुज्यमानमात्मीयं चेत् किमित्युपेक्षत इति विक्रयादिवदुपेक्षया दैर्ध्यलिङ्गेनास्य स्वत्वनिवृत्तिः, परस्य स्वत्वप्राप्तिरनुमीयत इति धारेश्वरासहाय-श्रीकरादयो मन्यन्ते । तथा चिरकालापेक्षया क्वचित् स्वरूपहानिः सभाव्येत । अतः तूष्णीं न स्थातव्यमिति व्यवहारोपदेशमात्रं क्रियते । विंशतिवर्षा भुक्तिः भोगहानि-करी, न रूपहानिकरी, तथात्वे सकलवचननिरोधादिति मन्यन्ते विश्वरूपभट्टकुमार-ब्रह्मवित्प्रवरादयः । तत्र बृहस्पतिः

**ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।**
**अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति ॥**
**पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।**
**स्वामी सतापि लेख्येन न पुनस्तां समाप्नुयात् ॥ ७।४०,४१ ॥**
**भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ।**
**अस्मारणं साक्षिणां च स्वार्थहानिकराणि तु ॥**
**तस्माद्यत्नेन कर्त्तव्यं प्रमाणपरिपालनम् ।**
**तेन कार्याणि सिद्ध्यन्ति स्थावराणि चराणि च ॥**
**(नारद. ७।६६-६७)**

यत्किञ्चिदाधीकृतं वस्तु तत्सुचिरेण कालेनापि तेन द्रव्येण लभ्यते । न भोगेन प्रणश्यति । तथा परिसीमा चिराक्रान्तापि स्वस्थीभूते देशे पुनर्लभ्यते न प्रणश्यति । तथा मातापित्रोः परोक्षं येन सधनो बालः परिगृहीतः तद्बालधनं चिरभोगेनापि न प्रणश्यति । तथा निक्षेपो न्यासः, उपनिधिर्निक्षेपमध्येऽन्तर्हितसारद्रव्यम् । तथा स्त्री निक्षेपभूता या भुक्ता । तथा राजस्वशब्देन भूमिरुक्ता । श्रोत्रियस्वशब्देन गावो ऽभिहिताः । एतेषु सविशेषन्यासाः चिरकालातिक्रमेऽपि न नश्यति[2] ।

अजडापोगण्डधनं दशवर्षपर्यन्तमुपभुक्तं परैः सन्निधौ भोक्तुः । न श्रोत्रिय–प्रव्रजितराजपुरुषैः । पशुभूमिस्त्रीणामनतिभोगः[3] । अत्र **बृहस्पतिः**

---

1. नारद. ४।७७-८८ ॥
2. मनु. ८।१४३,१४९; नारद. ४।७१-७७,७९; याज्ञ. २।२४,२७,६५, व्यास. व्य. नि. १३१;
3. गौतम. १२।३४३६।

भुक्तिस्त्रीपौरुषी सिध्येत्परेषां नात्रसंशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिध्येन्न तद्धनम् ॥
अशक्तालसरोगार्तबालभीतप्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥ ७४३,४४,४६,४७ ॥

कात्यायनश्च

सनाभिभिर्बान्धवैश्च भुक्तं यत्स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥ ३३५ ॥
न भोगं कल्पयेत्स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च मातृतः पितृतः क्रमात् ॥ ३३० ॥
क्रयं शिल्पिषु निक्षिप्तं बन्धान्वाहितयाचितम् ।
प्रसह्यातिहनन्मोहाद्धीनो दण्ड्यः स वै भवेत् ॥

**विच्छिन्नभोगनिर्णयः**

तत्र बृहस्पतिः

छिन्नभोगे गृहक्षेत्रे सन्दिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तदविभावयेत् ॥
नामघाटागमं संख्या कालं दिग्भावमेव वा ।
भोगच्छेदनिमित्तं च ये विदुस्तेऽत्र साक्षिणः ॥
तदुत्पन्नाश्च सामन्ता येऽन्यदेशान्तरस्थिताः ।
मौलास्ते तु समुद्दिष्टाः प्रष्टव्या कार्यनिर्णये ॥
अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धे समदृष्टयः ।
तत्प्रमाणं तु कर्त्तव्यमेवं धर्मो न हीयते ।
स्थावरस्यैतदाख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीने वादे तु निर्देश्या दैविकी क्रिया ॥ ७४८-६२ ॥

**युक्तिः**

तत्र बृहस्पतिः

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथान्वा प्रयुञ्जीयादुपधां वापि योजयेत् ॥ ७६८ ॥

नारदः

प्रमादादधनिनो यत्र न स्याल्लेख्यं न साक्षिणः।
अर्थं वापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः॥
चोदना प्रतिकालञ्च युक्तिलेशस्तथैव च।
तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत्क्रमात्॥ ४।२३५-३६॥
अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः।
त्रिचतुः पञ्चकृत्वो वा परतोऽर्थं स दाप्यते॥ ४।२३७॥

तत्र चोदना साक्षिप्रयुक्ते प्रयोजने साक्षिणामृणिकस्य प्रतिकालं संस्मरणम्। युक्तिलेशः पूर्वदत्तस्य द्रव्यस्य पूर्वसंप्रतिपत्तिर्यस्य वा युक्त्युद्देशः, तृतीयः शपथः। दत्तशुद्धकृतनाशतण्डुलकोशादिकैरुपायैरेनमर्थापह्नविनं साधयेत्[1]। कात्यायनः[2]

श्राव्यमाणोऽर्थिना यत्र यो ह्यर्थो न विघातितः।
दानकालेऽथवा तूष्णीं स्थितः सोऽर्थोऽनुमोदितः॥
अर्थिनाभ्यर्थितो तत्र विघातं न प्रयोजयेत्।
त्रिचतुः पञ्चकृत्वो वा परतस्तदृणी वहेत्॥
स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत्।
ततोऽन्यं दापयेत्पूर्वं सकृदुक्तं विघातिनम्॥ १४४;३३६॥

चोदनाप्रतिघाते सामान्यवचनपृच्छाया असंप्रतिपत्तौ युक्तिलेशस्तथान्वियात्। अथ कैस्तैः देशकालार्थसम्बन्धपरिमाणक्रियादिभिः यथाक्रमं स्वयं स्मृतैस्तस्य स्मारितैरिति। केशाकेशिग्रहणात्पारदारिकः। उल्का हस्तोऽग्निदः। शास्त्रपाणिर्घातकः। लोप्त्रहस्तश्चौरः। क्षेपेऽष्टशतं यथानुरूपं वा। रुधिरस्रावे प्रहारैश्चाभिव्यक्ते न साक्षिणः। प्रत्यक्षलिङ्गाभिव्यक्ते चाष्टशतमिति शङ्खलिखितौ॥

## दिव्यानि

**दिव्यभेदादिः**

वेदेषु शपथप्रमाणानि लभ्यन्ते–

मा मामेधो दशतयश्चितो धाक् प्र यद् वां बद्धस्त्मनि खादति क्षाम्।
न मा गरन्नद्यो मातृतमा दासा पदीं सुसमुब्धमवाधुः॥
(ऋक्. १।१५८।४-५)

परशुं चिद् वि तपति शिम्बलं चिद् वि वृश्चति।
उखा चिदिन्द्र येषन्ती प्रयस्ता फेनमस्यति॥
(ऋक्. ३।५३।२२)

1. नारद. ४।२३८; ४।१७२-१७५।
2. कात्या. ३३७-३३८।

आ दधामि ते पदं समिद्धे जातवेदसि ।
अग्निः शरीरं वेष्ट्वसुं वागपि गच्छतु ॥
( अथर्व. २।१२।८ )

"वत्सश्च वै मेधातिथिश्च काण्वावास्तां तं वत्सं मेधातिथिराक्रोशदब्राह्मणोऽसि शूद्रापुत्र इति । सोऽब्रवीदृतेनाग्निं व्ययाव यतरो नौ ब्रह्मीयानिति । वात्सेन वत्सो व्यैन्मैधातिथेन मेधातिथिस्तस्य न लोम च नौषत् ॥ (ताण्ड्यमहा. १४।६।६) ।

"पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते" ( छान्दो ६।१६।१ ) ।

तत्र मानुषप्रमाणनिर्णेयस्यापि निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्धम् । अपिना मानुषप्रमाणसत्त्वेऽपि यत्र चैव घटाद्यङ्गीकारस्तत्राप्येतद् भवतीति सूचितम् । प्रमाणहीने वादे तु निर्दोषा दैविकी क्रियेति बृहस्पतिः । लिखितसाक्षिभुक्तिलक्षणं त्रिविधं मानुषं प्रमाणयुक्तम् । मानुषप्रमाणाभावेऽथावसरप्राप्तं दिव्यं प्रमाणमभिहितम् । पञ्चद्विव्यप्रमाणानि धर्मशास्त्रे विशुद्धये सन्दिग्धस्यार्थस्य सन्देहनिवृत्तये दातव्यानि ।

एतानि महाभियोगेष्वेव नान्यत्रेति नियम्यते न पुनरिमानि एव दिव्यानीति । महत्त्वावधिं च वक्ष्यति । नन्वल्पाभियोगेऽपि कोश इष्यते; 'कोशमल्पेऽपि दापयेत्' इति स्मरणात्; "अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् । तण्डुलाश्चैव कोशश्च शङ्कास्वेव न संशयः ॥" इति स्मरणात् ।

महाभियोगेषु शङ्कितेषु सावष्टम्भेषु चाविशेषेण प्राप्तावपवादमाह–शीर्षकस्थेऽभियोक्तरि (याज्ञ. २।९५) । एतानि तुलादीन्यभियोक्तरि शीर्षकस्थेऽभियुक्तस्य भवन्ति । शीर्षकं शिरो व्यवहारस्य चतुर्थः पादो जयपराजयलक्षणस्तेन च दण्डो लक्ष्यते, तत्र तिष्ठतीति शीर्षकस्थः तत्प्रयुक्तदण्डभागिति । 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्" (याज्ञ. २।७) इति भावप्रतिज्ञावादिन एव क्रियेति व्यवस्था दर्शिता तदपवादार्थमाह–रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः– (याज्ञ. २।९६)। रुच्याभियोक्त्रभियुक्तयोः परस्परसंप्रतिपत्याऽन्यतरोऽभियुक्तोऽभियोक्ता वा दिव्यं कुर्यात् । इतरोऽभियुक्तोऽभियोक्ता वा शिरः शारीरमर्थदण्डं वाऽङ्गीकुर्यात् ।

अयमभिसन्धिः–"न मानुषप्रमाणवद्दिव्यं प्रमाणं भावैकगोचरमपि तु भावाभावाविशेषेण गोचरयति । अतश्च मिथ्योत्तरे प्रत्यवस्कन्दने प्राङ्न्याये वाऽर्थिप्रत्यर्थिनोरन्यतरस्येच्छया दिव्यं भवति । अल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो भवतीत्युक्तम्, तुलादीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः । राजद्रोहाभिशङ्कायां ब्रह्महत्यादिपातकाभि-

शङ्कायाञ्च शिरः स्थायिना विनापि तुलादीनि कुर्यात् । महाचौर्याभिशङ्कायाञ्च तण्डुलाः पुनरल्पचौर्यशङ्कायामेव । तप्तमाषस्तु महाचौर्याभिशङ्कायामेव; अन्ये पुनः शपथा अल्पार्थविषयाः ।

यद्यपि मानुषप्रमाणनिर्णेयस्य निर्णायकं यत्तद्दिव्यमिति लोकप्रसिद्ध्या शपथानामपि दिव्यत्वं तथापि कालान्तरनिर्णयनिमित्तत्वेन समनन्तरनिर्णयनिमित्तेभ्यो घटादिभ्यो दिव्येभ्यो भेदत्वव्यपदेशो ब्राह्मणपरिव्राजकवत् । कोशस्य तु शपथत्वेऽपि घटादिषु पाठो महाभियोगविषमत्वेनावष्टम्भाभियोगविषयत्वेन । च घटादिसाम्यान्नतु समनन्तरनिर्णयनिमित्तत्वेन । तण्डुलानां तप्तमाषस्य च समनन्तरनिर्णयनिमित्तत्वेऽप्यल्पविषयत्वेन शङ्काविषयत्वेन च घटादिवैलक्षण्यात्तेष्वपाठ इति। एतानि च दिव्यानि शपथाश्च यथासम्भवमृणादिषु विवादेषु प्रयोक्तव्यानि ।

यत्तु पितामहवचनम्–"स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्" इति, तदपि लिखितसामन्तादिसद्भावे दिव्यानि परिवर्जयेदिति व्याख्येयम् । ननु विवादान्तरेष्वपि प्रमाणान्तरसम्भवे दिव्यानामनवकाश एव । सत्यम् । ऋणादिषु विवादेषु उक्तलक्षणसाक्ष्युपन्यासेऽर्थिना कृतेऽपि प्रत्यर्थी यदि दण्डाभ्युपगमावष्टम्भेन दिव्यमवलम्बते तदा दिव्यमपि भवति । साक्षिणामाशयदोषसंभवाद्दिव्यस्य च निर्दोषत्वेन वस्तुतत्त्वविषयत्वात्तल्लक्षणत्वाच्च धर्मस्य । स्थावरेषु च विवादेषु प्रत्यर्थिना दण्डावष्टम्भेन दिव्यावलम्बने कृतेऽपि 'स्थावरेषु विवादेषु' इत्यादि पितामहवचनं नात्यन्तिकदिव्यनिराकरणार्थम्, लिखितसामन्ताद्यभावे स्थावरविवादेष्वनिर्णयप्रसङ्गात्, इति मिताक्षरा । तत्र नारदः

**युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।**
**अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥**
**घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।**
**उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥**
**सन्दिग्धेऽर्थेऽभियुक्तानां परीक्षार्थं महात्मभिः ।**
**प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥ ४।२३९,२५२,२५३ ॥**

असाक्षिप्रणिहिते पुरुषप्रत्ययः शासनं भेदनं ताडनम् । संन्यस्ते वा विवादे वा दैवं वा कोशविषभक्षणशस्त्रजलम्, इति शङ्खलिखितौ, शपथक्रिया । राजद्रोहसाहसेषु यथाकामम् । निक्षेपस्तेयेष्वर्थप्रमाणात्[1] । बृहस्पतिनाऽपि नवप्रकारकाणि दिव्यानि मतानि[2] । तत्त्वनुपूर्वपूर्वशः देशकालार्थसंख्याभिः प्रयुक्ता नीति व्यवस्था[3] ।

---

1. विष्णु. ९।१-३।
2. ८।३-४।
3. बृह. ८।५-६।

ऋणादिकेषु कार्येषु पुरुषापेक्षया द्रव्यसख्यान्विता च देया[1] । अभियोगानुसारेण द्विव्यानामपि प्रकारभेदाः[2] । कात्यायनोऽनुसरति याज्ञवल्क्यव्यवस्था ।

"सर्वेष्वेवार्थजातेषु मूल्यं कनकं प्रकल्पयेत्" इति विष्णुः (९।४) । सुवर्णार्धोने कोशो दातव्यः शूद्रस्य । ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम् । द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य । त्रिगुणाय राजन्यस्य । कोशवर्जं चतुर्गुणार्थे ब्राह्मणस्य । न ब्राह्मणस्य कोषं दद्यात् । अन्यत्रागामिकालसमयनिबन्धनक्रियातः । कोशस्थाने ब्राह्मणं सीरोद्धृतमहीरकमेव शापयेत् । प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । सत्सु विदितं सच्चारित्रं न महत्यर्थेऽपि[3] ।

**दिव्यकालविशेषः**

पूर्वेद्युरूपोषितमुदिते सूर्ये सचैलं स्नातं दिव्यग्राहिणमाहूय नृपस्य सभ्ययानाञ्च ब्राह्मणानां सन्निधौ सर्वाणि दिव्यानि कारयेत्प्राड्विवाकः"त्रिरात्रोपोषिताय स्युरेकरात्रोषिताय वा । नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ।" इत्युपवासविकल्पः ।

पितामहेनोक्तो बलवदबलवन्महाकार्याल्पकार्यविषयत्वेन व्यवस्थितः । उपवासनियमश्च कारयितुः प्राड्विवाकस्यापि–"दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् । अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया" । इति पितामहवचनात् । अत्र यद्यपि सूर्योदय इत्यविशेषेणोक्तम्, तथापि शिष्टसमाचाराद्भावानुवासरे दिव्यानि देयानि । तत्रापि–"पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च घटो भवेत् । मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सताम् । दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते । रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् ॥ इति पितामहोक्तः ।

अनुक्तकालविशेषाणां तण्डुलतप्तमाषप्रभृतीनां पूर्वाह्ण एव प्रदानम् । 'पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम्" इति सामान्येन नारदस्मरणात् । अहनि त्रिधा विभक्ते पूर्वो भागः पूर्वाह्णः, मध्यमो मध्याह्नः, उत्तरोऽपराह्णः । तथा परोऽपि कालविशेषो विधिप्रतिषेधमुखेन दर्शितः । विधिमुखस्तावत्–

**अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः ।**
**शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषमम् ॥**
**चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।**
**एते साधारणा मासा दिव्यानामविरोधिनः ॥**
**कोशस्तु सर्वथा देयस्तुला स्यात्सार्वकालिकत्वम् ।**

**(मिता.,याज्ञ. २।९७)**

---

1. बृह. ८।२७-३२।
2. कात्या. ४।६,४१७।
3. विष्णु. ९।१०-१९।

प्रतिषेधमुखोऽपि—

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात्प्रवाते न तुलां तथा ॥
नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचन । मिता. ॥

न शीते तोयशुद्धिः स्यादित्यत्र 'शीत' शब्देन हेमन्तशिशिरवर्षाणां ग्रहणम् । नोष्णकालेऽग्निशोधनमित्यत्र 'उष्णकालशब्देन ग्रीष्मशरदोः विधानलब्धस्यापि पुनर्निषेध आदरार्थः[1] । न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः । शरद्ग्रीष्मयोश्च । न कुष्ठिपैत्तिकब्राह्मणं विषं देयम् । प्रावृषि च । न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् । हेमन्तशिशिरयोश्च । न नास्तिकेभ्यः कोशो देयः, देशे व्याधिमरणकोपसृष्टे च ।

तथा[2] च कात्यायनः

मातापितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रसवानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्दितेष्वेव यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
न सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैः ॥ ४२७-४३० ॥
महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरतेषु च ॥
एषु वादेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
कारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्मनुः ॥ ४३१-४३२ ॥

**अवष्टम्भवादः**

तत्र पितामहः

अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् ॥
(व्य. नि. १४३)

---

1. नारद. ४।२६०,२५४; पिता. , स्मृ च.. पृ. २४२; नारद. ४।४३४,२२५,३१३,३१४,३१५; याज्ञ. २।९८; कात्यायन. ४४२,४३२,४२४ ।
2. नारद. ४।२५६; कात्या. ४३६; नारद. ३३२ ।

उक्तञ्च[1] यदल्पाभियोगे महाभियोगे शङ्कासावष्टम्भयोरप्यविशेषेण कोशो भवति, तुलादीनि विषान्तानि तु महाभियोगेष्वेव सावष्टम्भेष्वेवेति च नियमो दर्शितः। तत्रावष्टम्भाभियोगेष्वेवेत्यस्यापवादमाह–"विनापि शीर्षकात् कुर्यान्नृपद्रोहेऽथ पातके" (याज्ञ. २।९६)। इति। अधिकारिव्यवस्थामाह–

**तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्।**
**अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा॥**

**(याज्ञ. २।९८)**

स्त्रीमात्रं जातिवयोवस्थाविशेषानादरेण, बालः आ षोडशाद् वर्षाज्जातिविशेषानादरेण, वृद्धोऽशीतिकावरः, अन्धो नेत्रविकलः, पङ्गुःपादविकलः, ब्राह्मणो जातिमात्रम्, रोगी व्याधितः, एतेषां शोधनार्थं तुलैवेति नियम्यते। विषस्य यवा उक्तपरिमाणाः सप्तैव शूद्रस्य शोधनार्थं भवन्ति। ब्राह्मणस्य तुलाविधानात् 'शूद्रस्य यवाः सप्त विषस्य वा' इति विषविधानादग्निर्जलं वेति क्षत्रियवैश्यविषयमुक्तम्। यत्तु स्त्र्यादीनां दिव्याभावस्मरणम्, तत् 'रुच्या वाऽन्यतरः कुर्यात्' (याज्ञ. २।९६) इति विकल्पनिवृत्यर्थम्। एतदुक्तं भवति–'अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानामेव दिव्यम्–एतेषामभियोज्यत्वेऽप्यभियोक्तॄणामेव दिव्यम्। परस्पराभियोगे तु विकल्प एव। तत्रापि तुलैवेति एतच्च वचनं सर्वदिव्यसाधारणेषु मार्गशिरश्चैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यसमवधाने नियामकतयार्थवत्।

न च सर्वकालं स्त्रीणां तुलैवेति, 'स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्। घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्'॥ इति विषसलिलव्यतिरिक्तघटकोशाग्न्यादिभिः शुद्धिं विधानात्। एवं बालादिष्वपि योजनीयम्। तथा ब्राह्मणादीनामपि न सार्वकालिकस्तुलादिनियमः, 'सर्वेषामेव वर्णानां कोशशुद्धिर्विधीयते। सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना'॥ इति पितामहस्मरणात्। तस्मात्साधारणे काले बहुदिव्यसमवधाने तुलादिनियमार्थमेवेदं वचनम्। कालान्तरे तु तत्तत्कालविहितं सर्वेषाम्। अतः ऋतुकालानतिक्रमेण जातिवयोवस्थाश्रितानि दिव्यानि देयानि।

तथा च[2]

**शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा।**
**क्रिया समूहकर्तृत्वे कोशमेव प्रदापयेत्॥**

**(कात्या. ४१५)**

---

1. याज्ञ. २।९५।
2. स्मृ. च. २२६; व्य. नि. १७७; माधवीयः ११४; वीरमित्रोदयः २२८, २२९; मिता. याज्ञ. २।९६।

अशिरांसि दिव्यानि राजकृत्येषु दापयेत् ।
अभियुक्ताभियुक्तानामन्येषां च यथाक्रमम् ॥
(नारद. ४।२७०)

राजद्रोहे साहसेषु विना शीर्षप्रवर्त्तनात्[1] ।

**देशकालः**

तत्र कात्यायनः

इन्द्रस्थानेऽभिशस्तानां महापातिकानां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारेषु योजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु ( तु ) कार्येषु सभामध्ये विदुर्बुधाः ॥ ४३५-४३५ ॥

बृहस्पतिकात्यायनौः

यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः ।
अयथोक्तप्रदत्तं च न शक्यं साध्यसाधने ॥
अदेशकालदत्तानि बहिर्वादिकृतानि च ।
व्यभिचारं सदाऽर्थेषु कुर्वन्तीह न संशयः ॥
( बृह. ८।१५-१६, ४३९-४४० )

**दिव्यविधिः**

पूर्वोक्तयाज्ञवल्क्यमतम् । तदेव विष्णुमतम्[2] । अत्र नारदादीनां[3] मतानि–

अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे ।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् ॥
( नारद. ४।२६८)

स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित् ॥
( बृह. ८।१४ )

**घटविधिः**

सुवर्णकारप्रभृतयस्तैः प्रतिमानेन मृदादिना समीकृतस्तुलामाश्रितोऽधिरूढो अभियुक्तो वा दिव्यकारी रेखां कृत्वा येन संनिवेशेन प्रतिमानसमीकरणदशायां शिक्यतलेऽवस्थितस्तस्मिन्पाण्डुलेखेनाऽङ्कयित्वाऽवतारितस्तुलामभिमन्त्रयेत् प्रार्थयेतानेन मन्त्रेण–"हे तुले त्वं सत्यस्य स्थानमसि, आदि सृष्टौ हिरण्यगर्भप्रभृतिभिरुत्पादिता ।

1. विष्णु. ९।२२।
2. विष्णु. ९।३३; याज्ञ. २।९७।
3. कात्या. ४३८।

तस्मात्सत्यं सन्दिग्धस्यार्थस्य स्वरूपं दर्शय, शोभने अस्मात् संशयान्मां विमोचय। हे मातः ! यद्यहं पापकृदसत्यवाद्यस्मि ततो मां त्वमधो नय। अथ सत्यवाद्यस्मि ततो मामूर्ध्वं गमय'।

प्राड्विवाकस्य तुलाभिमन्त्रणमन्त्राः स्मृत्यन्तरोक्ताः, अयं तु दिव्यकारिणः। जय-पराजयलक्षणं तु मन्त्रलिङ्गादेवावगम्यत इति न पृथगुक्तम्। घटनिर्माणं पुनरारोहणाद्यर्थसिद्धमेव पितामहनारदादिभिः स्पष्टीकृतम्। अत्र च तुलां पताका-ध्वजालंकृतां विधाय तस्याम् 'एह्येही' ति मन्त्रेण धर्ममावाह्य 'धर्मायार्ध्यं कल्पयामि नमः' इत्यादिना प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीता-चमनीयमुकुटकटकादिभूषान्तं' दत्वा इन्द्रादीनां दुर्गान्तानां प्रणवाद्यैः स्वनामभिश्च-तुर्थ्यन्तैर्नमोन्तैरर्घ्यादिभूषान्तं पदार्थानुसमयेन दत्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यादि दत्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात्। गन्धपुष्पाणि च घटपूजायां रक्तानि कार्याणि। एतच्च सर्वं प्राड्विवाकः कुर्यात्। ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकाग्नौ होमः कार्यः। प्रणवादिकां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणव-मुच्चार्य समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं जुहुयात्।

एवं हवनान्तां देवपूजां विधायानन्तरमभियुक्तमर्थं निश्चितमन्त्रसहितं पत्रे लिखित्वा तत्पत्रं शोध्य शिरोगतं कुर्यात्। एतच्च धर्मावाहानादि शिरसि पत्रा-रोपणान्तमनुष्ठानकाण्डं सर्वदिव्यसाधारणम्। अनन्तरं प्राड्विवाको घटमामन्त्रयेत्। शोध्यस्तु 'त्व तुले' मन्त्रेण तुलामामन्त्रयेत्। अनन्तरं प्राड्विवाकः शिरोगतपत्रकं शोध्य यथास्थानं निवेश्य च घटमारोपयति। आरोपितं च विनाडीपञ्चकं यावत्त-थैवावस्थापयेत्। तत्कालपरीक्षाञ्च ज्योतिः शास्त्राभिज्ञः कुर्यात्। दशगुर्वक्षरोच्चारण-कालः प्राणः। षट् प्राणा विनाडी। तस्मिंश्च काले शुद्ध्यशुद्धिपरीक्षणार्थं शुचयः पुरुषा राज्ञा नियोक्तव्याः। ते च शुद्ध्यशुद्धी कथयन्ति। विधिपूर्वकं घटविधि-कर्त्तव्यम्[1]। अत्र कात्यायनः

**शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा।**
**शुद्धेस्तु संशये चैव परीक्षते पुनर्नरम्॥ ४४०॥**

**अग्निविधिः**

पूर्वेद्युर्भूशुद्धिं विधायापरेद्युर्मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च मन्त्रैस्तत्र संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्याग्नावयःपिण्डं निधाय धर्मा-

---

1. विष्णु. १०।१-५, पितामह; माधवीये. पृ. १२६; व्य. नि. १४८; नारद. ४।२६४-२६५, २६३, २६१, २६७; स्मृ. चं. २४८, अपरार्कः ७०२; नारद. ४।२७१-२७२; मिता. २।१०१-१०२; स्मृ. चं. २५३-२५४, नारद. ४।२७३-२७४; अपरार्कः ७०४; विष्णु. १०।९-११; नारद. ४७६-४७८, २८१, २७९; बृह. ८।४९; कात्या. ४४०।

वाहनादिसर्वदेवतापूजां हवनान्तां निर्वर्त्य उपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे मण्डले तिष्ठतो व्रीहिमर्दनादिकरसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बद्ध्वा प्राड्विवाकस्तृतीये तापेऽग्निमभिमन्त्र्य तप्तमयः पिण्डं संदंशेन गृहीत्वा कर्त्रभिमन्त्रितं तस्याञ्जलौ निदध्यात् सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले प्रक्षिप्यादग्धः शुद्धो भवति[1] ।

**तोयविधिः**

प्रयोगक्रमः । विहितलक्षणजलाशयसंनिधावुक्तलक्षणं तोरणं विधाय विहितप्रमाणे देशे लक्ष्यं निधाय तोरणसन्निधौ सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान् हवनान्तमिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेत–"तोय! त्वं प्राणिनां प्राणः" इत्यादि मन्त्रेण । अथ शोध्यः–'सत्येन' इत्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने मध्यमशरं गृहीत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च तोरणमूले स्थिते प्राड्विवाकेन तालत्रये दत्ते युगपद्गमनमज्जनमथ शरानयनम्[2] ।

**विषविधिः**

अत्र च प्राड्विवाकः सोपवासो महादेवं संपूज्य तत्पुरतो विषं स्थापयित्वा धर्मादीनिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखस्थिताय विषं प्रयच्छति । स च शोध्यो विषमभिमन्त्र्य भक्षयतीति क्रमः[3] ।

**कोशविधिः**

एतच्च साधारणधर्मेषु धर्मावाहनादिसकलदेवतापूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तेषु सत्सु । अत्र च स्थाप्यदेवतानियमः कार्यनियमोऽधिकारिनियमश्च पितामहादिभिरुक्तः[4] । महापराधो महापातककी, निर्धर्मो वर्णाश्रमधर्मरहितः, पाखण्डी, कुत्सितः प्रतिलोमजः । दाशाः कैवर्ताः, इत्यधिकारिनियमः । तथा गोमयेन मण्डलं

1. याज्ञ २।१०४-१०७; अपरार्कः. ७०७; वीरमि. २५५; बृह. ८।५३-५७; नारद. ४।२८५-२८६, २९२; मिता. २।१०६; नारद. ४।२८८-२९५, ३०४; विष्णु. ११।२०, ११।१०-१२; नारद. ४।२९६-२९७; २९९; कात्या. ४४१; नारद. ४।३०२-३०३; विष्णु. ११।८; अपरार्कः. ७०८; स्मृ. चं. २६९।
2. याज्ञ. २।१०८-१०९; बृह. ८।६२, ६१; कात्या, ४४२, ४४३, ४४४, ४४५; नारद. ४।३०७, ३०५, ३०८, ३१६, ३१७, ३१९-३२२; पिता. वीर. २०७–मिता.।
3. याज्ञ. २।११०-१११; नारद. १।३२१, ३१९, ३२३, ३२२, ३१८, ३२४, ३२५, ३२६; विष्णु. १३।६-७; कात्या. ४४६-४४९, ४५०।
4. नारद. ४।३२७-३२८; बृह. १४।२३,६५; स्मृ. च. २७८; याज्ञ. २।११८, ११३; कात्या. ४५४, ४५६-४५८; विष्णु. १४।४, १४।२-३; नारद. ४।३३१, ३३३।

कृत्वा तत्र शोध्यमादित्याभिमुखं स्थापयित्वा पाययेदिति नारदवचनादवगन्तव्यम् । महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिराद्यपि पक्षत्रयं व्यवस्थापनीयम् ।

**लण्डुलविधिः**

तत्र पितामहः[1]

**शूद्रे तु तण्डुला देया नान्यत्रेति विनिश्चयः।**
तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ॥
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ।
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
प्रभाते कारिणो देया आदित्याभिमुखस्य तु ॥
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेद्दिवा ।
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य च ॥
(स्मृ. चं. २७७)

**तप्तमाषकविधिः**

**बृहस्पतिः**

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकम् ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥ ८।७२१ ॥

पितामहबृहस्पतिः

कराग्रं न धुनेद्यस्तु विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥
(बृह. ८।७८)
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृण्मयं वाऽपि मण्डलम् ।
पूरयेद् घृततैलाभ्यां विंशत्या वा पलैस्ततः ॥
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु मात्रकम् ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषं समुद्धरेत् ॥ पितामहः ॥

**फालविधिः**

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥
अग्निवर्णं तु तच्चोरो जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥
(बृहस्पतिः ८।७८-८०)

---

1. कात्या. ४५३; बृह. ८।७०; दिव्यतत्त्वे ६०६; नारद. १।३३४।

**धर्मजविधिः**

एकरात्रमारभ्य त्रिरात्रपर्यन्तं त्रिरात्रमारभ्यपञ्चरात्रपर्यन्तम् । एकरात्रप्रभृतित्वं कार्यलाघवगौरवपर्यालोचनया द्रष्टव्यम् । एवं दिव्यैर्जयपराजयावधारणे दण्डविशेषोऽपि दर्शितः कात्यायने–'शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत्' इति । 'निह्नवे भावितो दद्यात्' इत्युक्तदण्डेनायं दिव्यनिबन्धनो दण्डः समुच्चीयते । तत्र बृहस्पतिः

**पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।**
**जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥**
**आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।**
**अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥**
**समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।**
**ततः कुम्भात्पिण्डमेकं प्रगृह्णीताविलम्बितः ॥**
**धर्मे गृहीते शुद्धः स्यात् संपूज्यश्च परीक्षकैः ।**

**( बृह. ८।८२-८५ )**

**शपशविधिः**

सप्तर्षिभिर्देवैश्चेन्द्रादिभिः सन्दिग्धकार्यनिर्णयार्थं शपथाः कृताः वसिष्ठोऽप्यनेन पुत्रशतं भक्षितमिति विश्वामित्रेणाक्रुष्टः स्वपरिशुद्धये पिजवनापत्ये सुदासि राजनि शपथं चकार । स्वल्पेऽपि कार्ये न वृथा शपथं पण्डितः कुर्यात् । वृथा शपथं कुर्वन् परलोक इह लोके नरकप्राप्त्या च नाशं प्राप्नोति । बहुभार्यस्य नान्यामहं कामये त्वमेव मत्प्रेयसीत्येवं विशिष्टः सुरतलाभार्थं कामिनीविषये, विवाहविषये च मयान्या न वोढव्यमित्यादौ, गवार्थं घासाद्युपहारे च, अग्नौ होमार्थामिन्धनाद्युपहारे, ब्राह्मणरक्षार्थमङ्गीकृतधनादौ वृथा शपथे पापं न भवति ।

ब्राह्मणं सत्यशब्दोच्चारेण शापयेत् । क्षत्रियं वाहनायुधं मम निष्फलं स्यादित्येवम् । वैश्यं गोबीजकाञ्चनानि च मम निष्फलानि स्युरित्येवम् । शूद्रं च सर्वाणि मे पातकानि स्युरित्येवं शापयेत् । अग्निसन्निभं पञ्चाशतपलिकमष्टाङ्गुलमयः पिण्डं हस्तद्वयविन्यस्तसप्ताश्वत्थपत्रं शूद्रादिकं सप्तपदानि पितामहाद्युक्तविधानादाहरयेत् । जलौकादिरहितजले चैनं निमज्जयेत् । अशेषेतिकर्त्तव्यता स्मृत्यन्तरे ज्ञेया । पुत्राणां दाराणां च पृथक् शिरस्येनं स्पर्शयेत् । यं प्रदीप्तोऽग्निर्दहति, आपश्च यं नोर्ध्वं नयन्ति, न चार्तिमेव महतीं प्राप्नोति स शपथे विशुद्धो ज्ञेयः[1] । यथाह नारदः

1. मनु. ८।११०-११५।

**शपथा ह्यपि देवानामृषीणां च महात्मनाम् ।**
**वसिष्ठः शपथं शेपे यातुधाने तु शब्दितः ॥**
**महर्षयस्तथेन्द्राद्याः प्रस्तरार्थे निबोधिताः ।**
**शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥ ४।२४३-२४४ ॥**

सर्वेष्वर्थजातेषु मूल्यं कनकं प्रकल्पयेत् । तच्च कृष्णलोने शूद्रं दूर्वाकरं शापयेत् । द्विकृष्णलोने तिलकरम् । त्रिकृष्णलोने रजतकरम् । चतुः कृष्णलोने सुवर्णकरम् । पञ्चकृष्णलोने सीतोद्धृतमहीकरम् । सुवर्णार्धोने कोशो देयः शूद्रस्य । ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम् । द्विगुणार्थे यथाभिहिताः समयक्रिया वैश्यस्य । त्रिगुणार्थे राजन्यस्य । चतुर्गुणार्थे ब्राह्मणस्य[1] । **बृहस्पतिनारदौ**

**सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।**
**देवब्राह्मणपादांस्तु पुत्रदारशिरांसि च ॥**
**एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराःसदा ।**
**साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम् ॥**

**( बृह. ८।३३-३४; नारद. ४।२४८-२५० )**

इष्टापूर्त्तप्रदानमन्यांश्च शपथान् कारयेत् (शङ्खः) ।

**आचतुर्दशकादह्नो यस्य नो राजदैवकम् ।**
**व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥**

**( कात्या. ४६३ )**

## निर्णयः

### निर्णयप्रकारः

निर्णयोऽष्टविधः–प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया वादिसंप्रतिपत्या वा । प्रमाणं त्रिविधम्–लिखितं साक्षिणो भुक्तिश्च । अनुमानम् हेतुस्तर्कश्च । देशस्थितिः पूर्वकृता चरितम् । अर्थानुरूपाः शपथाः सत्यघटादयः । तेषामभावे राज्ञाज्ञा निर्णयम् । तर्कोऽनुमानं निर्णयहेतुः । यथाह बृहस्पतिः–

**धर्मेण व्यवहारेण चारित्रेण नृपाज्ञया ।**
**चतुष्प्रकारोऽभिहितः सन्दिग्धे वस्तुनिर्णयः ॥**
**एकैको द्विविधः प्रोक्तः क्रियाभेदान् महर्षिभिः ।**
**सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ॥**
**परीक्षितं तु शपथैः स ज्ञेयो धर्मनिर्णयः ।**
**प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ॥**

---

1. विष्णु. ९।४-१४।

दिव्यैर्विशोधितः सम्यक् द्वितीयः समुदाहृतः । ९।१ ।
अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।
देशस्थित्या द्वितीयस्तु शास्त्रविद्भिरुदाहृतः ॥ ९।६ ॥
प्रमाणसहिताऽऽद्यस्तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्याविरोधेन तथाऽन्यः संप्रकीर्तितः ॥
( बृह. ९।७ )

कात्यायनः

स्मृतिशास्त्रं तु यत्किञ्चित्कथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थेषु व्यवहारः स्मृतो हि सः ॥ ३६ ॥
यद्यदाचर्यते येन धर्म्यं वाऽधर्म्यमेव वा ।
देशस्याचरणान्नित्यं चरित्रं तत्प्रकीर्तितम् ॥ ३७ ॥
सन्दिग्धा येन साध्यन्ते निश्चितं शास्त्रतो भृगुः ।
तेषां नृपः प्रमाणं स्यात् सर्वस्य हि नृपः प्रभुः ॥
न्यायशास्त्राविरोधेन देशदृष्टस्तथैव च ।
यं धर्म्यं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥
धर्मं च व्यवहारं च चरित्रं वाऽविलोपयन् ।
स्थित्यैतत् स्थापयेद्राजा धर्म्यं तद्राजशासनम् ॥ ३८ ॥

नारदः

तत्र सत्ये स्थितो धर्मो व्यवहारश्च साक्षिषु ।
चरित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥ १।११ ॥

**निर्णयबलाबलम्**

धर्मश्च व्यवहारस्च चरित्रं राजशासनम् ।
चतुष्पादव्यवहारोऽयमुत्तरः पूर्वबाधकः ॥
( नारद. १।१० )

तत्र तेषु चतुर्षु सत्ये स्थितो धर्मः । तथाभूताख्याने उभयोरपि प्रतिपत्तौ साक्ष्यादिभिः प्रयोजनाभावाद् धर्मव्यवहारः । यथा कश्चिद् ब्रूयात् 'ममासौ धारयति, दाप्यतामि' ति । स्वामिनाहूय पृष्टः स चाह 'सत्यं धारयामि ददामि चे' ति समाप्तो धर्मव्यवहारः । व्यवहारस्तु साक्षिष्विति । विसंवादे साक्षिभिर्निर्णीयते, स साक्षिव्यवहारः । चरित्रं पुस्तकरणम् । लेख्येन निर्णीयते, तच्चरित्रम् । पारम्पर्याविच्छिन्नस्मृतिदेशाधिष्ठानगणधर्मः सत्पुरुषैः परिगृहीतः तस्मिन् स्थित इति सम्बन्धः । राजाज्ञायां तु शासनम् । अत्रोत्तरोत्तरं पूर्वस्य पूर्वस्य बाधकम्, पूर्वेण पूर्वेणासिद्धावुत्तरोत्तरेण सिध्यति ।

अत्र कौटल्यः

**धर्मश्चव्यवहारश्च चरित्रं राजशासनम् ।**
**विवादर्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥**
**अत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।**
**चरित्रं सङ्ग्रहे पुंसां राज्ञामाज्ञां तु शासनम् ॥ ३।१।१२२-१२३ ॥**

अत्र धर्मादिषु मध्ये, सत्ये स्थितः प्रतिष्ठितः धर्मः अर्थयाथात्म्यं धर्मपदार्थ इत्यर्थः। व्यवहारस्तु साक्षिषु स्थितः साक्षिवाक्यविभावनीयो व्यवहारपदार्थ इत्यर्थः। चरित्रं लोकाचारः, सङ्ग्रहे ग्रामसमूहे दशग्राम्यादौ, पुंसां प्रतिष्ठितम्। राज्ञाम् आज्ञा तु इदमित्थमेवेति न्यायोपपत्तियुक्तो यथार्हदण्डप्रणयनादिर्नियोगस्तु, शासनं राजशासन-पदार्थः। इति श्रीमूला ॥

पश्चिमः पूर्वबाधक इति । धर्मस्य विवादनिर्णेयार्थस्य व्यवहारः । तस्यापि चरित्रम्। तस्यापि च मन्त्रम् । तत्रापि राजशासनम् ।

तत्र अर्थिप्रत्यर्थिनोरन्यतरस्य । सत्य इति सत्यप्रतिबद्धास्तुलादयोऽपि शपथाः प्रोच्यन्ते । तैरसाक्षिकं व्यवहारं निर्णयेत्, स धर्म इत्युच्यते । व्यवहारस्तु साक्षिषु प्रमाणेषु स्थितम्, तेषु शपथो नाश्रयणीयः । चरित्रं पुंसां सङ्ग्रहे एकवाक्यतया स्थितम्, इयमत्रास्तु व्यवस्थेति ।

अत्रोच्यते–

**देशस्य जातेः सङ्घस्य धर्मो ग्रामस्य वापि यः ।**
**उचितस्तस्य तेनैव दायधर्मं प्रवर्तयेत् ॥ २।७ ॥**

(तत्र साक्षिणेति अन्तर्भया दैवानुसारिणी यामाज्ञामर्थापराधा आज्ञा अर्थशास्त्र-पतयः?) शासनं तेन सर्वं बाध्यते ।

**"तस्माद्धर्मान् यथेष्टेषु... ...पार्थिवः ।**
**अनिष्टं त्वप्यनिष्टेषु तद्धर्मान्न विचारयेत्" इति**

यथोक्तम्–अनर्थसंयुक्तं च व्यवहारे न्यू....हि। इति चाणक्य टीका ।

**अनुशासनाद्धि धर्मेण व्यवहारेण संस्थया ।**
**न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥ ३।१।१२६ ॥**
**संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।**
**यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् ॥**
**शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।**
**न्यायस्तत्र प्रमाणं स्यात्तत्र पाठ हि नश्यति ॥ ३।१।१२७-२८ ॥**

अनुशासत् लोकं न्याये पथि स्थापयन्, कथम्, धर्मेण धर्मानुसारेण व्यवहारेण साक्षिवाक्यानुसारेण, संस्थया लोकाचारेण, न्यायेन च चतुर्थेन न्यायोपपन्नराजकीय-

निर्णयलक्षणेन चतुर्थपादरूपेण, चतुरन्तां चतुः सागरपर्यन्ताम्, महीं जयेत् । यथोक्तप्रकारानुसारानुशासनमहिम्ना सार्वभौमत्वं राजा प्राप्नुयात् ।

धर्मादिषु 'पश्चिमः पूर्वबाधकः' इति यत् पूर्वमुक्तम्, तस्यापवादमाह–संस्थया इति । संस्थया महाजनाचारेण, धर्मशास्त्रेण मानवादिना च सह, शास्त्रं वा व्यावहारिकं शास्त्रं राजशासनं वा व्यावहारिकं साक्षिवच्च वा, यस्मिन्नर्थे विरुध्येत्, यच्छब्देन तच्छब्दाक्षेपात् समर्थम्, धर्मेण विनिर्णयेत् धर्मशास्त्रमपि विनिश्चिनुयात् । न तु तथाविधे विषये राजवचनसाक्षिवचनयोः प्रामाण्यमित्यर्थः ।

क्वचिद्धर्मशास्त्रमपि न्यायेन बाध्यत इत्याह–शास्त्रमिति । शास्त्रं मानवादिधर्मशास्त्रम्, केनचिद् धर्मन्यायेन सर्वप्रकारोपपन्नेन धर्मयुक्तेन लोकाचारेण विप्रतिपद्येत अत्यन्तबाधितार्थविषयतया विरुध्येत, यत्रेति शेषः । तत्र न्यायः, प्रमाणम् अर्थनिर्णयहेतुः स्यात् । कुतः, तत्र पाठो हि नश्यति यस्मात् तादृशे विषये धर्मशास्त्रवचनम् अदर्शनम् प्राप्नोति, न प्रवर्तत इत्यर्थः ।

"कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः"

इति सत्यपि स्मृतिवचने सेतोर्भिन्नस्य समीपे कुद्दालहस्तं कमपि शिशुं तिष्ठन्तं दृष्ट्वा न कोऽप्यध्यवस्यति–अनेन शिशुना सेतुर्भिन्न इति श्रीमूला ।

धर्मेणेति । सत्येन साक्षिवचनेन चरित्रेण न्यायेन धर्मकामनया आ मूलात् शास्त्रानुरोधिना अर्थानुशासनेनेत्यर्थः ।

पश्चिमः पूर्वबाधक इति व्यासङ्गनिवृत्यर्थमाह–संस्थयेति । यत्र चरित्रेण वर्णाश्रमेण वा शास्त्रं साक्षिवचनादिप्रतिबद्धं तत्र धर्मेण निर्णयेत् । वर्णाश्रमधर्माविरोधे तु साक्षिभिश्चरित्रेण वेत्यर्थः ।

शास्त्रं विप्रति (पत्ति) शास्त्रं व्यवहारे ? (रः) धर्मन्यायेन चेद् विरुध्यते तत्र शास्त्रोक्तं वा न्याय्यं (यतनी? वाचरणी) यम्, (वायु? न्याय) विरुद्धमुभयं हि नश्यति । नाचरणीयमित्यर्थः । तद्यथा–

**अपुत्राः शयनं पत्युः पालयन्ती गुरौ स्थिता ।**
**भुञ्जीतामरणाद् द्रव्यं दायादास्तूर्ध्वमाप्नुयुः ॥ ( कात्यायनः )**

इति धर्मशास्त्रवचनम् । 'तीर्थोपरोधो हि धर्म (पर?वधः।) (अधि. ३ अध्याय. ४) इत्यर्थशास्त्रवचनम् । तत्र न्यायः चरित्ररक्ष (ण ? णा) समर्था चेद् अर्थशास्त्रोक्तमाचरणीयम् । असमर्था न क (यातिम्? दाचिद्) उपरोद्धव्या, उपरोधे हि अननुज्ञातैः संसृज्यत इति । चाणक्यटीका ।

तथा च

**शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।**
**व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥**

**( बृह. १।१९ )**

विहाय चरिताचारं यत्तु कुर्यात् पुनर्नृपः।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तथा ॥
(बृह. १।२१)

युक्तियुक्तं तु कार्यं स्याद्दिव्यं यत्र विवर्जितम्।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥
(कात्या. ३९)

प्रतिलोमदुप्रसूतेषु तथा दुर्गनिवासिषु।
विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत् ॥
(कात्या. ४०)

निर्णयं तु यदा कुर्यात्तेन धर्मेण पार्थिवः।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते ॥ ४१ ॥
विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते नृपैः।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥
अनेन विधिना प्रोक्तं बाधकं यद्यदुत्तरम्।
अन्यथा बाधनं यत्र तत्र धर्मो विहन्यते ॥ ४२-४३ ॥

**निर्णीतकृत्यम्**

तत्र नारदः

स्वयमभ्युपपन्नोऽपि सुचर्यावसितोऽपि सन्।
क्रियावसन्नोऽप्यर्हेत्तु परं सभ्यावधारणम् ॥
सभ्यैरेव कृता पश्चाद्राज्ञा शास्यः स्वशास्त्रवत् ॥ २।४१ ॥

अत्रावसन्नास्त्रयोऽभिहिताः। एकः स्वयमभ्युपन्नः। स्वमुखेन प्राप्तावसायः। द्वितीयः स्वचर्यावसन्नः। कूटलिखितसाक्षिप्रपञ्चेन प्रपञ्चकरणेन स्वकीयदुष्टचर्चया दुश्चरित्रेणावसन्नः। तृतीय उद्दिष्टसाक्षिभिरेवावसायं प्रापितः। अयं त्रिविधोऽप्यवसन्नो राज्ञा स्वेच्छया विधूत्य दण्डनीयः। किं तर्हि परं सभ्यावधारणं सोऽप्यर्हेत। किमुक्तं भवति। यावत्सभ्यैर्दण्डावधारणं निगदितम्। तावन्न धारणीयोऽसौ। 'परं सभ्यावधारणम्' अनन्तरं सभ्यानामेकस्थानामनेनावसादेन पराजितः। तथा च[1] –

निर्णयं भावितो दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगे द्विगुणमभियोगाद्धनं वहेत् ॥
(याज्ञ. २।११)

---

1. निह्नवे तु यदा वादी स्वयं तत्प्रतिपद्यते।
ज्ञेया तु प्रतिपत्तिस्तु तस्यार्धविनयः स्मृतः ॥ व्यासः ॥

सपणश्चेद्विवादः स्यात्तद्गृहीतं तु दापयेत् ।
स दण्डं द्विगुणं चैव धनिने धनमेव च ॥
(याज्ञ. २।१८)

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥
(याज्ञ. २।२०)

मिथ्याभियोगिनो ये स्युः द्विजानां शूद्रयोनयः ।
तेषां जिह्वां समुत्कृत्य राजा शूले निवेशयेत् ॥
(नारद. २।३७)

अपराधानुरूपश्च दण्डोऽयं परिकल्पितः । बृह. ९।२५ ॥

**जयीप्रतिपत्तिः**

तत्र बृहस्पतिः

प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥ ९।२१ ॥

कात्यायनः

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥ २६८ ॥
निरस्तं लिखितं यत्तु तत्तु सद्यो विनाशयेत् ।
पश्चात्कारक्रिया चाथ निरस्येत्तन्न संशयः ॥
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥
दासस्त्री भूगृहाराममलेखकानां पराजये ।
एतेष्वेव यदा देयः पश्चात्कारस्तु पार्थिवैः ॥ २६४ ॥
व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥ व्यासः ॥

**पुनर्न्यायः**

यत्र क्वचिदृणादानादिव्यवहारे यत्कार्यं धर्मतस्तीरितम् । शास्त्रव्यवस्थानिर्णीतम्। अनुशिष्टं दण्डपर्यन्ततां च नीतं स्यात्तत्कृतमङ्गीकुर्यान्न पुनर्निर्वतयेत्। एतच्चाकारणात् । अतः कारणकृतं निवर्तयेदेव । राजामात्याः प्राड्विवाको वा व्यवहारेक्षणे

नियुक्तो यदसम्यग्व्यवहारनिर्णयं कुर्युस्तत्स्वयं राजा कुर्यात्पणसहस्रं च तान्दण्डयेत् । इदं चोत्कोचधनग्रहणेतरविषयम्[1] ।

रागलोभादिनाऽन्यथा व्यवहारदर्शने–

**दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।**
**सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥**

(याज्ञ. २।३०५)

अप्राप्तजेतृदण्डविधिपरत्वाद्वचनस्य रागाल्लोभादिना श्लोकेनापौनरुक्त्यम् । यदा पुनः साक्षिदोषेण व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा साक्षिण एव दण्ड्याः, न जयी नापि सभ्याः । यदा तु राजानुमत्या व्यवहारस्य दुर्दृष्टत्वं ज्ञातं तदा सर्व एव राजसहिताः सभ्यादयो दण्डनीयाः[2] ।

तथा च–

**साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।**
**स्वचर्यावसितानां तु नोक्तः पौनर्भवो विधिः ॥**
**तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।**
**द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥**
**दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।**
**न हि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ॥**

(नारद. २।४०,६५,६६)

**पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।**
**हीनस्य गृह्यते वादो न स्ववाक्यैर्जितस्य तु ॥**
**निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।**
**दण्डयेज्जयिना साकं पूर्णसभ्यांस्तु दोषिणः ॥**

(बृह. ९।२२,२४)

**कुलादिभिर्निश्चितेऽपि न सन्तोषं गतश्च यः ।**
**विचार्यतत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥**

(बृह. ९।२३; कात्या. ४९६)

**कृतनिवृत्तिः**

यस्मिन् व्यवहारे कूटसाक्षिभिर्व्यवहारः कृतः स निवर्तयितव्यः ।

---

1. मनु. ९।२३३-२३४ ।
2. याज्ञ. २।३०५।

